॥ श्रीगणेशाय नमः ॥





गुरुमण्डलग्रन्थमालायाः सप्तदशपुष्पम्

# अग्निपुराणम्



श्रीमन्महर्षिकृष्णद्वैपायनव्यासविरचितम्

"पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्"
( मत्स्यपु० )


मनसुखराय मोर

५, क्लाइव रो,

कलकत्ता ।

सम्वत् २०१४ ] [ सन् १९५७





Gurumandal Series No. XVII

# AGNI PURANAM

By

SHRIMANMAHARSHI VEDAVYAS

5. CLIVE ROW,
Calcutta.

| | | |
|---|---|---|
| Vikram Era 2014 | First Editon 5000 | Christian Era 1957 |

॥ श्री गणेशाय नमः ॥

गुरुमण्डलग्रन्थमालायाः सप्तदशपुष्पम्

# अग्निपुराणम्



श्रीमन्महर्षिवेदव्यासविरचितम्

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयम्भैरवम्
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं शाम्भवम् ॥
वीरान्द्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकम् ।
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥

५, क्लाइव रो,

कलकत्ता ।

वैक्रमाब्दः २०१४ | प्रथमं संस्करणम् ५००० | ख्रैस्ताब्दः १९५७

मूल संस्कृतग्रन्थ के मुद्रक—
गोपाल प्रिण्टिङ्ग वर्क्स,
८७।ए, राजा दिनेन्द्र स्ट्रीट,
कलकत्ता-६



अवशिष्ट विषय-सूची, शुद्धाशुद्धि, कवर और टाइटलपेज के मुद्रक—
दि बङ्गाल प्रिण्टिङ्ग वर्क्स,
१, सिनागाग स्ट्रीट,
कलकत्ता-१

# अग्निपुराण-वेदिका

परमपिता परमात्मा की असीम कृपा से गुरुमण्डल ग्रन्थमाला के सप्तदश-पुष्प के रूप में इस "अग्नि महापुराण" को सहृदयधुरीण पुराणप्रेमी विद्वद्वृन्द को समर्पित करते हुए अत्यन्त प्रसन्नता हो रही है।

इस पुराण साहित्य का अनादि प्रादुर्भाव सर्वविदित है, उसी प्रकार अग्नि-पुराण में वर्णित सम्पूर्ण वेद, अङ्ग, उपाङ्ग और उनके शतकोटि प्रविस्तर नाना विषयों का सातिशय समावेश प्रसिद्ध है। संस्कृत साहित्य की श्रीवृद्धि करनेवाले सम्पूर्ण अङ्गों का साधिकार ग्रथन इस पुराण की अनुपम विशेषता है। इसी लिये विद्वान् लोग इस महापुराण को संस्कृत साहित्य का विश्वकोष कहते हैं ( Encyclopaedia of Sanskit Literature )।

इस महापुराण में सर्ग, प्रतिसर्ग, विसर्ग, वंशमन्वन्तरादि के वर्णन के साथ-साथ अनेक तन्त्र, मन्त्र, अष्टाङ्ग योग की सम्पूर्ण प्रक्रिया, धर्मशास्त्र, प्रायश्चित्त, दान, व्रत, अभिषेक, वंशवर्णन, ज्योतिःशास्त्र, कर्मकाण्ड, सर्वदेवपूजा, नाना देवताप्रतिष्ठा, अनादि पूजाविधि, आशौच-निर्णय, वर्णाश्रमधर्म नानाव्यवहार, लक्षकोटि होम, नवग्रह होम, देवालय गृहनिर्माण आदि के लिये वस्तु प्रतिष्ठा-विधि, शिल्पकार लोगों के उपयोगार्थ जीर्णोद्धार के उपयुक्त शिल्पसाहित्य, उसी के अङ्गभूत गृहशिल्प, देवालयादि शिल्प, राजा एवं उसके सचिवों के व्यवहार योग्य राजधर्म, राज्याभिषेक, राजनीतिविषयक ज्ञान, युद्ध-रचना, उसके भेद, धनुर्वेद, कई प्रकार के अस्त्र-शस्त्र एवं ऐतिहासिक महत्त्व की वर्णनायें, सृष्टिक्रम, वेद-वेदाङ्ग विभाग, सूर्यवंश, चन्द्रवंश, भारत-सार, रामायण-सार, ईश्वरावतार, सम्पूर्ण तिथि, वार एवं नक्षत्रादि के व्रत, ज्यौतिष शास्त्र, सामुद्रिक

हस्तरेखा-विज्ञान, स्त्री-पुरुष के लक्षण, मन्त्रसम्बन्धी प्रयोग, त्वरिता विद्या, षट्-प्रयोग, मृतसञ्जीवनादि प्रयोग, मन्त्ररूपौषध, अघोर आदि अस्त्र, शालग्राम लिङ्गादि के लक्षण, स्तम्भनोच्चाटनादिमन्त्र, मन्त्रपरिमाण एवं तत्सम्बन्धी अन्य विषय ; इसी प्रकार रसिक-प्रेमी सहृदय विद्वद्वृन्द के उपयोगी गन्धर्ववेद, सङ्गीत, काव्य के भेद, नाटक, अलङ्कार, नवरसों का निरूपण ; स्त्रीपरीक्षा, वैद्य महानुभावों के लिये उपयोगी वैद्य-विद्या, सिद्धौषध, मन्त्रौषध, सर्वरोग, चिकित्सा, सम्पूर्णरोगहर औषध, षट्त्रिंशत्पदक ज्ञान ( जिसमें ३६ काष्ठादि औषधों के मेलन से प्रयोग कर ३०० वर्ष की पूर्णायु होने की बात लिखी है ) वृक्षायुर्वेद, गवाश्व-चिकित्सा, उनके शान्ति विधान एवं औषध, रसलक्षण, मणि-माणिक्य आदि रत्न परीक्षा, व्याकरण, कोष, शब्दरूप, ऋग्, यजुः साम, अथर्व विधान, छन्द, शास्त्र, योग शास्त्र, वेदान्त शास्त्र, आदि द्वात्रिंशत् ( ३२ ) विद्या और चतुःषष्टि ( ६४ ) कलाओं का साङ्गोपाङ्ग विवरण किया गया है।

इस महापुराण की प्रशस्ति के लिये जितना कुछ कहा जाय थोड़ा है। इस बार उत्साह तो यह था कि इसकी विषय-सूची राष्ट्रभाषा हिन्दी में विषय-विविधता को देखकर सविस्तर बनवाई जाय तदर्थ काशी के प्रसिद्ध विद्वान् सामवेदी पण्डितवर्य श्री दुर्गादत्तजी त्रिपाठी, कलकत्ता के विशिष्ट कविराज पण्डित हरिवक्षजी जोशी, काव्य-सांख्य-स्मृति-तीर्थ एवं अन्यान्य विद्वज्जन के साहाय्य से सुन्दर विषय-सूची बनवाई गई। परन्तु दफ्तरी के द्वारा प्रतिदिन छपे फर्मों के दीमकों से नाश होने के डर से संक्षिप्त ही संस्कृत सूची तैयार कर साथ दी गई है। समय सापेक्ष अवकाश होने पर एक साथ ही पुस्तकाकार छपवाने का विचार है, तदर्थ उपर्युक्त विद्वज्जनों के प्रति मैं साभार कृतज्ञता-ज्ञापन करता हूं। इस ग्रन्थ के प्रकाशन में अपनी मोर प्राच्य शोधसंस्था की विद्वन्मण्डली का आशातीत-पूर्ण सहयोग प्राप्त हुआ है। तदर्थ श्री ब्रह्मदत्त त्रिवेदी, एम० ए०, व्याकरणाचार्य, श्री रामनाथ दाधीच, पुराण-तीर्थ एवं श्री

कजोड़ीलाल मिश्र, पौराणिक का विशेष सहकार्य योग मिला है। उन्हें कुछ कहना वा श्रेय देना उनकी क्रिया-कुशलता को लघु बनाना है।

पुराणप्रेमी विद्वज्जन इस महापुराण को सदा की भाँति अपने ज्ञान-विज्ञान सम्बन्धी अक्षुण्ण भण्डार में स्थान देकर कृतार्थ करेंगे। प्रकाशन में रही त्रुटियों को शोधन करने की दया दिखायेंगे। परमपिता परा एवं अपरा-विद्या के अद्वितीय भाण्डागार इस ग्रन्थ-रत्न द्वारा विश्वशान्ति तथा प्राणीमात्र के हित में हमें प्रेरित करते रहे यही प्रार्थना है।

"कामये दुःखतप्तानाम्प्राणिनामार्त्तिनाशनम्"

मार्गशीर्ष शु० ११,
गीताजयन्ती २०१४।

मनसुखराय मोर
५, क्लाइव रो,
कलकत्ता।

॥ श्रीगणेशाय नमः ॥

# सम्पादकीयम्

अयि भो ! वीणापाणि समुपासका विद्वज्जनाः सुविदितमस्तु तत्रभवतां विलक्षणप्रज्ञाविचक्षणानां विदुषां यदग्निपुराणमिदम्महापुराणं गुरुमण्डलग्रन्थमाला सप्तदशपुष्पोपहारीभूतं समुपस्थाप्यते भगवत्प्रीत्यर्थं प्रमोदाय भवताम्। विलक्षणं ज्ञानं, कियान् महिमा तस्य कथ्यते सर्वमपि भूतं, भविष्यद्, वर्तमानम्वा सर्वमस्मिन्प्रतिष्ठितम्। संस्कृत साहित्ये पुराणस्यास्य विश्वकोष इति नाम्ना प्रथितिः श्रीमच्छ्रेष्ठिप्रवरेण मनसुखरायमोरेण धर्मप्रचारमभिलषता स्वीयसद्द्रव्ययेन सुचिक्कण कर्गलोपरि सुस्पष्टाक्षर शीशकाक्षरयोजनया ग्रन्थरत्नमिदम्प्राकाशि तत्किमिति विदुषां प्रमोदाय नालम्। सुहृत्प्रवरो विदुषां नितरां समर्थनशील एष महानुभावः स्वोपार्जितसद्द्रव्यव्ययेन बहूनां ग्रन्थानां निरुक्तस्य, षट्पञ्चाशत्स्मृतीनां समुच्चयस्य नानापुराणानाञ्च प्रकाशनं विधाय निःस्वार्थं संस्कृतसाहित्यसेवामकार्षीदिति नात्र विवादविषयः ग्रन्थेऽस्मिन्मुद्राकरकराघातदोषेणास्मत्सहजमानुषधिया च सम्भवन्त्यस्त्रुट्यः सुधिभिः शोधनीयाः।

अत्रादर्शपुस्तकन्तु जीवानन्दविद्यासागरभट्टाचार्यसम्पादितमग्निमहापुराणमेव। आस्माकीनैषा समभिलाषा यद्विस्तरेण राष्ट्रभाषायां विषयसंयोजनमत्र भवेत्परन्तु करुणावरुणालयकृपाम्विना नैकम्पत्रजातमपि चलितुं न पारयति का कथाऽस्मादृशाम्पामरजनानाम्। अन्ते च विदुषां कृते संस्कृतग्रन्ध प्रकाशनपरायणः श्रीमच्छ्रेष्ठिवरः सकुटुम्बः स्थिरलक्ष्मीकश्चिरञ्जीव्याद् भूयसे धर्मसाधनायेति विश्वनाथान्नपूर्णाचरणेषु प्रार्थनाम्विधाय विरमामः।

कृतमलम्विज्ञेषु

निवेदकाः—

लक्ष्मणगढ़ वास्तव्य—ब्रह्मदत्त त्रिवेदि-

नवलदुर्गाभिजन—कजोड़ीलाल मिश्र-

रामनाथ दाधीचाः

मोरप्राच्य शोधसंस्थानम्—५, क्लाइव रो, कलिकाता।

॥ श्रीः ॥

# अग्निपुराणस्य विषयानुक्रमणिका

॥ समाप्तैषाऽग्निपुराणविषयिणीविषयानुक्रमणिका ॥

शमस्तु ।

---

॥ श्रीगणेशाय नमः ॥

* श्रीमत्कृष्णद्वैपायनमुनिविरचितम् *

# अग्निपुराणम्

श्रीयज्ञपुरुषाय नमः ।

## अथ प्रथमोऽध्यायः

### ग्रन्थप्रस्तावना ।

श्रियंसरस्वतीं गौरीं गणेशं स्कन्दमीश्वरम् । ब्रह्माणंवह्निमिन्द्रादीन् वासुदेवं नमाम्यहम्

नैमिषे हरिमीजाना ऋषयः शौनकादयः । तीर्थयात्राप्रसङ्गेन स्वागतं सूतमब्रुवन् ॥ २ ॥

ऋषय ऊचुः ।

सूत ! त्वं पूजितोऽस्माभिःसारात्सारं वदस्व नः । येन विज्ञानमात्रेण सर्वज्ञत्वं प्रजायते

सूत उवाच ।

सारात्सारो हि भगवान् विष्णुः सर्गादिकृद्विभुः ।
ब्रह्माहमस्मि तं ज्ञात्वा सर्वज्ञत्वं प्रजायते ॥ ४ ॥

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत् । द्वे विद्ये वेदितव्ये हि इति चाथर्वणी श्रुतिः

अहं शुकश्च पैलाद्या गत्वा बदरिकाश्रमम् ।
व्यासं नत्वा पृष्टवन्तः सोऽस्मान् सारमथाब्रवीत् ॥ ६ ॥

व्यास उवाच ।

शुकाद्यैः शृणु सूत त्वं वशिष्ठो मां यथाऽब्रवीत् ।
ब्रह्मसारं हि पृच्छन्तं मुनिभिश्च परात्परम् ॥ ७ ॥

वशिष्ठ उवाच ।

द्वैविध्यंब्रह्म वक्ष्यामि शृणु व्यासाखिलानुगम् । यथाऽग्निर्मांपुरा प्राह मुनिभिर्दैवतैःसह
पुराणं परमाग्नेयं ब्रह्मविद्याक्षरं परम् । ऋग्वेदाद्यपरं ब्रह्म सर्वदेवसुखावहम् ॥ ६ ॥
अग्निनोक्तं पुराणं यदाग्नेयं ब्रह्मसम्मितम् । भुक्तिमुक्तिप्रदं दिव्यं पठतां शृण्वतां नृणाम्

कालाग्निरूपिणं विष्णुं ज्योतिर्ब्रह्म परात्परम् ।
मुनिभिः पृष्टवान् देवं पूजितं ज्ञानकर्मभिः ॥ ११ ॥

वशिष्ठ उवाच ।

संसारसागरोत्तारनावं ब्रह्मश्वरं वद । विद्यासारं यद्विदित्वा सर्वज्ञो जायते नरः ॥

अग्निरुवाच ।

विष्णुः कालाग्निरुद्रोऽहं विद्यासारं वदामि ते ।
विद्यासारं पुराणं यत् सर्वं सर्वस्य कारणम् ॥ १३ ॥

सर्गस्य प्रतिसर्गस्य वंशमन्वन्तरस्य च । वंशानुचरितादेश्च मत्स्यकूर्मादिरूपधृक् ॥१४॥

द्वे विद्ये भगवान् विष्णुः परा चैवापरा च ह ।
ऋग्यजुःसामाथर्वाख्या वेदाङ्गानि च षड् द्विज ! ॥ १५ ॥
शिक्षाकल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः ।
छन्दोऽभिधानं मीमांसा धर्मशास्त्रं पुराणकम् ॥ १६ ॥

न्यायवैद्यकगान्धर्वं धनुर्वेदोऽर्थशास्त्रकम् । अपरेयं परा विद्या यया ब्रह्माभिगम्यते ॥
यत्तदद्दृश्यमग्राह्यमगोत्रचरणं ध्रुवम् । विष्णुनोक्तं यथा मह्यं देवेभ्यो ब्रह्मणा पुरा ।

तथा ते कथयिष्यामि हेतुं मत्स्यादिरूपिणम् ॥ १८ ॥

इत्यादिमहापुराणे आग्नेये प्रश्नो नाम प्रथमोऽध्यायः ।

———

## द्वितीयोऽध्यायः

### मत्स्यावतारवर्णनम् ।

वशिष्ठ उवाच ।

मत्स्यादिरूपिणंविष्णुं ब्रूहि सर्गादिकारणम् । पुराणंब्रह्म चाग्नेयं यथा विष्णोःपुराश्रुतम्

अग्निरुवाच ।

मत्स्यावतारं वक्ष्येऽहं वशिष्ठ ! शृणु वै हरेः । अवतारक्रिया दुष्टनष्ट्यै सत्पालनाय हि
आसीद्तीतकल्पान्ते ब्राह्मो नैमित्तिकोलयः । समुद्रोपप्लुतास्तत्र लोका भूरादिकामुने
मनुर्वैवस्वतस्तेपे तपो वै भुक्तिमुक्तये । एकदा कृतमालायां कुर्वतो जलतर्पणम् ॥ ४ ॥
तस्याञ्जल्युदके मत्स्यःस्वल्प एकोऽभ्यपद्यत । क्षेप्तुकामं जले प्राह न मां क्षिप नरोत्तम !

ग्राहादिभ्यो भयं मेऽद्य तच्छ्रुत्वा कलशेऽक्षिपत् ।
स तु वृद्धः पुनर्मत्स्यः प्राह तं देहि मे बृहत् ॥ ६ ॥

स्थानमेतद्वचः श्रुत्वा राजाऽथोदञ्चनेऽक्षिपत् । तत्र वृद्धोऽब्रवीद् भूपं पृथु देहि पदंमनो
सरोवरेपुनः क्षिप्तो ववृधे तत् प्रमाणवान् । ऊचेदेहि बृहत् स्थानं प्राक्षिपच्चाम्बुधौततः

लक्षयोजनविस्तीर्णः क्षणमात्रेण सोऽभवत् ।
मत्स्यं तमद्भुतं दृष्ट्वा विस्मितः प्राब्रवीन् मनुः ॥ ९ ॥

कोभवान्ननु वै विष्णुर्नारायण नमोऽस्तु ते । माययामोहयसि मां किमर्थं त्वं जनार्दन
मनुनोक्तोऽब्रवीन्मत्स्यो मनुं वै पालने रतम् । अवतीर्णो भवायास्य जगतो दुष्टनष्टये

सप्तमे दिवसे त्वब्धिः प्लावयिष्यति वै जगत् ।
उपस्थितायां नावि त्वं वीजादीनि विधाय च ॥ १२ ॥

सप्तर्षिभिःपरिवृतो निशां ब्राह्मीं चरिष्यसि । उपस्थितस्य मे शृङ्गे निबध्नीहि महाहिना
इत्युक्त्वान्तर्दधे मत्स्यो मनुः कालप्रतीक्षकः । स्थितः समुद्र उद्वेले नावमारुरुहे तदा ॥
एकशृङ्गधरोमत्स्यो हैमो नियुतयोजनः । नावम्बबन्ध तत् शृङ्गे मत्स्याख्यञ्चपुराणकम्

शुश्राव मत्स्यात् पापघ्नं संस्तुवन् स्तुतिभिश्च तम् ।
ब्रह्मवेदप्रहर्त्तारं हयग्रीवञ्च दानवम् ॥ १९ ॥
अवधीत् वेदमन्त्राद्यान् पालयामास केशवः । प्राप्ते कल्पेऽथ वाराहे कूर्मरूपोऽभवद्धरिः
इत्यादिमहापुराणे आग्नेये मत्स्यावतारो नाम द्वितीयोऽध्यायः ।

---

# तृतीयोऽध्यायः

## कूर्मावतारवर्णनम् ।

अग्निरुवाच ।

वक्ष्ये कूर्मावतारञ्च श्रुत्वा पापप्रणाशनम् । पुरा देवासुरे युद्धे दैत्यैर्देवाः पराजिताः ॥
दुर्वाससश्चशापेन निश्रीकाश्चाभवंस्तदा । स्तुत्वाक्षीराब्धिगं विष्णुमूचुःपालयचासुरात्
ब्रह्मादिकान् हरिः प्राह सन्धिं कुर्वन्तु चासुरैः ।
क्षीराब्धिमथनार्थं हि अमृतार्थं श्रियेऽसुराः ॥ ३ ॥
अरयोऽपि हि सन्धेयाः सतिकार्य्यार्थगौरवे । युष्मानमृतभाजो हि कारयामिनदानवान्
मन्थानंमन्दरं कृत्वानेत्रं कृत्वा तु वासुकिम् । क्षीराब्धिं मत्सहायेन निर्मन्थध्वमतन्द्रिताः
विष्णूक्तां संविदं कृत्वा दैत्यैः क्षीराब्धिमागताः ।
ततो मथितुमारब्धाः यतः पुच्छन्ततः सुराः ॥ ६ ॥
फणिनिःश्वाससन्तप्ता हरिणाप्यायिताः सुराः ।
मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत् ॥ ७ ॥
कूर्मरूपं समास्थाय दध्रे विष्णुश्च मन्दरम् । क्षीराब्धेर्मथ्यमानाच्च विषं हालाहलं ह्यभूत्
हरेण धारितं कण्ठे नीलकण्ठस्ततोऽभवत् । ततोऽभूद्वारुणी देवी परिजातस्तु कौस्तुभः
गावश्चाप्सरसो दिव्या लक्ष्मीर्देवी हरिं गता ।
पश्यन्तः सर्वदेवास्तां स्तुवन्तः सश्रियोऽभवन् ॥ १० ॥

ततो धन्वन्तरिर्विष्णुरायुर्वेदप्रवर्त्तकः । बिभ्रन् कमण्डलुं पूर्णममृतेन समुत्थितः॥११॥

अमृतं तत् कराद्दैत्यासुरेभ्योऽर्द्धं प्रदाय च ।

गृहीत्वा जग्मुर्जम्भाद्या विष्णुः स्त्रीरूपधृक् ततः ॥ १२ ॥

तांदृष्ट्वा रूपसम्पन्नां दैत्याःप्रोचुर्विमोहिताः । भव भार्य्याऽमृतं गृह्य पाययास्मान्वरानने

तथेत्युक्त्वा हरिस्तेभ्यो गृहीत्वाऽपाययत् सुरान् ।

चन्द्ररूपधरो राहुः पिबंश्चार्केन्दुनार्पितः ॥ १४ ॥

हरिणाप्यरिणा च्छिन्नं स राहुस्तच्छिरः पृथक् । कृपयाऽमरतान्नीतं वरदं हरिमब्रवीत्

राहुर्मत्तस्तु चन्द्रार्कौ प्राप्स्येते ग्रहणं ग्रहः ।

तस्मिन् काले च यद्दानं दास्यन्त (?) स्यात्तदक्षयम् ॥ १६ ॥

तथेत्याहाथ तं विष्णुस्ततः सर्वैः सहामरैः । स्त्रीरूपं सम्परित्यज्य हरेणोक्तः प्रदर्शय ॥

दर्शयामासरुद्राय स्त्रीरूपं भगवान्हरिः । माययामोहितः शम्भुः गौरीं त्यक्त्वास्त्रियङ्गतः

नग्न उन्मत्तरूपोऽभूत् स्त्रियः केशानधारयत् ।

आगाद्विमुच्य केशान् स्त्री अन्वधावच्च तां गताम् ॥ १६ ॥

स्खलितंतस्य वीर्यं कौ यत्र यत्र हरस्य हि । तत्र तत्राभवत् क्षेत्रं लिङ्गानां कनकस्य च

मायेयमिति तां ज्ञात्वा स्वरूपस्थोऽभवद्धरः ।

शिवमाह हरी रुद्र जिता माया त्वया हि मे ॥ २१ ॥

न जेतुमेनां शक्तो मे त्वदृतेऽन्यः पुमान्भुवि । अप्राप्याथामृतं दैत्या देवैर्युद्धेनिपातिताः

त्रिदिवस्थाः सुराश्चासन् यः पठेत् त्रिदिवं व्रजेत् ॥ २२ ॥

इत्यादिमहापुराणे आग्नेये कूर्म्मावतारो नाम तृतीयोऽध्यायः ।

———

# चतुर्थोऽध्यायः

## वराहाद्यवतारवर्णनम् ।

अग्निरुवाच ।

अवतारं वराहस्य वक्ष्येऽहं पापनाशनम् ।
हिरण्याक्षोऽसुरेशोऽभूद् देवान् जित्वा दिवि स्थितः ॥ १ ॥

देवैर्गत्वा स्तुतो विष्णुर्यज्ञरूपो वराहकः। अभूत् तं दानवंहत्वा दैत्यैः साकञ्चकण्टकम्
धर्मदेवादिरक्षाकृत् ततः सोऽन्तर्दधे हरिः । हिरण्याक्षस्य वै भ्राता हिरण्यकशिपुस्तथा
जितदेवयज्ञभागः सर्वदेवाधिकारकृत् । नारसिंहवपुः कृत्वा तं जघान सुरैः सह ॥ ४ ॥
स्वपदस्थान् सुरांश्चक्रे नारसिंहः सुरैः स्तुतः । देवासुरे पुरा युद्धे बलिप्रभृतिभिः सुराः

जिताः स्वर्गात्परिभ्रष्टा हरिं वै शरणं गताः ।
सुराणामभयं दत्वा अदित्या कश्यपेन च ॥ ६ ॥
स्तुतोऽसौ वामनो भूत्वा ह्यदित्यां स क्रतुं ययौ ।
बलेः श्रीयजमानस्य, राजद्वारेऽगृणात् श्रुतिम् ॥ ७ ॥
वेदान् पठन्तं तं श्रुत्वा वामनं वरदोऽब्रवीत् ।
निवारितोऽपि शुक्रेण बलिर्ब्रूहि यदिच्छसि ॥ ८ ॥

तत्तेऽहं सम्प्रदास्यामि वामनो बलिमब्रवीत्। पदत्रयं हि गुर्वर्थं देहि दास्ये तमब्रवीत् ॥
तोये तु पतिते हस्ते वामनोऽभूदवामनः । भूर्लोकं स भुवर्लोकं स्वर्लोकञ्च पदत्रयम् ॥
चक्रे बलिञ्च सुतलं तच्छक्राय ददौ हरिः । शक्रो देवैर्हरिं स्तुत्वा भुवनेशः सुखी त्वभूत्
वक्ष्ये परशुरामस्य चावतारं श्रृणु द्विज ! । उद्धतान् क्षत्रियान्मत्वा भूभारहरणाय सः
अवतीर्णो हरिः शान्त्यै देवविप्रादिपालकः । जमदग्ने रेणुकायां भार्गवः शस्त्रपारगः ॥
दत्तात्रेयप्रसादेन कार्त्तवीर्यो नृपस्त्वभूत् । सहस्रबाहुः सर्वोर्वीपतिः स मृगयां गतः ॥

श्रान्तो निमन्त्रितोऽरण्ये मुनिना जमदग्निना ।

कामधेनुप्रभावेण भोजितः सबलो नृपः ॥ १५ ॥
अप्रार्थयत् कामधेनुं यदा स न ददौ तदा । हृतवानथ रामेण शिरश्छित्वा निपातितः ॥
युद्धे परशुना राजा धेनुः स्वाश्रममाययौ । कार्त्तवीर्यस्य पुत्रैस्तु जमदग्निर्निपातितः ॥
रामे वनं गते वैरादथ रामः समागतः । पितरं निहतं दृष्ट्वा पितृनाशाभिमर्षितः ॥ १८ ॥
त्रिःसप्तकृत्वः पृथिवीं निःक्षत्रामकरोद् विभुः ।
कुरुक्षेत्रे पञ्च कुण्डान् कृत्वा सन्तर्प्य वै पितॄन् ॥ १६ ॥
काश्यपाय महीं दत्वा महेन्द्रे पर्वते स्थितः । कूर्म्मस्य च वराहस्य नृसिंहस्यचवामनम् (?)
अवतारं च रामस्य श्रुत्वा याति दिवं नरः ॥ २० ॥
इत्यादिमहापुराणे आग्नेये वराहनृसिंहाद्यवतारो नाम चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः

### श्रीरामावतारवर्णनम् ।

अग्निरुवाच ।

रामायणमहं वक्ष्ये नारदेनोदितं पुरा । वाल्मीकये यथा तद्वत् पठितं भुक्तिमुक्तिदम् ॥

नारद उवाच ।

विष्णुनाभ्यब्जजोब्रह्मा मरीचिर्ब्रह्मणःसुतः । मरीचेः कश्यपस्तस्मात् सूर्या वैवस्वतोमनुः
ततस्तस्मात् तथेक्ष्वाकुस्तस्य वंशे ककुत्स्थकः ।
ककुत्स्थस्य रघुस्तस्मादजो दशरथस्ततः ॥ ३ ॥
रावणादेर्वधार्थाय चतुर्द्धाभूत् स्वयं हरिः । राज्ञो दशरथाद्रामः कौशल्यायां बभूव ह
कैकेय्यां भरतः पुत्रः सुमित्रायाञ्च लक्ष्मणः । शत्रुघ्न ऋष्यश्रृङ्गेण तासुसन्दत्तपायसात्
प्राशिताद्यज्ञसंसिद्धाद्रामाद्याश्च समाः पितुः । यज्ञविघ्नविनाशाय विश्वामित्रार्थितो नृपः
रामं सम्प्रेषयामास लक्ष्मणं मुनिना सह ।

रामो गतोऽस्त्रशस्त्राणि शिक्षितस्ताडकान्तकृत् ॥ ७ ॥
मारीचं मानवास्त्रेण मोहितं दूरतोऽनयत् । सुबाहुं यज्ञहन्तारं सबलञ्चावधीत् बली ॥
सिद्धाश्रमनिवासी च विश्वामित्रादिभिः सह । गतः क्रतुं मैथिलस्य द्रष्टुञ्चाप सहानुजः
शतानन्दनिमित्तेन विश्वामित्रप्रभावतः । रामाय कथितो राज्ञा समुनिः पूजितः क्रतौ
धनुरापूरयामास लीलया स बभञ्जतत् । वीर्यशुल्काञ्च जनकः सीतां कन्यान्त्वयोनिजाम्
ददौ रामाय रामोऽपि पित्रादौ हि समागते । उपयेमे जानकीं तामुर्मिलां लक्ष्मणस्तथा
श्रुतकीर्तिं माण्डवीञ्च कुशध्वजसुते तथा । जनकस्यानुजस्यैते शत्रुघ्नभरतावुभौ ॥
कन्ये द्वे उपयेमाते जनकेन सपूजितः । रामोऽगात्सवशिष्ठाद्यैर्जामदग्न्यं विजित्य च ॥
अयोध्यां भरतोऽप्यागात् सशत्रुघ्नो युधाजितः ॥ १४ ॥

इत्यादिमहापुराणे आग्नेये रामायणे बालकाण्डवर्णनं नाम पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः

### श्रीरामावतारवर्णनम् ।

नारद उवाच ।

भरतेऽथ गते रामः पित्रादीनभ्यपूजयत् । राजा दशरथो राममुवाच शृणु राघव ! ॥
गुणानुरागाद्राज्ये त्वं प्रजाभिरभिषेचितः । मनसाऽहं प्रभाते ते यौवराज्यं ददामि ह
रात्रौ त्वं सीतया सार्धं संयतः सुव्रतो भव ।
राज्ञश्च मन्त्रिणश्चाष्टौ सवसिष्ठास्तथाब्रुवन् ॥ ३ ॥
सृष्टिर्जयन्तो विजयः सिद्धार्थो राष्ट्रवर्धनः । अशोको धर्मपालश्च सुमन्त्रः सवशिष्ठकः
पित्रादिवचनं श्रुत्वा तथेत्युक्त्वा स राघवः ।
स्थितो देवार्चनं कृत्वा कौशल्यायै निवेद्य तत् ॥ ५ ॥
राजोवाच वशिष्ठादीन्रामराज्याभिषेचने । सम्भारान् सम्भवन्तुस्मेत्युक्त्वा कैकयीं गतः

अयोध्यालङ्कृतिं दृष्ट्वा ज्ञात्वा रामाभिषेचनम् ।
भविष्यतीत्याचचक्षे कैकेयीं मन्थरा सखी ॥ ७ ॥
पादौ गृहीत्वा रामेण कर्षिता सापराधतः ।
तेन वैरेण सा रामवनवासञ्च काङ्क्षति ॥ ८ ॥

कैकेयि ! त्वं समुत्तिष्ठ रामराज्याभिषेचनम् । मरणं तव पुत्रस्य मम ते नात्र संशयः ॥ कुब्जयोक्तञ्च तच्छ्रुत्वा एकमाभरणं ददौ । उवाच मे यथा रामस्तथा मे भरतः सुतः उपायन्तु न पश्यामि भरतो येन राज्यभाक् । कैकेयीमब्रवीत् क्रुद्धाहारंत्यक्त्वाऽथमन्थरा बालिशे रक्ष भरतमात्मानं मां च राघवात् । भविता राघवो राजा राघवस्य ततःसुतः राजवंशस्तु कैकेयि ! भरतात् परिहास्यते । देवासुरे पुरा युद्धे शम्बरेण हताः सुताः ॥

रात्रौ भर्त्ता गतस्तत्र रक्षितो विद्यया त्वया ।
वरद्वयं तदा प्रादाद्याचेदानीं नृपञ्च तत् ॥ १४ ॥

रामस्य च वनेवासं नव वर्षाणि पञ्च च । यौवराज्यञ्च भरते तदिदानीं प्रदास्यति ॥ प्रोत्साहिता कुब्जया सा अनर्थे चार्थदर्शिनी । उवाच सदुपायं मे कच्चित्तं कारयिष्यति क्रोधागारं प्रविष्टाऽथ पतिता भुवि मूर्च्छिता । द्विजादीनर्चयित्वाऽथ राजा दशरथस्तदा

ददर्श कैकयीं रुष्टामुवाच कथमीदृशी ।
रोगार्त्ता किं भयोद्विग्ना किमिच्छसि करोमि तत् ॥ १८ ॥

येन रामेण हि विना न जीवामि मुहूर्त्तकम् । शपामि तेन कुर्यां वै वाञ्छितं तव सुन्दरि सत्यं ब्रूहीति सोवाच नृपं मह्यं ददासिचेत् । वरद्वयं पूर्व्वदत्तं सत्यात् त्वं देहि मे नृप! चतुर्द्दशसमा रामो वने वसतु संयतः । सम्भारैरेभिरद्यैव भरतोऽत्राभिषेच्यताम् ॥

विषं पीत्वा मरिष्यामि दास्यसि त्वं न चेन्नृप ।
तच्छ्रुत्वा मूर्च्छितो भूमौ वज्राहत इवापि तत् ॥ २२

मुहूर्त्ताच्चेतनां प्राप्य कैकेयीमिदमब्रवीत् । किं कृतं तव रामेण मया वा पापनिश्चये ॥ यन्मामेवं ब्रवीषि त्वं सर्वलोकाप्रियङ्करि ! । केवलं त्वत्प्रियंकृत्वाभविष्यामिसुनिन्दितः या त्वं भार्या कालरात्री भरतो नेदृशः सुतः । प्रशाधि विधवा राज्यं मृते मयिगतेसुदे

सत्यपाशनिबद्धस्तु राममाहूय चाब्रवीत् ।
कैकेय्या वञ्चितो राम ! राज्यं कुरु निगृह्य माम् ॥ २६ ॥
त्वया वने तु वस्तव्यं कैकेयी भरतो नृपः । पितरञ्चैव कैकेयीं नमस्कृत्य प्रदक्षिणम्
कृत्वा नत्वा च कौशल्यां समाश्वास्य सलक्ष्मणः ।
सीतया भार्यया सार्द्धं सरथः ससुमन्त्रकः ॥ २८ ॥
दत्वा दानानि विप्रेभ्यो दीनानाथेभ्यएवसः । मातृभिश्चैवविप्राद्यैःशोकार्त्तैर्निर्गतःपुरात्
उषित्वा तमसातीरे रात्रौ पौरान् विहाय च । प्रभातेतमपश्यन्तोऽयोध्यांतेपुनरागताः
रुदन् राजापि कौशल्यागृहमागात् सुदुःखितः । पौराजनास्त्रियःसर्वारुरुदू राजयोषितः
रामो रथस्थश्चीराढ्यः शृङ्गवेरपुरं ययौ । गुहेन पूजितस्तत्र इङ्गुदीमूलमाश्रितः ॥ ३२ ॥
लक्ष्मणः स गुहो रात्रौ चक्रतुर्जागरं हि तौ । सुमन्त्रं सरथंत्यक्त्वाप्रातर्नावाथजाह्नवीम्
रामलक्ष्मणसीताश्च तीर्णा आपुः प्रयागकम् । भरद्वाजं नमस्कृत्य चित्रकूटं गिरिं ययुः
वास्तुपूजान्ततः कृत्वा स्थिता मन्दाकिनीतटे । सीतायै दर्शयामास चित्रकूटञ्च राघवः
नखैर्विदारयन्तं तां काकं तच्चक्षुराक्षिपत् । ऐषिकास्त्रेण शरणं प्राप्तो देवान् विहायसः
रामे वनं गते राजा षष्ठेऽह्नि निशि चाब्रवीत् ।
कौशल्यां स कथां पौर्वां यदज्ञानाद्धतः पुरा ॥ ३७ ॥
कौमारे सरयूतीरे यज्ञदत्तकुमारकः । शब्दभेदाच्च कुम्भेन शब्दंकुर्वंश्च तत्पिता ॥ ३८ ॥
शशाप विलपन्मात्रा शोकं कृत्वा रुदन्मुहुः । पुत्रंविनामरिष्यावस्त्वंचशोकान्मरिष्यसि
पुत्रं विना स्मरन् शोकात् कौशल्ये ! मरणं मम ।
कथामुक्त्वाऽथ हा ! राममुक्त्वा राजा दिवङ्गतः ॥ ४०
सुप्तं मत्त्वाऽथ कौशल्या सुप्ता शोकार्त्तमेवसा । सुप्रभाते गायनाश्च सूतमागधवन्दिनः
प्रबोधका बोधयन्ति न च बुध्यत्यसौ मृतः ।
कौशल्या तं मृतं ज्ञात्वा हा हतास्मीति चाब्रवीत् ॥ ४२ ॥
नरानार्योऽथ रुरुदुरानीतो भरतस्तदा । वशिष्ठाद्यैः सशत्रुघ्नः शीघ्रं राजगृहात् पुरीम् ॥
दृष्ट्वा सशोकां कैकेयीं निन्दयामास दुःखितः ।

अकीर्त्तिः पातिता मूर्द्धि कौशल्यां स प्रशस्य च ॥ ४४ ॥
पितस्तैलद्रोणिस्थं संस्कृत्य सरयूतटे । वशिष्ठाद्यैर्जनैरुक्तो राज्यं कुर्विति सोऽब्रवीत्
व्रजामि राममानेतुं रामो राजा मतो बली । शृङ्गवेरंप्रयागञ्च भरद्वाजेन भोजितः ॥४६॥
नमस्कृत्य भरद्वाजं रामं लक्ष्मणमागतः । पिता स्वर्गं गतो राम ! अयोध्यायां नृपोभव
अहं वनं प्रयास्यामि त्वदादेशप्रतीक्षकः । रामः श्रुत्वा जलं दत्वा गृहीत्वा पादुके व्रज
राज्यायाहन्न यास्यामि सत्याच्चीरजटाधरः । रामोक्तोभरतश्चायान्नन्दिग्रामेस्थितोबली
त्यक्त्वाऽयोध्यां पादुके ते पूज्य राज्यमपालयत् ॥ ४६ ॥

इत्यादिमहापुराणे आग्नेये रामायणेऽयोध्याकाण्डवर्णनंनाम षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः

### रामायणवर्णनम् ।

नारद उवाच ।

रामो वशिष्ठं मातॄंश्च नत्वाऽत्रिञ्च प्रणम्य सः । अनुसूयाञ्चतत्पत्नींशरभङ्गं सुतीक्ष्णकम्
अगस्त्यभ्रातरं नत्वा अगस्त्यन्तत् प्रसादतः । धनुः खड्गञ्चसम्प्राप्यदण्डकारण्यमागतः
जनस्थाने पञ्चवट्यां स्थितो गोदावरीतटे । तत्र सूर्पणखाऽऽयाता भक्षितुं तान् भयङ्करी
रामं सुरूपं दृष्ट्वा सा कामिनी वाक्यमब्रवीत् ।
कस्त्वं कस्मात्समायातो भर्त्ता मे भव चार्थितः ॥ ४ ॥
एतौ च भक्षयिष्यामि इत्युक्त्वा तं समुद्यता ।
तस्या नासाञ्च कर्णौ च रामोक्तो लक्ष्मणोऽच्छिनत् ॥ ५ ॥
रक्तं क्षरन्ती प्रययौ खरं भ्रातरमब्रवीत् । मरिष्यामि विनासाऽहं खर जीवामि वै तदा
रामस्य भार्य्या सीताऽसौ तस्यासील्लक्ष्मणोऽनुजः ।
तेषां यद्रुधिरं सोष्णं पाययिष्यसि मां यदि ॥ ७ ॥

खरस्तथेति तामुक्त्वा चतुर्दशसहस्रकैः । रक्षसां दूषणेनागाद् योद्धुं त्रिशिरसा सह ॥
रामं रामोऽपि युयुधे शरैर्विव्याध राक्षसान् । हस्त्यश्वरथपादातं बलं निन्ये यमक्षयम्
त्रिशीर्षाणं खरं रौद्रं युध्यन्तञ्चैव दूषणम् । ययौ सूर्पणखा लङ्कां रावणाग्रेऽपतद् भुवि

अब्रवीद् रावणं क्रुद्धा न त्वं राजा न रक्षकः ।
खरादिहन्तू रामस्य सीतां भार्य्यां हरस्व च ॥ ११ ॥

रामलक्ष्मणरक्तस्य पानाज्जीवामि नान्यथा । तथेत्याह च तच्छ्रुत्वा मारीचं प्राहवै व्रज
स्वर्णचित्रमृगो भूत्वा रामलक्ष्मणकर्षकः । सीताग्रे तां हरिष्यामि अन्यथा मरणं तव
मारीचो रावणं प्राह रामो मृत्युर्धनुर्धरः । रावणादपि मर्त्तव्यं मर्त्तव्यं राघवादपि ।१४

अवश्यं यदि मर्त्तव्यं वरं रामो न रावणः ।
इति मत्वा मृगो भूत्वा सीताग्रे व्यचरन् मुहुः ॥ १५ ॥

सीतया प्रेरितो रामः शरेणाथावधीच्चतम् । म्रियमाणोमृगः प्राह हा सीतेलक्ष्मणेतिच
सौमित्रिःसीतयोक्तोऽथ विरुद्धंराममागतः । रावणोऽप्यहरत्सीतां हत्वागृध्रंजटायुषम्

जटायुषा स भिन्नाङ्गो अङ्केनादाय जानकीम् ।
गतो लङ्कामशोकाख्ये धारयामास चाब्रवीत् ॥ १८ ॥
भव भार्य्या समाग्न्या त्वं राक्षस्यो ! रक्ष्यतामियम् ।
रामो हत्वा तु मारीचं दृष्ट्वा लक्ष्मणमब्रवीत् ॥ १९ ॥
मायामृगोऽसौ सौमित्रे ! यथा त्वमिह चागतः ।
तथा सीता हृता नूनं नापश्यत् स गतोऽथ ताम् ॥ २० ॥
शुशोच विललापार्त्तो मान्त्यक्त्वा क्व गतासि वै ।
लक्ष्मणाश्वासितो रामो मार्गयामास जानकीम् ॥ २१ ॥

दृष्ट्वा जटायुस्तं प्राह रावणो हृतवांश्चताम् । मृतोऽथ संस्कृतस्तेनकबन्धश्चावधीत्ततः

शापमुक्तोऽब्रवीद् रामं स त्वं सुग्रीवमाव्रज ॥ २२ ॥

इत्यादिमहापुराणे आग्नेये रामायणे अरण्यकाण्डवर्णनं नाम सप्तमोऽध्यायः ।

# अष्टमोऽध्यायः

## श्रीरामावतारकथनम् ।

नारद उवाच ।

रामः पम्पासरो गत्वा शोचन् स शर्वरीं ततः । हनूमता स सुग्रीवं नीतो मित्रञ्चकार ह

सप्त तालान् विनिर्भिद्य शरेणैकेन पश्यतः । पादेन दुन्दुभेः कायञ्चिक्षेप दशयोजनम् ॥

तद्रिपुं बालिनं हत्वा भ्रातरं वैरकारिणम् ।
किष्किन्धां कपिराज्यञ्च रुमान्तारां समर्पयत् ॥ ३ ॥
ऋष्यमूके हरीशाय किष्किन्धेशोऽब्रवीत् स च ।
सीतां त्वं प्राप्स्यसे यद्वत् तथा राम ! करोमि ते ॥ ४ ॥
तच्छ्रुत्वा माल्यवत्पृष्ठे चातुर्मास्यं चकार सः ।
किष्किन्धायाञ्च सुग्रीवो यदा नायाति दर्शनम् ॥ ५ ॥

तदाऽब्रवीत्तंरामोक्तं लक्ष्मणो व्रज राघवम् । न स सङ्कुचितः पन्था येन बालीहतो गतः

समये तिष्ठ सुग्रीव ! मा बालिपथमन्वगाः । सुग्रीवआह संसक्तो गतं कालं न बुद्धवान्

इत्युक्त्वा स गतो रामं नत्वोवाच हरीश्वरः । आनीता वानराः सर्वे सीतायाञ्च गवेषणे

त्वन्मतात् प्रेषयिष्यामि विचिन्वन्तु च जानकीम् ।
पूर्वादौ मासमायान्तु मासादूर्ध्वं निहन्मि तान् ॥ ६ ॥

इत्युक्त्वा वानराः पूर्वपश्चिमोत्तरमार्गगाः । जग्मू रामं ससुग्रीवमपश्यन्तस्तु जानकीम्

रामाङ्गुलीयं सङ्गृह्य हनूमान् वानरैः सह । दक्षिणे मार्गयामास सुप्रभाया गुहान्तिके

मासादूर्ध्वञ्च विन्यस्ता अपश्यन्तस्तुजानकीम् । ऊचुर्वृथा मरिष्यामो जटायुर्धन्यएवसः

सीतार्थेयोऽत्यजत्प्राणान्रावणेनहतोरणे । तच्छ्रुत्वाप्राह सम्पातिर्विहायकपिभक्षणम्

भ्राताऽसौमेजटायुर्वैमयोड्डीनोऽर्कमण्डलम् । अर्कतापाद्रक्षितोऽगाद्दुग्धपक्षोऽहमभ्रगः

रामवार्त्ताश्रवात् पक्षौ जातौ भूयोऽथ जानकीम् ।

पश्याम्यशोकवनिकागतां लङ्कागतां किल ॥ १५ ॥

शतयोजनविस्तीर्णे लवणाब्धौ त्रिकूटके । ज्ञात्वा रामं ससुग्रीवं वानराः कथयन्तु वै

इत्यादिमहापुराणे आग्नेये रामायणे किष्किन्धाकाण्डवर्णनं नाम अष्टमोऽध्यायः ।

---

## नवमोऽध्यायः

### श्रीरामावतारकथनम् ।

नारद उवाच ।

सम्पातिवचनंश्रुत्वाहनुमानङ्गदादयः । अब्धिंदृष्ट्वाऽब्रुवंस्तेऽब्धिंलङ्घयेत् कोनु जीवयेत्

कपीनां जीवनार्थाय रामकार्य्यप्रसिद्धये । शतयोजनविस्तीर्णं पुप्लुवेऽब्धिं स मारुतिः

दृष्ट्वोत्थितश्च मैनाकं सिंहिकां विनिपात्य च ।

लङ्कां दृष्ट्वा राक्षसानां गृहाणि वनिता गृहे ॥ ३ ॥

दशग्रीवस्यकुम्भस्य कुम्भकर्णस्यरक्षसः । विभीषणस्येन्द्रजितो गृहेऽन्येषां च रक्षसाम्

नापश्यत् पानभूम्यादौ सीतां चिन्तापरायणः ।

अशोकवनिकां गत्वा दृष्टवाञ्छिंशपातले ॥ ५ ॥

राक्षसीरक्षितां सीतां भव भार्य्येति वादिनम् ।

रावणं शिंशपास्थोऽथ नेति सीतान्तु वादिनीम् ॥ ६ ॥

भव भार्या रावणस्य राक्षसीर्वादिनीः कपिः । गते तु रावणे प्राह रजादशरथोऽभवत्

रामोऽस्य लक्ष्मणः पुत्रौ वनवासङ्गतौ वरौ । रामपत्नी जानकी त्वं रावणेनहृताबलात्

रामः सुग्रीवमित्रस्त्वां मार्गयन् प्रेषयच्च माम् । साभिज्ञानञ्चाङ्गुलीयं रामदत्तं गृहाण वै

सीताऽङ्गुलीयं जग्राह साऽपश्यन् मारुतिं तरौ । भूयोऽग्रेचोपविष्टंतमुवाचयदिजीवति

रामः कथं न नयति शङ्कितामब्रवीत् कपिः ।

रामः सीते ! न जानोते ज्ञात्वा त्वां स नयिष्यति ॥ ११ ॥

रावणं राक्षसं हत्वा सबलं देवि ! मा शुच । साभिज्ञानं देहिमेत्वंमणिंसीताऽददत्कपौ
उवाच मां यथा रामो नयेच्छीघ्रं तथा कुरु। काकाक्षिपातनकथाम्प्रतियाहि हि शोकह !
मणिं कथां गृहीत्वाऽऽह हनूमान्नेष्यते पतिः । अथवा तेत्वराकाचित्पृष्ठमारुह मे शुभे !
अद्य त्वां दर्शयिष्यामि ससुग्रीवञ्च राघवम् । सीताऽब्रवीद्धनूमन्तं नयतां मां हि राघवः
हनूमान् स दशग्रीवदर्शनोपायमाकरोत् । वनं बभञ्ज तत्पालान् हत्वा दन्तनखादिभिः
हत्वा तु किङ्करान् सर्वान् सप्त मन्त्रिसुतानपि । पुत्रमक्षं कुमारञ्च शक्रजिच्चबबन्धतम्
नागपाशेन पिङ्गाक्षं दर्शयामास रावणम् । उवाच रावणः कस्त्वं मारुतिःप्राहरावणम्
रामदूतो राघवाय सीतां देहि मरिष्यसि । रामबाणैर्हतः सार्द्धं लङ्कास्थै राक्षसैर्ध्रुवम् ॥
रावणो हन्तुमुद्युक्तो विभीषणनिवारितः । दीपयामास लाङ्गूलं दीप्तपुच्छः स मारुतिः
दग्ध्वा लङ्कां राक्षसांश्च दृष्ट्वा सीतां प्रणम्य ताम् । समुद्रपारमागम्य दृष्टा सीतेति चाब्रवीत्
अङ्गदादीनङ्गदाद्यैः पीत्वा मधुवने मधु । जित्वा दधिमुखादींश्च दृष्ट्वा रामञ्च तेऽब्रुवन् ॥

दृष्टा सीतेति रामोऽपि हृष्टः पप्रच्छ मारुतिम् ।
कथं दृष्टा त्वया सीता किमुवाच च मां प्रति ॥ २३ ॥

सीताकथामृतेनैव सिञ्च मां कामवह्निगम् । हनूमानब्रवीद् रामंलङ्घयित्वाऽब्धिमागतः

सीतां दृष्ट्वा पुरीं दग्ध्वा सीतामणिं गृहाण वै ।
हत्वा त्वं रावणं सीतां प्राप्स्यसे राम ! मा शुच ॥ २५ ॥

गृहीत्वा तं मणिं रामो रुरोद विरहातुरः । मणिंदृष्ट्वा जानकी मे दृष्टा सीता नयस्वमाम्
तयाविना न जीवामि सुग्रीवाद्यैः प्रबोधितः । समुद्रतीरंगतवान् तत्र रामं विभीषणः
गतस्तिरस्कृतो भ्रात्रा रावणेन दुरात्मना । रामाय देहि सीतां त्वमित्युक्तेनाऽसहायवान्
रामो विभीषणं मित्रं लङ्कैश्वर्येऽभ्यषेचयत् । समुद्रं प्रार्थयन्मार्गं यदानायात् तदा शरैः
भेदयामास रामश्च उवाचाब्धिः समागतः । नलेन सेतुं बध्वाब्धौ लङ्कां व्रज गभीरकः
अहं त्वया कृतः पूर्वं रामोऽपि नलसेतुना । कृतेन तरुशैलाद्यैर्गतः पारं महोदधेः ।

वानरैः स सुवेलस्थः सह लङ्कां ददर्श वै ॥ ३१ ॥

इत्यादिमहापुराणे आग्नेये रामायणे सुन्दरकाण्डवर्णनं नाम नवमोऽध्यायः ।

# दशमोऽध्यायः

## श्रीरामावतारवर्णनम् ।

नारद उवाच ।

रामोक्तश्चाङ्गदो गत्वा रावणं प्राह जानकी । दीयतां राघवायाशु अन्यथा त्वंमरिष्यसि
रावणो हन्तुमुद्युक्तः संग्रामोद्धतराक्षसः । रामायाह दशग्रीवो युद्धमेकं तु मन्यते ॥२॥
रामो युद्धाय तच्छ्रुत्वा लङ्कां सकपिराययौ ।
वानरो हनूमान् मैन्दो द्विविदो जाम्बवान्नलः ॥ ३ ॥
नीलस्तारोऽङ्गदो धूम्रः सुषेणः केशरी गयः । पनसो विनतो रम्भः शरभः क्रथनोबली
गवाक्षो दधिवक्त्रश्च गवयो गन्धमादनः। एते चान्ये च सुग्रीव एतैर्युक्तो ह्यसङ्ख्यकैः
रक्षसां वानराणाञ्च युद्धं सङ्कुलमाबभौ । राक्षसा वानरान् जघ्नुःशरशक्तिगदादिभिः ॥
वानरा राक्षसान् जघ्नुर्नखदन्तशिलादिभिः । हस्त्यश्वरथपादातं राक्षसानां बलं हतम्
हनूमान् गिरिश्रृङ्गेण धूम्राक्षमवधीद्रिपुम् । अकम्पनं प्रहस्तञ्च युध्यन्तं नील आवधीत्
इन्द्रजिच्छरबन्धाच्च विमुक्तौ रामलक्ष्मणौ । तार्क्ष्यसन्दर्शनाद्बाणैर्जघ्नतू राक्षसं बलम् ॥
रामः शरैर्जर्जरितं रावणञ्चाकरोद्रणे । रावणः कुम्भकर्णञ्च बोधयामास दुःखितः १०
कुम्भकर्णःप्रबुद्धोऽथ पीत्वा घटसहस्रकम् । मद्यस्य महिषादीनां भक्षयित्वाऽऽहरावणम्
सीताया हरणं पापं कृतन्त्वं हि गुरुर्यतः । अतो गच्छामि युद्धाय रामं हन्मि सवानरम्
इत्युक्त्वा वानरान् सर्वान् कुम्भकर्णो ममर्दह । गृहीतस्तेन सुग्रीवःकर्णनासंचकर्त्त सः
कर्णनासाविहीनोऽसौ भक्षयामास वानरान् ।
रामोऽथ कुम्भकर्णस्य बाहू चिच्छेद सायकैः ॥ १४ ॥
ततः पादौ ततश्छित्वा शिरो भूमौ व्यपातयत् ।
अथ कुम्भो निकुम्भश्च मकराक्षश्च राक्षसः ॥ १५ ॥
महोदरो महापार्श्वो मत्त उन्मत्तराक्षसः । प्रघसो भासकर्णश्च विरूपाक्षश्च संयुगे ॥

देवान्तकोनरान्तश्च त्रिशिराश्चातिकायकः । रामेण लक्ष्मणेनैते वानरैः सविभीषणैः ॥

युध्यमानास्तथा ह्यन्ये राक्षसा भुवि पातिताः ।

इन्द्रजिन्मायया युध्यन् रामादीन् सम्बबन्ध ह ॥ १८ ॥

वरदत्तैर्नागबाणैः ओषध्या तौ विशल्यकौ । विशल्ययाव्रणौ कृत्वा मारुत्यानीतपर्वते

हनूमान् धारयामास तत्रागं यत्र संस्थितः ।

निकुम्भिलायां होमादि कुर्वन्तं तं हि लक्ष्मणः ॥ २० ॥

शरैरिन्द्रजितं वीरं युद्धे तं तु व्यशातयत् । रावणः शोकसन्तप्तः सीतां हन्तुं समुद्यतः

अविन्ध्यवारितो राजा रथस्थः सबलो ययौ । इन्द्रोक्तो मातली रामं रथस्थंप्रचकारतम्

रामरावणयोर्युद्धं रामरावणयोरिव । रावणो वानरान् हन्ति मारुत्याद्याश्च रावणम् ॥

रामः शस्त्रैस्तमस्त्रैश्च ववर्ष जलदो यथा । तस्य ध्वजं सचिच्छेदरथमश्वांश्चसारथिम्

धनुर्बाहूञ्छिरांस्येव उत्तिष्ठन्ति शिरांसि हि । पैतामहेन हृदयं भित्वा रामेण रावणः ॥

भूतले पातितः सर्वैं राक्षसै रुरुदुः स्त्रियः । आश्वास्य तञ्च संस्कृत्यरामाज्ञप्तोविभीषणः

हनूमतानयद् रामः सीतां शुद्धां गृहीतवान् । रामोवह्नौप्रविष्टान्तांशुद्धामिन्द्रादिभिःस्तुतः

ब्रह्मणा दशरथेन त्वं विष्णूराक्षसमर्दनः । इन्द्रोऽर्चितोऽमृतवृष्ट्याजीवयामासवानरान्

रामेण पूजिता जग्मुर्युद्धंःदृष्ट्वा दिवञ्च ते । रामो विभीषणायादाल्लङ्कामभ्यर्च्य वानरान्

ससीतः पुष्पके स्थित्वा गतमार्गेण वै गतः । दर्शयन् वनदुर्गाणि सीतायै हृष्टमानसः ॥

भरद्वाजं नमस्कृत्य नन्दिग्रामं समागतः । भरतेन नतश्चागादयोध्यान्तत्र संस्थितः ॥

वसिष्ठादीन् नमस्कृत्य कौशल्याञ्चैव केकयीम् (?) ।

सुमित्रां प्राप्तराज्योऽथ द्विजादीन् सोऽभ्यपूजयत् ॥ ३२ ॥

वासुदेवं स्वमात्मानमश्वमेधैरथायजत् । सर्वदानानि सददौ पालयामास सः प्रजाः ॥

पुत्रवद्धर्मकामादीन् दुष्टनिग्रहणे रतः । सर्वधर्मपरो लोकः सर्वशस्या च मेदिनी ।

नाकालमरणञ्चासीद्रामे राज्यं प्रशासति ॥ ३४ ॥

इत्यादिमहापुराणे आग्नेये रामायणे युद्धकाण्डवर्णनं नाम दशमोऽध्यायः ।

———

# एकादशोऽध्यायः

## श्रीरामावतारवर्णनम् ।

### नारद उवाच

राज्यस्थं राघवं जग्मु रगस्त्याद्याः सुपूजिताः ।
धन्यस्त्वं विजयी यस्मादिन्द्रजिद् विनिपातितः ॥ १ ॥
ब्रह्मात्मजः पुलस्त्योऽभूत् विश्रवास्तस्य कैकसी ।
पुष्पोत्कटाऽभूत् प्रथमा तत् पुत्रोऽभूद्धनेश्वरः ॥ २ ॥
कैकस्यां रावणो जज्ञे विंशद्बाहुर्दशाननः । तपसा ब्रह्मदत्तेन वरेण जितदैवतः ॥ ३ ॥
कुम्भकर्णः सनिद्रोऽभूद्धर्मिष्ठोऽभूद्विभीषणः ।
स्वसा शूर्पणखा तेषां रावणान्मेघनादकः ॥ ४ ॥
इन्द्रं जितेन्द्रजिच्चाभूद् रावणादधिको बली । हतस्त्वया लक्ष्मणेन देवादेःक्षेममिच्छता
इत्युक्त्वा ते गता विप्रा अगस्त्याद्या नमस्कृताः ।
देवप्रार्थितरामोक्तः शत्रुघ्नो लवणार्दनः ॥ ६ ॥
अभूत् पूर्मथुरा:'काचित् रामोक्तो भरतोऽवधीत् ।
कोटित्रयञ्च शैलूषपुत्राणां निशितैः शरैः ॥ ७ ॥
शैलूषं दुष्टगन्धर्वं सिन्धुतीरनिवासिनम् । तक्षश्च पुष्करं पुत्रं स्थापयित्वाऽथ देशयोः ॥
भरतोऽगात्सशत्रुघ्नो राघवं पूजयन् स्थितः ।
रामो दुष्टान्निहत्याजौ शिष्टान् सम्पाल्य:मानवः ॥ ९ ॥
पुत्रौ कुशलवौ जातौ वाल्मीकेराश्रमे वरौ । लोकापवादात्त्यक्तायां ज्ञातौ सुचरितश्रवात्
राज्येऽभिषिच्य ब्रह्माहस्मीति ध्यानतत्परः । दशवर्षसहस्राणि दशवर्षशतानि च ॥११॥
राज्यं कृत्वा क्रतून् कृत्वा स्वर्गं देवार्चितो ययौ ।
सपौरः सानुजः सीतापुत्रो जनपदान्वितः ॥ १२ ॥

अग्निरुवाच ।

वाल्मीकिर्नारदाच्छ्रुत्वा रामायणमकारयत् ।
सविस्तरं यदेतच्च शृणुयात्स दिवं व्रजेत् ॥ १३ ॥

इत्यादिमहापुराणे आग्नेये रामायणे उत्तरकाण्डवर्णनं नाम एकादशोऽध्यायः ।

————

# द्वादशोऽध्यायः

## श्रीहरिवंशवर्णनम्

अग्निरुवाच ।

हरिवंशं प्रवक्ष्यामि विष्णुनाभ्यम्बुजादजः । ब्रह्मणोऽत्रिस्ततः सोमः सोमाज्जातः पुरूरवाः
तस्मादायुरभूत्तस्मान्नहुषोऽतो ययातिकः । यदुश्च तुर्वसुस्तस्माद्देवयानी व्यजायत ॥
द्रुह्युश्चानुश्च पूरुश्च शर्मिष्ठा वार्षपर्व्वणो । यदोः कुले यादवाश्च वसुदेवस्तदुत्तमः ॥३॥
भुवो भारावतारार्थं देवक्यां वसुदेवतः । हिरण्यकशिपोः पुत्राः षड्गर्भा योगनिद्रया ॥
विष्णुप्रयुक्तया नीता देवकीजठरं पुरा । अभूच्च सप्तमो गर्भो देवक्या जठराद्बलः ॥५॥

सङ्क्रामितोऽभूद्रोहिण्यां रौहिणेयस्ततो हरिः ।
कृष्णाष्टम्याञ्च नभसि अर्द्धरात्रे चतुर्भुजः ॥ ६ ॥

देवक्या वसुदेवेन स्तुतो बालो द्विबाहुकः । वसुदेवः कंसभयाद् यशोदाशयनेऽनयत् ॥
यशोदा बालिकां गृह्य देवकीशयनेऽनयत् । कंसो बालध्वनिं श्रुत्वाताञ्चिक्षेपशिलातले

वारितोऽपि स देवक्या मृत्युर्गर्भोऽष्टमो मम ।
श्रुत्वाऽशरीरिणीं वाचं मत्तो गर्भास्तु मारिताः ॥ ९ ॥

समर्पितास्तु देवक्या विवाहसमयेरिताः । साक्षिप्ता बालिका कंसमाकाशस्थाब्रवीदिदम्

किं मया क्षिप्तया कंस ! जातो यस्त्वां वधिष्यति ।
सर्व्वस्वभूतो देवानां भूभारहरणाय सः ॥ ११ ॥

इत्युक्त्वा सा च शुम्भादीन् हत्वेन्द्रेण च संस्तुता ।
आर्या दुर्गा वेदगर्भा अम्बिका भद्रकाल्यपि ॥ १२ ॥
भद्रा क्षेम्या क्षेमकरी नैकबाहुर्न्नमामि ताम् ।
त्रिसन्ध्यं यः पठेन्नाम सर्व्वान् कामानवाप्नुयात् ॥ १३ ॥
कंसोऽपि पूतनादींश्चाप्रेषयद्बालनाशने । यशोदापतिनन्दाय वसुदेवेन चार्पितौ ॥१४॥
रक्षणाय च कंसादेर्भीतेनैव हि गोकुले । रामकृष्णौ चेरतुस्तौ गोभिर्गोपालकैः सह ॥
सर्व्वस्य जगतः पालौ गोपालौ तौ बभूवतुः ।
कृष्णश्चोलूखले बद्धो दाम्ना व्यग्रयशोदया ॥ १६ ॥
यमलार्जुनमध्येऽगाद् भग्नौ च यमलार्जुनौ ।
परिवृत्तश्च शकटः पादक्षेपात् स्तनार्थिना ॥ १७ ॥
पूतना स्तनपानेन सा हता हन्तुमुद्यता । वृन्दावनगतः कृष्णः कालियं यमुनाह्रदात् ॥
जित्वा निःसार्य चाब्धिस्थश्चकार बलसंस्तुतः ।
क्षेमं तालवनं चक्रे हत्वा धेनुकगर्द्दभम् ॥ १९ ॥
अरिष्टवृषभं हत्वा केशिनं हयरूपिणम् । शक्रोत्सवं परित्यज्य कारितो गोत्रयज्ञकः ॥
पर्वतं धारयित्वा च शक्राद्वृष्टिर्न्निवारिता । नमस्कृतो महेन्द्रेण गोविन्दोऽथार्जुनोऽर्पितः
इन्द्रोत्सवस्तु तुष्टेन भूयः कृष्णेन कारितः । रथस्थो मथुराञ्चागात् कंसोक्ताक्रूरसंस्तुतः
गोपीभिरनुरक्ताभिः क्रीड़िताभिर्न्निरीक्षितः ।
रजकं चाप्रयच्छन्तं हत्वा वस्त्राणि चाग्रहीत् ॥ २३ ॥
सह रामेण मालाभृन्मालाकारे वरं ददौ । दत्तानुलेपनां कुब्जामृजुं चक्रेऽहनद् गजम् ॥
मत्तं कुवलयापीडं द्वारि रङ्ग प्रविश्य च । कंसादीनां पश्यतां च मञ्चस्थानां नियुद्धकम्
चक्रे चाणूरमल्लेन मुष्टिकेन बलोऽकरोत् । चाणूरमुष्टिकौ ताभ्यां हतौ मल्लौ तथापरे ॥
मथुराधिपतिं कंसं हत्वा तत्पितरं हरिः । चक्रे यादवराजानमस्तिप्राप्ती च कंसगे ॥
जरासन्धस्य ते पुत्र्यौ जरासन्धस्तदीरितः । चक्रे स मथुरारोधं यादवैर्युयुधे शरैः ॥
रामकृष्णौ च मथुरां त्यक्त्वा गोमन्तमागतौ ।

जरासन्धं विजित्याजौ पौण्ड्रकं वासुदेवकम् ॥ २९ ॥
पुरीं स द्वारकां कृत्वा न्यवसद् यादवैर्वृतः । भौमं तु नरकं हत्वा तेनानीताश्चकन्यकाः
देवगन्धर्वयक्षाणां ता उवाह जनार्दनः । षोडशस्त्रीसहस्राणि रुक्मिण्याद्यास्तथाष्ट च ॥
सत्यभामासमायुक्तो गरुडे नरकार्दनः । मणिशैलं सरत्नश्च इन्द्रं जित्वा हरिर्दिवि ॥
पारिजातं समानीय सत्यभामागृहेऽकरोत् ।
सान्दीपनेश्च शस्त्रास्त्रं ज्ञात्वा तद्बालकं ददौ ॥ ३३ ॥
जित्वा पञ्चजनं दैत्यं यमेन च सुपूजितः । अवधीत् कालयवनं मुचुकुन्देन पूजितः ॥
वसुदेवं देवकीञ्चभक्तविप्रांश्च सोऽर्चयत् । रैवत्यां बलभद्राच्च जग्माते निशठोल्मुकौ ॥
कृष्णात् शाम्बो जाम्बवत्यामन्यास्वन्येऽभवन् सुताः ।
प्रद्युम्नोऽभूच्च रुक्मिण्यां षष्ठेऽह्नि स हृतो बलात् ॥ ३६ ॥
शम्बरेणाम्बुधौ क्षिप्तो मत्स्यो जग्राह धीवरः। तं मत्स्यं शम्बरायादान्मायावत्यैचशम्बरः
मायावती मत्स्यमध्ये दृष्ट्वा स्वं पतिमादरात् । पुपोष सा तं चोवाच रतिस्तेऽहं पतिर्मम
कामस्त्वं शम्भुनानङ्गः कृतोऽहं शम्बरेण च । हृता न तस्य पत्नी त्वं मायाज्ञः शम्बरं जहि
तच्छ्रुत्वा शम्बरं हत्वा प्रद्युम्नः सह मायया ।
मायावत्या ययौ कृष्णं कृष्णो हृष्टोऽथ रुक्मिणी ॥ ४० ॥
प्रद्युम्नादनिरुद्धोऽभूदुषापतिरुदारधीः । बाणो बलिसुतस्तस्य सुतोषाशोणितं पुरम् ॥
तपसा शिवपुत्रोऽभूत् मायूरध्वजपातितः ।
युद्धं प्राप्स्यसि बाण ! त्वं बाणं तुष्टः शिवोऽभ्यधात् ॥ ४२ ॥
शिवेन क्रीडती गौरीं दृष्ट्वोषा सस्पृहा पतौ । तामाह गौरी भर्त्ता ते निशि सुप्तेतिदर्शनात्
वैशाखमासद्वादश्यां पुंसो भर्त्ता भविष्यति । गौर्युक्ता हर्षिता चोषा गृहे सुप्ता ददर्शतम्
आत्मना सङ्गतं ज्ञात्वा तत्सख्या चित्रलेखया । लिखिताद्वै चित्रपटादनिरुद्धं समानयत्
कृष्णपौत्रं द्वारकातो दुहिता बाणमन्त्रिणः । कुम्भाण्डादनिरुद्धोऽगाद्रामज्ञुषया सह
बाणध्वजस्य सम्पातै रक्षिभिः स निवेदितः । अनिरुद्धस्य बाणेन युद्धमासीत्सुदारुणम्
श्रुत्वा तु नारदात् कृष्णः प्रद्युम्नबलभद्रवान् ।

गरुड़स्थोऽथ जित्वाऽग्नीन् ज्वरं माहेश्वरं तथा ॥ ४८ ॥

हरिशङ्करयोर्युद्धं बभूवाथ शराशरि । नन्दिविनायकस्कन्दमुखास्तार्क्ष्यादिभिर्जिताः ॥४९

जृम्भिते शङ्करे नष्टे जृम्भणास्त्रेण विष्णुना । छिन्नं सहस्रं बाहूनां रुद्रेणाभयमर्थितम् ॥

विष्णुना जीवितो बाणो द्विबाहुः प्राब्रवीच्छिवम् ।

त्वया यदभयं दत्तं बाणस्यास्य मया च तत् ॥ ५१ ॥

आवयोर्न्नास्ति भेदो वै भेदी नरकमाप्नुयात् ।

शिवाद्यैः पूजितो विष्णुः सोऽनिरुद्ध उषादियुक् ॥ ५२ ॥

द्वारकां तु गतो रेमे उग्रसेनादियादवैः । अनिरुद्धात्मजो वज्रो मार्कण्डेयात्तु सर्ववित्

बलभद्रः प्रलम्बघ्नो यमुनाकर्षणोऽभवत् । द्विविदस्य कपेर्भेत्ता कौरवोन्मादनाशनः ॥

हरी रेमेऽनेकमूर्त्तौ रुक्मिण्यादिभिरीश्वरः । पुत्रानुत्पादयामास त्वसंख्यातान्सयादवान्

हरिवंशं पठेत् यः स प्राप्तकामो हरिं व्रजेत् ॥ ५५ ॥

इत्यादिमहापुराणे आग्नेये हरिवंशवर्णनं नाम द्वादशोऽध्यायः ।

---

# त्रयोदशोऽध्यायः

## कुरुपाण्डवोत्पत्त्यादिकथनम् ।

अग्निरुवाच ।

भारतं संप्रवक्ष्यामि कृष्णमाहात्म्यलक्षणम् ।

भूभारमहरद्विष्णुर्निमित्तीकृत्य पाण्डवान् ॥ १ ॥

विष्णुनाभ्यब्जजो ब्रह्मा ब्रह्मपुत्रोऽत्रिरत्रितः ।

सोमः सोमाद् बुधस्तस्मादैल आसीत् पुरूरवाः ॥ २ ॥

तस्मादायुस्ततो राजा नहुषोऽतो ययातिकः । ततः पुरुस्तस्य वंशे भरतोऽथ नृपःकुरुः

तद्वंशे शान्तनुस्तस्माद्भीष्मो गङ्गासुतोऽनुजौ ।

चित्राङ्गदो विचित्रश्च सत्यवत्याश्च शान्तनोः ॥ ४ ॥
स्वर्गंगते शान्तनौच भीष्मोभार्य्याविवर्जितः । अपालयत् भ्रातृराज्यंबालश्चित्राङ्गदोहतः
चित्राङ्गदेन द्वे कन्ये काशिराजस्य चाम्बिका ।
अम्बालिका च भीष्मेण आनीते विजितारिणा ॥ ६ ॥
भार्ये विचित्रवीर्यस्य यक्ष्मणा स दिवङ्गतः । सत्यवत्या ह्यनुमतादम्बिकायां नृपोऽभवत्
धृतराष्ट्रोऽम्बालिकायां पाण्डुश्च व्यासतः सुतः ।
गान्धार्य्यां धृतराष्ट्राच्च दुर्योधनमुखं शतम् ॥ ८ ॥
शतशृङ्गाश्रमपदे भार्यायोगाद् यतो मृतिः ।
ऋषिशापात् ततो धर्म्मात् कुन्त्यां पाण्डोर्युधिष्ठिरः ॥ ६ ॥
वाताद्भीमोऽर्ज्जुनः शक्रान्माद्र्यामश्विकुमारतः । नकुलःसहदेवश्च पाण्डुर्माद्रीयुतो मृतः
कर्णः कुन्त्यां हि कन्यायां जातो दुर्योधनाश्रितः। कुरुपाण्डवयोर्वैरन्दैवयोगाद् बभूव ह
दुर्योधनो जतुगृहे पाण्डवानदहत् कुधीः ।
दग्धागाराद् विनिष्क्रान्ता मातृषष्ठास्तु पाण्डवाः ॥ १२ ॥
ततस्तु एकचक्रायां ब्राह्मणस्य निवेशने । मुनिवेशाः स्थिता सर्वे निहत्य बकराक्षसम्
ययुः पञ्चालविषयं द्रौपद्यास्ते स्वयम्बरे । संप्राप्ता बाहुवेधेन द्रौपदी पञ्चपाण्डवैः॥१४॥
अर्द्धराज्यं ततः प्राप्ता ज्ञाता दुर्योधनादिभिः । गाण्डीवञ्च धनुर्दिव्यं पावकाद्रथमुत्तमम्
सारथिश्चार्जुनः सङ्ख्ये कृष्णमक्षय्यशायकान् ।
ब्रह्मास्त्रादींस्तथा द्रोणात्सर्वे शस्त्रविशारदाः ॥ १६ ॥
कृष्णेन सोऽर्जुनो वह्निं खाण्डवे समतर्पयत् । इन्द्रवृष्टिं वारयंश्च शरवर्षेण पाण्डवः ॥
जिता दिशः पाण्डवैश्च राज्यश्चक्रे युधिष्ठिरः । बहुस्वर्णं राजसूयं न सेहे तं सुयोधनः
भ्रात्रा दुःशासनेनोक्तः कर्णेन प्राप्तभूतिना । द्यूतकार्ये शकुनिना द्यूतेन स युधिष्ठिरम् ॥
अजयत्तस्य राज्यञ्च सभास्थो माययाहसत । जितोयुधिष्ठिरो भ्रातृयुक्तश्चारण्यकं ययौ
वने द्वादशवर्षाणि प्रतिज्ञातानि सोऽनयत् ।
अष्टाशीतिसहस्राणि भोजयन् पूर्ववद् द्विजान् ॥ २१ ॥

सधौम्यो द्रौपदीषष्ठस्ततः प्रायाद्विराटकम् ।
कङ्को द्विजो ह्यविज्ञातो राजा भीमोऽथ सूपकृत् ॥ २२ ॥
बृहन्नलार्जुनोभार्या सैरन्ध्री यमजौतथा । अन्यनाम्ना भीमसेनः कीचकञ्चावधीन्निशि द्रौपदीं हर्त्तुकामं तं अर्जुनश्चाजयत् कुरून् । कुर्वतो गोग्रहादींश्च तैर्ज्ञाताः पाण्डवा अथ सुभद्राकृष्णभगिनी अर्जुनात् समजीजनत् । अभिमन्युन्ददौतस्मै विराटश्चोत्तरां सुताम् सप्ताक्षौहिणीश आसीद्धर्म्मराजो रणाय सः। कृष्णोदूतोऽब्रवीद् गत्वादुर्योधनममर्षणम् एकादशाक्षौहिणीशं नृपं दुर्योधनं तदा । युधिष्ठिरायार्द्धराज्यं देहि ग्रामांश्च पञ्च वा ॥ युध्यस्व वा वचःश्रुत्वाकृष्णमाहसुयोधनः। भूसूच्यग्रं न दास्यामि योत्स्येसङ्ग्रणोद्यतः विश्वरूपं दर्शयित्वा अधृष्यं विदुरार्चितः । । प्रागाद्युधिष्ठिरं प्राह योधयैनंसुयोधनम्
इत्यादिमहापुराणे आग्नेये आदिपर्वादिवर्णनं नाम त्रयोदशोऽध्यायः ।

---

# चतुर्दशोऽध्यायः

## महाभारतवृत्तान्तवर्णनम् ।

अग्निरुवाच ।

यौधिष्ठिरीदौर्योधनी कुरुक्षेत्रंययौचमूः । भीष्मद्रोणादिकान् दृष्ट्वा नायुध्यतगुरूनिति
पार्थं ह्युवाच भगवान्नशोच्या भीष्ममुख्यकाः ।
शरीराणि विनाशीनि न शरीरी विनश्यति ॥ २ ॥
अयमात्मा परं ब्रह्म अहं ब्रह्मास्मि विद्धि तम् ।
सिद्ध्यसिद्ध्योः समो योगी राजधर्मं प्रपालय ॥ ३ ॥
कृष्णोक्तोऽथार्जुनोऽयुध्यद्रथस्थोवाद्यशब्दवान् । भीष्मःसेनापतिरभूदादौ दौर्योधनेबले पाण्डवानांशिखण्डीच तयोर्युद्धंबभूवह । धार्त्तराष्ट्राःपाण्डवांश्च जघ्नुर्युद्धेसभीष्मकाः धार्त्तराष्ट्रान् शिखण्ड्याद्याः पाण्डवा जघ्नुराहवे । देवासुरसमं युद्धं कुरुपाण्डवसेनयोः

बभूव स्वःस्थदेवानां पश्यतां प्रीतिवर्द्धनम् ।
भीष्मोऽस्त्रैः पाण्डवं सैन्यं दशाहोभिर्न्यपातयम् ॥ ७ ॥
दशमे ह्यर्जुनो वाणैर्भीष्मं वीरं ववर्ष ह । शिखण्डी द्रुपदोक्तोऽस्त्रैर्ववर्ष जलदो यथा ।
हस्त्यश्वरथपादातमन्योन्यास्त्रनिपातितम् । भीष्मः स्वच्छन्दमृत्युश्च युद्धमार्गं प्रदर्श्यच
वसूक्तोवसुलोकाय शरशय्यागतःस्थितः । उत्तरायणमीक्षंश्च ध्यायन् विष्णुंस्तुवन्स्थितः
दुर्योधने तु शोकार्त्ते द्रोणः सेनापतिस्त्वभूत् ।
पाण्डवे हर्षिते सैन्ये धृष्टद्युम्नश्चमूपतिः ॥ ११ ॥
तयोर्युद्धं बभूवोग्रं यमराष्ट्रविवर्धनम् । विराट द्रुपदाद्याश्च निमग्ना द्रोणसागरे ॥ १२ ॥
दौर्योधनी महासेना हस्त्यश्वरथपत्तिनी । धृष्टद्युम्नाधिपतिता द्रोणः काल इवावभौ ॥
हतोऽश्वत्थामा चेत्युक्ते द्रोणः शस्त्राणि चात्यजत् ।
धृष्टद्यम्नशराक्रान्तः पतितः सः महीतले ॥ १४ ॥
पञ्चमेऽहनि दुर्द्धर्षः सर्वक्षत्रं प्रमथ्य च । दुर्योधने तु शोकार्त्ते कर्णः सेनापतिस्त्वभूत्
अर्जुनः पाण्डवानाञ्च तयोर्युद्धं बभूव ह । शस्त्राशस्त्रि महारौद्रं देवासुररणोपमम् ॥
कर्णार्जुनाख्ये सङ्ग्रामे कर्णोऽरीनवधीच्छरैः । द्वितीयेऽहनि कर्णस्तु अर्जुनेन निपातितः
शल्यो दिनार्द्धं युयुधे ह्यवधीत्तं युधिष्ठिरः । युयुधे भीमसेनेन हतसैन्यः सुयोधनः ॥
बहून् हत्वा नरादींश्च भीमसेनमथाब्रवीत् । गदया प्रहरन्तं तु भीमस्तं तु न्यपातयत् ॥
गदयान्यानुजांस्तस्य तस्मिन्नष्टादशेऽहनि । रात्रौ सुषुप्तञ्च बलं पाण्डवानां न्यपातयत्
अक्षौहिणीप्रमाणन्तु अश्वत्थामा महाबलः ।
द्रौपदेयान् सपाञ्चालान् धृष्टद्युम्नञ्च सोऽवधीत् ॥ २१ ॥
पुत्रहीनां द्रौपदीं तां रुदन्तीमर्जुनस्ततः । शिरोमणिं तु जग्राह ऐषिकास्त्रेण तस्य च ॥
अश्वत्थामास्त्रनिर्दग्धं जीवयामास वै हरिः । उत्तरायास्ततो गर्भं स परिक्षिद्भूत्रृपः ॥
कृतवर्मा कृपो द्रौणिस्त्रयो मुक्तास्ततो रणात् ।
पाण्डवाः सात्यकिः कृष्णः सप्त मुक्ता न चापरे ॥ २४ ॥
स्त्रियश्चार्त्ताः समाश्वास्य भीमाद्यैः स युधिष्ठिरः ।

संस्कृत्य प्रहतान् वीरान् दत्तोदकधनादिकः ॥ २५ ॥
भीष्माच्छान्तनवाच्छ्रुत्वा धर्म्मान् सर्वांश्च शान्तिदान् ।
राजधर्म्मान् मोक्षधर्म्मान् दानधर्म्मान् नृपोऽभवत् ॥ २६ ॥
अश्वमेधे ददौ दानं ब्राह्मणेभ्योऽरिमर्दनः । श्रुत्वार्जुनान्मौषलेयं यादवानाञ्च सङ्क्षयम्
राज्ये परीक्षितं स्थाप्य सानुजः स्वर्गमाप्तवान् ॥ २७ ॥
इत्यादिमहापुराणे आग्नेये महाभारतवर्णनं नाम चतुर्दशोऽध्यायः ।

---

## पञ्चदशोऽध्यायः

### पाण्डवचरितवर्णनम्

अग्निरुवाच ।

युधिष्ठिरेतुराज्यस्थे आश्रमादाश्रमान्तरम् । धृतराष्ट्रो वनमगाद् गान्धारी च पृथा द्विज !
विदुरस्त्वग्निना दग्धो वनजेन दिवङ्गतः । एवं विष्णुर्भुवो भारमहरद्दानवादिकम् ॥२॥
धर्म्मायाधर्म्मनाशाय निमित्तीकृत्य पाण्डवान् । सविप्रशापव्याजेनमुषलेनाहरत्कुलम्
यादवानां भारकरं वज्रं राज्येऽभ्यषेचयत् । देवादेशात् प्रभासे स देहं त्यक्त्वास्वयंहरिः
इन्द्रलोके ब्रह्मलोके पूज्यते स्वर्गवासिभिः । बलभद्रोऽनन्तमूर्त्तिः पातालस्वर्गमीयिवान्
अविनाशी हरिर्देवो ध्यानिभिर्ध्येय एव सः ।
विना तं द्वारकास्थानं प्लावयामास सागरः ॥ ६ ॥
संस्कृत्य यादवान् पार्थो दत्तोदकधनादिकः ।
स्त्रियोऽष्टावक्रशापेन भार्य्या विष्णोश्च या स्थिताः ॥ ७ ॥
पुनस्तच्छापतो नीता गोपालैर्लगुडायुधैः । अर्जुनं हि तिरस्कृत्य पार्थःशोकञ्चकार ह
व्यासेनाश्वासितो मेने बलं मे कृष्णसन्निधौ । हस्तिनापुरमागत्य पार्थः सर्वं न्यवेदयत्
युधिष्ठिराय सभ्रात्रे पालकाय नृणां तदा । तद्धनुस्तानि चास्त्राणि सरथस्तेचवाजिनः

भिना कृष्णेन तन्नष्टं दानञ्चाश्रोत्रिये यथा ।
तच्छ्रुत्वा धर्मराजस्तु राज्ये स्थाप्य परीक्षितम् ॥ ११ ॥
प्रस्थानं प्रस्थितो धीमान् द्रौपद्या भ्रातृभिः सह ।
संसारानित्यतां ज्ञात्वा जपन्नष्टशतं हरेः ॥ १२ ॥
महापथे तु पतिता द्रौपदी सहदेवकः । नकुलः फाल्गुनो भीमो राजा शोकपरायणः ॥
इन्द्रानीतरथारूढ़ः सानुजः स्वर्गमाप्तवान् । दृष्ट्वा दुर्योधनादींश्च वासुदेवं च हर्षितः ।
एतत् ते भारतं प्रोक्तं यः पठेत्स दिवं व्रजेत् ॥ १४ ॥
इत्यादिमहापुराणे आग्नेये महाभारतवर्णनं नाम पञ्चदशोऽध्यायः ।

---

## षोडशोऽध्यायः

### बुद्धाद्यवतारवर्णनम् ।

अग्निरुवाच ।

वक्ष्ये बुद्धावतारञ्च पठतः शृण्वतोऽर्थदम् । पुरा देवासुरा युद्धे दैत्यैर्देवाः पराजिताः
रक्ष रक्षेति शरणं वदन्तो जग्मुरीश्वरम् । मायामोहस्वरूपोऽसौ शुद्धोदनसुतोऽभवत् ॥
मोहयामास दैत्यांस्तांस्त्याजिता वेदधर्मकम् ।
ते च बौद्धा बभूवुर्हि तेभ्योऽन्ये वेदवर्जिताः ॥ ३ ॥
आर्हतः सोऽभवत् पश्चादार्हतानकरोत् परान् ।
एवं पाषण्डिनो जाता वेदधर्म्मादिवर्जिताः ॥ ४ ॥
नरकार्हं कर्म चक्रुर्ग्रहीष्यन्त्यधमादपि । सर्वे कलियुगान्ते तु भविष्यन्ति च सङ्कराः ॥
दस्यवः शीलहीनाश्च वेदो वाजसनेयकः । दश पञ्च च शाखा वै प्रमाणेन भविष्यति ॥
धर्मकञ्चुकसंवीता अधर्मरुचयस्तथा । मानुषान् भक्षयिष्यन्ति म्लेच्छाः पार्थिवरूपिणः ॥
कल्की विष्णुयशःपुत्रो याज्ञवल्क्यपुरोहितः ।

उत्सादयिष्यति म्लेच्छान् गृहीतास्त्रः कृतायुधः ॥ ८ ॥
स्थापयिष्यति मर्य्यादां चातुर्वर्ण्ये यथोचिताम् ।
आश्रमेषु च सर्वेषु प्रजाः सद्धर्मवर्त्मनि ॥ ९ ॥

कल्किरूपं परित्यज्य हरिः स्वर्गं गमिष्यति । ततः कृतयुगन्नाम पुरावत् सम्भविष्यति वर्णाश्रमाश्च धर्मेषु स्वेषु स्थास्यन्ति सत्तम ! । एवं सर्वेषु कल्पेषु सर्वमन्वन्तरेषु च ॥ अवतारा असङ्ख्याता अतीतानागतादयः । विष्णोर्दशावताराख्यान् यःपठेत् शृणुयान्नरः सोऽवाप्तकामो विमलः सकुलः स्वर्गमाप्नुयात् । धर्माधर्मव्यवस्थानमेवं वै कुरुते हरिः

अवतीर्णश्च स गतः सर्गादेः कारणं हरिः ॥ १३ ॥

इत्यादिमहापुराणे आग्नेये बुद्धकल्क्यवतारवर्णनं नाम षोड़शोऽध्यायः ।

---

## सप्तदशोऽध्यायः

### सृष्टिविषयकवर्णनम् ।

अग्निरुवाच ।

जगत्सर्गादिकां क्रीड़ां विष्णोर्वक्ष्येऽधुना शृणु ।
स्वर्गादिकृत् ससर्गादिः सृष्ट्यादिः सगुणो गुणः ॥ १ ॥
ब्रह्माव्यक्तं सदाग्रेऽभूत् न खं रात्रिदिनादिकम् ।
प्रकृतिं पुरुषं विष्णुः प्रविश्याक्षोभयत्ततः ॥ २ ॥

सर्गकाले महत्तत्त्वमहङ्कारस्ततोऽभवत् । वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ॥ अहङ्काराच्छब्दमात्रमाकाशमभवत्ततः । स्पर्शमात्रोऽनिलस्तस्माद्रूपमात्रोऽनलस्ततः ॥ रसमात्रा आप इतो गन्धमात्रा मही स्मृता । अहंङ्कारात्तामसात्तु तैजसानीन्द्रियाणिच वैकारिकादशदेवा मन एकादशेन्द्रियम् । ततः स्वयम्भूर्भगवान् सिसृक्षुर्विविधाःप्रजाः अप एव ससर्जादौ तासु वीर्यमवासृजत् । आपो नारा इति प्रोक्ता आपो वै नरसूनवः

अयनन्तस्य ताः पूर्वं तेन नारायणः स्मृतः । हिरण्यवर्णमभवत् तदण्डमुदकेशयम् ॥८॥
तस्मिन् जज्ञे स्वयं ब्रह्मा स्वयम्भूरिति नः श्रुतम् ।
हिरण्यगर्भो भगवानुषित्वा परिवत्सरम् ॥ ६ ॥
तदण्डमकरोत् द्वैधन्दिवं भुवमथापि च । तयोः शकलयोर्मध्ये आकाशमसृजत् प्रभुः ॥
अप्सु पारिप्लवां पृथ्वीं दिशश्च दशधा दधे ।
तत्र कालं मनो वाचं कामं क्रोधमथो रतिम् ॥ ११ ॥
ससर्ज सृष्टिं तद्रूपां स्रष्टुमिच्छन् प्रजापतिः । विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च
वयांसि च ससर्जादौ पर्जन्यश्चाथ वक्त्रतः । ऋचो यजूंषि सामानिनिर्ममे यज्ञसिद्धये
साध्यास्तैरयजन्देवान् भूतमुच्चावचं भुजात् । सनत्कुमारं रुद्रञ्च ससर्ज क्रोधसम्भवम्
मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् । वशिष्ठं मानसाः सप्त ब्रह्माण इति निश्चिताः
सप्तैते जनयन्तिस्म प्रजा रुद्राश्च सत्तम ! । द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत् ।
अर्द्धेन नारी तस्यां स ब्रह्मा वै चासृजत् प्रजाः ॥ १६ ॥
इत्यादिमहापुराणे आग्नेये जगत्सर्गवर्णनं नाम सप्तदशोऽध्यायः ।

---

## अष्टादशोऽध्यायः

### स्वायम्भुववंशवर्णनम् ।

अग्निरुवाच ।

प्रियव्रतोत्तानपादौ मनोः स्वायम्भुवात् सुतौ ।
अजीजनत् स तां कन्यां शतरूपां तपोऽन्विताम् ॥ १ ॥
काम्यां कर्दमभार्यातः सम्राट्कुक्षिर्विराट् प्रभुः । सुरुच्यामुत्तमो जज्ञे पुत्र उत्तानपादतः
सुनीत्यां तु ध्रुवः पुत्रस्तपस्तेपे स कीर्तये । ध्रुवो वर्षसहस्राणि त्रीणि दिव्यानि हेमुने!
तस्मै प्रीतो हरिः प्रादान् मुन्यग्रे स्थानकं स्थिरम् ।

श्लोकं पपाठ ह्युशना वृद्धिं दृष्ट्वा स तस्य च ॥ ४ ॥

अहोऽस्य तपसो वीर्यमहो श्रुतमहोऽद्भुतम् । यमद्य पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः
तस्मात्शिष्टिश्च भव्यश्चध्रुवाच्छम्भुर्व्यजायत । शिष्टेराधत्त सुच्छाया पञ्चपुत्रानकल्मषान्
रिपुं रिपुञ्जयं रिप्रं वृकलं वृकतेजसम् । रिपोराधत्त बृहती चाक्षुषं सर्वतेजसम् ॥ ७ ॥

अजीजनत् पुष्करिण्यां वीरिण्यां चाक्षुषो मनुम् ।
मनोरजायन्त दश नड्वलायां सुतोत्तमाः ॥ ८ ॥

ऊरुः पुरुः शतद्युम्नस्तपस्वी सत्यवाक्कविः । अग्निष्टुरतिरात्रश्च सुद्युम्नश्चाभिमन्युकः ॥
ऊरोरजनयत् पुत्रान् षडाग्नेयी महाप्रभान् । अङ्गं सुमनसंख्या(स्वा)तिंक्रतुमङ्गिरसङ्गयम्
अङ्गात् सुनीथापत्यं वै वेणमेकं व्यजायत् । अरक्षकः पापरतः स हतो मुनिभिः कुशैः
प्रजार्थमृषयोऽथास्य ममन्थुर्दक्षिणं करम् । वेणस्य मथिते पाणौ सम्बभूव पृथुर्नृपः ॥

तं दृष्ट्वा मुनयः प्राहुरेष वै मुदिताः प्रजाः ।
करिष्यति महातेजा यशश्च प्राप्स्यते महत् ॥ १३ ॥

स धन्वी कवची जातस्तेजसा निर्दहन्निव । पृथुर्वैण्यः प्रजाः सर्वा ररक्ष क्षेत्रपूर्वजः ॥
राजसूयाभिषिक्तानामाद्यः स पृथिवीपतिः । तस्माच्चैव समुत्पन्नौ निपुणौ सूतमागधौ
तत्स्तोत्रश्चक्रतुर्वीरौ राजाभूज्जनरञ्जनात् । दुग्धा गौस्तेन शस्यार्थं प्रजानां जीवनाय च
सह देवैर्मुनिगणैर्गन्धर्वैः साप्सरोगणैः । पितृभिर्दानवैः सर्पैर्वीरुद्भिः पर्वतैर्जनैः ॥१७॥
तेषु तेषु च पात्रेषु दुह्यमाना वसुन्धरा । प्रादाद्यथेप्सितं क्षीरं तेन प्राणानधारयत् ॥

पृथोः पुत्रौ तु धर्मज्ञौ जज्ञातेऽन्तर्द्धिपालिनौ ।
शिखण्डिनो हविर्द्धानमन्तर्द्धानात् व्यजायत ॥ १९ ॥
हविर्द्धानात् षडाग्नेयी धीषणाजनयत् सुतान् ।
प्राचीनबर्हिषं शुक्रं गयं कृष्णं व्रजाजिनौ ॥ २० ॥

प्राचीनाग्राःकुशास्तस्य पृथिव्यां यजतोयतः । प्राचीनबर्हिर्भगवान् महानासीत्प्रजापतिः
सवर्णाऽधत्त सामुद्री दश प्राचीनबर्हिषः । सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः ॥
अपृथग्धर्मचरणास्ते तप्यन्त महत्तपः । दशवर्षसहस्राणि समुद्रसलिलेशयाः ॥ २३ ॥

प्रजापतित्वं सम्प्राप्य तुष्टा विष्णोश्च निर्गताः ।
भूः खं व्याप्तं हि तरुभिस्तांस्तरूनदहंश्च तु ॥ २४ ॥
मुखजाग्निमरुद्भ्यां स दृष्ट्वा चाथद्रुमक्षयम् । उपगम्याब्रवीदेतान्राजा सोमःप्रजापतीन्
कोपं यच्छत दास्यन्ति कन्यां वो मारिषां वराम् ।
तपस्विनो मुनेः कण्डोः प्रम्लोचायां ममैव च ॥ २६ ॥
भविष्यं जानता सृष्टा भार्य्या वोऽस्तु कुलङ्करी ।
अस्यामुत्पत्स्यते दक्षः प्रजाः संवर्द्धयिष्यति ॥ २७ ॥
प्रचेतसस्तां जगृहुर्दक्षोऽस्याञ्च ततोऽभवत् । अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः
स सृष्ट्वा मनसा दक्षः पश्चादसृजतस्त्रियः । ददौ स दश धर्म्माय कश्यपायत्रयोदश
सप्तविंशति सोमाय चतस्रोऽरिष्टनेमिने । द्वे चैव बहुपुत्राय द्वे चैवाङ्गिरसे अदात् ॥
तासु देवाश्च नागाद्या मैथुनान्मनसा पुरा । धर्मसर्गं प्रवक्ष्यामि दशपत्नीषु धर्मतः ॥३१॥
विश्वेदेवास्तु विश्वायाः साध्यान् साध्या व्यजायत ।
मरुत्वत्या मरुत्वन्तो वसोस्तु वसवोऽभवन् ॥ ३२ ॥
भानोऽस्तुभानवःपुत्रा मुहूर्त्तास्तुमुहूर्त्तजाः । सम्बायाधर्मतो घोषो नागवीथीचयामिजा
पृथिवीविषयं सर्वमरुन्धत्यां व्यजायत । सङ्कल्पायास्तु सङ्कल्पा इन्दोर्न्नक्षत्रतः सुताः
आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभाषश्च वसवोऽष्टौ च नामतः
आपस्य पुत्रो वैतण्ड्यः श्रमः शान्तो मुनिस्तथा ।
ध्रुवस्य कालो लोकान्तो वर्च्चाः सोमस्य वै सुतः ॥ ३७ ॥
धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा । मनोहरायाः शिशिरः प्राणोऽथ रमणस्तथा ॥
पुरोजवोऽनिलस्यासीदविज्ञातोऽनलस्य च । अग्निपुत्रः कुमारश्च शरस्तम्बे व्यजायत ॥
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः । कृत्तिकातः कार्त्तिकेयो यतिः सनत्कुमारकः
प्रत्यूषाद्देवलो जज्ञे विश्वकर्म्मा प्रभाषतः । कर्त्ता शिल्पसहस्राणां त्रिदशानाञ्चवर्द्धकिः
मनुष्याश्चोपजीवन्ति शिल्पं वै भूषणादिकम् । सुरभी कश्यपाद्रुद्रानेकादश विजज्ञुषी ॥
महादेवप्रसादेन तपसा भाविता सती । अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्राश्च सत्तम ! ॥

त्वष्टुश्चैवात्मजः श्रीमान् विश्वरूपो महायशाः । हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः
वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा । मृगव्याधश्च सर्पश्च कपाली दश चैककः ।
रुद्राणां च शतं लक्षं यैर्व्याप्तं सचराचरम् ॥ ४४ ॥
इत्यादिमहापुराणे आग्नेये जगत्सर्गवर्णनं नाम अष्टादशोऽध्यायः ।

---

# ऊनत्रिंशोऽध्यायः

## कश्यपवंशवर्णनम् ।

अग्निरुवाच ।

कश्यपस्य वदे सर्गमदित्यादिषु हे मुने ! । चाक्षुषे तुषिता देवास्तेऽदित्यां कश्यपात्पुनः
आसन् विष्णुश्च शक्रश्च त्वष्टा धाता तथाऽर्य्यमा ।
पूषा विवस्वान् सविता मित्रोऽथ वरुणो भगः ॥ २ ॥
अंशुश्च द्वादशादित्या आसन् वैवस्वतेऽन्तरे । अरिष्टनेमिपत्नीनामपत्यानीह षोड़श ॥३॥
बहुपुत्रस्य विदुषश्चतस्रो विद्युतः सुताः । प्रत्यङ्गिरसजाः श्रेष्ठाः कृशाश्वस्य सुरायुधाः
उदयास्तमने सूर्य्ये तद्वदेते युगे युगे । हिरण्यकशिपुर्दित्यां हिरण्याक्षश्च कश्यपात् ॥
सिंहिका चाभवत् कन्या विप्रचित्तेः परिग्रहः ।
राहुप्रभृतयस्तस्यां सैंहिकेया इति श्रुताः ॥ ६ ॥
हिरण्यकशिपोः पुत्राश्चत्वारः प्रथितौजसः । अनुह्लादश्च ह्लादश्च प्रह्लादश्चातिवैष्णवः ॥
संह्लादश्च चतुर्थोऽभूत् ह्लादपुत्रो ह्रदस्तथा । ह्रदस्य पुत्र आयुष्मान् शिबिर्वास्कल एव च
विरोचनस्तु प्राह्लादिर्बलिर्जज्ञे विरोचनात् ।
बलेः पुत्रशतं त्वासीद् बाणश्रेष्ठं महामुने ! ॥ ६ ॥
पुराकल्पे हि बाणेन प्रसाद्योमापतिं वरः । पार्श्वतो विहरिष्यामीत्येवं प्राप्तश्च ईश्वरात्
हिरण्याक्षसुताः पञ्च शम्बरःशकुनिस्त्विति । द्विमूर्द्धाशङ्कुरार्यश्च शतमासन्दनोःसुताः

स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु शची स्मृता ।
उपदानवी हयशिरा शर्मिष्ठा वार्षपर्वणी ॥ १२ ॥

पुलोमा कालका चैव वैश्वानरसुते उभे । कश्यपस्य तु भार्य्ये द्वे तयोः पुत्राश्चकोटयः

प्रह्लादस्य चतुष्कोट्यो निवातकवचाः कुले ।
ताम्रायाः षट्सुताः स्युश्च काकीश्येनी च भास्यपि ॥ १४ ॥
गृध्रिका शुचि सुग्रीवा ताभ्यः काकादयोऽभवन् ।
अश्वाश्चोष्ट्राश्च ताम्राया अरुणो गरुड़स्तथा ॥ १५ ॥

विनतायाः सहस्रन्तु सर्पाश्च सुरसाभवाः । काद्रवेयाः सहस्रन्तु शेषवासुकितक्षकाः ॥
दंष्ट्रिणःक्रोधवशजाधरोत्थाः पक्षिणोजले । सुरभ्यांगोमहिष्यादिरिरोत्पन्नास्तृणादयः

खसायां यक्षरक्षांसि मुनेरप्सरसोऽभवन् ।
अरिष्टायान्तु गन्धर्वाः कश्यपाद्धि स्थिरञ्चरम् ॥ १८ ॥

एषां पुत्रादयोऽसङ्ख्या देवैर्वै दानवाजिताः । दितिर्विनष्टपुत्रा वै तोषयामासकश्यपम्
पुत्रमिन्द्रप्रहर्त्तारमिच्छतीप्राप कश्यपात् । पादाप्रक्षालनात् सुप्ता तस्यागर्भं जघान ह
छिद्रमन्विष्य चेन्द्रस्तु ते देवा मरुतोऽभवन् । शक्रस्यैकोनपञ्चाशत् सहाया दीप्ततेजसः
एतत् सर्वं हरिर्ब्रह्मा अभिषिच्य पृथुं नृपम् । ददौ क्रमेण राज्यानि अन्येषामधिपो हरिः
द्विजौषधीनां चन्द्रश्च अपान्तु वरुणो नृपः । राज्ञां वैश्रवणोराजासूर्य्याणां विष्णुरीश्वरः
वसूनां पावको राजा मरुतां वासवः प्रभुः । प्रजापतीनां दक्षोऽथ प्रह्लादो दानवाधिपः
पितॄणां च यमो राजा भूतादीनां हरः प्रभुः । हिमवांश्चैव शैलानां नदीनां सागरःप्रभुः
गन्धर्वाणां चित्ररथो नागानामथ वासुकिः । सर्पाणां तक्षको राजा गरुड़ःपक्षिणामथ
ऐरावतो गजेन्द्राणां गोवृषोऽथ गवामपि । मृगाणामथ शार्दूलः प्लक्षो वनस्पतीश्वरः

उच्चैःश्रवास्तथाश्वानां सुधन्वा पूर्वपालकः ।
दक्षिणस्यां शङ्खपदः केतुमान् पालको जले ।
हिरण्यरोमकः सौम्ये प्रतिसर्गोऽयमीरितः ॥ २८ ॥

इत्यादिमहापुराणे आग्नेये प्रतिसर्गवर्णनं नाम ऊनविंशतितमोऽध्यायः ।

# विंशतितमोऽध्यायः ।

## सर्गविषयकवर्णनम् ।

अग्निरुवाच ।

प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ।
तन्मात्राणां द्वितीयस्तु भूतसर्गो हि स स्मृतः ॥ १ ॥
वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः । इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्वकः
मुख्यः सर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ।
तिर्य्यक्स्रोतास्तु यः प्रोक्तस्तैर्यग्योन्यस्ततः स्मृतः ॥ ३ ॥
ततोर्द्ध्वस्रोतसां षष्ठो देवसर्गस्तु स स्मृतः। ततोऽर्वाक्स्रोतसां सर्गःसप्तम.सतुमानुषः
अष्टमोऽनुग्रहः सर्गः सात्विकस्तामसश्च यः । पञ्चैतेवैकृताःसर्गाःप्राकृताश्चत्रयःस्मृताः
प्राकृतो वैकृतश्चैव कौमारो नवमस्तथा । ब्रह्मणो नव सर्गास्तु जगतो मूलहेतवः ॥
ख्यात्याद्या दक्षकन्यास्तु भृग्वाद्या उपयेमिरे ।
नित्यो नैमित्तिकः सर्गस्त्रिधा प्रकथितो जनैः ॥ ७ ॥
प्राकृता दैनन्दिनी स्यादन्तरप्रलयादनु । जायते यत्रानुदिनं नित्यसर्गो हि सम्मतः ॥८॥
देवौ धाताविधातारौ भृगोःख्यातिरसूयत । श्रियञ्च पत्नी विष्णोर्या स्तुता शक्रेणवृद्धये
धातुर्विधातुर्द्वौ पुत्रौ क्रमात् प्राणो मृकण्डुकः ।
मार्कण्डेयो मृकण्डोश्च जज्ञे वेदशिरास्ततः ॥ १० ॥
पौर्णमासश्च सम्भूत्यां मरीचेरभवत् सुतः। स्मृत्यामङ्गिरसः पुत्राः सिनीवालीकुहूस्तथा
राकाश्चानुमतिश्चात्रेरनसूयाप्यजीजनत् । सोमं दुर्वाससं पुत्रं दत्तात्रेयञ्च योगिनम् ॥
प्रीत्यां पुलस्त्यभार्यायां दत्तोलिस्तत् सुतोऽभवत् ।
क्षमायां पुलहाज्जाताः सहिष्णुः कर्मपादिकाः ॥ १३ ॥
सन्नत्याञ्च क्रतोरासन् बालखिल्या महौजसः। अङ्गुष्ठपर्वमात्रास्ते ये हि षष्टिसहस्रिणः

ऊर्जायाञ्च वशिष्ठाच्च राजागात्रोर्द्ध्वबाहुकः। सवनश्चालघुः शुक्रः सुतपाः सप्त चर्षयः
पावकः पवमानोऽभूत् शुचिः स्वाहाऽग्निजोऽभवत्।
अग्निस्वात्ता बर्हिषदोऽनग्नयः साग्नयो ह्यजात्॥ १६ ॥
पितृभ्यश्च स्वधायाञ्च मेना वैधारिणी सुने। हिंसाभार्य्यात्वधर्मस्यतयोर्जज्ञेतथाऽनृतम्
कन्या च निकृतिस्ताभ्यां भयन्नरकमेव च। माया च वेदना चैव मिथुनन्त्विदमेतयोः
तयोर्जज्ञेऽथ वै मायां मृत्युंभूतापहारिणम्। वेदना च सुतश्चापि दुःखं जज्ञेऽथ रौरवात्
मृत्योर्व्याधिजराशोकतृष्णाक्रोधाश्च जज्ञिरे। ब्रह्मणश्च रुदन् जातो रोदनाद्रुद्रनामकः
भवं शर्वमथेशानं तथा पशुपतिं द्विज!। भीममुग्रं महादेवमुवाच स पितामहः ॥२१॥
दक्षकोपाच्चतद्भार्य्या देहन्तत्याज सा सती। हिमवद्दुहिताभूत्वापत्नी शम्भोरभूत् पुनः
ऋषिभ्यो नारदाद्युक्ताः पूजाः स्नानादिपूर्विकाः।
स्वायम्भुवाद्यास्ताः कृत्वा विष्णवादेर्भुक्तिमुक्तिदाः ॥ २३ ॥
इत्यादिमहापुराणे आग्नेये जगत्सर्गवर्णनं नाम विंशतितमोऽध्यायः।

---

# एकविंशोऽध्यायः

## सामान्यपूजाकथनम्।

नारद उवाच।

सामान्यपूजांविष्णवादेर्वक्ष्ये मन्त्रांश्चसर्वदान्। समस्तपरिवाराय अच्युताय नमोयजेत्
धात्रे विधात्रे गङ्गायै यमुनायै निधी तथा। द्वारश्रियं वास्तुनवं शक्तिं कूर्ममनन्तकम्॥
पृथिवीं धर्मकं ज्ञानं वैराग्यैश्वर्य्यमेव च। अधर्मादीन् कन्दनालपद्मकेशरकर्णिकाः ॥३॥
ऋग्वेदाद्यं कृताद्यञ्च सत्वाद्यर्कादिमण्डलम्।
विमलोत्कर्षिणी ज्ञाना क्रिया योगा च तां यजेत् ॥ ४ ॥
प्रह्वीं सत्यां तथेशानानुग्रहासनमूर्त्तिकाम्। दुर्गां गिरङ्गणं क्षेत्रं वासुदेवादिकं यजेत्॥

हृदयञ्च शिरः शूलं वर्मनेत्रमथास्त्रकम् । शङ्खं चक्रं गदां पद्मं श्रीवत्सं कौस्तुभं यजेत्
वनमालां श्रियं पुष्टिं गरुड़ं गुरुमर्चयेत् । इन्द्रमग्निं यमं रक्षो जलं वायुं धनेश्वरम् ॥७॥

ईशानन्तमजं चास्त्रं वाहनं कुमुदादिकम् ।
विष्वक्सेनं मण्डलादौ सिद्धिः पूजादिना भवेत् ॥ ८ ॥

शिवपूजाथ सामान्या पूर्वं नन्दिनमर्चयेत् । महाकालं यजेद् गङ्गां यमुनाञ्च गणादिकम्

गिरं श्रियं गुरुं वास्तुं शक्त्यादीन् धर्मकादिकम् ।
वामा ज्येष्ठा तथा रौद्री काली कलविकारिणी ॥ १० ॥

बलविकरिणी चापि बलप्रमथिनी क्रमात् । सर्वभूतदमनी च मदनोन्मादिनी शिवा ॥

हां हुं हां शिवमूर्त्तये साङ्गवक्त्रं शिवं यजेत् ।
हौं शिवाय हामित्यादि हामीशानादिवक्त्रकम् ॥ १२ ॥

ह्रींगौरीं गंगणःशक्रमुखाश्चण्डोहृदादिकाः । क्रमात्सूर्य्यार्च्चने मन्त्राद्दण्डीपूज्यश्चपिङ्गलः
उच्चैःश्रवाश्चारुणश्च प्रभूतं विमलं यजेत् । साराध्योऽपरमसुखं स्कन्दाद्यं मध्यतो यजेत्
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा । अमोघाविद्युता चैव पूज्याथसर्वतोमुखी

अर्क्कासनं हि हं खं खं सोल्कायेति च मूर्त्तिकाम् ।
ह्रां ह्रीं स सूर्य्याय नम आं नमो हृदयाय च ॥ १६ ॥

अर्काय शिरसे तद्वदग्नीशासुरवायुगान् । भूर्भुवःस्वरे ज्वालिनि शिखा हुं कवचं स्मृतम्

भां नेत्रं वस्तथार्कास्त्रं राज्ञी शक्तिश्च निष्कुभा ।
सोमोऽङ्गारकोऽथ बुधः जीवः शुक्रः शनिः क्रमात् ॥ १८ ॥

राहुः केतुस्तेजश्चण्डः सङ्क्षेपादथ पूजनम् । आसनं मूर्त्तये मूलं हृदाद्यं परिचारकः ॥

विष्ण्वासनं विष्णुमूर्त्तें ह्रीं श्रीं श्रीं श्रीधरो हरिः ।
ह्रीं सर्वमूर्त्तिमन्त्रोऽयमिति त्रैलोक्यमोहनः ॥ २० ॥

ह्रीं हृषीकेशः क्लीं विष्णुः स्वरैर्दीर्घैर्हृदादिकम् । समस्तैःपञ्चमीपूजासंग्रामादौजयादिदा
चक्रं गदां क्रमाच्छङ्खं मुषलं खड्गशार्ङ्गकम् । पाशाङ्कुशौ च श्रीवत्सं कौस्तुभंवनमालया

श्रीं श्रीमहालक्ष्मीतार्क्ष्यो गुरुरिन्द्रादयोऽर्च्चनम् ।

सरस्वत्यासनं मूर्तिरीं ह्रीं देवी सरस्वती ॥ २३ ॥

हृदाद्या लक्ष्मीर्मेधा च कला तुष्टिश्च पुष्टिका । गौरी प्रभामती दुर्गा गणोगुरुश्चक्षेत्रपः

तथा गं गणपतये च ह्रीं गौर्यै च श्रीं श्रियै ।

ह्रीं त्वरितायै ह्रीं सौ त्रिपुरा चतुर्थ्यन्तनमोऽन्तकाः ॥ २५ ॥

प्रणवाद्याश्च नामाद्यमक्षरं विन्दुसंयुतम् । ओं युतं वा सर्वमन्त्रपूजनाज्जपतः स्मृताः ॥

होमात्तिलघृताद्यैश्च धर्मकामार्थमोक्षदाः । पूजामन्त्रान् पठेद्यस्तु भुक्तभोगो दिवं व्रजेत्

इत्यादिमहापुराणे आग्नेयेवासुदेवादिपूजाकथनंनाम एकविंशतितमोऽध्यायः ।

---

# द्वाविंशोऽध्यायः ।

## स्नानविधिकथनम् ।

नारद उवाच ।

वक्ष्ये स्नानं क्रियाद्यर्थं नृसिंहेन तु मृत्तिकाम् ।

गृहीत्वा तां द्विधा कृत्वा मनःस्नानमथैकया ॥ १ ॥

निमज्याचम्य विन्यस्य सिंहेन कृतरक्षकः । विधिस्नानंततःकुर्य्यात्प्राणायामपुरःसरम्

हृदि ध्यायन् हरिज्ञानं मन्त्रेणाष्टाक्षरेण हि । त्रिधापाणितलेमृत्स्नांदिग्बन्धंसिंहजप्ततः

वासुदेवप्रजप्तेन तीर्थं सङ्कल्प्य चालभेत् । गात्रंवेदादिनामन्त्रैः सम्मार्ज्याराध्यमूर्तिना

कृत्वाघमर्षणं वस्त्रं परिधाय समाचरेत् । विन्यस्य मन्त्रैर्द्धिर्म्मार्ज्यं पाणिस्थं जलमेवच

नारायणेन संयम्य वायुमाघ्राय चोत्सृजेत् । जलं ध्यायन् हरिंपश्चाद्दत्वार्घ्यंद्वादशाक्षरम्

जप्त्वान्याञ्छतशस्तस्य योगपीठादितःक्रमात् ।

मन्त्रान् दिक्पालर्यन्तानृषीन् पितृगणानपि ॥ ७ ॥

मनुष्यान् सर्वभूतानि स्थावरान्तान्यथावसेत् ।

न्यस्य चाङ्गानि संहृत्य मन्त्रान्यागगृहं व्रजेत् ।
एवमन्यासु पूजासु मूलाद्यैः स्नानमाचरेत् ॥ ८ ॥

इत्यादिमहापुराणे आग्नेये स्नानविधिकथनं नाम द्वाविंशोऽध्यायः ।

---

# त्रयोविंशोऽध्यायः ।

## पूजाविधिकथनम् ।

नारद उवाच ।

वक्ष्ये पूजाविधिं विप्रा ! यत्कृत्वा सर्वमाप्नुयात् ।
प्रक्षालिताङ्घ्रिराचम्य वाग्यतः कृतरक्षकः ॥ १ ॥
प्राङ्मुखः स्वस्तिकं बद्ध्वा पद्माद्यपरमेव च ।
यं वीजं नाभिमध्यस्थं धूम्रं चण्डानिलात्मकम् ॥ २ ॥

विशोषयेदशेषन्तुध्यायेत्कायात्तुकल्मषम् । क्ष्रौं हृत्पङ्कजमध्यस्थंबीजं तेजोनिधिं स्मरन्

अधोर्ध्वतिर्यग्गाभिस्तु ज्वालाभिः कल्मषं दहेत् ।
शशाङ्काकृतिवद्ध्यायेदम्बरस्थं सुधाम्बुभिः ॥ ४ ॥

हृत्पद्मव्यापिभिर्देहंस्वकमाप्लावयेत् सुधीः । सुषुम्नायोनिमार्गेण सर्वनाडीविसर्पिभिः
शोधयित्वान्यसेत्तत्त्वं करशुद्धिरथास्त्रकम् । व्यापकंहस्तयोरादौदक्षिणाङ्गुष्ठतोऽङ्गकम्
मूलं देहे द्वादशाङ्गं न्यसेन्मन्त्रैर्द्विषट्ककैः । हृदयं च शिरश्चैव शिखा वर्म्मास्त्रलोचने
उदरं च तथा पृष्ठं बाहूरुजानुपादकम् । मुद्रां दत्त्वा स्मरेत् विष्णुं जप्त्वाष्टशतमर्चयेत्

वामे तु वर्द्धनीं न्यस्य पूजाद्रव्यं तु दक्षिणे ।
प्रक्षाल्यास्त्रेण चार्घ्येण गन्धपुष्पान्विते न्यसेत् ॥ ६ ॥

चैतन्यं सर्वगं ज्योतिरष्टजप्तेन वारिणा । फड़न्तेन तु संसिच्य हस्ते ध्यात्वा हरिं परं

धर्मं ज्ञानं च वैराग्यमैश्वर्यं वह्निदिङ्मुखाः ।

अधर्मादीनि गात्राणि पूर्वादौ योगपीठके ॥ ११ ॥
कूर्मं पीठे ह्यनन्तञ्च यमं सूर्य्यादिमण्डलम् । विमलाद्याः केशरस्थानुग्रहा कर्णिकास्थिता
पूर्वं स्वहृदये ध्यात्वा आवाह्यार्च्य च मण्डले ।
अर्घ्यं पाद्यं तथाचामं मधुपर्कं पुनश्च तत् ॥ १३ ॥
स्नानं वस्त्रोपवीतञ्च भूषणं गन्धपुष्पकम् । धूपदीपनैवेद्यानि पुण्डरीकाक्षविद्यया ॥
यजेदङ्गानि पूर्वादौ द्वारि पूर्वे परेऽण्डजम् ।
दक्षे चक्रं गदां सौम्ये कोणे शङ्खं धनुर्न्यसेत् ॥ १५ ॥
देवस्य वामतो दक्षे चेषुधी खड्गमेव च । वामे चर्म्म श्रियं दक्षे पुष्टिं वामेऽग्रतो न्यसेत्
वनमालाञ्च श्रीवत्सकौस्तुभौ दिक्पतीन् बहिः ।
स्वमन्त्रैः पूजयेत् सर्वान् विष्णुरर्घोऽवसानतः ॥ १७ ॥
व्यस्तेनच समस्तेन अङ्गैर्बीजेन वै यजेत् । जप्त्वाप्रदक्षिणाकृत्य स्तुत्त्वाऽर्घ्यञ्चसमर्प्यच
हृदये विन्यसेद्ध्यात्वा अहं ब्रह्म हरिस्त्विति ।
आगच्छावाहने योज्यं क्षमस्वेति विसर्जने ॥ १९ ॥
एवमष्टाक्षराद्यैश्च पूजां कृत्वा विमुक्तिभाक् । एकमूर्त्यर्च्चनं प्रोक्तं नवव्यूहार्च्चनं शृणु ॥
अङ्गुष्ठकद्वये न्यस्य वासुदेवं बलादिकान् । तर्ज्जन्यादौ शरीरेऽथ शिरो ललाटवक्त्रके ॥
हृन्नाभिगुह्यजान्वङ्घ्र्यो मध्ये पूर्वादिकं यजेत् । एकपीठं नवव्यूहं नवपीठञ्च पूर्ववत् ॥
नवाब्जे नवमूर्त्त्या च नवव्यूहञ्च पूर्ववत् ।
इष्टं मध्ये ततः स्थाने वासुदेवञ्च पूजयेत् ॥ २३ ॥
इत्यादिमहापुराणे आग्नेये आदिमूर्त्यादिपूजाविधिर्नाम त्रयोविंशोऽध्यायः ।

———

# चतुर्विंशोऽध्यायः

## कुण्डनिर्माणादिविधिः ।

नारद उवाच ।

अग्निकार्यं प्रवक्ष्यामि येन स्यात्सर्वकामभाक् । चतुरभ्यधिकं विंशमङ्गुलंचतुरस्रकम्

सूत्रेण सूत्रयित्वा तु क्षेत्रं तावत् खनेत्समम् ।

खातस्य मेखला कार्य्या त्यक्त्वा चैवाङ्गुलद्वयम् ॥ २ ॥

सत्त्वादिसञ्ज्ञा पूर्वाशा द्वादशाङ्गुलमुच्छ्रिता ।

अष्टाङ्गुला द्व्यङ्गुलाथ चतुरङ्गुलविस्तृता ॥ ३ ॥

योनिर्द्दशांगुला रम्या षट्चतुर्द्व्यं ङ्गुलाग्रगा ।

क्रमान्निम्ना तु कर्त्तव्या पश्चिमाशा व्यवस्थिता ॥ ४ ॥

अश्वत्थपत्रसदृशी किञ्चित् कुण्डेनिवेशिता । तुर्य्याङ्गुलायता नालंपञ्चदशांगुलायतम्

मूलन्तु त्र्यंगुलं योन्या अग्रं तस्याः षड़ंगुलम् । लक्षणश्चैकहस्तस्य द्विगुणं द्विकरादिषु

एकत्रिमेखलं कुण्डं वर्तुलादि वदाम्यहम् । कुण्डार्द्धे तु स्थितं सूत्रं कोणेयदतिरिच्यते

तदर्द्धं दिशि संस्थाप्य भ्रामितं वर्त्तुलं भवेत् ।

कुण्डार्द्धं कोणभागार्द्धं दिशश्चोत्तरतो वहिः ॥ ८ ॥

पूर्वपश्चिमतो यत्नाल्लाञ्छयित्वा तु मध्यतः ।

संस्थाप्य भ्रामितं कुण्डमर्द्धचन्द्रं भवेत् शुभम् ॥ ६ ॥

पद्माकारे दलानि स्युर्मेखलानान्तु वर्त्तुले । बाहुदण्डप्रमाणं तु होमार्थं कारयेत् स्रुवम्

सप्तपञ्चांगुलं वापि चतुरस्रन्तु कारयेत् । त्रिभागेन भवेद्गर्त्तं मध्ये वृत्तं सुशोभनम् ॥

तिर्य्यगूर्ध्वं समं खाताद्बहिरर्द्धन्तु शोधयेत् । अंगुलस्य चतुर्थांशं शेषार्द्धार्द्धं तथान्ततः ॥

खातस्य मेखलां रम्यां शेषार्द्धेन तु कारयेत् ।

कण्ठं त्रिभागविस्तारं अंगुष्ठकसमायतम् ॥ १२ ॥

सार्द्धमंगुष्ठकं वा स्यात्तदग्रे तु मुखं भवेत्। चतुरंगुलविस्तारं पञ्चांगुलमथापि वा ॥

त्रिकं द्व्यङ्गुलकं तत् स्यान्मध्यन्तस्य सुशोभनम्।

आयामस्तत्समस्तस्य मध्यनिम्नः सुशोभनः ॥ १५ ॥

शुषिरं कण्ठदेशे स्याद्विशेद् यावत् कनीयसी।

शेषकुण्डन्तु कर्त्तव्यं यथारुचि विचित्रितम् ॥ १६ ॥

स्रुवन्तु हस्तमात्रं स्याद्दण्डकेन समन्वितम्। वटुकं द्व्यङ्गुलं वृत्तं कर्त्तव्यन्तु सुशोभनम्

गोपदन्तु यथा मग्नमल्पपङ्के तथा भवेत्। उपलिप्य लिखेद्रेखामंगुलां वज्रनासिकाम् ॥

सौम्याग्रा प्रथमा तस्यां रेखे पूर्वमुखे तयोः। मध्येतिस्रस्तथा कुर्य्याद्दक्षिणादिक्रमेणतु

एवमुल्लिख्यचाभ्युक्ष्यप्रणवेन तु मन्त्रवित्। विष्टरंकल्पयेत्तेनतस्मिन् शक्तिन्तुवैष्णवीम्

अलं कृत्वा मूर्त्तिमतीं क्षिपेदग्निं हरिं स्मरन्।

प्रादेशमात्राः समिधो दत्वा परिसमुह्य तम् ॥ २१ ॥

दर्भैस्त्रिधा परिस्तीर्य्य पूर्वादौ तत्रपात्रकम्। आसादयेदिध्मवह्नी भूमौ च श्रुक्श्रुवद्वयम्

आज्यस्थाली चरुस्थाली कुशाज्यञ्च प्रणीतया।

प्रोक्षयित्वा प्रोक्षणीञ्च गृहीत्वापूर्य्य वारिणा ॥ २३ ॥

पवित्रान्तर्हितेहस्ते परिश्राव्य च तज्जलम्। प्राङ्नीत्वाप्रोक्षणीपात्रं ज्योतिरग्रेनिधायच

तदद्भिस्त्रिश्च सम्प्रोक्ष्य इध्मं विन्यस्य चाग्रतः।

प्रणीतायां सपुष्पायां विष्णुं ध्यात्वोत्तरेण च ॥ २५ ॥

आज्यस्थालीमथाज्येन सम्पूर्य्याग्रे निधाय च।

संप्लवोत्पवनाभ्यान्तु कुर्य्यादाज्यस्य संस्कृतिम् ॥ २६ ॥

अखण्डिताग्रौ निर्गर्भौ कुशौ प्रादेशमात्रकौ। ताभ्यामुत्तानपाणिभ्यामंगुष्ठानामिकेन तु

आज्यं तयोस्तु संगृह्य द्विर्नीत्वा त्रिरवाङ्क्षिपेत्।

स्रुक्स्रुवौ चापि संगृह्य ताभ्यां प्रक्षिप्य वारिणा ॥ २८ ॥

प्रतप्यदर्भैः संमृज्य पुनः प्रक्षाल्य चैव हि। निष्टप्यस्थापयित्वा तु प्रणवेनैव साधकः

प्रणवादिनमोऽन्तेन पश्चाद्धोमं समाचरेत्। गर्भाधानादिकर्माणि यावदंशव्यवस्थया ॥

नामान्तंव्रतबन्धान्तं समावर्त्तावसानकम् । अधिकारावसादूतं वा कुर्य्यादङ्गानुसारतः
प्रणवेनोपचारन्तु कुर्य्यात् सर्वत्र साधकः । अङ्गैर्होमस्तु कर्त्तव्यो यथावित्तानुसारतः

गर्भाधानन्तु प्रथमं ततः पुंसवनं स्मृतम् ॥
सीमन्तोन्नयनं जातकर्म नामान्नप्राशनम् ॥ ३३ ॥

चूड़ाकृतिं व्रतबन्धं वेदव्रतान्यशेषतः । समावर्त्तनं पत्न्या च योगाश्चाथाधिकारकः ॥
हृदादिक्रमतो ध्यात्वा एकैकं कर्म पूज्य च । अष्टावष्टौ तु जुहुयात् प्रतिकर्माहुतीः पुनः
पूर्णाहुतिं ततो दद्यात् श्रुचा मूलेन साधकः । वौषड़न्तेन मन्त्रेण प्लुतं सुस्वरमुच्चरन्

विष्णोर्वह्निन्तु संस्कृत्य श्रपयेद्वैष्णवञ्चरुम् ।
आराध्य स्थण्डिले विष्णुं मन्त्रान् संस्मृत्य संश्रपेत् ॥ ३७ ॥

आसनादिक्रमेणैव साङ्गावरणमुत्तमम् । गन्धपुष्पैः समभ्यर्च्च ध्यात्वा देवं सुरोत्तमम्
आधायेध्ममथाघारावाज्यावग्नीशसंस्थितौ । वायव्यनैर्ऋताशादिप्रवृत्तौ तु यथाक्रमम्
आज्यभागौततो हुत्वा चक्षुषी दक्षिणोत्तरे । मध्येऽथजुहुयात् सर्वमन्त्रानर्च्चाक्रमेणतु
आज्येन तर्पयेन्मूर्त्तेर्द्दशांशेनाङ्गहोमकम् । शतं सहस्रं वाज्याद्यैः समिद्भिर्वा तिलैः सह

समाप्याच्चान्तु होमान्तां शुचीन् शिष्यानुपोषितान् ।
आहूयाग्रे निवेश्याथ ह्यस्त्रेण प्रोक्षयेत् पशून् ॥ ४२ ॥

शिष्यानात्मनि संयोज्य अविद्याकर्मबन्धनैः । लिङ्गानुवृत्तश्चैतन्यं सह लिङ्गेन पाशितम्

ध्यानमार्गेण सम्प्रोक्ष्य वायुवीजेन शोधयेत् ।
ततो दहनवीजेन सृष्टिं ब्रह्माण्डसञ्ज्ञिकाम् ॥ ४४ ॥

निर्द्दग्धां सकलां ध्यायेद्भस्मकूटनिभस्थितम् । प्लावयेद्वारिणा भस्म संसारं वार्मयंस्मरेत्

तत्र शक्तिं न्यसेत् पश्चात् पार्थिवीं वीजसञ्ज्ञिकाम् ।
तन्मात्राभिः समस्ताभिः संवृतं पार्थिवं शुभम् ॥ ४६ ॥

अण्डन्तदुद्भवन्ध्यायेत्तदाधारन्तदात्मकम् । तन्मध्ये चिन्तयेन्मूर्त्तिं पौरुषीं प्रणवात्मिकाम्

लिङ्गं संक्रामयेत् पश्चादात्मस्थं पूर्वसंस्कृतम् ।
विभक्तेन्द्रियसंस्थानं क्रमाद् वृद्धं विचिन्तयेत् ॥ ४८ ॥

ततोऽण्डमब्दमेकन्तु स्थित्वा द्विशकलीकृतम् ।
द्यावापृथिव्यौ शकले तयोर्मध्ये प्रजापतिम् ॥ ४६ ॥

जातं ध्यात्वा पुनःप्रोक्ष्य प्रणवेनतु संश्रितम् । मन्त्रात्मकतनुंकृत्वायथान्यासंपुरोदितम्

विष्णुर्हस्तं ततो मूर्द्धिन दत्वा ध्यात्वा तु वैष्णवम् ।
एवमेकं बहून् वापि जनित्वा ध्यानयोगतः ॥ ५१ ॥

करौ संगृह्य मूलेन नेत्रे बद्ध्वा तु वाससा । नेत्रमन्त्रणे मन्त्री तान् सदनेनाहतेन तु ॥

कृतपूजो गुरुः सम्यक् देवदेवस्य तत्त्ववान् । शिष्यान् पुष्पाञ्जलिभृतःप्राङ्मुखानुपवेशयेत्

अर्च्चयेयुश्च तेऽप्येवं प्रसूता गुरुणा हरिम् । क्षिप्त्वा पुष्पाञ्जलिं तत्र पुष्पादिभिरनन्तरम्

अमन्त्रमर्च्चनं कृत्वा गुरोः पादार्च्चनन्ततः । विधाय दक्षिणां दद्यात् सर्वस्वं चार्द्धमेववा

गुरुः संशिक्षयेच्छिष्यान् तैः पूज्यो नामभिर्हरिः ।
विश्वक्सेनं यजेदीशं शङ्खचक्रगदाधरम् ॥ ५६ ॥
तज्जपन्तश्च तर्ज्जन्या मण्डलस्थं विसर्जयेत् ॥ ५७ ॥
विष्णुनिर्माल्यमखिलं विष्वक्सेनाय चार्पयेत् ।
प्रणीताभिस्तथात्मानमभिषिच्य च कुण्डगम् ॥ ५८ ॥

वह्निमात्मनि संयोज्य विष्वक्सेनं विसर्जयेत् । बुभुक्षुः सर्वमाप्नोति मुमुक्षुर्ल्लीयते हरौ

इत्यादिमहापुराणे आग्नेये अग्निकार्य्यादिकथनं नाम
चतुर्विंशोऽध्यायः ।

# पञ्चविंशोऽध्यायः

## वासुदेवादिमन्त्रनिरूपणम् ।

नारदःउवाच ।

वासुदेवादिमन्त्राणां पूज्यानां लक्षणं वदे । वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥

नमो भगवते चादौ अ आ अं अः स्वबीजकाः । ओङ्काराद्या नमोऽन्ताश्चनमोनारायणस्ततः

ओं तत् सत् ब्रह्मणे चैव ओं नमो विष्णवे नमः ।
ओं क्ष्रौं ओं नमो भगवते नरसिंहाय वै नमः ॥ ३ ॥
ओं भूर्नमो भगवते वराहाय नराधिपाः । जवारुणहरिद्राभा नीलश्यामललोहिताः ॥४॥
मेघाग्निमधुपिङ्गाभा वल्लभा नव नायकाः । अङ्गानि स्वरवीजानां स्वनामान्तैर्यथाक्रमम्
हृदयादीनि कल्पेत विभक्तैस्तन्त्रवेदिभिः । व्यञ्जनादीनि वीजानि तेषां लक्षणमन्यथा ॥
दीर्घस्वरैस्तु भिन्नानि नमोऽन्तान्तस्थितानि तु ।
अङ्गानि ह्रस्वयुक्तानि उपाङ्गानीति वर्ण्यते ॥ ७ ॥
विभक्तनामवर्णान्तस्थितानि वीजमुत्तमम् । दीर्घैर्ह्रस्वैश्च संयुक्तं साङ्गोपाङ्गस्वरैःक्रमात्
व्यञ्जनानां क्रमो ह्येष हृदयादिप्रकृतये । स्ववीजेन स्वनामान्तैर्विभक्तान्यङ्गनामभिः ॥
युक्तानि हृदयादीनि द्वादशान्तानि पञ्चतः । आरभ्य कल्पयित्वा तु जपेत् सिद्धयनुरूपतः
हृदयञ्च शिरश्चूड़ा कवचं नेत्रमस्तकम् । षड़ङ्गानि तु वीजानां मूलस्य द्वादशाङ्गकम् ॥
हृच्छिरश्च शिखा वर्म्म चास्त्रनेत्रन्तथोदरम् ।
पृष्ठवाहूरुजानूंश्च जङ्घा पादौ क्रमान्न्यसेत् ॥ १२ ॥
कं टं पं शं वैनतेयः खं ठं फं षं गदामनुः । गं डं वं सं पुष्टिमन्त्रो घं ढं भं हं श्रियै नमः
वं शं मं क्षं पाञ्चजन्यं छं तं पं कौस्तुभाय च ।
जं खं वं सुदर्शनाय श्रीवत्साय सं वं दं चं लं ॥ १४ ॥
ओं धं वं वनमालायै महानन्ताय वै नमः । निर्वीजपदमन्त्राणां पदैरङ्गानि कल्पयेत् ॥
जात्यन्तैर्नामसंयुक्तैर्हृदयादीनि पञ्चधा । प्रणवं हृदयादीनि ततः प्रोक्तानि पञ्चधा ॥
प्रणवं हृदयं पूर्व्वं परायेति शिरः शिखा ।
नाम्नात्मना तु कवचं अस्त्रं नामान्तकं भवेत् ॥ १७ ॥
ओं पराख्यादिस्वनामात्मा चतुर्थ्यन्तो नमोऽन्तकः ।
एकव्यूहादिषड्विंशव्यूहात्तस्यात्मनो मनुः ॥ १८ ॥
कनिष्ठादिकराग्रेषु प्रकृतिं देहकेऽर्च्चयेत् । पराय पुरुषात्मा स्यात् प्रकृत्यात्मा द्विरूपकः
ओं परयाग्न्यात्मने चैव वाय्वर्कौ च द्विरूपकः ।

अग्निं त्रिमूर्त्तौ विन्यस्य व्यापकं करदेहयोः ॥ २० ॥

वाय्वर्क्कौ करशाखासु सव्येतरकरद्वये। हृदि मूर्त्तौ तनावेष त्रिव्यूहे तुर्य्यरूपके ॥ २१ ॥

ऋग्वेदं व्यापकं हस्ते अङ्गुलीषु यजुर्न्यसेत्। तलद्वयेऽथर्वरूपं शिरोहृच्चरणान्तकः ॥२२

आकाशं व्यापकं न्यस्य करे देहे तु पूर्ववत्।

अङ्गुलीषु च वाय्वादि शिरोहृद्गुह्यपादके ॥ २३ ॥

वायुर्ज्योतिर्जलं पृथ्वी पञ्चव्यूहः समीरितः। मनः श्रोत्रन्त्वग्जिह्वा घ्राणं षड्व्यूह ईरितः

व्यापकं मानसं न्यस्य ततोऽङ्गुष्ठादितः क्रमात्।

मूर्द्धास्य हृद्गुह्यपत्सु कथितः करुणात्मकः ॥ २५ ॥

आदिमूर्त्तिस्तु सर्वत्र व्यापको जीवसञ्ज्ञितः। भूर्भुवः स्वर्म्महर्जनस्तपः सत्यञ्च सप्तधा

करे देहे न्यसेदाद्यमंगुष्ठादिक्रमेण तु। तलसंस्थस्सप्तमश्च लोकेशो देहकेक्रमात् ॥२७॥

देहे शिरोललाटास्यहृद्गुह्याङ्घ्रिषु संस्थितः।

अग्निष्टोमस्तथोक्थस्तु षोड़शी वाजपेयकः ॥ २८ ॥

अतिरात्राप्तोर्यामश्च यज्ञात्मा सप्तरूपकः। धीरहं मनः शब्दश्च स्पर्शरूपरसास्ततः ॥२९

गन्धो बुद्धिर्व्यापकं तु करे देहे न्यसेत् क्रमात्।

न्यसेदन्त्यौ च तलयोः के ललाटे मुखे हृदि ॥ ३० ॥

नाभौ गुह्ये च पादे च अष्टव्यूहः पुमान् स्मृतः।

जीवो बुद्धिरहङ्कारो मनः शब्दो गुणोऽनिलः ॥ ३१ ॥

रूपं रसो नवात्मायं जीव अंगुष्ठकद्वये। तर्जन्यादिक्रमाच्छेषं यावद्वामप्रदेशिनीम् ॥

देहे शिरोललाटास्यहृन्नाभिगुह्यजानुषु। पादयोश्च दशात्मायं इन्द्रो व्यापी समास्थितः

अंगुष्ठकद्वये वह्निस्तर्जन्यादौ परेषु च। शिरोललाटवक्त्रेषु हृन्नाभिगुह्यजानुषु ॥ ३४ ॥

पादयोरेकादशात्मा मनः श्रोत्रं त्वगेव च।

चक्षुर्जिह्वा तथा घ्राणं वाक्पाण्यङ्घ्रिश्च पायुकः ॥ ३५ ॥

उपस्थं मानसो व्यापी श्रोत्रमंगुष्ठकद्वये। तर्जन्यादिक्रमादष्टौ अतिरिक्तं तलद्वये ॥३६॥

उत्तमाङ्गललाटास्य हृन्नाभावथ गुह्यके। उरुयुग्मे तथा जङ्घे गुल्फपादेषु च क्रमात् ॥

विष्णुर्मधुहरश्चैव त्रिविक्रमकवामनौ । श्रीधरोऽथ हृषीकेशः पद्मनाभस्तथैव च ॥३८॥

दामोदरः केशवश्च नारायणस्ततः परः ।

माधवश्चाथ गोविन्दो विष्णुं वै व्यापकं न्यसेत् ॥ ३९ ॥

अंगुष्ठादौ तले द्वौ च पादे जानुनि वै कटौ । शिरःशिखरकट्याश्च जानुपादादिषुन्यसेत्

द्वादशात्मा पञ्चविंशः षड्विंशव्यूहकस्तथा ।

पुरुषो धीरहङ्कारो मनश्चित्तश्च शब्दकः ॥ ४१ ॥

तथा स्पर्शो रसो रूपं गन्धः श्रोत्रं त्वत्रस्तथा ।

चक्षुर्जिह्वा नासिका च वाक्पाण्यङ्घ्रिश्च पायवः ॥ ४२ ॥

उपस्थो भूर्जलन्तेजो वायुराकाशमेव च । पुरुषं व्यापकं न्यस्य अंगुष्ठादौ दश न्यसत् ॥

शेषान् हस्ततले न्यस्य शिरस्यथ ललाटके । मुखहृन्नाभिगुह्योरुजान्वङ्घ्री करणोद्गतौ

पादे जान्वोरुपस्थे च हृदये मूर्ध्नि च क्रमात् ।

परश्च पुरुषात्मादौ षड्विंशे पूर्ववत्परम् ॥ ४५ ॥

सञ्चिन्त्य मण्डलैके तु प्रकृतिं पूजयेद् बुधः । पूर्वयाम्याप्यसौम्येषु हृदयादीनि पूजयेत्

अस्त्रमग्न्यादिकोणेषु वैनतेयादि पूर्ववत् ।

दिक्पालांश्च विधिस्त्वन्यः त्रिव्यूहेऽग्निश्च मध्यतः ॥ ४७ ॥

पूर्वादिदिग्बलावासोराज्यादिभिरलंकृतः ।

कर्णिकायां नाभसश्चमानसः कर्णिकास्थितः ॥ ४८ ॥

विश्वरूपं सर्वसिद्ध्यै यजेद्राज्यजयाय च । सर्वव्यूहैः समायुक्तमङ्गैरपि च पञ्चभिः ॥

गरुडाद्यैस्तथेन्द्राद्यैः सर्वान् कामानवाप्नुयात् ।

विश्वक्सेनं यजेन्नाम्ना वै वीजं व्योमसंस्थितम् ॥ ५० ॥

इत्यादिमहापुराणे आग्नेये मन्त्रप्रदर्शनं नाम पञ्चविंशोऽध्यायः ।

———

# षड्विंशोऽध्यायः

## मुद्रालक्षणकथनम् ।

नारद उवाच ।

मुद्राणां लक्षणं वक्ष्ये सान्निध्यादिप्रकारकम् । अञ्जलिः प्रथमा मुद्रा वन्दनो हृदयानुगा
ऊर्ध्वांगुष्ठो वाममुष्टिर्दक्षिणांगुष्ठबन्धनम् ।
सव्यस्य तस्य चांगुष्ठो यस्य चोर्ध्वे प्रकीर्त्तितः ॥ २ ॥
तिस्रः साधरणा व्यूहे अथासाधरणा इमाः । कनिष्ठादिविमोकेन अष्टौ मुद्रा यथाक्रमम्
अष्टानां पूर्ववीजानां क्रमशस्त्ववधारयेत् । अंगुष्ठेन कनिष्ठान्तं नामयित्वांगुलित्रयम् ॥
उर्ध्वं कृत्वा सम्मुखञ्च वीजाय नवमाय वै । वामहस्तमथोत्तानं कृत्वार्द्धं नामयेच्छनैः ॥
वराहस्य स्मृता मुद्रा अङ्गानाञ्च क्रमादिमाः ।
एकैकां मोचयेद् बध्वा वाममुष्टो तथांगुलीम् ॥ ६ ॥
आकुञ्चयेत् पूर्वमुद्रां दक्षिणेऽप्येवमेव च । ऊर्ध्वांगुष्ठो वाममुष्टिर्मुद्रासिद्धिस्ततो भवेत्
इत्यादिमहापुराणे आग्नेये मुद्राप्रदर्शनं नाम षड्विंशोऽध्यायः ।

---

# सप्तविंशोऽध्यायः

## दीक्षाविधिकथनम् ।

नारद उवाच ।

वक्ष्ये दीक्षां सर्वदाञ्च मण्डलेऽब्जे हरिं यजेत् । दशम्यामुपसंहृत्य यागद्रव्यं समस्तकम्
विन्यस्य नारसिंहेन सम्मन्त्य शतवारकम् । सर्षपांस्तु फड़न्तेनरक्षोघ्नान् सर्वतःक्षिपेत्
शक्तिं सर्वात्मिकां तत्र न्यसेत् प्रासादरूपिणीम् ।

सर्वौषधिं समाहृत्य विकिरानभिमन्त्रयेत् ॥ ३ ॥
शतवारं शुभे पात्रे वासुदेवेन साधकः । संसाध्य पञ्चगव्यन्तु पञ्चभिर्मूलमूर्त्तिभिः ॥४॥
नारायणान्तैः सम्प्रोक्ष्य कुशाग्रैस्तेन तां भुवम् ।
विकिरान् वासुदेवेन क्षिपेदुत्तानपाणिना ॥ ५ ॥
त्रिधा पूर्वमुखस्तिष्ठन् ध्यायेत् विष्णुं प्रपूजयेत् ॥ ६ ॥
शतवारं मन्त्रयित्वा त्वस्त्रेणैव च वर्द्धनीम् । अच्छिन्नधारया सिञ्चन् ईशानान्तं नयेच्चतम्
कलसं पृष्ठतो नीत्वा स्थापयेद्विकिरोपरि । संहृत्य विकिरान् दर्भैः कुम्भेशं कर्करीं यजेत्
सवस्त्रं पञ्चरत्नाढ्यं स्थण्डिले पूजयेत् हरिम् ।
अग्नावपि समभ्यर्च्य मन्त्रान् सञ्जप्य पूर्ववत् ॥ ६ ॥
प्रक्षाल्य पुण्डरीकेण विलिप्यान्तः सुगन्धिना । उखामाज्येनसम्पूर्य्यगोक्षीरेणतुसाधकः
आलोक्य वासुदेवेन ततः सङ्कर्षणेन च । तण्डुलानाज्यसंसृष्टान् क्षिपेत् क्षीरे सुसंस्कृते
प्रद्युम्नेन समालोड्य दर्व्या सङ्घट्टयेच्छनैः । पक्वमुत्तारयेत् पश्चादनिरुद्धेन देशिकः ॥१२॥
प्रक्षाल्यालिप्य तत् कुर्यादूर्ध्वपुण्ड्रन्तु भस्मना ।
नारायणेन पार्श्वेषु चरुमेवं सुसंस्कृतम् ॥ १३ ॥
भागमेकन्तु देवाय कलशाय द्वितीयकम् । तृतीयेन तु भागेन प्रदद्यादाहुतित्रयम् ॥१४॥
शिष्यैः सह चतुर्थन्तु गुरुरद्याद्विशुद्धये । नारायणेन सम्मन्त्र्य सप्तधा क्षीरवृक्षजम् ॥
दन्तकाष्ठं भक्षयित्वा त्यक्त्वा ज्ञात्वाऽस्त्रपातकम् । ऐन्द्राग्न्युत्तरकेशानी मुखं पतितमुत्तमम्
शुभं सिंहशतं हुत्वा आचम्याथ प्रविश्य च ।
पूजागारं न्यसेन्मन्त्री प्राच्यां विष्णुं प्रदक्षिणम् ॥ १७ ॥
संसारार्णवमग्नानां पशूनां पाशमुक्तये । त्वमेव शरणं देव ! सदा त्वं भक्तवत्सल ! ॥
देवदेवानुजानीहि प्राकृतैः पाशबन्धनैः । पाशितान्मोचयिष्यामि त्वत्प्रसादात् पशूनिमान्
इति विज्ञाप्य देवेशं सम्प्रविश्य पशूंस्ततः । धारणाभिस्तु संशोध्य पूर्ववज्ज्वलनादिना
संस्कृत्य मूर्त्या संयोज्य नेत्रे बध्वा प्रदर्शयेत् । पुष्पपूर्णाञ्जलींस्तत्र क्षिपेत्तन्नामयोजयेत्
अमन्त्रमर्चनं तत्र पूर्ववत् कारयेत् क्रमात् । यस्यां मूर्त्तौ पतेत् पुष्पंतस्य तन्नामनिर्दिशेत्

शिखान्तसम्मितं सूत्रं पादांगुष्ठादि षड्गुणम् । कन्यासु कर्त्तितं रक्तं पुनस्तत्त्रिगुणीकृतम् ।
यस्यां संलीयते विश्वं यतो विश्वं प्रसूयते । प्रकृतिं प्रक्रियाभेदैः संस्थितां तत्रचिन्तयेत्

तेन प्राकृतिकान् पाशान् ग्रथित्वा तत्त्वसङ्ख्यया ।
कृत्वा शरावे तत् सूत्रं कुण्डपार्श्वे निधाय तु ॥ २५ ॥
ततस्तत्त्वानि सर्वाणि ध्यत्वा शिष्यतनौ न्यसेत् ।
सृष्टिक्रमात् प्रकृत्यादिपृथिव्यन्तानि देशिकः ॥ २६ ॥

तत्रैकधा पञ्चधा स्याद्दशद्वादशधापि वा । ज्ञातव्यः सर्वभेदेन ग्रथितस्तत्त्वचिन्तकैः ॥
अङ्गैः पञ्चभिरध्वानं निखिलं विकृतिक्रमात् । तन्मात्रात्मनि संहृत्य मायासूत्रे पशोस्तनौ
प्रकृतिर्लिङ्गशक्तिश्च कर्त्ता बुद्धिस्तथा मनः । पञ्चतन्मात्रबुद्ध्याख्यं कर्माख्यं भूतपञ्चकम्
ध्यायेच्च द्वादशात्मानं सूत्रे देहे तथेच्छया। हुत्वा सम्पातविधिना सृष्टेः सृष्टिक्रमेण तु
एकैकं शतहोमेन दत्त्वा पूर्णाहुतिं ततः । शरावे सम्पुटीकृत्य कुम्भेशाय निवेदयेत् ॥३१

अधिवास्य यथा न्यायं भक्तं शिष्यं तु दीक्षयेत् ।
करणीं कर्त्तरीं वापि रजांसि खटिकामपि ॥ ३२ ॥

अन्यदप्युपयोगि स्यत् सर्वं तद्वायुगोचरे । संस्थाप्य मूलमन्त्रेण परामृष्याधिवासयेत्
नमो भूतेभ्यश्च बलिः कुशे शेते स्मरन् हरिम् । मण्डपं भूषयित्वाऽथ वितानघटलड्डुकैः

मण्डलेऽथ यजेद्विष्णुं ततः सन्तर्प्य पावकम् ।
आहूय दीक्षयेच्छिष्यान् बद्धपद्मासनस्थितान् ॥ ३५ ॥
सम्प्रोक्ष्य विष्णुं हस्तेन मूर्द्धानं स्पृश्य वै क्रमात् ।
प्रकृत्यादिविकृत्यन्तां साधिभूताधिदैवताम् ॥ ३६ ॥
सृष्टिमाध्यात्मिकीं कृत्वा हृदि तां संहरेत् क्रमात् ।
तन्मात्रभूतां सकलां जीवेन समतां गताम् ॥ ३७ ॥

ततः सम्प्रार्थ्य कुम्भेशं सूत्रं संहृत्य देशिकः। अग्नेःसमीपमागत्य पार्श्वे तं सन्निवेश्यतु
मूलमन्त्रेण सृष्टीशमाहुतीनां शतेन तम् । उदासीनमथासाद्य पूर्णाहुत्या च देशिकः ॥
शुक्लं रजः समादाय मूलेन शतमन्त्रितम् । सन्ताड्य हृदयन्तेन हुंफट्कारान्तर युतैः॥४०

४—

वियोगपदसंयुक्तैर्बीजैःपादादिभिः क्रमात् । पृथिव्यादीनि तत्त्वानि विश्लिष्यजुहुयात्ततः
वह्नावखिलतत्त्वानामालये व्याहृते हरौ । नीयमानं क्रमात्सर्वं तत्राध्वानं स्मरेद्बुधः ॥
ताड़नेन वियोज्यैव आदायापाद्य शाम्यताम् । प्रकृत्याहृत्य जुहुयाद्यथोक्ते जातवेदसि ॥
गर्भाधानं जातकर्म भोगञ्चैव लयन्तथा । हुत्वाष्टौ तत्र तत्रैव ततः शुद्धिन्तु होमयेत् ॥
शुद्धं तत्त्व समुद्धृत्य पूर्णाहुत्या तु देशिकः । सन्नयेद्वह्निपरे तत्त्वे यावदव्याहृतं क्रमात्
तत्परं ज्ञानयोगेन विलाप्य परमात्मनि । विमुक्तबन्धनं जीवं परस्मिन्नव्यये पदे ॥४६॥
निवृत्तं परमानन्दे शुद्धे बुद्धे स्मरेद्बुधः । दद्यात् पूर्णाहुतिं पश्चादेवं दीक्षा समाप्यते ॥

प्रयोगमन्त्रान् वक्ष्यामि यैर्दीक्षा होमसंलयः ।

ओं यं भूतानि विशुद्धं हुं फट् ।

अनेन ताड़नं कुर्याद्वियोजनमिह द्वयम् ॥ ४८ ॥

ओं यं भूतान्यापातयेऽहम् ।

आदानं कृत्वा चानेन प्रकृत्या योजनं शृणु ।

ओं अं भूतानि पुंश्चाहो ।

होममन्त्रं प्रवक्ष्यामि ततः पूर्णाहुतेर्मनुम् ॥ ४९ ॥

ओं भूतानि संहर स्वाहा ।

ओं अं ओं नमो भगवते वासुदेवाय वौषट् ।

पूर्णाहुत्यनन्तरे तु तद्वै शिष्यन्तु साधयेत् ।

एवं तत्त्वानि सर्वाणि क्रमात्संशोधयेद् बुधः ॥ ५० ॥

नमोऽन्तेन स्वबीजेन ताड़नादिपुरःसरम् ।

ओं वां कर्मेन्द्रियाणि । ओं दें बुद्धीन्द्रियाणि ।

यं बीजेन समानन्तु ताड़नादिप्रयोगकम् ॥ ५१ ॥

ओं सुं गन्धतन्मात्रे वियुङ्क्ष्व हुं फट् । ओं सम्पाहि हां ॥

ओं स्वं स्वं क्ष प्रकृत्या । ओं सुं हुं गन्धतन्मात्रे संहर स्वाहा ।

ततः पूर्णाहुतिश्चैवमुत्तरेषु प्रयुज्यते ।

ओं रां रसतन्मात्रे । ओं भें रूपतन्मात्रे । ओं रं स्पर्शतन्मत्रे ।

ओं एं शब्दतन्मात्रे । ओं भं नमः। ओं सों अहङ्कारः । ओं नं बुद्धे । ओं ओंप्रकृते ।

एकमूर्त्त्याश्रयं प्रोक्तो दीक्षायोगः समासतः । एवमेव प्रयोगस्तु नवव्यूहादिके स्मृतः ॥

दग्ध्वापरस्मिन् सन्दध्यान्निर्वाणे प्रकृतिन्नरः । अविकारे समादध्यादीश्वरे प्रकृतिन्नरः ॥

शोधयित्वाऽथ भूतानि कर्माङ्गानि विशोधयेत् ।

बुद्धाख्यान्यथ तन्मात्रमनोज्ञानमहंकृतिम् ॥ ५४ ॥

लिङ्गात्मान विशोध्यान्ते प्रकृतिं शोधयेत् पुनः ।

पुरुषं प्राकृतं शुद्धमीश्वरे धाम्नि संस्थितम् ॥ ५५ ॥

स्वगोचरीकृताशेषभोगमुक्तौ कृतास्पदम् ।ध्यायन् पूर्णाहुतिं दद्याद्दीक्षेयं त्वधिकारिणी

अङ्गैराराध्य मन्त्रस्य नीत्वा तत्त्वगणं समम् ।

क्रमादेवं विशोध्यान्ते सर्व्वसिद्धिसमन्वितम् ॥ ५७ ॥

ध्यायन् पूर्णाहुतिं दद्याद्दीक्षेयं साधकेस्मृतः । द्रव्यस्य वा न सम्पत्तिरशक्तिर्वात्मनोयदि

इष्ट्वा देवं यथापूर्वं सर्वोपकरणान्वितम् । सद्योऽधिवास्य द्वादश्यां दीक्षयेद्देशिकोत्तमः

भक्तो विनीतः शारीरैर्गुणैः सर्वैः समन्वितः ।

शिष्यो नातिधनी यस्तु स्थण्डिलेऽभ्यर्च्य दीक्षयेत् ॥ ६० ॥

अध्वानं निखिलं देवं भौतंवाध्यात्मिकीकृतम् । सृष्टिक्रमेणशिष्यस्यदेहेध्यात्वातुदेशिकः

अष्टाष्टाहुतिभिः पूर्वं क्रमात् सन्तर्प्य सृष्टिमान् ।

स्वमन्त्रैर्वासुदेवादीन् जननादीन् विसर्जयेत् ॥ ६२ ॥

होमेन शोधयेत् पश्चात्संहारक्रमयोगतः । योनिसूत्राणि बद्धानि मुक्त्वाकर्माणिदेशिकः

शिष्यदेहात्समाहृत्यक्रमात्तत्त्वानिशोधयेत् । अग्नौप्राकृतिकेविष्णौलयंनीत्वाऽधिदैविके

शुद्धं तत्त्वमशुद्धेन पूर्णाहुत्या तु साधयेत् । शिष्ये प्रकृतिमापन्नेदग्ध्वाप्राकृतिकान्गुणान्

मोचयेदधिकारे वा नियुञ्ज्याद्देशिकः शिशून् ।

अथान्यां शक्तिदीक्षां वा कुर्य्यात् भावे स्थितो गुरुः ॥ ६६ ॥

भक्त्यासम्प्रतिपन्नानांयतानांनिर्द्धनस्यच । सम्पूज्यस्थण्डिलेविष्णुंपार्श्वस्थंस्थाप्यपुत्रकम्

देवताभिमुखः शिष्यस्तिर्यगास्यः स्वयं स्थितः ।
अध्वानं निखिलं ध्यात्वा पर्वभिः स्वैर्विकल्पितम् ॥ ६८ ॥
शिष्यदेहे तथा देवमाधिदैविकयाचनम् । ध्यानयोगेन सञ्चिन्त्य पूर्ववत्ताड़नादिना ॥
क्रमात्तत्त्वानि सर्वाणि शोधयेत् स्थण्डिले हरौ ।
ताडनेन वियोज्याथ गृहीत्वाऽऽत्मनि तत्परः ॥ ७० ॥
देवे संयोज्य संशोध्य गृहीत्वा यत् स्वभावतः । आनीयशुद्धभावेनसन्धयित्वाक्रमेण तु
शोधयेद्ध्यानयोगेन सर्वतो ज्ञानमुद्रया । शुद्धेषु सर्वतत्त्वेषु प्रधाने चेश्वरे स्थिते ॥
दग्ध्वा निर्वापयेच्छिष्यान् पदे चैशे नियोजयेत् ।
निनयेत् सिद्धिमार्गे वा साधकं देशिकोत्तमः ॥ ७३ ॥
एवमेवाधिकारस्थो गृही कर्म्मण्यतन्द्रितः । आत्मानं शोधयंस्तिष्ठेद्यावद्रागक्षयोभवेत्
क्षीणरागमथात्मानं ज्ञात्वा संशुद्धकिल्बिषः । आरोप्यपुत्रेशिष्ये वा ह्यधिकारन्तुसंयमी
दग्ध्वामायामयंपाशंप्रव्रज्यस्वात्मनिस्थितः । शरीरपातमाकाङ्क्षन्नासीताव्यक्तलिङ्गवान्
इत्यादिमहापुराणे आग्नेये सर्वदीक्षाकथनं नाम सप्तविंशोऽध्यायः ।

---

## अष्टाविंशोऽध्यायः

### अभिषेकविधानम् ।

नारद उवाच ।

अभिषेकं प्रवक्ष्यामि यथाचार्य्यस्तु पुत्रकः । सिद्धिभाक्साधकोयेनरोगीरोगाद्विमुच्यते
राज्यं राजा सुतं स्त्रीश्च प्राप्नुयान्मलनाशनम् ।
मूर्तिकुम्भान् सुरत्नाढ्यान्मध्यपूर्वादितो न्यसेत् ॥ २ ॥
सहस्रावर्तितान्कुर्य्यादथवाशतवर्तितान् । मण्डपे मण्डले विष्णुं प्राच्यैशान्याञ्च पीठके
निवेश्य शकलीकृत्य पुत्रकं साधकादिकम् । अभिषेकं समभ्यर्च्यकुर्य्याद्गीतादिपूर्वकम्

दद्याच्च योगपीठादीन्त्वनुग्राह्यास्त्वया नराः ।
गुरुश्च समयान् ब्रूयाद् गुप्तः शिष्योऽथ सर्वभाक् ॥ ५ ॥

इत्यादिमहापुराणे आग्नेये आचार्य्याभिषेको नाम अष्टाविंशोऽध्यायः ।

---

## ऊनत्रिंशोऽध्यायः

### सर्वतोभद्रमण्डलकथनम् ।

नारद उवाच ।

साधकः साधयेन् मन्त्रं देवतायतनादिके । शुद्धभूमौ गृहे प्राच्य मण्डले हरिमीश्वरम् ॥
चतुरस्त्रीकृते क्षेत्रे मण्डलादीनि वै लिखेत् । रसवाणाक्षिकोष्ठेषु सर्वतोभद्रमालिखेत् ॥

षट्‌त्रिंशत्कोष्ठकैः पद्मं पीठं पङ्क्त्या वहिर्भवेत् ।
द्वाभ्यान्तु वीथिका तस्माद् द्वाभ्यां द्वाराणि दिक्षु च ॥ ३ ॥

वर्त्तुलं भ्रामयित्वा तु पद्मक्षेत्रं पुरोदितम् । पद्मार्द्धे भ्रामयित्वा तु भागं द्वादशमं वहिः
विभज्य भ्रामयेच्छेषं चतुःक्षेत्रन्तु वर्त्तुलम् । प्रथमं कर्णिकाक्षेत्रं केशराणां द्वितीयकम्
तृतीयं दलसन्धीनां दलाग्राणां चतुर्थकम् । प्रसार्य कोणसूत्राणिकोणदिङ्मध्यमन्ततः
निधाय केशराग्रे तु दलसन्धींस्तु लाञ्छयेत् । पातयित्वाथ सूत्राणि तत्रपत्राष्टकंलिखेत्
दलसन्ध्यन्तरालन्तु मानं मध्ये निधाय तु । दलाग्रं भ्रामयेत्तेन तदग्रे तदनन्तरम् ॥ ८ ॥
तदन्तरालं तत्पार्श्वे कृत्वा वाह्यक्रमेण च । केशरे तु लिखेद्द्वौ द्वौदलमध्ये ततः पुनः ॥

पद्मलक्ष्मैतत् सामान्यं द्विषट्कदलमुच्यते ।
कर्णिकार्द्धेन मानेन प्राक्संस्थं भ्रामयेत् क्रमात् ॥ १० ॥

तत्पार्श्वे भ्रमयोगेन कुण्डल्यः षड् भवन्तिहि । एवंद्वादशमत्स्याःस्युर्द्विषट्कदलकश्चतैः
पञ्चपत्राभिसिद्ध्यर्थं मत्स्यं कृत्वैवमब्जकम् । व्योमरेखावहिःपीठन्तत्रकोष्ठानिमार्जयेत्
त्रीणि कोणेषु पादार्थं द्विद्विकान्यपराणितु । चतुर्दिक्षुविलिप्तानिगात्रकाणिभवन्त्युत

ततः पङ्क्तिद्वयं दिक्षु वीथ्यर्थन्तुविलोपयेत् । द्वाराण्याशासु कुर्वीत चत्वारिचतसृष्वपि

द्वाराणां पार्श्वतः शोभा अष्टौ कुर्याद्विचक्षणः ।
तत्पार्श्वे उपशोभास्तु तावत्यः परिकीर्त्तिताः ॥ १५ ॥

समीपउपशोभानां कोणास्तु परिकीर्त्तिताः । चतुर्दिक्षु यतो द्वे द्वे चिन्तयेन्मध्यकोष्ठकैः
चत्वारि वाह्यतो मृज्यादेकैकंपार्श्वयोरपि । शोभार्थंपार्श्वयोस्त्रीणित्रीणिलुम्पेद्दलस्यतु
तद्वद्विपर्यये कुर्यादुपशोभां ततः परम् । कोणस्यान्तर्वहिस्त्रीणि चिन्तयेद्द्विर्विभेदतः ॥
एवंषोड़शकोष्ठं स्यादेवमन्यत् तु मण्डलम् । द्विषट्कभागे षट्त्रिंशत्पदं पद्मन्तुवीथिका

एका पङ्क्तिः पराभ्यां तु द्वारशोभादि पूर्व्ववत् ।
द्वादशांगुलिभिः पद्ममेकहस्ते तु मण्डले ॥ २० ॥

द्विहस्ते हस्तमात्रं स्याद्वृद्ध्या द्वारेण वाचरेत् । अपीठश्चतुरस्रं स्याद्विकरश्चक्रपङ्कजम्

पद्मार्द्धं नवभिः प्रोक्तं नाभिस्तु तिसृभिः स्मृता ।
अष्टाभिर्द्धारकान् कुर्य्यान्नेमिन्तु चतुरंगुलैः ॥ २२ ॥
त्रिधा विभज्य च क्षेत्रमन्तर्द्वाभ्यामथाङ्कयेत् ।
पद्मान्तस्वरसिद्ध्यर्थं तेष्वास्फाल्य लिखेदरान् ॥ २३ ॥

इन्दीवरदलाकारानथवा मातुलाङ्गवत् । पद्मपत्रायतान्वापि लिखेदिच्छानुरूपतः ॥ २४ ॥
भ्रामयित्वा वहिर्न्नेमावरसन्ध्यन्तरे स्थितः । भ्रामयेदरमूलन्तु सन्धिमध्ये व्यवस्थितः

अरमध्ये स्थितो मध्यमरर्णि भ्रामयेत् समम् ।
एवं सिद्ध्यन्तराः सम्यक् मातुलाङ्गनिभाः समाः ॥ २६ ॥

विभज्य सप्तधा क्षेत्रं चतुर्द्दशकरं समम् । द्विधा कृते शतं ह्यत्र षण्णवत्यधिकानि तु॥
कोष्ठकानिचतुर्भिस्तैर्मध्ये भद्रंसमालिखेत् । परितोविसृजेद्वीथ्यै तथा दिक्षुसमालिखेत्

कमलानि पुनर्वीथ्यै परितः परिमृज्य तु ।
द्वे द्वे मध्यमकोष्ठे तु श्रीवार्थं दिक्षु लोपयेत् ॥ २६ ॥
चत्वारि वाह्यतः पश्चात्त्रीणि त्रीणि तु लोपयेत् ।

शीजापार्श्वे वहिस्त्वेका शोभा सा परिकीर्त्तिता ॥ ३० ॥

विमृज्य बाह्यकोणेषु सप्तान्तस्त्रीणि मार्जयेत् । मण्डलंनवभागं स्यान्नवव्यूहं हरिंयजेत्

पञ्चविंशतिकव्यूहं मण्डलं विश्वरूपगम् । द्वात्रिंशद्धस्तकं क्षेत्रं भक्तं द्वात्रिंशता समम् ॥

एवंकृते चतुर्विंशत्यधिकन्तु सहस्रकम् । कोष्ठकानां समुद्दिष्टं मध्येषोड़शकोष्ठकैः ॥

भद्रकं परिलिख्याथ पार्श्वे पङ्क्तिं विमृज्य तु ।

ततः षोड़शभिः कोष्ठैर्दिक्षु भद्राष्टकं लिखेत् ॥ ३४ ॥

ततोऽपि पङ्क्तिं सम्मृज्य तद्वत् षोड़शभद्रकम् ।

लिखित्वा परितः पङ्क्तिं विमृज्याथ प्रकल्पयेत् ॥ ३५ ॥

द्वारद्वादशकं दिक्षु त्रीणि त्रीणियथाक्रमम् । षड्भिःपरिलुप्यान्तर्मध्ये चत्वारिपार्श्वयोः

चत्वार्य्यन्तर्वहिर्द्वेतु शोभार्थं परिमृज्य तु । उपद्वारप्रसिद्ध्यर्थं त्रीण्यन्तः पञ्च वाह्यतः

परिमृज्य तथा शोभां पूर्ववत् परिकल्पयेत् ।

वहिः कोणेषु सप्तान्तस्त्रीणि कोष्ठानि मार्जयेत् ॥ ३८ ॥

पञ्चविंशतिकव्यूहे परं ब्रह्म यजेत् शुभे । मध्ये पूर्वादितः पद्मे वासुदेवादयः क्रमात् ।

वराहं पूजयित्वा च पूर्वपद्मे ततः क्रमात् ।

व्यूहान् सम्पूजयेत्तावत् यावत् षड्विंशमो भवेत् ॥ ४० ॥

यथोक्तं व्यूहमखिलमेकस्मिन् पङ्कजे क्रमात् । यष्टव्यमिति यत्नेन प्रचेता मन्यतेऽध्वरम्

सत्यन्तुमूर्त्तिभेदेन विभक्तं मन्यतेऽच्युतम् । चत्वारिंशत्करं क्षेत्रं ह्युत्तरं विभजेत्क्रमात्

एकैकं सप्तधा भूयस्तथैवैकं द्विधा पुनः । चतुःषष्ट्युत्तरं सप्तशतान्येकं सहस्रकम् ॥

कोष्ठकानांभद्रकञ्च मध्ये षोड़शकोष्ठकैः । पार्श्वेवीथी ततश्चाष्टभद्राण्यथच वीथिका

षोड़शाब्जान्यथो वीथीं चतुर्विंशतिपङ्कजम् ।

वीथीपद्मानि द्वात्रिंशत् पङ्क्तिवीथिकजान्यथ ॥ ४५ ॥

चत्वारिंशत्ततो वीथो शेषपङ्क्तित्रयेणच । द्वारशोभोपशोभाः स्युर्दिक्षु मध्येविलोप्यच

द्विचतुःषड्द्वारसिद्ध्यै चतुर्दिक्षु विलोपयेत् ।

पञ्च त्रीण्येककं वाह्ये शोभोपद्वारसिद्धये ॥ ४७ ॥

द्वाराणां पार्श्वयोरन्तः षड् वा चत्वारि मध्यतः ।
द्वे द्वे लुम्पेदेवमेव षड् भवन्त्युपशोभिकाः ॥ ४८ ॥
एकस्यां दिशि संख्याः स्युः चतस्रः परिसंख्यया ॥ ४९ ॥
एकैकस्यां दिशि त्रीणि द्वाराण्यपि भवन्त्युत ।
पञ्च पञ्च तु कोणेषु पङ्क्तौ पङ्क्तौ क्रमान्मृजेत् ।
कोष्ठकानि भवेदेवं मर्त्येष्ट्यं मण्डलं शुभम् ॥ ५० ॥

इत्यादिमहापुराणे आग्नेये मण्डलादिलक्षणं नाम ऊनत्रिंशोऽध्यायः ।

---

## त्रिंशोऽध्यायः

### मण्डलविधिः ।

नारद उवाच ।

मध्येपद्मे यजेद्ब्रह्म साङ्गंपूर्वेऽब्जनाभकम् । आग्नेयेऽब्जेच प्रकृतिं याम्येऽब्जे पुरुषंयजेत्
पुरुषाद्दक्षिणे वह्निं नैर्ऋते वारुणेऽनिलम् । आदित्यमैन्दवे पद्मे ऋग्यजुश्चैशपद्मके ॥२॥
इन्द्रादींश्च द्वितीयायां पद्मे षोड़शके तथा । सामाथर्वाणमाकाशं वायुं तेजस्तथा जलम्
पृथिवीञ्च मनश्चैव श्रोत्रं त्वक् चक्षुरर्च्चयेत् । रसनाञ्च तथा घ्राणं भूर्भुवश्चैव षोड़शम्
महर्जनस्तपः सत्यं तथाग्निष्टोममेव च ।
अत्यग्निष्टोमकं चोक्थं षोड़शीं वाजपेयकम् ॥ ४ ॥
अतिरात्रञ्च सम्पूज्य तथाप्तोर्याममर्च्चयेत् । मनो बुद्धिमहङ्कारं शब्दं स्पर्शञ्च रूपकम् ॥
रसं गन्धञ्च पद्मेषु चतुर्विंशतिषु क्रमात् । जीवं मनोधिपञ्चाहं प्रकृतिं शब्दमात्रकम् ॥
वासुदेवादिमूर्त्तींश्च तथा चैवं दशात्मकम् । मनः श्रोत्रं त्वचं प्राच्चर्य चक्षुश्च रसनंतथा
घ्राणं वाक्पाणिपादञ्च द्वात्रिंशद्वारिजेष्विमान् ।
चतुर्थावरणे पूज्याः साङ्गाः सपरिवारकाः ॥ ६ ॥

पायूपस्थौ च सम्पूज्य मासानां द्वादशाधिपान् ।
पुरुषोत्तमादिषड्विंशान् वाह्यावरणके यजेत् ॥ १० ॥
चक्राब्जे तेषु सम्पूज्या मासानां पतयःक्रमात् । अष्टौप्रकृतयः षड्वा पञ्चाथचतुरोऽपरे
रजः पातं ततः कुर्य्याल्लिखिते मण्डले शृणु ।
कर्णिका पीतवर्णा स्याद्रेखाः सर्वाः सिताः समाः ॥ १२ ॥
द्विहस्तेऽङ्गुष्ठमात्राः स्युर्हस्ते चार्द्धसमाः सिताः ।
पद्मं शुक्लेन सन्धींस्तु कृष्णेन श्यामतोऽथ वा ॥ १३ ॥
केशरा रक्तपीताः स्युः कोणान् रक्तेन पूरयेत् ।
भूषयेद्द योगपीठन्तु यथेष्टं सार्ववर्णिकैः ॥ १४ ॥
लतावितानपत्राद्यैर्वीथिकामुपशोभयेत् । पीठद्वारे तु शुक्लेन शोभारक्तेन पीततः ॥१५॥
उपशोभाश्च नीलेन कोणसङ्ख्यांश्च वै सितान् । भद्रके पूरणं प्रोक्तमेवमन्येषु पूरणम्
त्रिकोणं सितरक्तेन कृष्णेन च विभूषयेत् । द्विकोणं रक्तपीताभ्यां नाभिं कृष्णेन चक्रके
अरकान् पीतरक्ताभिःश्यामान् नेमिन्तु रक्ततः ।
सितश्यामारुणाःकृष्णाः पीता रेखास्तु वाह्यतः ॥ १८ ॥
शालिपिष्टादि शुक्लं स्यद्रक्तं कौसुम्भकादिकम् ।
हरिद्रया च हारिद्रं कृष्णं स्याद्दग्धधान्यतः ॥ १६ ॥
शमीपत्रादिकैःश्याममंवीजानांलक्षजाप्यतः । चतुर्लक्षैस्तु मन्त्राणां विद्यानां लक्षसाधनम्
अयुतं बुद्धिविद्यानां स्तोत्राणाञ्च सहस्रकम् । पूर्वमेवाथ लक्षेण मन्त्रशुद्धिस्तथात्मनः
तथापरेण लक्षेण मन्त्रः क्षेत्रीकृतो भवेत् । पूर्वमेवासमोहोमो वीजानां सम्प्रकीर्तितः
पूर्वसेवा दशांशेन मन्त्रादीनां प्रकीर्तिता । पुरश्चर्य्ये तु मन्त्रे तु मासिकं व्रतमाचरेत् ॥
भुवि न्यसेद्वामपादं न गृह्णीयात् प्रतिग्रहम् । एवं द्वित्रिगुणेनैव मध्यमोत्तमसिद्धयः ॥
मन्त्रध्यानं प्रवक्ष्यामि येन स्यान्मन्त्रजं फलम् ।
स्थूलं शब्दमयं रूपं विग्रहं वाह्यमिष्यते ॥ २५ ॥
सूक्ष्मं ज्योतिर्म्मयं रूपं हार्दं चिन्तामयं भवेत् ।

चिन्तया रहितं यत्तु तत् परं परिकीर्तितम् ॥ २६ ॥
वराहसिंहशक्तीनां स्थूलरूपं प्रधानतः । चिन्तया रहितं रूपं वासुदेवस्य कीर्तितम् ॥
इतरेषां स्मृतं रूपं हार्दं चिन्तामयं सदा । स्थूलं वैराजमाख्यातं सूक्ष्मं वै लिङ्गितं भवेत्
चिन्तया रहितं रूपमैश्वरं परिकीर्तितम् । हृत्पुण्डरीकनिलयं चैतन्यं ज्योतिरव्ययम् ॥
बीजं बीजात्मकं ध्यायेत् कदम्बकुसुमाकृतिम् ।
कुम्भान्तरगतो दीपो निरुद्धप्रसवो यथा ॥ ३० ॥
संहतः केवलस्तिष्ठेदेवं मन्त्रेश्वरोहृदि । अनेकशुषिरे कुम्भे तावन्मात्रा गभस्तयः ॥
प्रसरन्ति बहिस्तद्वन्नाड़ीभिर्बीजरश्मयः । अथावभासतो देवीमात्मीकृत्य तनुं स्थिताः
हृदयात् प्रस्थिता नाड्यो दर्शनेन्द्रियगोचराः ।
अग्नीषोमात्मके तासां नाड्यौ नासाग्रसंस्थिते ॥ ३३ ॥
सम्यग्गुह्येन योगेन जित्वा देहसमीरणम् । जपध्यानरतो मन्त्री मन्त्रलक्षणमश्नुते ॥
संशुद्धभूततन्मात्रः सकामो योगमभ्यसन् । अणिमादिमवाप्नोति विरक्तःप्रविलङ्घ्य च
देवात्मके भूतमात्रान्मुच्यते चेन्द्रियग्रहात् ॥ ३५ ॥
इत्यादिमहापुराणे आग्नेये मण्डलादिवर्णनं नाम त्रिंशोऽध्यायः ।

---

# एकत्रिंशोऽध्यायः

## मार्जनविधानम् ।

### अग्निरुवाच ।

रक्षांस्वस्य परेषाञ्च वक्ष्ये तां मार्जनाह्वयाम् । यथाविमुच्यते दुःखैः सुखञ्चप्राप्नुयान्नरः
ओं नमः परमार्थाय पुरुषाय महात्मने । अरूपबहुरूपाय व्यापिने परमात्मने ॥ २ ॥
निष्कल्मषायशुद्धाय ध्यानयोगरताय च । नमस्कृत्यप्रवक्ष्यामि यत्तत् सिध्यतु मे वचः
वराहाय नृसिंहाय वामनाय महामुने । नमस्कृत्य प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।

त्रिविक्रमाय रामायवैकुण्ठाय नराय च । नमस्कृत्य प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः
वराह नरसिंहेश वामनेश त्रिविक्रम । हयग्रीवेश सर्वेश हृषीकेश हराशुभम् ॥ ६ ॥
अपराजितचक्राद्यैश्चतुर्भिः परमायुधैः । अखण्डितानुभावैस्त्वं सर्वदुष्टहरो भव ॥ ७ ॥
हरामुकस्य दुरितं सर्वञ्च कुशलं कुरु । मृत्युवन्धार्त्तिभयदं दुरितस्य च यत् फलम् ॥
पराभिध्यानसहितैः प्रयुक्तञ्चाभिचारकम् । गदस्पर्शमहारोगप्रयोगं जरया जर ॥ ६ ॥
ओं नमो वासुदेवाय नमः कृष्णाय खड्गिने । नमः पुष्करनेत्राय केशवायादिचक्रिणे ॥
नमः कमलकिञ्जल्कपीतनिर्म्मलवाससे । महाहररिपुस्कन्धसृष्टचक्राय चक्रिणे ॥ ११ ॥
दंष्ट्रोद्धृतक्षितिभृते त्रयीमूर्त्तिमते नमः । महायज्ञवराहाय शेषभोगाङ्कशायिने ॥ १२ ॥
तप्तहाटककेशाग्रज्वलत्पावकलोचने । वज्राधिकनखस्पर्श दिव्यसिंह नमोऽस्तु ते॥१३॥

काश्यपायातिह्रस्वाय ऋग्यजुः सामभूषित ।
तुभ्यं वामनरूपायाक्रमते गां नमो नमः ॥ १४ ॥

वराहाशेषदुष्टानि सर्वपापफलानि वै । मर्द्द मर्द्द महादंष्ट्र मर्द मर्द च तत्फलम् ॥ १५ ॥
नरसिंह करालास्य दन्तप्रान्तानलोज्ज्वल । भञ्ज भञ्ज निनादेन दुष्टान्यस्यार्त्तनाशन ॥
ऋग्यजुःसामगर्भाभिर्वाग्भिर्वामनरूपधृक् । प्रशमं सर्वदुःखानि नयत्त्वस्यं जनार्द्दनः ॥

ऐकाहिकं द्व्याहिकञ्च तथा त्रिदिवसं ज्वरम् ।
चातुर्थकं तथात्युग्रं तथैव सततज्वरम् ॥ १८ ॥
दोषोत्थं सन्निपातोत्थं तथैवामन्तुकं ज्वरम् ।
शमं नयाशु गोविन्द च्छिन्धि च्छिन्ध्यस्य वेदनाम् ॥ १६ ॥

नेत्रदुःखं शिरोदुःखं दुःखञ्चोदरसम्भवर् । अन्तःश्वासमतिश्वासं परितापं सवेपथुम् ॥

गुदघ्राणाङ्घ्रिरोगांश्च कुष्ठरोगांस्तथा क्षयम् ।
कामलादींस्तथा रोगान् प्रमेहांश्चातिदारुणान् ॥ २१ ॥

भगन्दरातिसारांश्च मुखरोगांश्चवल्गुलीम् । अश्मरीमूत्रकृच्छ्रांश्च रोगानन्यांश्चदारुणान्

ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ।
कफोद्भवाश्च ये केचित् ये चान्ये सान्निपातिकाः ॥ २३ ॥

आगन्तुकाश्च ये रोगा लूता विस्फोटकादयः । ते सर्वे प्रशमं यान्तु वासुदेवापमार्जिताः
विलयं यान्तु ते सर्वे विष्णोरुच्चारणेन च । क्षयं गच्छन्तु चाशेषास्ते चक्राभिहता हरेः

अच्युतानन्तगोविन्दनामोच्चारणभीषिताः ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ २६ ॥

स्थावरं जङ्गमं वापि कृत्रिमं चापि यद्विषम् । दन्तोद्भवं नखभवमाकाशप्रभवं विषम् ॥
लूतादिप्रभवं यच्च विषमन्यत्तु दुःखदम् । शमं नयतु तत्सर्वं कीर्त्तितोऽस्य जनार्दनः ॥

ग्रहान् प्रेतग्रहांश्चापि तथा वै डाकिनीग्रहान् ।
वेतालांश्च पिशाचांश्च गन्धर्वान् यक्षराक्षसान् ॥ २९ ॥

शकुनीपूतनाद्यांश्च तथा वैनायकान् ग्रहान् । मुखमण्डीं तथा क्रूरां रेवतीं वृद्धरेवतीम्

वृद्धकाख्यान् ग्रहांश्चोग्रांस्तथा मातृग्रहानपि ।
बालस्य विष्णोश्चरितं हन्तु बालग्रहानिमान् ॥ ३१ ॥
वृद्धाश्च ये ग्रहाः केचिद्ये च बालग्रहाः क्वचित् ।
नरसिंहस्य ते दृष्ट्या दग्धा ये चापि यौवने ॥ ३२ ॥

सदा करालवदनो नरसिंहो महाबलः । ग्रहानशेषान्निःशेषान् करोतु जगतो हितः ॥
नरसिंह महासिंह ज्वालामालीज्ज्वलानन । ग्रहानशेषान् सर्वेश खाद खादाग्निलोचन ॥
ये रोगा ये मलोत्पाता यद्विषं ये महाग्रहाः । यानि च क्रूरभूतानि ग्रहपीडाश्च दारुणाः
शस्त्रक्षतेषु ये दोषा ज्वालागर्द्दभकादयः । तानि सर्वाणि सर्वात्मा परमात्मा जनार्दनः

किञ्चिद्रूपं समास्थाय वासुदेवास्य नाशय ॥ ३७ ॥

क्षिप्त्वा सुदर्शनं चक्रं ज्वालामालातिभीषणम् । सर्वदुष्टोपशमनं कुरु देववराच्युत ॥

सुदर्शन महाज्वाल च्छिन्धि च्छिन्धि महारव ।
सर्वदुष्टानि रक्षांसि क्षयं यान्तु विभीषण ॥ ३९ ॥
प्राच्यां प्रतीच्यां च दिशि दक्षिणोत्तरतस्तथा ।
रक्षाङ्करोतु सर्वात्मा नरसिंहः सुगर्जितः ॥ ४० ॥

दिवि भुव्यन्तरीक्षे च पृष्ठतः पार्श्वतोऽग्रतः । रक्षां करोतु भगवान् बहुरूपो जनार्दनः ॥

यथा विष्णुर्जगत्सर्वं सदेवासुरमानुषम् । तेन सत्येन दुष्टानि शममस्य व्रजन्तु वै ॥
यथा विष्णौ स्मृते सद्यः सङ्क्षयं यान्ति पातकाः ।
सत्येन तेन सकलं दुष्टमस्य प्रशाम्यतु ॥ ४३ ॥
परमात्मा यथा विष्णुर्वेदान्तेषु च गीयते । तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥
यथा यज्ञेश्वरो विष्णुर्देवेष्वपि हि गीयते । सत्येन तेन सकलं यन्मयोक्तं तथास्तु तत्
शान्तिरस्तु शिवश्चास्तु दुष्टमस्य प्रशाम्यतु । वासुदेव शरीरोत्थैः कुशैर्निर्म्मथितं मया
अपमार्जतु गोविन्दो नरो नारायणस्तथा । तथास्तु सर्वदुःखानां प्रशमो जपनाद्धरेः ॥
अपमार्जनकं शस्त्रं सर्वरोगादिवारणम् । अहं हरिः कुशो विष्णुर्हता रोगा मया तव ॥
इत्यादिमहापुराणे आग्नेये कुशापमार्जनं नाम एकत्रिंशोऽध्यायः ।

---

## द्वात्रिंशोऽध्यायः

### संस्कारकथनम् ।

अग्निरुवाच ।

निर्वाणादिषु दीक्षासु चत्वारिंशत् तथाष्ट च ।
संस्कारान् कारयेद्धीमान् शृणु तान्यैः सुरो भवेत् ॥ १ ॥
गर्भाधानन्तु योन्यां वै ततः पुंसवनं चरेत् । सीमन्तोन्नयनञ्चैव जातकर्म्म च नाम च
अन्नाशनं ततश्चूड़ा ब्रह्मचर्य्यव्रतानि च । चत्वारिवैष्णवी पार्थी भौतिकी श्रौतिकीतथा
गोदानं स्नातकत्वञ्च पाकयज्ञाश्च सप्त ते । अष्टका पार्वणश्राद्धं श्रावण्यग्रायणीति च ॥
चैत्री चाश्वयुजी सप्त हविर्यज्ञांश्च तान् शृणु ।
आधानञ्चाग्निहोत्रञ्च दर्शो वै पौर्णमासकः ॥ ५ ॥
चातुर्मास्यं पशुबन्धः सौत्रामणिरथापरः । सोमसंस्थाः सप्त शृणु अग्निष्टोमः क्रतूत्तमः
अत्यग्निष्टोम उक्थश्च षोड़शो वाजपेयकः । अतिरात्राप्तोर्य्यामश्च सहस्रेशाः सवा इमे

हिरण्याङ्घ्रिर्हिरण्याक्षो हिरण्यमित्र इत्यतः । हिरण्यपाणिर्हेमाक्षो हेमाङ्गो हेमसूत्रकः

हिरण्यास्यो हिरण्याङ्गो हेमजिह्वो हिरण्यवान् ।

अश्वमेधो हि सर्वेशो गुणाश्चाष्टाथ तान् शृणु ॥ ६ ॥

दया च सर्वभूतेषु क्षान्तिश्चैव तथार्ज्जवम् । शौचं चैवमनायासो मङ्गलं चापरो गुणः

अकार्पण्यञ्चास्पृहा च मूलेन जुहुयाच्छतम् ।

सौरशाक्तेयविष्णवीशदीक्षास्त्वेते समाः स्मृताः ॥ ११ ॥

संस्कारैः संस्कृतश्चैतैर्भुक्तिमुक्तिमवाप्नुयात् । सर्वरोगात् विनिर्मुक्तो देववद् वर्त्ततेनरः

जप्याद्धोमात् पूजनाच्च ध्यानाद् देवस्य चेष्टभाक् ॥ १२ ॥

इत्यादिमहापुराणे आग्नेये अष्टचत्वारिंशत्संस्कारकथनं नाम द्वात्रिंशोऽध्यायः ।

---

# त्रयस्त्रिंशोऽध्यायः

## पवित्रारोहणविधानम् ।

अग्निरुवाच ।

पवित्रारोहणं वक्ष्ये वर्षपूजाफलं हरेः । आषाढादौ कार्त्तिकान्ते प्रतिपद्धनदा तिथिः ॥

श्रिया गौर्या गणेशस्य सरस्वत्या गुहस्य च । मार्त्तण्डमातृदुर्गाणां नागर्षिहरिमन्मथैः

शिवस्य ब्रह्मणस्तद्वद् द्वितीयादितिथेः क्रमात् ।

यस्य देवस्य यो भक्तः पवित्रा तस्य सा तिथिः ॥ ३ ॥

आरोहणेतुल्यविधिः पृथक् मन्त्रादिकंयदि । सौवर्णंराजतं ताम्रं नेत्रकार्पासिकादिकम्

ब्राह्मण्या कार्त्तितं सूत्रं तदलाभे तु संस्कृतम् ।

त्रिगुणं त्रिगुणीकृत्य तेन कुर्य्यात् पवित्रकम् ॥ ५ ॥

अष्टोत्तरशतादूर्द्ध्वं तदर्द्धं चोत्तमादिकम् । क्रियालोपविघातार्थं यत् त्वयाऽभिहितंप्रभो

मयातत् क्रियते देव ! यथा यत्रपवित्रकम् । अविघ्नं तु भवेदत्र कुरु नाथ ! जयाव्यय

प्रार्च्य तन्मण्डलायादौ गायत्र्या बन्धयेन्नरः ।
ओं नारायणाय विद्महे वासुदेवाय धीमहि ॥ ८ ॥
तन्नो विष्णुः प्रचोदयात् देवदेवानुरूपतः । जानूरुनाभिनामान्तं प्रतिमासु पवित्रकम् ॥
पादान्ता वनमाला स्यादष्टोत्तरसहस्रतः ।
माला तु कल्पसाध्यं वा द्विगुणं षोड़शाङ्गुलात् ॥ १० ॥
कर्णिका केशरं पत्रं मन्त्राद्यं मण्डलान्तकम् । मण्डलाङ्गुलमात्रैकचक्राब्जाद्यौपवित्रकम्
स्थण्डिलेऽङ्गुलमानेन आत्मनः सप्तविंशतिः ।
आचार्य्याणां च सूत्राणि पितृमात्रादिपुस्तके ॥ १२ ॥
नाभ्यान्तं द्वादशग्रन्थि तथा गन्धपवित्रके ।
द्व्यङ्गुलात् कल्पनादौ द्विर्माला चाष्टोत्तरं शतम् ॥ १३ ॥
अथवार्क चतुर्विंशषट्त्रिंशन्मालिका द्विजः । अनामामध्यमाङ्गुष्ठैर्मन्दाद्यैःमालिकार्थिभिः
कनिष्ठादौ द्वादश वा ग्रन्थयः स्युःपवित्रके । रवेः कुम्भहुताशादेः सम्भवेविष्णुवन्मतम्
पीठस्य पीठमानं स्यान्मेखलान्ते च कुण्डके । यथाशक्ति सूत्रग्रन्थिपरिचारेऽथ वैष्णवे
सूत्राणि वा सप्तदश सूत्रेण त्रिविभक्तके । रोचनागुरुकर्पूरहरिद्राकुङ्कुमादिभिः ॥ १७ ॥
रञ्जयेच्चन्दनाद्यैर्वा स्नानसन्ध्यादिकन्नरः । एकादश्यां यागगृहे भगवन्तं हरिं यजेत् ॥
समस्तपरिवाराय बलिं पीठे समर्चयेत् ।
क्ष्यौं क्षेत्रपालाय द्वारान्ते द्वारोपरि तथा श्रियम् ॥ १६ ॥
धात्रे दक्षे विधात्रे च गङ्गाञ्च यमुनां तथा । शङ्खपद्मनिधी पूज्य मध्ये वास्त्वपसारणम्
सारङ्गायेति भूतानां भूतशुद्धिं स्थितश्चरेत् ॥ २० ॥
ओं हूं हः फट् हूं गन्धतन्मात्रं संहरामि नमः ॥
ओं हूं हः फट् हूं रसतन्मात्रं संहरामि नमः ।
ओं हूं हः फट् हूं रूपतन्मात्रं संहरामि नमः ॥
ओं हूं हः फट् हूं स्पर्शतन्मात्रं संहरामि नमः ।
ओं हूं हः फट् हूं शब्दतन्मात्रं संहरामि नमः ॥

पञ्चोद्घातैर्गन्धतन्मात्ररूपं भूमिमण्डलम् । चतुरस्रञ्च पीतञ्च कठिनं वज्रलाञ्छितम् ॥
इन्द्राधिदैवतं पादयुग्ममध्यगतं स्मरेत् । शुद्धञ्च रसतन्मात्रं प्रविलिप्याऽथ संहरेत् ॥
रसमात्ररूपमात्रे क्रमेणानेन पूजकः ॥ २२ ॥
ओं ह्रीं हः फट् ह्रूं रसतन्मात्रं संहरामि नमः ॥
ओं ह्रीं हः फट् ह्रूं रूपतन्मात्रं संहरामि नमः ।
ओं ह्रीं हः फट् ह्रूं स्पर्शतन्मात्रं संहरामि नमः ॥
ओं ह्रीं हः फट् ह्रूं शब्दतन्मात्रं संहरामि नमः ।
जानुनाभिमध्यगतं श्वेतं वै पद्मलाञ्छितम् । शुक्लवर्णं चार्द्धचन्द्रं ध्यायेद् वरुणदैवतम्
चतुर्भिश्च तदुद्घातैः शुद्धं तद्रसमात्रकम् । संहरेद्रूपतन्मात्रे रूपमात्रे च संहरेत् ॥२४ ॥
ओं ह्रूं हः फट् ह्रूं रूपतन्मात्रं संहरामि नमः ।
ओं ह्रूं हः फट् ह्रूं स्पर्शतन्मात्रं संहरामि नमः ॥
ओं ह्रूं हः फट् ह्रूं शब्दतन्मात्रं संहरामि नमः ।
इतित्रिभिस्तदुद्घातैस्त्रिकोणंवह्निमण्डलम् । नाभिकण्ठमध्यगतंरक्तंस्वस्तिकलाञ्छितम्
ध्यात्वानलाधिदैवन्तच्छुद्धं स्पर्शे लयं नयेत् ।
ओं ह्रीं हः फट् ह्रूं स्पर्शतन्मात्रं संहरामि नमः ॥
ओं ह्रीं हः फट् ह्रूं शब्दतन्मात्रं संहरामि नमः ॥
कण्ठनासामध्यगतं वृत्तं वै वायुमण्डलम् ॥ २६ ॥
द्विरुद्घातैर्धूम्रवर्णं ध्यायेच्छुद्धेन्दुलाञ्छितम् । स्पर्शमात्रंशब्दमात्रैः संहरेद् ध्यानयोगतः
ओं ह्रीं हः फट् ह्रूं शब्दतन्मात्रं संहरामिनमः । एकोद्घातेनचाकाशंशुद्धस्फटिकसन्निभम्
नासापुटशिखान्तस्थमाकाशमुपसंहरेत् ॥ २८ ॥
शोषणाद्यैर्देहशुद्धिं कुर्यादेवं क्रमात्ततः । शुष्कं कलेवरं ध्यायेत् पादाद्यैश्च शिखान्तकम्
यं बीजेन यं वोजेन ज्वालामालासमायुतम् । देहं रमित्यनेनैव ब्रह्मरन्ध्राद् विनिर्गतम् ॥
विन्दुन्ध्यात्वाचामृतस्यतेनभस्मकलेवरम् । संप्लावयेल्लमित्यस्मात् देहंसम्पाद्यदिव्यकम्
न्यासंकृत्वा करे देहे मानसं यागमाचरेत् । विष्णुंसाङ्गं हृदि पद्मे मानसैःकुसुमादिभिः

मूलमन्त्रेण देवेशम्प्रार्च्चयेद् भुक्तिमुक्तिदम् । स्वागतं देवदेवेश ! सन्निधौ भव केशव !

गृहाण मानसीं पूजां यथार्थं परिभाविताम् ।

आधारशक्तिः कूर्मोऽथ पूज्योऽनन्तो मही ततः ॥ ३४ ॥

मध्येऽग्न्यादौ च धर्माद्या अधर्मादीन्द्रमुख्यगम् ।

सत्त्वादिमध्ये पद्मञ्च मायाविद्याख्यतत्त्वके ॥ ३५ ॥

कालतत्त्वञ्च सूर्यादिमण्डलं पक्षिराजकः । मध्ये ततश्च वायव्यादीशान्ता गुरुपङ्क्तिकाः

गणः सरस्वती पूज्या नारदो नलकूवरः । गुरुर्गुरुपादुका च परो गुरुश्च पादुका ॥३७॥

पूर्व्वसिद्धाः परसिद्धाः केशरेषु च शक्तयः ।

लक्ष्मीः सरस्वती प्रीतिः कीर्त्तिः शान्तिश्च कान्तिका ॥ ३८ ॥

पुष्टिस्तुष्टिर्महेन्द्राद्या मध्ये चावाहितो हरिः ।

धृतिः श्रीरतिकान्त्याद्या मूलेन स्थापितोऽच्युतः ॥ ३९ ॥

ओं अभिमुखो भवेति प्रार्थ्य सन्निहितो भव ।

विन्यस्यार्घ्यादिकं दत्त्वा गन्धाद्यैर्मूलतो यजेत् ॥ ४० ॥

ओं भीषय भीषयहृत् शिरस्त्रासयवै पुनः । मर्दयमर्दयशिखा अग्न्यादौशस्त्रतोऽस्त्रकम्

रक्ष रक्ष प्रध्वंसय प्रध्वंसय कवचाय नमस्ततः ।

ओं हूं फट् अस्त्राय नमो मूलबीजेन चाङ्गकम् ॥ ४२ ॥

पूर्वदक्षाप्यसौम्येषु मूर्त्त्यावरणमर्च्चयेत् । वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥

अग्न्यादौ श्रीधृतिरतिकान्तयो मूर्त्तयो हरेः । शङ्खचक्रगदापद्ममग्न्यादौ पूर्वकादिकम् ॥

शार्ङ्गश्च मुषलं खड्गं वनमालाञ्च तद्बहिः । इन्द्राद्याश्च तथानन्तो नैर्ऋत्यां वरुणस्ततः

ब्रह्मेन्द्रशानयोर्मध्ये अस्त्रावरणकं वहिः । ऐरावतस्ततश्छागो महिषो वानरो झषः ॥

मृगः शशोऽथ वृषभः कूर्म्मो हंसस्ततो वहिः । पृश्निगर्भः कुमुदाद्या द्वारपालाद्वयंद्वयम्

पूर्वाद्युत्तरद्वारान्तं हरिं नत्वा बलिं वहिः । विष्णुपार्षदेभ्यो नमो बलिपीठे बलिंददेत्

विश्वाय विश्वक्सेनात्मने ईशानके यजेत् । देवस्य दक्षिणे हस्ते रक्षासूत्रञ्च बन्धयेत् ॥

संवत्सरकृतार्चायाः सम्पूर्णफलदायिने । पवित्रारोहणायेदं कौतुकंधारय ओं नमः ॥

उपवासादिनियमं कुर्याद् वै देवसन्निधौ । उपवासादिनियतो देवं सन्तोषयाम्यहम् ॥
कामक्रोधादयः सर्वे मा मे तिष्ठन्तु सर्वथा । अद्यप्रभृति देवेश यावद् वै शेषिकं दिनम्
यजमानो ह्यशक्तश्चेत् कुर्यान्नक्तादिकं व्रती ।
हुत्वा विसर्जयेत् स्तुत्वा श्रीकरन्नित्यपूजनम् ।
ओं ह्रीं श्रीं श्रीधराय त्रैलोक्यमोहनाय नमः ॥ ५३ ॥

इत्यादिमहापुराणे आग्नेये पवित्रारोहणे श्रीधरनित्यपूजाकथनं नामत्रयस्त्रिंशोऽध्यायः ।

---

# चतुस्त्रिंशोऽध्यायः

## होमादिविधिः ।

अग्निरुवाच ।

विशोदनेन मन्त्रेण यागस्थानञ्च भूषयेत् । नमोब्रह्मण्यदेवाय श्रीधरायाव्ययात्मने ॥१॥
ऋग्यजुःसामरूपाय शब्ददेहाय विष्णवे ।
विलिख्य मण्डलं सायं यागद्रव्यादि चाहरेत् ॥ २ ॥
प्रक्षालितकराङ्घ्रि सन् विन्यस्यार्घ्यं करो नरः ।
अर्घ्याद्भिस्तु शिरः प्रोक्ष्य द्वारदेशादिकं तथा ॥ ३ ॥
आरभेद् द्वारयागञ्च तोरणेशान् प्रपूजयेत् । अश्वत्थोदुम्बरवटप्लक्षाः पूर्वादिगा नगाः
ऋगिन्द्रशोभनं प्राच्यां यजुर्यमसुभद्रकम् । सामापश्च सुधन्वाख्यं सोमाथर्वसुहोत्रकम्
तोरणान्तः पताकाश्च कुमुदाद्या घटद्वयम् । द्वारि द्वारिस्वनाम्नार्च्याःपूर्वेपूर्णश्च पुष्करः
आनन्दनन्दनौ दक्षे वीरसेनः सुषेणकः । सम्भवप्रभवौ सौम्ये द्वारपाश्चैव पूजयेत् ॥
अस्त्रजप्तपुष्पक्षेपाद्विघ्नानुत्सार्य संविशेत् । भूतशुद्धिं विधायाथ विन्यस्य कृतमुद्रकः ॥
फट्कारान्तां शिखां जप्त्वा सर्षपान् दिक्षु निक्षिपेत् ।
वासुदेवेन गोमूत्रं सङ्कर्षणेन गोमयम् ॥ ६ ॥

प्रद्युम्नेन पयस्तज्जात् दधि नारायणाद् घृतम् ।
धक्कच्छिन्ध्यादिवाराणि घृताद् वै भागतोऽधिकम् ॥ १० ॥
घृतपात्रे तदेकत्र पञ्चगव्यमुदाहृतम् । मण्डपप्रोक्षणायैकञ्चापरम्प्राशनाय च ॥ ११ ॥
आनीय दशकुम्भेषु इन्द्राद्यान् लोकपान् यजेत् ।
पूज्याज्ञां श्रावयेत् तांश्च स्थातव्यं चाज्ञया हरेः ॥ १२ ॥
यागद्रव्यादि संरक्ष्य विकिरान् विकिरेत् ततः । मूलाष्टशतसञ्जप्तान्कुशकूर्चान्हरेच्चतान्
ऐशान्यां दिशि तत्रस्थं स्थाप्य कुम्भञ्च वर्द्धनीम् ।
कुम्भे साङ्गं हरिं प्राच्यं वर्द्धन्यामस्त्रमर्चयेत् ॥ १४ ॥
प्रदक्षिणं यागगृहं वर्द्धन्याच्छिन्नधारया । सिञ्चन्नयेत् ततः कुम्भं पूजयेच्च स्थिरासने
सपञ्चरत्नवस्त्राढ्यकुम्भे गन्धादिभिर्हरिम् । वर्द्धन्यां हेमगर्भायां यजेदस्त्रञ्च वामतः ॥
तत्समीपे वास्तुलक्ष्मीं भूविनायकमर्च्चयेत् ।
स्नपनं कल्पयेद् विष्णोः सङ्क्रान्त्यादौ तथैव च ॥ १७ ॥
पूर्णकुम्भान् नव स्थाप्य नवकोणेषु निर्व्रणान् ।
पाद्यमर्घ्यमाचमनीयं पञ्चगव्यञ्च निःक्षिपेत् ॥ १८ ॥
पूर्वादिकलसेऽग्न्यादौ पञ्चामृतजलादिकम् । दधि क्षीरं मधूष्णोदंपाद्यंस्यात्चतुरङ्गकम्
पद्मश्यामाकदूर्वाश्च विष्णुपत्नी च पाद्यकम् । तथाष्टाङ्गार्घ्यमाख्यातं यवगन्धफलाक्षतम्
कुशाः सिद्धार्थपुष्पाणि तिला द्रव्याणि चार्हणम् ।
लवङ्गकंकोलयुतं दद्यादाचमनीयकम् ॥ २१ ॥
स्नापयेन् मूलमन्त्रेण देवं पञ्चामृतैरपि । शुद्धोदं मध्यकुम्भेन देवमूर्द्धनि विनिःक्षिपेत् ॥
कलशान्निःसृतं तोयं कूर्चाग्रं संस्पृशेन्नरः । शुद्धोदकेन पाद्यञ्च अर्घ्यमाचमनं ददेत् ॥
परिमृज्य पटेनाङ्गं सवस्त्रं मण्डलं नयेत् । तत्राभ्यर्च्याचरेद्धोमं कुण्डादौ प्राणसंयमी
प्रक्षाल्य हस्तौ रेखाश्च तिस्रः पूर्वाग्रगामिनी । दक्षिणादुत्तरान्ताश्च तिस्रश्चैवोत्तराग्रगाः
अर्घ्योदकेन सम्प्रोक्ष्य योनिमुद्रां प्रदर्शयेत् ।
ध्यात्वाऽग्निरूपञ्चाग्निन्तु योन्यां कुण्डे क्षिपेन्नरः ॥ २६ ॥

पात्राण्यासादयेत् पश्चाद्दर्भश्रुक्श्रुवकादिभिः । बाहुमात्राः परिधयइध्मव्रश्चनमेव च ॥
प्रणीता प्रोक्षणीपात्रमाज्यस्थाली घृतादिकम् ।
प्रस्थद्वयं तण्डुलानां युग्मं युग्ममधोमुखम् ॥ २८ ॥
प्रणीताप्रोक्षणीपात्रेन्यसेत् प्रागग्रगं कुशम् । अद्भिःपूर्य्य प्रणीतान्तु ध्यात्वा देवंप्रपूज्यच
प्रणीतां स्थापयेदग्रेद्रव्याणाञ्चैवमध्यतः । प्रोक्षणीमद्भिःसम्पूर्य्यप्रार्च्य दक्षे तु विन्यसेत्
चरुञ्च श्रपयेदग्नौ ब्रह्माणं दक्षिणे न्यसेत् ।
कुशानास्तीर्य पूर्वादौ परिधीन् स्थापयेत् ततः ॥ ३१ ॥
वैष्णवीकरणं कुर्याद् गर्भाधानादिना नरः । गर्भाधानं पुंसवनं सीमन्तोन्नयनं जनिः ॥
नामादिसमावर्त्तनान्तं जुहुयादष्ट चाहुतीः । पूर्णाहुतीः प्रतिकर्म्म श्रुचा स्रुवसुयुक्तया ॥
कुण्डमध्ये ऋतुमतीं लक्ष्मीं सञ्चिन्त्य होमयेत् ।
कुण्डलक्ष्मीः समाख्याता प्रकृतिस्त्रिगुणात्मिका ॥ ३४ ॥
सा योनिः सर्वभूतानां विद्यामन्त्रगणस्य च ।
विमुक्तेः कारणं वह्निः परमात्मा च मुक्तिदः ॥ ३५ ॥
प्राच्यां शिरः समाख्यातं बाहूकोणे व्यवस्थितौ ।
ईशानाग्नेयकोणे तु जङ्घे वायव्यनैर्ऋते ॥ ३६ ॥
उदरं कुण्डमित्युक्तं योनिर्योनिर्विधीयते । गुणत्रयं मेखलाः स्युर्ध्यात्वैवं समिधो दश
पञ्चाधिकांस्तु जुहुयात् प्रणवान् मुष्टिमुद्रया ।
पुनराधारौ जुहुयात् वाय्वग्न्यन्तं ततः श्रपेत् ॥ ३८ ॥
ईशान्तं मूलमन्त्रेण आज्यभागो तु होमयेत् । उत्तरे द्वादशान्तेन दक्षिणे तेन मध्यत
व्याहृत्या पद्ममध्यस्थं ध्यायेद् वह्निन्तुसंस्कृतम् । वैष्णवं सप्तजिह्वं चसूर्यकोटिसमप्रभम्
चन्द्रवक्त्रञ्च सूर्य्याक्षं जुहुयाच्छतमष्ट च । तदर्द्धञ्चाष्ट मूलेन अङ्गानाञ्च दशांशतः ॥

इत्यादिमहापुराणे आग्नेये अग्निकार्यकथनं नाम चतुस्त्रिंशोऽध्यायः ।

# पञ्चत्रिंशोऽध्यायः

## पवित्राधिवासनादिविधिः ।

अग्निरुवाच ।

सम्पाताहुतिनासिच्य पवित्राण्यधिवासयेत् ।
नृसिंहमन्त्रजप्तानि गुप्तान्यस्त्रेण तानि तु ॥ १ ॥
वस्त्रसंवेष्टितान्येन पात्रस्थान्यभिमन्त्रयेत् ।
विल्वाद्यद्भिः प्रोक्षितानि मन्त्रेण चैकधा द्विधा ॥ २ ॥

कुम्भपार्श्वे तु संस्थाप्य रक्षां विज्ञाप्य देशिकः । दन्तकाष्ठञ्चामलकं पूर्वे सङ्कर्षणेन तु ॥
प्रद्युम्नेन भस्मतिलान् दक्षे गोमयमृत्तिकाम् । वारुणे चानिरुद्धेन सौम्ये नारायणेन च ॥
दर्भोदकञ्चाथ हृदा अग्नौ कुङ्कुमरोचनम् । ऐशान्यां शिरसा धूपं शिखया नैर्ऋतेऽप्यथ
मूलपुष्पाणि दिव्यानि कवचेनाथ वायवे । चन्दनाम्ब्वक्षतदधिदूर्वाश्च पुटिकास्थिताः॥

गृहं त्रिसूत्रेणावेष्ट्य पुनः सिद्धार्थकान् क्षिपेत् ।
दद्यात् पूजाक्रमेणाथ स्वैः स्वैर्गन्धपवित्रकम् ॥ ७ ॥

मन्त्रैर्वै द्वारपादिभ्यो विष्णुकुम्भे त्वनेन च । विष्णुतेजोभवं रम्यं सर्वपातकनाशनम् ॥
सर्वकामप्रदं देवं तवाङ्गे धारयाम्यहम् । सम्पूज्य धूपदीपाद्यैर्व्रजेद् द्वारसमीपतः ॥९॥
गन्धपुष्पाक्षतोपेतं पवित्रञ्चाखिलेऽर्पयेत् । पवित्रं वैष्णवं तेजो महापातकनाशनम् ॥

धर्म्मकामार्थसिद्ध्यर्थं स्वकेऽङ्गे धारयाम्यहम् ।
आसने परिवारादौ गुरौ दद्यात् पवित्रकम् ॥ ११ ॥
गन्धादिभिः समभ्यर्च्य गन्धपुष्पाक्षतादिमत् ।
विष्णुतेजोभवेत्यादिमूलेन हरयेऽर्पयेत् ॥ १२ ॥

बहिस्थाय ततो दत्त्वा देवं सम्प्रार्थयेत् ततः । क्षीरोदधिमहानागशय्यावस्थितविग्रह!
प्रातस्त्वां पूजयिष्यामि सन्निधौ भव केशव ! ।

इन्द्रादिभ्यस्ततो दत्त्वा विष्णुपार्षदके बलिम् ॥ १७ ॥
ततो देवाग्रतः कुम्भं वासोयुगसमन्वितम् । रोचनाचन्द्रकाश्मीरगन्धाद्युदकसंयुतम् ॥
गन्धपुष्पादिनाभूष्य मूलमन्त्रेण पूजयेत् । मण्डपाद् बहिरागत्य विलिप्ते मण्डलत्रये ॥
पञ्चगव्यञ्चरुन्दन्तकाष्ठञ्चैव क्रमाद्भवेत् । पुराणश्रवणं स्तोत्रं पठन् जागरणं निशि ॥
परप्रेषकबालानां स्त्रीणां भोगभुजां तथा ।
सद्योऽधिवासनं कुर्य्याद् विना गन्धपवित्रकम् ॥ १८ ॥
इत्यादिमहापुराणे आग्नेये पवित्राधिवासनं नाम पञ्चत्रिंशोऽध्यायः ।

---

## षट्त्रिंशोऽध्यायः

### पवित्रारोपणविधानम् ।

अग्निरुवाच ।

प्रातःस्नानादिकं कृत्वा द्वारपालान् प्रपूज्य च ।
प्रविश्य गुप्ते देशे च समाकृष्याथ धारयेत् ॥ १ ॥
पूर्वाधिवासितं द्रव्यं वस्त्राभरणगन्धकम् । निरस्य सर्वनिर्म्माल्यं देवं संस्थाप्यपूजयेत्
पञ्चामृतैः कषायैश्च शुद्धगन्धोदकैस्ततः । पूर्वाधिवासितं दद्याद् वस्त्रं गन्धं च पुष्पकम्
अग्नौ हुत्वा नित्यवच्च देवं सम्प्रार्थयेन्नमेत् । समर्प्य कर्म्म देवाय पूजां नैमित्तिकींचरेत्
द्वारपालविष्णुकुम्भवर्द्धनीः प्रार्थयेद्धरिम् । अतो देवेति मन्त्रेण मूलमन्त्रेण कुम्भके ॥
कृष्ण ! कृष्ण ! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ।
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥ ६ ॥
पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतम् । शुद्धो भवाम्यहं देव! त्वत्प्रसादात्सुरेश्वर!
पवित्रञ्च हृदाद्यैस्तु आत्मानमभिषिच्य च । विष्णुकुम्भञ्च सम्प्रोक्ष्यव्रजेद् देवसमीपतः
पवित्रमात्मने दद्याद्रक्षाबन्धं विसृज्य च । गृहाण ब्रह्मसूत्रञ्च यन्मया कल्पितं प्रभो !

कर्मणां पूरणार्थाय यथा दोषो न मे भवेत् ।
द्वारपालादिगुरुमुख्यानाञ्च पवित्रकम् ॥ १० ॥
कनिष्ठादि च देवाय वनमालाञ्च मूलतः । हृदादिविष्वक्सेनान्ते पवित्राणि समर्पयेत् ॥
वह्नौ हुत्वाग्निवर्त्तिभ्यो विष्ण्वादिभ्यः पवित्रकम् ।
प्रार्च्य पूर्णाहुतिं दद्यात् प्रायश्चित्ताय मूलतः ॥ १२ ॥
अष्टोत्तरशतं वापि पञ्चोपनिषदैस्ततः । मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ॥ १३ ॥
इयं सांवत्सरी पूजा तवास्तु गरुड़ध्वज ! । वनमाला यथा देव ! कौस्तुभं सततं हृदि
तद्वत् पवित्रतन्तूंश्च पूजां च हृदये वह । कामतोऽकामतो वापि यत्कृतं नियमार्च्चने ॥
विधिना विघ्नलोपेन परिपूर्णं तदस्तु मे । प्रार्थ्य नत्वा क्षमाप्याथ पवित्रंमस्तकेऽर्प्पयेत्
दत्त्वा बलिं दक्षिणाभिर्वैष्णवन्तोषयेद् गुरुम् । विप्रान् भोजनवस्त्राद्यैर्दिवसं पक्षमेव वा
पवित्रं स्नानकाले च अवतार्य्य समर्पयेत् ।
अनिवारितमन्नाद्यं दद्याद् भुङ्क्तेऽथ च स्वयम् ॥ १८ ॥
विसर्जनेऽह्नि सम्पूज्य पवित्राणिविसर्ज्जयेत् । सांवत्सरीमिमांपूजांसम्पाद्यविधिवन्मम
व्रज पवित्रकेदानीं विष्णुलोकं विसर्ज्जितः ।
मध्ये सोमेशयोः प्रार्च्च्य विष्वक्सेनं हि तस्य च ॥ २० ॥
पवित्राणि समभ्यर्च्य ब्राह्मणायसमर्पयेत् । यावन्तस्तन्तवस्तस्मिन्पवित्रेपरिकल्पिताः
तावद्युगसहस्राणि विष्णुलोके महीयते । कुलानां शतमुद्धृत्य दश पूर्व्वान् दशापरान् ॥
विष्णुलोके तु संस्थाप्य स्वयं मुक्तिमवाप्नुयात् ॥ २२ ॥
इत्यादिमहापुराणे आग्नेये विष्णुपवित्रारोहणं नाम षट्त्रिंशोऽध्यायः ।

———

# सप्तत्रिंशोऽध्यायः

## सर्वदेवपवित्रारोहणविधिः ।

अग्निरुवाच ।

सङ्क्षेपात् सर्वदेवानां पवित्रारोहणं शृणु । पवित्रं सर्वलक्ष्मस्यात् खरसानलगं त्वपि
जगद्योने ! समागच्छ परिवारगणैः सह । निमन्त्रयाम्यहं प्रातर्द्द्यान्तुभ्यं पवित्रकम् ॥
जगत्सृजे ! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् । पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥
शिवदेव ! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् । मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः
इयं सांवत्सरी पूजा तवास्तु वेदवित्पते ! । सांवत्सरीमिमां पूजांसम्पाद्यविधिवन्मम
व्रज पवित्रकेदानीं स्वर्गलोकं विसर्ज्जितः । सूर्य्यदेव ! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम्
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् । शिवदेव ! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥७॥
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् । वाणेश्वर ! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् । शक्तिदेवि ! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् । नारायणमयं सूत्रमनिरुद्धमयं वरम् ॥ १० ॥
धनधान्यायुरारोग्यप्रदं संप्रददामि ते । कामदेवमयं सूत्रं सङ्कर्षणमयं वरम् ॥ ११ ॥
विद्यासन्ततिसौभाग्यप्रदं संप्रददामि ते । वासुदेवमयं सूत्रं धर्म्मकामार्थमोक्षदम् ॥
संसारसागरोत्तारकारणं प्रददामि ते । विश्वरूपमयं सूत्रं सर्व्वदं पापनाशनम् ॥ १३॥
अतीतानागतकुलसमुद्धारं ददामि ते । कनिष्ठादीनि चत्वारि मनुभिस्तु क्रमाद् ददे ॥

इत्यादिमहापुराणे आग्नेये सङ्क्षेपपवित्रारोहणं नाम सप्तत्रिंशोऽध्यायः ।

---

# अष्टत्रिंशोऽध्यायः

## देवालयनिर्माणफलम् ।

अग्निरुवाच ।

वासुदेवाद्यालयस्य कृतौ वक्ष्ये फलादिकम् । चिकीर्षोर्देवधामादि सहस्रजनिपापनुत्
मनसा सद्मकर्तॄणां शतजन्माघनाशनम् । येऽनुमोदन्ति कृष्णस्य क्रियमाणं नरा गृहम्
तेऽपि पापैर्विनिर्मुक्ताः प्रयान्त्यच्युतलोकताम् । समतीतं भविष्यञ्च कुलानामयुतं नरः

विष्णुलोकं नयत्याशु कारयित्वा हरेर्गृहम् ।
वसन्ति पितरो दृष्टा विष्णुलोके ह्यलङ्कृताः ॥ ४ ॥

विमुक्ता नारकैर्दुःखै कर्त्तुः कृष्णस्य मन्दिरम् । ब्रह्महत्यादि पापौघघातकं देवतालयम्
फलं यन्नाप्यते यज्ञैर्धाम कृत्वा तदाप्यते । देवागारे कृते सर्वतीर्थस्नानफलं लभेत् ॥

देवाद्यर्थे हतानाञ्च रणे यत्तत्फलादिकम् ।
शाठ्येन पांशुना वापि कृतं धाम च नाकदम् ॥ ७ ॥

एकायतनकृत्स्वर्गी त्र्यगारीब्रह्मलोकभाक् । पञ्चागारीशम्भुलोकमष्टागाराद्धरौस्थितिः
षोड़शालयकारी तु भुक्तिमुक्तिमवाप्नुयात् । कनिष्ठं मध्यमं श्रेष्ठं कारयित्वा हरेर्गृहम्

स्वर्गञ्च वैष्णवं लोकं मोक्षमाप्नोति च क्रमात् ।
श्रेष्ठमायतनं विष्णोः कृत्वा यद्धनवान् लभेत् ॥ १० ॥

कनिष्ठेनैव तत् पुण्यं प्राप्नोत्यधनवान्नरः । समुत्पाद्य धनं कृत्वा स्वल्पेनापिसुरालयम्

कारयित्वा हरेः पुण्यं सम्प्राप्नोत्यधिकं वरम् ।
लक्षेणाथ सहस्रेण शतेनार्द्धेन वा हरेः ॥ १२ ॥

कारयन् भवनं याति यत्रास्ते गरुड़ध्वजः । बाल्ये तु क्रीड़माणा ये पांशुभिर्भवनं हरेः
वासुदेवस्य कुर्व्वन्ति तेऽपि तल्लोकगामिनः । तीर्थे चायतने पुण्ये सिद्धक्षेत्रे तथाश्रमे
कर्त्तरायतनंविष्णोर्यथोक्तात् त्रिगुणंफलम् । बन्धूकपुष्पविन्यासैः सुधापङ्केनवैष्णवम्

ये विलिम्पन्ति भवनं ते यान्ति भगवत्पुरम् । पतितं पतमानन्तु तथार्द्धपतितंनरः ॥
समुद्धृत्य हरेर्धाम प्राप्नोति द्विगुणं फलम् ।
पतितस्य तु यः कर्त्ता पतितस्य च रक्षिता ॥ २७ ॥
विष्णोरायतनस्येह स नरोविष्णुलोकभाक् । इष्टकानिचयस्तिष्ठेद् यावदायतनेहरेः ॥
सकुलस्तस्य वै कर्त्ता विष्णुलोके महीयते । स एव पुण्यवान् पूज्य इह लोके परत्र च
कृष्णस्य वासुदेवस्य यः कारयति केतनम् । जातः स एव सुकृती कुलन्तेनैव पावितम्
विष्णुरुद्रार्कदेव्यादेर्गृहकर्त्ता स कीर्त्तिभाक् ।
किं तस्य वित्तनिचयैर्मूढस्य परिरक्षिणः ॥ २१ ॥
दुःखार्जितैर्यः कृष्णस्य न कारयतिकेतनम् । नोपभोग्यंधनं यस्य पितृविप्रदिवौकसाम्
नोपभोगाय बन्धूनां व्यर्थस्तस्यधनागमः । यथाध्रुवो नृणां मृत्युर्वित्तनाशस्तथाध्रुवः
मूढस्तत्राऽनुबध्नाति जीवितेऽथ चलेधने । यदावित्तं न दानाय नोपभोगाय देहिनाम्
नापिकीर्त्यै न धर्मार्थं तस्य स्वाम्येऽथ को गुणः ।
तस्माद् वित्तं समासाद्य दैवाद् वा पौरुषादथ ॥ २५ ॥
दद्यात् सम्यग् द्विजाग्र्येभ्यः कीर्त्तनानि च कारयेत् ।
दानेभ्यश्चाधिकं यस्मात् कीर्त्तनेभ्यो वरं यतः ॥ २६ ॥
अतस्तत्कारयेद्धीमान् विष्ण्वादेर्मन्दिरादिकम् । विनिवेश्य हरेर्धाम भक्तिमद्भिर्नरोत्तमैः
निवेशितं भवेत्कृत्स्नं त्रैलोक्यं सचराचरम् । भूतं भव्यं भविष्यञ्च स्थूलं सूक्ष्मंतथेतरम्
आब्रह्मस्तम्बपर्य्यन्तं सर्वं विष्णोः समुद्भवम् । तस्यदेवादिदेवस्य सर्वगस्य महात्मनः
निवेश्य भवनं विष्णोर्न भूयो भुवि जायते ।
यथा विष्णोर्धामकृतौ फलं तद्वद्दिवौकसाम् ॥ ३० ॥
शिवब्रह्मार्कविघ्नेशचण्डीलक्ष्म्यादिकात्मनाम् । देवालयकृतेःपुण्यंप्रतिमाकरणेऽधिकम्
प्रतिमास्थापने यागे फलस्यान्तो न विद्यते । मृण्मयाद् दारुजे पुण्यं दारुजादिष्टकाभवे
इष्टकोत्थाच्छैलजे स्याद्धेमादेरधिकं फलम् । सप्तजन्मकृतं पापं प्रारम्भादेव नश्यति ॥
देवालयस्य स्वर्गी स्यान्नरकं न स गच्छति । कुलानां शतमुद्धृत्य विष्णुलोकं नयेन्नरः

यमो यमभटानाह देवमन्दिरकारिणः ।

यम उवाच ।

प्रतिमापूजादिकृतो नानेया नरकं नराः ॥ ३५ ॥
देवालयाद्यकर्त्तार आनेयास्ते तु गोचरे । विचरध्वं यथान्यायन्नियोगो मम पाल्यताम्
नाज्ञाभङ्गं करिष्यन्ति भवतां जन्तवः क्वचित् । केवलं ये जगत्तातमनन्तं समुपाश्रिताः॥
भवद्भिः परिहर्त्तव्यास्तेषां नात्रास्ति संस्थितिः ।
ये च भागवता लोके तच्चित्तास्तत्परायणाः ॥ ३८ ॥
पूजयन्ति सदा विष्णुं ते वस्त्याज्याः सुदूरतः ।
यस्तिष्ठन् प्रस्वपन् गच्छन्नुत्तिष्ठन् स्खलिते स्थिते ॥ ३६ ॥
सङ्कीर्त्तयन्ति गोविन्दं ते वस्त्याज्याः सुदूरतः। नित्यनैमित्तिकैर्देवं ये यजन्तिजनार्दनम्
नावलोक्या भवद्भिस्ते तद्गता यान्ति तद्गतिम् । ये पुष्पधूपवासोभिर्भूषणैश्चातिवल्लभैः
अर्चयन्ति न ते ग्राह्या नराः कृष्णालये गताः । उपलेपनकर्त्तारः सम्मार्जनपराश्च ये ॥
कृष्णालये परित्याज्यास्तेषां पुत्रास्तथा कुलम् ।
येन चायतनं विष्णोः कारितं तत्कुलोद्भवम् ॥ ४३ ॥
पुंसां शतं नावलोक्यं भवद्भिर्दुष्टचेतसा । यस्तु देवालयं विष्णोर्दारुशैलमयं तथा ॥
कारयेन्मृण्मयं वापि सर्वपापैः प्रमुच्यते । अहन्यहनियज्ञेन यजतो यन्महाफलम् ॥
प्राप्नोति तत्फलं विष्णोर्यःकारयतिचेतनम् । कुलानां शतमागामि समतीतं तथाशतम्
कारयन् भगवद्धाम नयत्यच्युतलोकताम् । सप्तलोकमयोविष्णुस्तस्य यः कुरुते गृहम्
तारयत्यक्षयांल्लोकानक्षयान् प्रतिपद्यते । इष्टकाचयविन्यासो यावन्त्यब्दानि तिष्ठति ॥
तावद्वर्षसहस्राणि तत्कर्तुर्दिवि संस्थितिः । प्रतिमाकृद् विष्णुलोकं स्थापकोलीयतेहरौ
देवसद्मप्रतिकृतिप्रतिष्ठाकृत् तु गोचरे ॥

अग्निरुवाच ।

यमोक्ता नानयंस्तेऽथ प्रतिष्ठादिकृतं हरेः । हयशीर्षः प्रतिष्ठार्थं देवानां ब्रह्मणेऽब्रवीत् ॥

इत्यादिमहापुराणे आग्नेये देवालयादिमाहात्म्यवर्णनं नामअष्टत्रिंशोऽध्यायः ।

# ऊनचत्वारिंशोऽध्यायः

## भूपरिग्रहविधानम् ।

हयग्रीव उवाच ।

विष्णवादीनां प्रतिष्ठादि वक्ष्ये ब्रह्मन्! शृणुष्व मे ।
प्रोक्तानि पञ्चरात्राणि सप्तरात्राणि वै मया ॥ १ ॥

व्यस्तानि मुनिभिर्लोके पञ्चविंशतिसङ्ख्यया । हयशीर्षं तन्त्रमाद्यं तन्त्रं त्रैलोक्यमोहनम् वैभवं पौष्करं तन्त्रं प्रह्लादङ्गार्ग्यगालवम् । नारदीयञ्च सम्प्रश्नं शाण्डिल्यं वैश्वकन्तथा सत्योक्तं शौनकं तन्त्रं वासिष्ठं ज्ञानसागरम् । स्वायम्भुवं कापिलञ्च तार्क्ष्यंनारायणीयकम् आत्रेयं नारसिंहाख्यमानन्दाख्यं तथारुणम् । बौधायनं तथार्षं तु विश्वोक्तं तस्य सारतः प्रतिष्ठां हि द्विजः कुर्य्यान्मध्यदेशादिसम्भवः । नकच्छदेशसम्भूतः कावेरीकोङ्कणोद्भवः कामरूपकलिङ्गोत्थः काञ्चीकाश्मीरकोशलः । आकाशवायुतेजोऽम्बुभूरेताःपञ्चरात्रयः अचैतन्यास्तमोद्रिक्ताः पञ्चरात्रविवर्जितम् । ब्रह्माहं विष्णुरमल इतिविद्यात् स देशिकः सर्वलक्षणहीनोऽपि स गुरुस्तन्त्रपारगः । नगराभिमुखाःस्थाप्या देवा न च पराङ्मुखाः कुरुक्षेत्रे गयादौ च नदीनान्तु समीपतः । ब्रह्मा मध्ये तु नगरे पूर्वे शक्रस्य शोभनम् । अग्नावग्नेश्च मातृणां भूतानाञ्च यमस्य च । दक्षिणे चण्डिकायाश्च पितृदैत्यादिकस्य च नैर्ऋते मन्दिरं कुर्यात् वरुणादेश्च वारुणे । वायोर्नागस्य वायव्ये सौम्ये यक्षगुहस्य च चण्डीशस्य महेशस्य ऐशे विष्णोश्च सर्वशः । पूर्वदेवकुलं पीड्य प्रासादं स्वल्पकंत्वथ

समं वाप्यधिकं वापि न कर्त्तव्यं विजानता ।
उभयोर्द्विगुणां सीमां त्यक्त्वा चोच्छ्रयसम्मिताम् ॥ १४ ॥

प्रासादं कारयेदन्यं नोभयं पीड़येद् बुधः । भूमौ तु शोधितायां तु कुर्याद्भूमिपरिग्रहम् प्राकारसीमापर्य्यन्तं ततोभूतबलिं हरेत् । माषं हरिद्राचूर्णन्तु सलाजं दधिसक्तुभिः ।

अष्टाक्षरेण सक्तूंश्च पातयित्वाष्टदिक्षु च ।

राक्षसाश्च पिशाचाश्च येऽस्मिंतिष्ठन्ति भूतले ॥ १७ ॥
सर्वे ते व्यपगच्छन्तु स्थानं कुर्य्यामहं हरेः । हलेन वाहयित्वा गां गोभिश्चैवावदारयेत्
परमाण्वष्टकेनैव रथरेणुः प्रकीर्तितः । रथरेण्वष्टकेनैव त्रसरेणुः प्रकीर्त्त्यते ॥ १६ ॥
तैरष्टभिस्तु वालाग्रं लिख्या तैरष्टभिर्मता । ताभिर्यूकाष्टभिःख्याता ताश्चाष्टौयवमध्यमः
यवाष्टकैरङ्गुलं स्याच्चतुर्विंशाङ्गुलः करः । चतुरङ्गुलसंयुक्तः स हस्तः पद्महस्तकः
इत्यादिमहापुराणे आग्नेये प्रतिष्ठायां भूपरिग्रहो नामोनचत्वारिंशोऽध्यायः ।

---

# चत्वारिंशोऽध्यायः

## अर्घ्यदानविधानम् ।

भगवानुवाच ।

पूर्वमासीत् महद्भूतं सर्वभूतभयङ्करम् । तद्देवैर्निहितं भूमौ स वास्तुपुरुषः स्मृतः ॥
चतुःषष्टिपदे क्षेत्रे ईशं कोणार्द्धसंस्थितम् । घृताक्षतैस्तर्पयेत्तं पर्जन्यं पदगं ततः ॥ २ ॥
उत्पलाद्भिर्जयन्तञ्च द्विपदस्थं पताकया । महेन्द्रञ्चैककोष्ठस्थं सर्वरक्तैः पदे रविम् ॥
वितानेनार्द्धपदगं सत्यं पदे भृशं घृतैः । व्योम शाकुनमांसेन कोणार्द्धपदसंस्थितम् ॥
स्रुचा चार्द्धपदे वह्निं पूषाणं लाजयैकतः । स्वर्णेन वितथं द्विष्ठं मथनेन गृहाक्षतम् ॥
मांसौदनेन धर्मेशमेकैकस्मिन् स्थितं द्वयम् । गन्धर्वं द्विपदं गन्धैर्भृशं शाकुनजिह्वया ॥
एकस्थमूद्र्ध्वं संस्थञ्च मृगं नीलपटैस्तथा । पितॄन् कृशरयार्द्धस्थं दन्तकाष्ठैःपदस्थितम्
दौवारिकं द्विसंस्थञ्च सुग्रीवं यावकेन तु । पुष्पदन्तं कुशस्तम्बैः पद्मैर्वरुणमेकतः ॥
असुरं सुरया द्विष्ठं पदे शेषं घृताम्भसा । यवैः पापं पदार्द्धस्थं रोगमर्द्धे च मण्डकैः ॥
नागपुष्पैः पदे नागं मुख्यं भक्ष्यैर्द्विसंस्थितम् ।
मुद्गौदनेन भल्लाटं पदे सोमं पदे तथा ॥ १० ॥
मधुना पायसेनाथ शालूकेन ऋषिं द्वये । पदे दितिं लोपिकाभिरर्द्धे दितिमथापरम् ॥

पूरिकाभिस्ततश्चापमीशाधः पयसा पदे । ततोऽधश्चापवत्सन्तु दध्ना चैकपदे स्थितम्
लड्डुकैश्च मरीचिन्तु पूर्वकोष्ठचतुष्टये । सवित्रे रक्तपुष्पाणि ब्रह्माधःकोणकोष्ठके॥

तदधःकोष्ठके दद्यात् सावित्र्यै च कुशोदकम् ।
विवस्वतेऽरुणं दद्याच्चन्दनश्चतुरङ्घ्रिषु ॥ १४ ॥
रक्षोऽधःकोणकोष्ठे तु इन्द्रायान्नं निशान्वितम् ।
इन्द्रजयाय तस्याधो घृतान्नं कोणकोष्ठके ॥ १५ ॥

चतुष्पदेषु दातव्यमिन्द्राय गुड़पायसम् । वाय्वधः कोणदेशे तु रुद्राय पक्वमांसकम्॥
तदधः कोणकोष्ठे तु यक्षायार्द्रं फलन्तथा । महीधराय मांसान्नं माषश्च चतुरङ्घ्रिषु

मध्ये चतुष्पदे स्थाप्यां ब्रह्मणे तिलतण्डुलाः ।
चरकीं माषसर्पिर्भ्यां स्कन्दं कृशरयासृजा ॥ १८ ॥

रक्तपद्मैर्विदारीश्च कन्दर्पश्च पलोदनैः । पूतनां पलपित्ताभ्यां मांसासृग्भ्याश्चजम्भकम्
पित्तासृगस्थिभिः पापां पिलिपिञ्जं स्रजासृजा । ईशाद्यान् रक्तमांसेनअभावादक्षतैर्यजेत्

रक्षोमातृगणेभ्यश्च पिशाचादिभ्य एव च ।
पितृभ्यःक्षेत्रपालेभ्यो बलीन् दद्यात् प्रकामतः ॥ २१ ॥

अहुत्वैतानसन्तर्प्य प्रासादादीन्न कारयेत् । ब्रह्मस्थाने हरिं लक्ष्मींगणंपश्चात्समर्चयेत्
महेश्वरं वास्तुमथं वर्द्धन्या सहितं घटम् । ब्रह्माणंमध्यतः कुम्भे ब्रह्मादींश्चदिगीश्वरान्

दद्यात् पूर्णाहुतिं पश्चात् स्वस्ति वाच्य प्रणम्य च ।
प्रगृह्य कर्करीं सम्यक् मण्डलन्तु प्रदक्षिणम् ॥ २४ ॥

सूत्रमार्गेण हे ब्रह्मंस्तोयधाराञ्च भ्रामयेत् । पूर्ववत् तेन मार्गेण सप्त बीजानि वापयेत्॥
प्रारम्भं तेन मार्गेण तस्य खातस्य कारयेत् । ततो गर्त्तं खनेन्मध्ये हस्तमात्रं प्रमाणतः

चतुरङ्गुलकं चाधश्चोपलिप्यार्चयेत् ततः ।
ध्यात्वा चतुर्भुजं विष्णुमर्घ्यं दद्यात् तु कुम्भतः ॥ २७ ॥

कर्कर्या पूरयेत् श्वभ्रं शुक्लपुष्पाणि च न्यसेत् । दक्षिणावर्तकं श्रेष्ठं बीजैर्मृद्भिश्च पूरयेत्

अर्घ्यदानं विनिष्पाद्य गोवस्त्रादीन् ददेद् गुरौ ।

कालज्ञाय स्थपतये वैष्णवादिभ्य अर्चयेत् ॥ २९ ॥

ततस्तु खानयेद् यत्नाज्जलान्तं यावदेव तु । पुरुषाधःस्थितं शल्यं न गृहे दोषदं भवेत्

अस्थिशल्ये भिद्यते वै भित्तिर्वै गृहिणोऽसुखम् ।

यन्नामशब्दं शृणुयात् तत्र शल्यं तदुद्भवम् ॥ ३१ ॥

इत्यादिमहापुराणे आग्नेये अर्घ्यदानकथनं नाम चत्वारिंशोऽध्यायः ।

---

# एकचत्वारिंशोऽध्यायः

## शिलाविन्यासविधानम् ।

भगवानुवाच ।

पादप्रतिष्ठां वक्ष्यामि शिलाविन्यासलक्षणम् ।

अग्रतो मण्डपः कार्य्यः कुण्डानान्तु चतुष्टयम् ॥ १ ॥

कुम्भन्यासेष्टकान्यासोद्वारस्तम्भोच्छ्रयंशुभम् । पादोनंपूरयेत् खातंतत्र वास्तुयजेत्समे

इष्टकाश्च सुपकाः स्युर्द्वादशाङ्गुलसम्मिताः । सुविस्तारत्रिभागेन वैपुल्येन समन्विताः

करप्रमाणा श्रेष्ठा स्याच्छिलाप्यथ शिलामये ।

नव कुम्भांस्ताम्रमयान् स्थापयेदिष्टकाघटान् ॥ ४ ॥

अद्भिः पञ्चकषायेण सर्वौषधिजलेन च । गन्धतोयेन च तथा कुम्भैस्तोयसुपूरितैः ॥५॥

हिरण्यव्रीहिसंयुक्तैर्गन्धचन्दनचर्चितैः । आपो हिष्ठेति तिसृभिः शन्नो देवीति चाप्यथ

तरत्समन्दीरिति च पावमानीभिरेव च । उदुत्तमं वरुणमिति कयानश्च तथैव च ॥

वरुणस्येति मन्त्रेण हंसः शुचिषदित्यपि । श्रीसूक्तेन च तथा शिलाः संस्थाप्य सङ्घटाः

शय्यायां मण्डपे प्राच्यां मण्डले हरिमर्चयेत् ।

जुहुयाज्जनयित्वाऽग्निं समिधो द्वादशीस्ततः ॥ ६ ॥

आधारावाज्यभागौ तु प्रणवेनैवकारयेत् । अष्टाहुतीस्तथाष्टान्तैराज्यंव्याहृतिभिःक्रमात्

लोकेशानामग्नये वै सोमायावग्रहेषु च। पुरुषोत्तमायेति च व्याहृतिर्जुहुयात् ततः ॥

प्रायश्चित्तं ततः पूर्णां मूर्तिमांसघृतांस्तिलान्।
वेदाद्यैर्द्वादशान्तेन कुम्भेषु च पृथक् पृथक्।॥ १२॥
प्राङ्मुखस्तु गुरुः कुर्य्यादष्टदिक्षु विलिप्य च।
मध्ये चैकां शिलां कुम्भं न्यसेद्देतान् सुरान् क्रमात्॥ १३॥

पद्मं चैव महापद्मं मकरं कच्छपं तथा। कुमुदञ्च तथा नन्दं पद्मं शङ्खञ्च पद्मिनीम्॥१४॥
कुम्भान्नचालयेत् तेषु न्यसेदिष्टिष्टकाःक्रमात्। ईशानान्ताश्च पूर्वादाविष्टकां प्रथमंन्यसेत्

शक्तयो विमलाद्यास्तु इष्टकानान्तु देवताः।
न्यसनीया यथा योगं मध्ये न्यस्या त्वनुग्रहा ॥ १६ ॥

अव्यङ्गे चाक्षते पूर्णे मुनेरङ्गिरसः सुते। इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहम्॥
मन्त्रेणानेन विन्यस्य इष्टका देशिकोत्तमः। गर्भाधानं ततः कुर्य्यान्मध्यस्थानेसमाहितः
कुम्भोपरिष्टाद् देवेशं पद्मिनीं न्यस्य देवताम्। मृत्तिकाश्चैव पुष्पाणि धातवोरत्नमेवच
लौहानि दिक्पतेरस्त्रं यजेद् वै गर्भभाजने। द्वादशाङ्गुलविस्तारे चतुरङ्गुलकोच्छ्रये
पद्माकारे ताम्रमये भाजने पृथिवीं यजेत्। एकान्तेसर्वभूतेशे पर्वतासनमण्डिते ॥ २१॥

समुद्रपरिवारे! त्वं देवि! गर्भं समाश्रय।
नन्दे! नन्दय वासिष्ठे! वसुभिः प्रजया सह ॥ २२॥

जये! भार्गवदायादे! प्रजानांविजयावहे!। पूर्णऽङ्गिरसदायादे! पूर्णकामंकुरुष्वमाम्
भद्रे! काश्यपदायादे! कुरु भद्रां मतिं मम। सर्वबीजसमायुक्ते! सर्वरत्नौषधीवृते!॥

जये! सुरुचिरे! नन्दे! वाशिष्ठे! रम्यतामिह।
प्रजापतिसुते! देवि! चतुरस्रे महीयसि ॥ २५॥
सुभगे! सुप्रभे! भद्रे! गृहे काश्यपि! रम्यताम्।
पूजिते! परमाश्चर्य्ये! गन्धमाल्यैरलङ्कृते!॥ २६॥

भवभूतिकरी देवि! गृहे भार्गवि! रम्यताम्। देशस्वामिपुरस्वामिगृहस्वामिपरिग्रहे!
मनुष्यादिकतुष्टयर्थं पशुवृद्धिकरी भव। एवमुक्त्वा ततः खातं गोमूत्रेण तु सेचयेत्॥

कृत्वा निधापयेद्गर्भं गर्भाधानं भवेन्निशि । गोवस्त्रादि प्रदद्याच्च गुरवेऽन्येषु भोजनम्
गर्भं न्यस्येष्टका न्यस्य ततो गर्भं प्रपूरयेत् । पीठबन्धमतः कुर्य्यान्मितप्रासादमानतः ॥
पीठोत्तमश्चोच्छ्रयेणप्रासादस्यार्द्धविस्तरात् । पादहीनंमध्यमं स्यात् कनिष्ठंचोत्तमार्द्धतः
पीठबन्धोपरिष्टात् तु वास्तुयागं पुनर्यजेत् ।
पादप्रतिष्ठाकारी तु निष्पापो दिवि मोदते ॥ ३२ ॥
देवागारं करोमीति मनसा यस्तु चिन्तयेत् । तस्य कायगतं पापं तदह्ना हि प्रणश्यति
कृते तु किं पुनस्तस्य प्रासादे विधिनैव तु । अष्टेष्टकसमायुक्तं यः कुर्य्याद् देवतालयम्
न तस्य फलसम्पत्तिर्वक्तुं शक्येत केनचित् । अनेनैवानुमेयं हि फलं प्रासादविस्तरात् ॥
ग्राममध्ये च पूर्वे च प्रत्यग्द्वारंप्रकल्पयेत् । विदिशासु च सर्वासुग्रामेप्रत्यङ्मुखोभवेत्
दक्षिणे चोत्तरे चैव पश्चिमे प्राङ्मुखो भवेत् ॥ ३६ ॥
इत्यादिमहापुराणे आग्नेये पातालयोगकथनं नाम एकचत्वारिंशोऽध्यायः ।

---

# द्वाचत्वारिंशोऽध्यायः

## प्रासादलक्षणकथनम् ।

हयग्रीव उवाच ।

प्रासादं संप्रवक्ष्यामि सर्वसाधारणं श्रृणु । चतुरस्त्रीकृतं क्षेत्रं भजेत् षोड़शधा बुधः ॥
मध्ये तस्य चतुर्भिस्तु कुर्य्यादायसमन्वितम् । द्वादशैव तु भागानिभित्त्यर्थंपरिकल्पयेत्
जङ्घोच्छ्रायन्तु कर्त्तव्यंचतुर्भागेणचायतम् । जङ्घायांद्विगुणोच्छ्रायंमञ्जर्याःकल्पयेद्बुधः
तुर्य्यभागेन मञ्जर्य्याः कार्यः सम्यक् प्रदक्षिणः ।
तन्माननिर्गमं कार्यमुभयोः पार्श्वयोः समम् ॥ ४ ॥
शिखरेण समं कार्यमग्रे जगति विस्तरम् । द्विगुणेनापि कर्त्तव्यं यथाशोभानुरूपतः ॥
विस्तरान्मण्डपस्याग्रे गर्भसूत्रद्वयेन तु । दैर्घ्यात् पादाधिकंकुर्यान्मध्यस्तम्भैर्विभूषितम्

प्रासादगर्भमानं वा कुर्वीत मुखमण्डपम्। एकाशीतिपदैर्वास्तुं पश्चात् मण्डपमारभेत

शुकान् प्राग्द्वारविन्यासे पादान्तःस्थान् यजेत् सुरान्।

तथा प्राकारविन्यासे यजेद्द्वात्रिंशदन्तगान्॥ ८॥

सर्वसाधारणं चैतत् प्रासादस्य च लक्षणम्। मानेन प्रतिमाया वा प्रासादमपरं शृणु।

प्रतिमायाःप्रमाणेनकर्त्तव्यापिण्डिका शुभा। गर्भस्तु पिण्डिकार्द्धेनगर्भमानास्तुभित्तयः

भित्तेरायाममानेन उत्सेधन्तु प्रकल्पयेत्।

भित्त्युच्छ्रायात् तु द्विगुणं शिखरं कल्पयेद्बुधः॥ ११॥

शिखरस्य तु तुर्येण भ्रमणं परिकल्पयेत्। शिखरस्य चतुर्थेन अग्रतो मुखमण्डपम्॥१२

अष्टमांसेन गर्भस्य रथकानान्तु निर्गमः। परिधेर्गुणभागेन रथकांस्तत्र कल्पयेत्॥१३॥

तत्तृतीयेन वा कुर्याद्रथकानान्तु निर्गमम्। वामत्रयं स्थापनीयं रथकत्रितये सदा॥१४

शिखरार्थं हि सूत्राणि चत्वारि विनिपातयेत्। शुकनाशोर्ध्वतःसूत्रं तिर्यग्भूतंनिपातयेत

शिखरस्यार्द्धभागस्थं सिंहंतत्र तु कारयेत्। शुकनासांस्थिरीकृत्यमध्यसन्धौ निधापयेत

अपरे च तथा पार्श्वे तद्वत सूत्रं निधापयेत्। तदूर्ध्वन्तु भवेद्वेदी सकण्ठा मनसारकम्

स्कन्धभग्नं न कर्त्तव्यं विकरालं तथैव च। ऊर्ध्वञ्च वेदिकामानात् कलशं परिकल्पयेत्

विस्ताराद्द्विगुणं द्वारं कर्त्तव्यन्तु सुशोभनम्। उदुम्बरौतदूर्ध्वञ्चन्यसेच्छाखांसुमङ्गलैः

द्वारस्य तुचतुर्थांशेकार्यौचण्डप्रचण्डकौ। विश्वक्सेनवद्दण्डौशिखोर्ध्वोडुम्बरेश्रियम्

दिग्गजैः स्नाप्यमानान्तां घटैः साब्जां सुरूपिकाम्।

प्रासादास्य चतुर्थांशैः प्राकारस्योच्छ्रयो भवेत्॥ २१॥

प्रासादात् पादहीनस्तु गोपुरस्योच्छ्रयो भवेत्। पञ्चहस्तस्य देवस्य एकहस्तातुपीठिका

गारुड़ं मण्डपञ्चाग्रे एकं भौमादिधाम च। कुर्याद्धि प्रतिमायान्तु दिक्षु चाष्टासु चोपरि

पूर्वे वराहं दक्षे च नृसिंहं श्रीधरं जले। उत्तरे तु हयग्रीवमाग्नेयां जामदग्न्यकम्॥२४॥

नैर्ऋत्यां रामकं वायौ वामनं वासुदेवकम्। ईशे प्रासादरचना देया वस्वर्ककादिभिः

द्वारस्य चाष्टमाद्यंशं त्यक्त्वा वेधी न दोषभाक्॥ २५॥

इत्यादि महापुराणे आग्नेये प्रासादलक्षणं नाम द्वाचत्वारिंशोऽध्यायः।

# त्रिचत्वारिंशोऽध्यायः

## प्रासाददेवतास्थापनम् ।

भगवानुवाच ।

प्रासादे देवताः स्थाप्या वक्ष्ये ब्रह्मन्! शृणुष्व मे ।
पञ्चायतनमध्ये तु वासुदेवं निवेशयेत् ॥ १ ॥
वामनं नृहरिञ्चाश्वशीर्षं तद्वच्च शूकरम् । आग्नेये नैर्ऋते चैव वायव्ये चेशगोचरे ॥२॥
अथ नारायणं मध्ये आग्नेयामम्बिकांन्यसेत् । नैर्ऋत्यांभास्करंवायौब्रह्माणंलिङ्गमीशके
अथवा रुद्ररूपन्तु अथवा नवधामसु । वासुदेवं न्यसेन्मध्ये पूर्वादौ वामवामकान् ॥४॥
इन्द्रादीन् लोकपालांश्च अथवा नवधामसु । पञ्चायतनकंकुर्यात् मध्ये तु पुरुषोत्तमम् ।
लक्ष्मीवैश्रवणी पूर्वे दक्षे मातृगणं न्यसेत् । स्कन्दं गणेशमीशानं सूर्यादीन्पश्चिमेग्रहान्
उत्तरेदशमत्स्यादीनाग्नेयांचण्डिकांतथा । नैर्ऋत्यामम्बिकांस्थाप्यवायव्येतुसरस्वतीम्
पद्मामैशे वासुदेवं मध्ये नारायणञ्च वा । त्रयोदशालये मध्ये विश्वरूपं न्यसेद्धरिम् ॥
पूर्वादौ केशवादीन् वा अन्यधामस्वयं हरिम् । मृण्मयी दारुघटिता लोहजा रत्नजातथा
शैलजा गन्धजा चैव कौसुमी सप्तधा स्मृता । कौसुमी गन्धजाचैव मृण्मयीप्रतिमातथा
तत्कालपूजिताश्चैताः सर्वकाम फलप्रदाः । अथ शैलमयीं वक्ष्ये शिला यत्र च गृह्यते ॥
पर्वतानामभावे च गृह्णीयाद् भूगतां शिलाम् ।
पाण्डुरा ह्यरुणा पीता कृष्णा शस्ता तु वर्णिनाम् ॥ १२ ॥
न यदा लभ्यते सम्यग् वर्णितां वर्णतः शिला । वर्णाद्यापादनं तत्र जुहुयात् सिंहविद्यया
शिलायां शुक्लरेखाग्र्या कृष्णाग्र्या सिंहहोमतः ।
कांस्यं घण्टानिनादा स्यात् पुंलिङ्गा विस्फुलिङ्गिका ॥ १४ ॥
तन्मन्दलक्षणा स्त्री स्याद्रूपाभावान्नपुंसका । दृश्यतेमण्डलंयस्यां सगर्भां तां विवर्जयेत्
प्रतिमार्थं वनं गत्वा वनयागं समाचरेत् । तत्र खात्वोपलिप्याथ मण्डपे तु हरिं यजेत्

बलिंदत्त्वा कर्मशस्त्रं टङ्कादिकमथार्चयेत् । हुत्वा तु शालितोयेन अस्त्रेणप्रोक्षयेच्छिलाम्
रक्षां कृत्वा नृसिंहेन मूलमन्त्रेण पूजयेत् । हुत्वा पूर्णाहुतिं दद्यात् ततो भूतबलिं गुरुः॥

अत्र ये संस्थिताः सत्त्वा यातुधानाश्च गुह्यकाः ।
सिद्धादयो वा ये चान्ये तान् सम्पूज्य क्षमापयेत् ॥ १६ ॥
विष्णुबिम्बार्थमस्माकं यात्रैषा केशवाज्ञया ।
विष्णवर्थं यद्भवेत्कार्य्यं युष्माकमपि तद्भवेत् ॥ २० ॥

अनेन बलिदानेन प्रीता भवत सर्वथा । क्षेमेण गच्छतान्यत्र मुक्त्वा स्थानमिदं त्वरात्

एवं प्रबोधिताः सत्त्वा यान्ति तृप्ता यथासुखम् ।
शिल्पिभिश्च चरुं प्राश्य स्वप्नमन्त्रं जपेन्निशि ॥ २२ ॥

ॐ नमः सकललोकाय विष्णवे प्रभविष्णवे । विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः

आचक्ष्व देवदेवेश ! प्रसुप्तोऽस्मि तवान्तिकम् ।
स्वप्ने सर्वाणि कार्य्याणि हृदिस्थानि तु यानि मे ॥ २४ ॥

ओं ओं हूं फट् विष्णवे स्वाहा । शुभे स्वप्ने शुभं सर्वं ह्यशुभे सिंहहोमतः ।

प्रातरर्घ्यं शिलायान्तु दत्त्वाऽस्त्रेणाष्टकं यजेत् ॥ २५ ॥
कुद्दालटङ्कशस्त्राद्यं मध्वाज्याक्तमुखञ्चरेत् ।
आत्मानं चिन्तयेद् विष्णुं शिल्पिनं विश्वकर्मकम् ॥ २६ ॥
शस्त्रं विष्णवात्मकं दद्यान्मुखपृष्ठादि दर्शयेत् ।
जितेन्द्रियः टङ्कहस्तः शिल्पी तु चतुरस्रकाम् ॥ २७ ॥
शिलां कृत्वा पिण्डिकार्थं किञ्चिन्न्यूनान्तु कल्पयेत् ।

रथेस्थाप्य समानीय सवस्त्रां कारुवेश्मनि । पूजयित्वाऽथ घटयेत्प्रतिमां स तु कर्मकृत्

इत्यादिमहापुराणे आग्नेये शान्त्यादिवर्णनं नाम त्रिचत्वारिंशोऽध्यायः ।

———

# चतुश्चत्वारिंशोऽध्यायः

## वासुदेवादिप्रतिमालक्षणविधिः ।

भगवानुवाच ।

वासुदेवादिप्रतिमालक्षणं प्रवदामि ते । प्रासादस्योत्तरे पूर्वमुखीं वा चोत्तराननाम्॥१॥

संस्थाप्य पूज्य च बलिं दत्त्वाऽथो मध्यसूत्रकम् ।

शिलां शिल्पी तु नवधा विभज्य नवमेंऽशके ॥ २ ॥

सूर्यभक्तैः शिलायां तु भागं स्वांगुलमुच्यते । द्व्यंगुलंगोलकंनाम्ना कालनेत्रं तदुच्यते

भागमेकं त्रिधा भक्त्या पार्ष्णिभागं प्रकल्पयेत् ।

भागमेकं तथा जानौ ग्रीवायां भागमेव च ॥ ४ ॥

मुकुटं तालमात्रं स्यात् तालमात्रं तथा मुखम् ।

तालेनैकेन कण्ठन्तु तालेन हृदयं तथा ॥ ५ ॥

नाभिमेढ्रान्तरन्तालं द्वितालावूरुकौ तथा ।

तालद्वयेन जङ्घा स्यात् सूत्राणि शृणु साम्प्रतम् ॥ ६ ॥

कार्य्यं सूत्रद्वयं पादे जङ्घामध्ये तथापरम् । जानौ सूत्रद्वयं कार्य्यमूरूमध्ये तथापरम् ॥

मेढ्रे तथापरं कार्य्यं कट्यां सूत्रन्तथापरम् । मेखलाबन्धसिद्ध्यर्थंनाभ्यांचैवापरन्तथा

हृदये च तथा कार्य्यं कण्ठे सूत्रद्वयं तथा । ललाटे चापरं कार्य्यं मस्तके च तथापरम्

मुकुटोपरि कर्तव्यं सूत्रमेकं विचक्षणैः । सूत्राण्यूर्द्ध्वं प्रदेयानि सप्तैव कमलोद्भव ! ॥

कक्षात्रिकान्तरेणैव षट् सूत्राणि प्रदापयेत् ।

मध्यसूत्रं तु सन्त्यज्य सूत्राण्येव निवेदयेत् ॥ ११ ॥

ललाटं नासिकावक्त्रं कर्तव्यञ्चतुरंगुलम् । ग्रीवाकर्णौ तुकर्तव्यौ आयामाच्चतुरंगुलौ

द्व्यंगुले हनुके कार्य्ये विस्ताराच्चिबुकन्तथा । अष्टांगुलं ललाटन्तु विस्तारेणप्रकीर्तितम्

परेण द्व्यंगुलौ शङ्खौ कर्तव्यावलकान्वितौ । चतुरंगुलमाख्यातमन्तरं कर्णनेत्रयोः ॥

द्व्यंगुलौ पृथुकौ कर्णौ कर्णापाङ्गार्द्धपञ्चमे। भ्रूसमेन तु सूत्रेणकर्णश्रोत्रं प्रकीर्त्तितम् ॥
विद्धं षडङ्गुलं कर्णमविद्धश्चतुरंगुलम्। चिबुकेन समं विद्धमविद्धं वा षडंगुलम् ॥ १६।

गन्धपात्र तथावर्त्तं शष्कुलीं कल्पयेत् तथा।
द्व्यंगुलेनाधरः कार्य्यस्तस्यादुर्धेनोत्तराधरः ॥ १७ ॥

अर्द्धांगुलं तथा नेत्रं वक्त्रन्तु चतुरंगुलम्। आयामेन तु वैपुल्यात् सार्द्धमंगुलमुच्यते ॥

अव्यात्तमेवं स्याद् वक्त्रं व्यात्तं त्र्यंगुलमिष्यते।
नासावंशसमुच्छ्रायं मूले त्वेकांगुलं मतम् ॥ १८ ॥
उच्छ्राया द्व्यंगुलं चाग्रे करवीरोपमाः स्मृताः।
अन्तरं चक्षुषोः कार्य्यं चतुरंगुलमानतः ॥ २० ॥
द्व्यंगुलं चाक्षिकोणं च द्व्यंगुलं चान्तरं तयोः।
तारा नेत्रत्रिभागेण दृक्तारा पञ्चमांशिका ॥ २१ ॥
त्र्यंगुलं नेत्रविस्तारं द्रोणी चार्द्धांगुला मता।
तत्प्रमाणा भ्रुवोर्लेखा भ्रुवौ चैव समे मते ॥ २२ ॥

भ्रूमध्यं द्व्यंगुलंकार्य्यंभ्रूदैर्घ्यं चतुरंगुलम्। षट्त्रिंशदंगुलायाममस्तकस्य तु वेष्टनम् ॥
मूर्त्तीनां केशवादीनां द्वात्रिंशद्वेष्टनं भवेत्। पञ्चनेत्रा त्वधोग्रीवा विस्ताराद्वेष्टनं पुनः ॥
त्रिगुणं तु भवेदूर्ध्वं विस्तृताष्टांगुलं पुनः। ग्रीवात्रिगुणमायामंग्रीवावक्षोऽन्तरंभवेत् ॥

स्कन्धावष्टांगुलौ कार्यौ त्रिकालावंशकौ शुभौ।
सप्तनेत्रौ स्मृतौ बाहू प्रबाहू षोड़शांगुलौ ॥ २६ ॥
त्रिकलौ विस्तृतौ बाहू प्रबाहू चापि तत्समौ।
बाहुदण्डोर्ध्वतो ज्ञेयः परिणाहः कला नव ॥ २७ ॥

सप्तदशांगुलो मध्ये कूर्परोऽर्द्धे च षोड़श। कूर्परस्य भवेन्नाहः त्रिगुणः कमलोद्भव ! ॥
नाहः प्रबाहुमध्ये तु षोड़शांगुल उच्यते। अग्रहस्ते परीणाहो द्वादशांगुल उच्यते॥२६॥

विस्तारेण करतलं कीर्तितं तु षड़ंगुलम्।
दैर्घ्यं सप्तांगुलं कार्यं मध्या पञ्चांगुला मता ॥ ३० ॥

तर्यन्यनामिका चैव तस्मादर्द्धांगुलं विना । कनिष्ठांगुष्ठकौ कार्यौ चतुरंगुलसम्मितौ

द्विपर्वोऽङ्गुष्ठकः कार्यः शेषांगुलयस्त्रिपर्विकाः ।

सर्वासां पर्वणोऽर्द्धेन नखमानं विधीयते ॥ ३२ ॥

वक्षसो यत् प्रमाणन्तु जठरं तत्प्रमाणतः । अंगुलैकं भवेन्नाभी वेधेन च प्रमाणतः ॥

ततो मेढ्रान्तरं कार्यं तालमात्रं प्रमाणतः । नाभिमध्ये परीणाहो द्विचत्वारिंशदङ्गुलैः

अन्तरं स्तनयोः कार्य्यं तालमात्रं प्रमाणतः ।

चिबुकौ यवमानौ तु मण्डलं द्विपदं भवेत् ॥ ३५ ॥

चतुःषष्ट्यङ्गुलं कार्य्यं वेष्टनं वक्षसः स्फुटम् । चतुर्मुखश्च तदधोवेष्टनं परिकीर्त्तितम्

परिणाहस्तथा कट्यां चतुःपञ्चाशदंगुलैः । विस्तारश्चोरुमूले तु प्रोच्यते द्वादशांगुलः

तस्मादभ्यधिकं मध्ये ततो निम्नतरं क्रमात् । विस्तृताष्टांगुलजानुत्रिगुणां परिणाहतः

जङ्घामध्ये तु विस्तारः सप्तांगुल उदाहृतः ।

त्रिगुणा परिधिश्चास्य जङ्घाग्रं पञ्चविस्तरात् ॥ ३८ ॥

त्रिगुणा परिधिश्चास्य पादौ तालप्रमाणकौ । आयामादुत्थितौ पादौ चतुरंगुलमेव च

गुल्फात् पूर्वं तु कर्त्तव्यं प्रमाणाच्चतुरंगुलम् ।

त्रिकलं विस्तृतौ पादौ त्र्यंगुलो गुह्यकः स्मृतः ॥ ४१ ॥

पञ्चांगुलस्तु नाहोऽस्यदीर्घा तद्वत्प्रदेशिनी । अष्टमाष्टांशतोन्यूनाः शेषाङ्गुल्यःक्रमेणतु

सपादांगुलमुत्सेधमंगुष्ठस्य प्रकीर्त्तितम् । यवोनमंगुलं कार्य्यमंगुष्ठस्य नखं तथा ॥

अर्द्धांगुलं तथान्यासं क्रमान्न्यूनं तु कारयेत् ।

त्र्यंगुलौ वृषणौ कार्यौ मेढ्रं तु चतुरंगुलम् ॥ ४४ ॥

परिणाहोऽत्र कोषाग्रं कर्त्तव्यश्चतुरंगुलम् । षडंगुलपरीणाहौ वृषणौ परिकीर्त्तितौ

प्रतिमा भूषणाढ्या स्यादेतदुद्देशलक्षणम् ।

अनयैव दिशा कार्य्यं लोके दृष्टा तु लक्षणम् ॥ ४६ ॥

दक्षिणे तु करे चक्रमधस्तात् पद्ममेव च । वामे शङ्खं गदाऽधस्ताद् वासुदेवस्यलक्षणात्

श्रीपुष्टी चापि कर्त्तव्ये पद्मवीणाकरान्विते । ऊरुमात्रोच्छ्रितायामे मालाविद्याधरौतथा

प्रभामण्डलसंस्थौ तौ प्रभा हस्त्यादिभूषणा । पद्माभं पादपीठन्तु प्रतिमास्वेवमाचरेत्

इत्यादिमहापुराणे आग्नेये प्रतिमालक्षणं नाम चतुश्चत्वारिंशोऽध्यायः ।

---

## पञ्चचत्वारिंशोऽध्यायः

### पिण्डिकालक्षणकथनम् ।

भगवानुवाच ।

पिण्डिकालक्षणं वक्ष्ये दैर्घ्येणप्रतिमासमा । उच्छ्रायंप्रतिमार्द्धन्तु चतुःषष्टिपुटां च ताम्

त्यक्त्वा पङ्क्तिद्वयं चाधस्तदूर्ध्वं यत् तु कोष्ठकम् ।
समन्तादुभयोः पार्श्वे अन्तस्थं परिमार्जयेत् ॥ २ ॥
ऊर्ध्वं पङ्क्तिद्वयं त्यक्त्वा अधस्ताद् यत्तु कोष्ठकम् ।
अन्तः सम्मार्जयेत् यत्नात् पार्श्वयोरुभयोः समम् ॥ ३ ॥

तयोर्मध्यगतौ तत्र चतुष्कौ मार्जयेत् ततः । चतुर्द्धाभाजयित्वा तु ऊर्ध्वपङ्क्तिद्वयंबुधः

मेखला भागमात्रा स्यात् खातं तस्यार्द्धमानतः ।
भागं भागं परित्यज्य पार्श्वयोरुभयोः समम् ॥ ५ ॥
दत्त्वा चैकं पदं बाह्ये प्रमाणं कारयेद् बुधः ।
त्रिभागेण च भागस्याग्रे स्यात् तोयविनिर्गमः ॥ ६ ॥

नानाप्रकारभेदेनभद्रेयं पिण्डिकाशुभा । कष्टताला तु कर्त्तव्या देवी लक्ष्मीस्तथास्त्रियः

भ्रुवौयवाधिकेकार्य्येयवहीना तु नासिका । गोलकेनाधिकंवक्त्रमूर्ध्वं तिर्य्यग्विवर्जितम्

आयते नयने कार्य्ये त्रिभागोनैर्यवैस्त्रिभिः । तदर्द्धेन तु वैपुल्यं नेत्रयोः परिकल्पयेत् ॥

कर्णपाशोऽधिकः कार्य्यः सृक्कणीसमसूत्रतः । नम्रं कलाविहीनन्तु कुर्य्याद्दंशद्वयं तथा

ग्रीवा सार्द्धकला कार्य्या तद्वविस्तारोपशोभिता ।
नेत्रं विना तु विस्तारौ ऊरू जानू च पिण्डिका ॥ ११ ॥

अङ्घ्रिपृष्ठौ स्फिचौ कस्यां यथायोगं प्रकल्पयेत् ।
सप्तांशोनास्तथांगुल्यो दीर्घं विष्कम्भनाहतम् ॥ १२ ॥
नेत्रैकवर्जितायामा जङ्घोरू च तथा कटिः । मध्यपार्श्वञ्च तद् वृत्तं घनं पीनं कुचद्वयम्
तालमात्रौ स्तनौ कार्य्यौ कटिः सार्द्धकलाधिका ।
लक्ष्म शेषं पुरावत्स्यात् दक्षिणे चाम्बुजं करे ॥ १४ ॥
वामे बिल्वं स्त्रियौ पार्श्वे शुभे चामरहस्तके । दीर्घघोणस्तु गरुडश्चक्राङ्गाद्यानथो वदे
इत्यादिमहापुराणे आग्नेये पिण्डिकालक्ष्मादिलक्षणं नाम पञ्चचत्वारिंशोऽध्यायः ।

---

## षट्चत्वारिंशोऽध्यायः

### शालग्रामादिमूर्त्तिलक्षणकथनम् ।

भगवानुवाच ।

शालग्रामादिमूर्त्तींश्चवक्ष्येऽहं भुक्तिमुक्तिदाः । वासुदेवोऽसितो द्वारे शिलालग्नद्विचक्रकः
ज्ञेयः सङ्कर्षणो लग्नद्विचक्रो रक्त उत्तमः । सूक्ष्मचक्रो बहुच्छिद्रः प्रद्युम्नो नीलदीर्घकः
पीतोऽनिरुद्धः पद्माङ्को वर्त्तुलो द्वित्रिरेखवान् ।
कृष्णो नारायणो नाभ्युन्नतः शुषिरदीर्घवान् ॥ ३ ॥
परमेष्ठी साब्जचक्रः पृष्ठच्छिद्रश्च बिन्दुमान् ।
स्थूलचक्रोऽसितो विष्णुर्म्मध्ये रेखा गदाकृतिः ॥ ४ ॥
नृसिंहः कपिलः स्थूलचक्रः स्यात् पञ्चबिन्दुकः ।
वराहः शक्तिलिङ्गः स्यात् तच्चक्रौ विषमौ स्मृतौ ॥ ५ ॥
इन्द्रनीलनिभःस्थूलस्त्रिरेखालाञ्छितःशुभः । कूर्म्मस्तथोन्नतःपृष्ठेवर्त्तुलावर्त्तकोऽसितः
हयग्रीवोऽङ्कुशाकाररेखो नीलःसबिन्दुकः । वैकुण्ठःएकचक्रोऽब्जीमणिभःपुच्छरेखकः
मत्स्यो दीर्घस्त्रिबिन्दुः स्यात् काचवर्णस्तु पूरितः ।

श्रीधरो वनमालाङ्कः पञ्चरेखस्तु वर्त्तुलः ॥ ८ ॥

वामनो वर्त्तुलश्चातिह्रस्वो नीलः सविन्दुकः। श्यामस्त्रिविक्रमो दक्षरेखोवामेनविन्दुकः

अनन्तो नागभोगाङ्को नैकाभो नैकमूर्त्तिमान्।

स्थूलो दामोदरो मध्यचक्रो द्वाःसूक्ष्मचिन्दुकः ॥ १० ॥

सुदर्शनस्त्वेकचक्रो लक्ष्मीनारायणोद्वयात्। त्रिचक्रश्चाच्युतोदेवस्त्रिचक्रोवात्रिविक्रमः

जनार्दनश्चतुश्चक्रो वासुदेवश्च पञ्चभिः। षट्चक्रश्चैव प्रद्युम्नः सङ्कर्षणश्च सप्तभिः॥१२॥

पुरुषोत्तमोऽष्टचक्रो नवव्यूहो नवाङ्कितः । दशावतारो दशभिर्दशैकेनानिरुद्धकः।

द्वादशात्मा द्वादशभिरत ऊर्ध्वमनन्तकः ॥ १३ ॥

इत्यादिमहापुराणे आग्नेये शालग्रामादिमूर्त्तिलक्षणं नाम षट्चत्वारिंशोऽध्यायः।

---

## सप्तचत्वारिंशोऽध्यायः।

### शालग्रामादिपूजाकथनम्।

भगवानुवाच।

शालग्रामादिचक्राङ्कपूजाः सिद्ध्यै वदामि ते।

त्रिविधा स्याद्धरेः पूजा काम्याकाम्योभयात्मिका ॥ १ ॥

मीनादीनान्तु पञ्चानां काम्याथो वोभयात्मिका। वराहस्य नृसिंहस्यवामनस्यचमुक्तये

चक्रादीनां त्रयाणान्तु शालग्रामार्चनं शृणु। उत्तमा निष्फला पूजा कनिष्ठा सफलार्च्चना

मध्यमा मूर्त्तिपूजा स्याच्चक्राब्जे चतुरस्रके। प्रणवं हृदि विन्यस्य षडङ्गङ्करदेहयोः॥

कृतमुद्रात्रयश्चक्राद् वहिः पूर्वे गुरुं यजेत्। आप्ये गणं वायवे च धातारं नैर्ऋतेयजेत्

विधातारञ्च कर्त्तारं हर्त्तारं दक्षसौम्ययोः। विश्वक्सेनं यजेदीशे आग्नेये क्षेत्रपालकम्

ऋगादिवेदान् प्रागादौ आधारानन्तकं भुवम्। पीठंपद्मंचार्कचन्द्रवह्नयाख्यंमण्डलत्रयम्

आसनं द्वादशार्णेन तत्र स्थाप्य शिलां यजेत्।

न्यस्तेन च समस्तेन स्वबीजेन यजेत् क्रमात् ।
पूर्वादावथ वेदाद्यैर्गायत्रीभ्यां जितादिना । प्रणवेनार्चयेत् पश्चान्मुद्रास्तिस्रः प्रदर्शयेत्
विश्वक्सेनस्य चक्रस्य क्षेत्रपालस्यदर्शयेत् । शालग्रामस्य प्रथमापूजाऽथोनिष्फलोच्यते
पूर्ववत् षोड़शारञ्च सपद्मं मण्डलं लिखेत् । शङ्खचक्रगदाखड्गैर्गुर्वाद्यं पूर्ववद् यजेत् ॥
पूर्वे सौम्ये धनुर्बाणान् वेदाद्यैरासनं ददेत् । शिलां न्यसेद् द्वादशार्णैस्तृतीयं पूजनंशृणु
अष्टारमब्जं विलिखेत् गुर्वाद्यं पूर्ववद् यजेत् । अष्टार्णेनासनं दत्त्वा तेनैवचशिलांन्यसेत्
पूजयेद् दशधा तेन गायत्रीभ्यां जितं तथा ॥ १३ ॥

इत्यादिमहापुराणे आग्नेये शालग्रामादिपूजाकथनं नाम सप्तचत्वारिंशोऽध्यायः ।

---

# अष्टचत्वारिंशोऽध्यायः

## चतुर्विंशतिमूर्तिस्तोत्रकथनम् ।

भगवानुवाच ।

ओंरूपः केशवः पद्मशङ्खचक्रगदाधरः । नारायणः शङ्खपद्मगदाचक्रौ प्रदक्षिणम् ॥ १ ॥
ततो गदी माधवोरिशङ्खपद्मी नमामितम् । चक्रकौमोदकीपद्मशङ्खी गोविन्द ऊर्जितः ॥
मोक्षदः श्रीगदी पद्मी शङ्खी विष्णुश्च चक्रधृक् । शङ्खचक्राब्जगदिनं मधुसूदनमानमे॥३॥
भक्त्या त्रिविक्रमः पद्मगदी चक्री च शङ्ख्यपि ।
शङ्खचक्रगदापद्मी वामनः पातु मां सदा ॥ ४ ॥
गतिदः श्रीधरः पद्मी चक्रशार्ङ्गी च शङ्ख्यपि । हृषीकेशो गदाचक्रौ पद्मीशङ्खीचपातुनः
वरदः पद्मनाभस्तु शङ्खाब्जारिगदाधरः । दामोदरः पद्मशङ्खगदाचक्रौ नमामि तम् ॥६॥
तेने गदी शङ्खचक्री वासुदेवोऽब्जभृज्जगत् ।
सङ्कर्षणो गदी शङ्खी पद्मी चक्री च पातु वः ॥ ७ ॥
गदी चक्री शङ्खगदी प्रद्युम्नः पद्मभृत् प्रभुः । अनिरुद्धश्चक्रगदी शङ्खी पद्मी च पातुनः ॥

सुरेशोऽर्य्यब्जशङ्खाढ्यः श्रीगदी पुरुषोत्तमः ।
अधोऽक्षजः पद्मगदी शङ्खी चक्री च पातु वः ॥ ९ ॥
देवो नृसिंहश्चक्राब्जगदाशङ्खी नमामितम् ।
अच्युतः श्रीगदी पद्मी चक्री शङ्खी च पातु वः ॥ १० ॥
बालरूपी शङ्खगदी उपेन्द्रश्चक्रपद्म्यपि । जनार्दनः पद्मचक्री शङ्खधारी गदाधरः ॥ ११ ॥
शङ्खी पद्मी च चक्री च हरिः कौमोदकीधरः ।
कृष्णः शङ्खी गदी पद्मो चक्री मे भुक्तिमुक्तिदः ॥ १२ ॥
आदिमूर्तिर्वासुदेवस्तस्मात् सङ्कर्षणोऽभवत् । सङ्कर्षणाच्च प्रद्युम्नः प्रद्युम्नादनिरुद्धकः
केशवादिप्रभेदेन एकैकस्य त्रिधाक्रमात् । द्वादशाक्षरकं स्तोत्रं चतुर्विंशतिमूर्तिमत् ।
यः पठेच्छृणयाद् वापि निर्मलः सर्वमाप्नुयात् ॥ १४ ॥
इत्यादिमहापुराणे आग्नेये चतुर्विंशतिमूर्त्तिस्तोत्रं नामाष्टचत्वारिंशोऽध्यायः ।

---

## ऊनपञ्चाशोऽध्यायः

### मत्स्यादिलक्षणवर्णनम् ।

भगवानुवाच ।

दशावतारं मत्स्यादिलक्षणं प्रवदामि ते ।
मत्स्याकारस्तु मत्स्यः स्यात् कूर्मः कूर्माकृतिर्भवेत् ॥ १ ॥
नराङ्गो वाथ कर्त्तव्यो भूवहारो गदादिभृत् ।
दक्षिणे वामके शङ्खं लक्ष्मीर्वा पद्ममेव वा ॥ २ ॥
श्रीर्वामकूर्परस्था तु क्ष्मानन्तौ चरणानुगौ । वराहस्थापनाद्राज्यं भवाब्धितरणं भवेत्
नरसिंहो विवृत्तास्यो वामोरुक्षतदानवः । तद्वक्षो दारयन्माली स्फुरच्चक्रगदाधरः ॥
छत्रीदण्डी वामनःस्यादथवास्याच्चतुर्भुजः। रामश्चापेषुहस्तःस्यात् खड्गीपरशुनान्वितः

रामश्चापी शरी खड्गी शङ्खी वा द्विभुजः स्मृतः ।
गदालाङ्गलधारी च रामो वाथ चतुर्भुजः ॥ ६ ॥
वामोर्ध्वे लाङ्गलं दद्यादधः शङ्खं सुशोभनम् ।
मुषलं दक्षिणोर्ध्वे तु चक्रञ्चाधः सुशोभनम् ॥ ७ ॥

शान्तात्मा लम्बकर्णश्च गौराङ्गश्चाम्बरावृतः । ऊर्ध्वपद्मस्थितो बुद्धो वरदाभयदायकः

धनुस्तूणान्वितः कल्की म्लेच्छोत्सादकरो द्विजः ।
अथवाऽश्वस्थितः खड्गी शङ्खचक्रशरान्वितः ॥ ६ ॥

लक्षणं वासुदेवादिनवकस्य वदामि ते । दक्षिणोर्ध्वे गदा वामे वामोर्ध्वे चक्रमुत्तमम्

ब्रह्मेशौ पार्श्वगौ नित्यं वासुदेवोऽस्ति पूर्ववत् ।
शङ्खी स वरदो वाथ द्विभुजो वा चतुर्भुजः ॥ ११ ॥

लाङ्गली मुषली रामो गदापद्मधरः स्मृतः । प्रद्युम्नो दक्षिणे वज्रं शङ्खं वामे धनुःकरे ॥१२॥
गदानाभ्यावृतःप्रीत्याप्रद्युम्नो वा धनुःशरी । चतुर्भुजोऽनिरूद्धःस्यात्तथानारायणोविभुः
चतुर्मुखश्चतुर्बाहुर्बृहज्जठरमण्डलः । लम्बकूर्च्चो जटायुक्तो ब्रह्मा हंसाग्रवाहनः ॥१४॥

दक्षिणे चाक्षसूत्रञ्च स्रुवो वामे तु कुण्डिका ।
आज्यस्थाली सरस्वती सावित्री वामदक्षिणे ॥ १५ ॥

विष्णुरष्टभुजस्तार्क्षे करे खड्गस्तु दक्षिणे । गदा शरश्च वरदो वामे कार्मुकखेटके ॥१६॥
चक्रशङ्खौ चतुर्बाहुर्नरसिंहश्चतुर्भुजः । शङ्खचक्रधरो वापि विदारितमहासुरः ॥ १७ ॥
चतुर्बाहुर्वराहस्तु शेषः पाणितले धृतः । धारयन् बाहुना पृथ्वीं वामेन कमलाधरः ॥

पादलग्ना धरा कार्य्या पदा लक्ष्मीर्व्यवस्थिता ।
त्रैलोक्यमोहनस्तार्क्ष्ये अष्टबाहुस्तु दक्षिणे ॥ १६ ॥

चक्रं खड्गश्च मुषलमङ्कुशं वामके करे । शङ्खशार्ङ्गगदापाशान् पद्मवीणासमन्विते ॥
लक्ष्मीः सरस्वती कार्ये विश्वरूपोऽथ दक्षिणे । मुद्गरञ्च तथा पाशं शक्तिशूलं शरं करे
वामे शङ्खञ्च शार्ङ्गञ्च गदां पाशञ्च तोमरम् । लाङ्गलं परशुं दण्डं छुरिकां चर्मक्षेपणम्

विंशद्बाहुश्चतुर्वक्त्रो दक्षिणस्थोऽथ वामके ।

त्रिनेत्रो वामपार्श्वेन शयितो जलशाय्यपि ॥ २३ ॥

श्रिया धृतैकचरणो विमलाद्याभिरीड़ितः । नाभिपद्मचतुर्वक्त्रो हरिशङ्करको हरिः ॥
शूलर्ष्टिधारी दक्षे च गदाचक्रधरो पदे । रुद्रकेशवलक्ष्माङ्गो गौरीलक्ष्मीसमन्वितः ॥
शङ्खचक्रगदावेदपाणिश्चाश्वशिरा हरिः । वामपादो धृतः शेषे दक्षिणः कूर्मपृष्ठगः ॥

दत्तात्रेयो द्विबाहुः स्याद् वामोत्सङ्गे श्रिया सह ।
विश्वक्सेनश्चक्रगदी हली शङ्खी हरेर्गणः ॥ २७ ॥

इत्यादिमहापुराणे आग्नेये प्रतिमालक्षणं नाम ऊनपञ्चाशोऽध्यायः ।

---

## पञ्चाशोऽध्यायः

### देवीप्रतिमालक्षणकथनम् ।

भगवानुवाच ।

चण्डीविंशतिबाहुःस्याद्बिभ्रतीदक्षिणैःकरैः । शूलासिशक्तिचक्राणि पाशंखेटायुधाभयम्
डमरुं शक्तिकां वामैर्नागपाशञ्च खेटकम् । कुठाराङ्कुशचापांश्च घण्टाध्वजगदास्तथा ॥
आदर्शमुद्गरान् हस्तैश्चण्डी वा दशबाहुका । तदधो महिषश्छिन्नमूर्द्धापातितमस्तकः
शस्त्रोद्यतकरः क्रुद्धस्तद्ग्रीवासम्भवः पुमान् । शूलहस्तो वमद्रक्तो रक्तस्रङ्मूर्द्धजेक्षणः॥

सिंहेनास्वाद्यमानस्तु पाशबद्धो गलेभृशम् ।
याम्याङ्घ्र्याक्रान्तसिंहा च सव्याङ्घ्रिर्नीचगासुरे ॥ ५ ॥

चण्डिकेयं त्रिनेत्रा च सशस्त्रा रिपुमर्दनी । नवपद्मात्मके स्थाने पूज्या दुर्गा स्वमूर्तितः

आदौ मध्ये तथेन्द्रादौ नवतत्त्वात्मभिः क्रमात् ।
अष्टादशभुजैका तु दक्षे मुण्डं च खेटकम् ॥ ७ ॥

आदर्शतर्जनीचापं ध्वजं डमरुकं तथा । पाशं वामे बिभ्रती च शक्तिमुद्गरशूलकम् ॥ ८ ॥
वज्रखड्गांकुशशरान् चक्रन्देवी शलाकया । एतैरेवायुधैर्युक्ता शेषाः षोड़शबाहुकाः ॥

डमरुं तर्जनीं त्यक्त्वा रुद्रचण्डादयो नव ।
रुद्रचण्डा प्रचण्डाच चण्डोग्रा चण्डनायिका ॥ १० ॥
चण्डा चण्डवती चैव चण्डरूपातिचण्डिका । उग्रचण्डाचमध्यस्थारोचनाभारुणासिता
नीला शुक्ला धूम्रिका च पीता श्वेता च सिंहगा ।
महिषोऽथपुमान् शस्त्री तत्कचग्रहमुष्टिकाः ॥ १२ ॥
आलीढ़ा नव दुर्गाः स्युः स्थाप्याः पुत्रादिवृद्धये ।
तथा गौरी चण्डिकाद्या कुण्ड्यक्षररदाग्निधृक् ॥ १३ ॥
सैव रम्भा वने सिद्धाऽग्निहीना ललिता तथा । स्कन्धमूर्द्धकरा वामे द्वितीये धृतदर्पणा
याम्ये फलाञ्जलिहस्ता सौभाग्या तत्र चोर्ध्विका ।
लक्ष्मीर्याम्यकराम्भोजा वामे श्रीफलसंयुता ॥ १५ ॥
पुस्ताक्षमालिकाहस्ता वीणाहस्ता सरस्वती ।:
कुम्भाब्जहस्ता श्वेताभा मकरोपरि जाह्नवी ॥ १६ ॥
कूर्म्मगा यमुना कुम्भकरा श्यामा च पूज्यते । सवीणस्तुम्बुरुःशुक्लःशूलीमात्रग्रतो(?)वृषे
गौरी चतुर्मुखी ब्राह्मी अक्षमालासुरान्विता । कुण्डाक्षपात्रिणी वामेहंसगाशाङ्करीसिता
शरचापौ दक्षिणेऽस्या वामे चक्रं धनुर्वृषे ।
कौमारी शिखिगा रक्ता शक्तिहस्ता द्विबाहुका ॥ १९ ॥
चक्रशङ्खधरा सव्ये वामे लक्ष्मीर्गदाब्जधृक् । दण्डशङ्खासिगदया वाराही महिषस्थिता
ऐन्द्री वामे वज्रहस्ता सहस्राक्षी तु सिद्धये ।
चामुण्डा कोटराक्षी स्यान्निर्मांसा तु त्रिलोचना ॥ २१ ॥
निर्मांसा अस्थिसारा वा ऊर्ध्वकेशी कृशोदरी । द्वीपिचर्म्मधरा वामे कपालं पट्टिशङ्करे
शूलं कर्त्री दक्षिणेऽस्याः शवारूढास्थिभूषणा । विनायको नराकारोबृहत्कुक्षिर्गजाननः
बृहच्छुण्डो ह्युपवीती मुखं सप्तकलं भवेत् । विस्तारादुदैर्ध्यतश्चैवशुण्डंषट्त्रिंशदंगुलम्
कलाद्वादश नाड़ी तु ग्रीवा सार्द्धकलोच्छ्रिता । षट्त्रिंशदंगुलं कण्ठं गुह्यमध्यर्द्धमंगुलम्
नाभिरूरू द्वादशश्च जङ्घे पादे तु दक्षिणे । स्वदन्तं परशुं वामे लड्डुकञ्चोत्पलं शये

सुमुखी च विड़ालाक्षी पार्श्वे स्कन्दो मयूरगः ।
स्वामी शाखो विशाखश्च द्विभुजो बालरूपधृक् ॥ २७ ॥
दक्षे शक्तिः कुक्कुटोऽथ एकवक्त्रोऽथ षण्मुखः ।
षड्भुजो वा द्वादशभिर्ग्रामेऽरण्ये द्विबाहुकः ॥ २८ ॥

शक्तिषुपाशनिस्त्रिंशतोत्त्रदास्तर्जनीयुतः । शक्त्या दक्षिणहस्तेषु षट्सु वामे करे तथा ॥
शिखिपिच्छन्धनुः खेटं पताकाभयकुक्कुटे । कपालकर्त्तरीशूलपाशभृद् याम्यसौम्ययोः ॥
गजचर्मभृदूर्ध्वास्यपादा स्यात् रुद्रचर्चिका । सैव चाष्टभुजा देवी शिरोडमरुकान्विता
तेन सा रुद्रचामुण्डा नाटेश्वर्य्यथ नृत्यती । इयमेव महालक्ष्मीरुपविष्टा चतुर्मुखी ॥

नृवाजिमहिषेभांश्च खादन्ती च करे स्थितान् ।
दशबाहुस्त्रिनेत्रा च शस्त्रासिडमरुत्रिकम् ॥ ३३ ॥
बिभ्रती दक्षिणे हस्ते वामे घण्टाञ्च खेटकम् ।
खट्वाङ्गञ्च त्रिशूलञ्च सिद्धचामुण्डकाह्वया ॥ ३४ ॥

सिद्धयोगेश्वरी देवी सर्वसिद्धिप्रदायिका । एतद्रूपा भवेदन्या पाशाङ्कुशयुतारुणा ॥३५॥
भैरवी रूपविद्या तु भुजैर्द्वादशभिर्युता । एताः श्मशानजा रौद्रा अम्बाष्टकमिदं स्मृतम्
क्षमा शिवावृता वृद्धा द्विभुजा विवृतानना । दन्तुराक्षेमकारीस्याद्भूमौजानुकरास्थिता

यक्षिण्यस्तब्धदीर्घाक्षाः शाकिन्यो वक्रदृष्टयः ।
पिङ्गाक्षाः स्युर्महारम्या रूपिण्योऽप्सरसः सदा ॥ ३८ ॥
साक्षमाली त्रिशूली च नन्दीशो द्वारपालकः ।
महाकालोऽसिमुण्डी स्याच्छूलखेटकवांस्तथा ॥ ३९ ॥
कशो भृङ्गी च नृत्यन् वै कुष्माण्डस्थूलखर्वरान् ।
गजगोकर्णवक्त्राद्या वीरभद्रादयो गणाः ॥ ४० ॥

घण्टाकर्णोऽष्टदशदोः पापरोगं विदारयन् । वज्रासिदण्डचक्रेषुमुषलांकुशमुद्गरान् ॥
दक्षिणेतर्जनीं खेटं शक्तिं मुण्डञ्चपाशकम् । चापंघण्टां कुठारञ्च द्वाभ्याञ्चैवत्रिशूलकम्

घण्टामालाकुलो देवो विस्फोटकविमर्दनः ॥ ४२ ॥

इत्यादिमहापुराणे आग्नेये देवीप्रतिमालक्षणं नाम पञ्चाशत्तमोऽध्यायः ।

---

## एकपञ्चाशत्तमोऽध्यायः

### सूर्य्यादिप्रतिमालक्षणम् ।

भगवानुवाच ।

ससप्ताश्वे सैकचक्रे रथे सूर्योद्विपद्मधृक् । मसीभाजनलेखन्यौ बिभ्रत्कुण्डी तु दक्षिणे
वामे तु पिङ्गलोद्वारिदण्डभृत् स रवेर्गणः । बालव्यजनधारिण्यौपार्श्वे राज्ञीचनिष्प्रभा

अथवाश्वसमारूढः कार्य्य एकस्तु भास्करः ।
वरदा द्वयब्जिनः सर्वे दिक्पालास्त्रकराः क्रमात् ॥ ३ ॥
मुद्गरशूलचक्राब्जभृतोऽग्न्यादिविदिक्स्थिताः ।
सूर्य्यार्यमादिरक्षोऽन्ताश्चतुर्हस्ता द्विषड्दले ॥ ४ ॥

वरुणः सूर्य्य नामा च सहस्रांशुस्तथापरः । धाता तपनसञ्ज्ञश्च सविताऽथ गभस्तिकः

रविश्चैवाथ पर्ज्जन्यस्त्वष्टा मित्रोऽथ विष्णुकः ।
मेषादिराशिसंस्थाश्च मार्गादिकार्त्तिकान्तकाः ॥ ६ ॥

कृष्णोरक्तो मनाग्रक्तः पीतः पाण्डरकःसितः । कपिलःपीतवर्णश्च शुकाभोधवलस्तथा

धूम्रो नीलः क्रमाद्वर्णाः शक्तयः केशराग्रगाः ।
इड़ा सुषुम्णा विश्वार्च्चिरिन्दुसञ्ज्ञा प्रमर्दिनी ॥ ८ ॥

प्रहर्षणी महाकाली कपिला च प्रबोधनी । नीलाम्बराघनान्तस्था अमृताख्या च शक्तयः
वरुणादेश्च तद्वर्णाः केशराग्रेषु विन्यसेत् । तेजश्चण्डो महावक्रो द्विभुजः पद्मखड्गभृत्

कुण्डिकाजप्यमालीन्दुः कुजः शक्त्यक्षमालिकः ।
बुधश्चापाक्षपाणिः स्याज्जीवः कुण्डयक्षमालिकः ॥ ११ ॥
शुक्रः कुण्डयक्षमाली स्यात् किङ्किणीसूत्रवाञ्छनिः ।

अर्द्धचन्द्रधरो राहुः केतुः खड्गी च दीपभृत् ॥ १२ ॥
अनन्तस्तक्षकः कर्कः पद्मो महाब्जःशङ्खकः । कुलिकः सूत्रिणः सर्वे फणवक्त्रामहाप्रभाः
इन्द्रो वज्री गजारूढश्छागगोऽग्निश्च शक्तिमान् ।
यमो दण्डी च महिषे नैर्ऋतः खड्गवान् करे ॥ १४ ॥
मकरे वरुणः पाशी वायुर्ध्वजधरो मृगे । गदी कुवेरो मेषस्थ ईशानश्च जटी वृषे॥१५॥
द्विबाहवो लोकपाला विश्वकर्माक्षसूत्रभृत् ।
हनूमान् वज्रहस्तः स्यात् पद्भ्यां सम्पीड़िताश्रयः ॥ १६ ॥
वीणाहस्ताःकिन्नराःस्युर्मालाविद्याधराश्चखे। दुर्बलाङ्गाःपिशाचाःस्युर्वैतालाविकृताननाः
क्षेत्रपालाः शूलवन्तः प्रेता महोदराः कृशाः ॥ १७ ॥
इत्यादिमहापुराणे आग्नेये प्रतिमालक्षणं नाम एकपञ्चाशत्तमोऽध्यायः ।

---

## द्विपञ्चाशत्तमोऽध्यायः

### देवीप्रतिमालक्षणम् ।

भगवानुवाच ।

योगिन्यष्टाष्टकंवक्ष्ये ऐन्द्राद्रीशान्ततःक्रमात् । अक्षोभ्यारूक्षकर्णी च राक्षसीकृपणाक्षया
पिङ्गाक्षी च क्षया क्षेमा इला लीलालया तथा ।
लीला लक्ता बलाकेशी लालसा विमला पुनः ॥ २ ॥
हुताशा च विशालाक्षी हुङ्कारा वड़वामुखी । महाक्रूरा क्रोधना तु भयङ्करी महानना ॥
सर्वज्ञा तरला तारा ऋग्वेदा तु हयानना । साराख्या रुद्रसङ्ग्राही सम्बरातालजङ्घिका
रक्ताक्षी सुप्रसिद्धा तु विद्युज्जिह्वा करङ्किणी । मेघनादा प्रचण्डोग्रा कालकर्णी वरप्रदा
चन्द्रा चन्द्रावली चैव प्रपञ्चा प्रलयान्तिका ।
शिशुवक्त्रा पिशाची च पिशिताशा च लोलुपा ॥ ६ ॥

धमनी तापनी चैव रागिणी विकृतानना । वायुवेगा बृहत्कुक्षिर्विकृता विश्वरूपिका ॥
यमजिह्वा जयन्ती च दुर्जया च जयन्तिका । विड़ाली रेवती चैव पूतना विजयान्तिका
अष्टहस्ताश्चतुर्हस्ता इच्छास्त्राः सर्वसिद्धिदाः ।
भैरवश्चार्कहस्तः स्यात् कूर्परास्यो जटेन्दुभृत् ॥ ९ ॥
खड्गाङ्कुशकुठारेषु विश्वाभयभृदेकतः । चापत्रिशूलखट्वाङ्गपाशकार्द्धवरोद्यतः ॥ १० ॥
गजचर्मधरो द्वाभ्यां कृत्तिवासोऽहिभूषितः । प्रेताशनो मातृमध्ये पूज्यः पञ्चाननोऽथवा
अविलोमाग्निपर्यन्तं दीर्घाष्टकैकभेदितम् ।
तत्षड़ङ्गानि जात्यन्तैरन्वितं च क्रमाद् यजेत् ॥ १२ ॥
मन्दिराग्निदलारूढ़ं सुवर्णरसकान्वितम् । नादविन्द्विन्दुसंयुक्तं मातृनाथाङ्गदीपितम् ॥
वीरभद्रो वृषारूढ़ो मात्रग्रे स चतुर्मुखः ।
गौरी तु द्विभुजा त्र्यक्षा शूलिनी दर्पणान्विता ॥ १४ ॥
शूलं गलन्तिका कुण्डी वरदा च चतुर्भुजा । अब्जस्थाललिता स्कन्दगणादर्शशलाकया
चण्डिकादशहस्ता स्यात् खड्गशूलारिशक्तिधृक् । दक्षेवामे नागपाशं चर्माङ्कुशकुठारकम्
धनुः सिंहे च महिषः शूलेन प्रहतोग्रतः ॥ १६ ॥
इत्यादिमहापुराणे आग्नेये प्रतिमालक्षणं नाम द्विपञ्चाशत्तमोऽध्यायः ।

---

# त्रिपञ्चाशत्तमोऽध्यायः

## लिङ्गलक्षणम् ।

भगवानुवाच ।

लिङ्गादिलक्षणं वक्ष्ये कमलोद्भव! तच्छृणु । दैर्घ्यार्द्धं वसुभिर्भक्त्वा त्यक्त्वा भागत्रयं ततः
विष्कम्भं भूतभागैस्तु चतुरस्रन्तु कारयेत् ।
आयामं मूर्त्तिभिर्भक्त्वा एकद्वित्रिक्रमान् न्यसेत् ॥ २ ॥

ब्रह्मविष्णुशिवांशेषु वर्द्धमानोऽयमुच्यते । चतुरस्रेऽस्यवर्णार्द्धं गुह्यकोणेषु लाञ्छयेत्
अष्टाग्रं वैष्णवं भागं सिध्यत्येव न संशयः ।
षोड़शास्रं ततः कुर्याद् द्वात्रिंशास्रं ततः पुनः ॥ ४ ॥
चतुःषष्ट्यस्रकं कृत्वा वर्तुलं साधयेत् ततः । कर्तयेदथ लिङ्गस्य शिरो वै देशिकोत्तमः
विस्तारमथ लिङ्गस्य अष्टधा संविभाजयेत् ।
भागार्द्धार्द्धन्तु सन्त्यज्य छत्राकारं शिरो भवेत् ॥ ६ ॥
त्रिषु भागेषु सद्दशमायामं यस्य विस्तरम् । तद्विभागसमं लिङ्गं सर्वकामफलप्रदम् ॥
दैर्ध्यस्य तु चतुर्थेन विष्कम्भं देवपूजिते । सर्वेषामेव लिङ्गानां लक्षणं शृणु साम्प्रतम्
मध्यसूत्रं समासाद्य ब्रह्मरुद्रान्तिकं बुधः । षोड़शांगुललिङ्गस्य षड्भागैर्भाजितो यथा
तद्वैयमनसूत्राभ्यां मानमन्तरमुच्यते । यवाष्टमुत्तरैकार्यं शेषाणां यवहानितः ॥ १० ॥
अधोभागं त्रिधा कृत्वा त्वर्द्धमेकं परित्यजेत् ।
अष्टधा तद् द्वयं कृत्वा ऊर्ध्वभागत्रयं त्यजेत् ॥ ११ ॥
ऊर्ध्वञ्च पञ्चमाद्भागाद् भ्राम्य रेखांप्रलम्बयेत् । भागमेकं परित्यज्य सङ्गमं कारयेत्तयोः
एतत् साधारणं प्रोक्तं लिङ्गानांलक्षणंमया । सर्वसाधारणंवक्ष्येपिण्डिकान्तान्निबोधमे
ब्रह्मभागप्रवेशञ्च ज्ञात्वालिङ्गस्य चोच्छ्रयम् । न्यसेद्ब्रह्मशिलां विद्वान्सम्यक्कर्मशिलोपरि
तथा समुच्छ्रयं ज्ञात्वा पिण्डिकां प्रविभाजयेत् ।
द्विभागमुच्छ्रितं पीठं विस्तारं लिङ्गसम्मितम् ॥ १५॥
त्रिभागं मध्यतः खातं कृत्वा पीठंविभाजयेत् । स्वमानार्द्धत्रिभागेण बाहुल्यंपरिकल्पयेत्
बाहुल्यस्य त्रिभागेण मेखलामथ कल्पयेत् । खातं स्यान्मेखलातुल्यं क्रमान्निम्नन्तुकारयेत्
मेखलाषोड़शांशेनखातं वा तत्प्रमाणतः । उच्छ्रायं तस्यपीठस्य विकाराङ्गं तु कारयेत्
भूमौ प्रविष्टमेकं तु भागेनैकेन पिण्डिका । कण्ठं भागैस्त्रिभिः कार्यं भागेनैकेन पट्टिका
द्व्यंशेन चोर्ध्वपट्टन्तु एकांशाः शेषपट्टिकाः ।
भागं भागं प्रविष्टन्तु यावत् कण्ठं ततः पुनः ॥ २० ॥
निर्गमं भागमेकं तु यावद् वै शेषपट्टिका । प्रणालस्य त्रिभागेण निर्गमस्तु त्रिभागतः ॥

मूलेऽङ्गुल्यग्रविस्तारमग्रे त्र्यंशेन चार्द्धतः । ईषन्निम्नन्तु कुर्वीत खातं तच्चोत्तरेण वै ॥
पिण्डिकासहितं लिङ्गमेतत् साधारणं स्मृतम् ॥ २२ ॥
इत्यादिमहापुराणे आग्नेये लिङ्गलक्षणं नाम त्रिपञ्चाशत्तमोऽध्यायः ।

————

## चतुःपञ्चाशत्तमोऽध्यायः

### लिङ्गमानादिकथनम् ।

भगवानुवाच ।

वक्ष्याम्यन्यप्रकारेण लिङ्गमानादिकं शृणु । वक्ष्ये लवणजं लिङ्गं घृतजं बुद्धिवर्द्धनम् ॥
भूतये वस्त्रलिङ्गन्तु लिङ्गन्तात्कालिकं विदुः । पक्वापक्वं मृण्मयं स्यादपक्वात् पक्वजंवरम्
ततो दारुमयं पुण्यं दारुजाच्छैलजं वरम् ।
शैलाद् वरं तु मुक्ताजं ततोलौहं सुवर्णजम् ॥ ३ ॥
राजतं कीर्तितं ताम्रं पैत्तलं भुक्तिमुक्तिदम् । रङ्गजं रसलिङ्गञ्चभुक्तिमुक्तिप्रदं वरम् ॥ ४॥
रसजं रसलोहादिरत्नगर्भन्तु वर्धयेत् । मानादिनेष्टं सिद्धादि स्थापितेऽथ स्वयम्भुवि
वामे च स्वेच्छया तेषां पीठप्रासादकल्पना । पूजयेत् सूर्यविम्बस्थं दर्पणे प्रतिविम्बितम्
पूज्यो हरस्तु सर्वत्र लिङ्गे पूर्णार्चनं भवेत् । हस्तोत्तरविधं शैलं दारुजं तद्वदेव हि ॥
चलमङ्गुलमानेन द्वारे गर्भकरैः सितम् ।
अङ्गुलाद् गृहलिङ्गं स्याद् यावत् पञ्चदशाङ्गुलम् ॥ ८ ॥
द्वारमानात् त्रिसङ्ख्याकं नवधागर्भमानतः । नवधा गर्भमानेन लिङ्गं धाम्नि च पूजयेत्
एवं लिङ्गानि षट्त्रिंशत् ज्ञेयानि ज्येष्ठमानतः ।
मध्यमानेन षट्त्रिंशत् षट्त्रिंशदधमेन च ॥ १० ॥
इत्थमैक्येन लिङ्गानां शतमष्टोत्तरं भवेत् । एकांगुलादिपञ्चान्तं कन्यसञ्चलमुच्यते ॥
षड़ादिदशपर्यन्तञ्चलं लिङ्गञ्च मध्यमम् ।

एकादशाङ्गुलादि स्यात् ज्येष्ठं पञ्चदशान्तकम् ॥ १२ ॥

षडङ्गुलं महारत्नै रत्नैरन्यैर्नवाङ्गुलम्। रविभिर्हेमभारोत्थं लिङ्गंशेषैस्त्रिपञ्चभिः ॥

षोड़शांशे च वेदांशे युगं लुप्त्वोर्ध्वदेशतः।

द्वात्रिंशत् षोड़शांशांश्च कोणयोस्तु विलोपयेत् ॥ १४ ॥

चतुर्निवेशनात् कण्ठो विंशतिस्त्रियुगैस्तथा।

पार्श्वाभ्यां तु विलुप्ताभ्यां चललिङ्गं भवेद् वरम् ॥ १५ ॥

धाम्नो युगर्तुनागांशैर्द्वारैर्हीनादितः क्रमात्। लिङ्गद्वारोच्छ्रयादर्वाग्भवेत्पादोनतःक्रमात्

गर्भार्द्धेनाधमं लिङ्गं भूतांशैः स्यात् त्रिभिर्वरम्।

त्रयोर्म्मध्येच सूत्राणि सप्त सम्पातयेत् समम् ॥ १७ ॥

एवं स्युर्नव सूत्राणि भूतसूत्रैश्च मध्यमम्। द्व्यन्तरो वामवामश्च लिङ्गानां दीर्घता नव

हस्ताद् विवर्द्धते हस्तो यावत् स्युर्नव पाणयः।

हीनमध्योत्तमं लिङ्गं त्रिविधं त्रिविधात्मकम् ॥ १६ ॥

एकैकलिङ्गमध्येषु त्रीणि त्रीणि च पादशः। लिङ्गानि घटयेद्धीमान् षट्सु चाष्टोत्तरेषु च

स्थिरदीर्घप्रमेयात् तु द्वारगर्भकरात्मिका। भागेशश्चात्यमीशश्च देवेज्यं तुल्यसंज्ञितम् ॥

चत्वारि लिङ्गरूपाणि विष्कम्भेण तु लक्षयेत्।

दीर्घमायान्वितं कृत्वा लिङ्गं कुर्य्यात् त्रिरूपकम् ॥ २२ ॥

चतुरष्टाष्टवृत्तश्च तत्त्वत्रयगुणात्मकम्। लिङ्गानामीप्सितं दैर्घ्यं तेन कृत्वाऽङ्गुलानि वै ॥

ध्वजाद्यायैः सुरैर्भूतैः शिखिभिर्वा हरेत् कृतिम्।

तान्यङ्गुलानि यच्छेषं लक्षयेच्च शुभाशुभम् ॥ २४ ॥

ध्वजाद्या ध्वसिंहेभवृषाः श्रेष्ठाः परे शुभाः। स्वरेषु षड्जगान्धारपञ्चमाः शुभदाहकाः

भूतेषु च शुभा भूः स्याद्ग्निष्वाहवनीयकः।

उक्ता यामस्य चार्द्धांशे नागांशैर्भाजिते क्रमात् ॥२६ ॥

रसभूतांशषष्ठांशत्र्यंशाधिकशरैर्भवेत्। आढ्यानाढ्यसुरेज्यार्कतुलानाञ्चतुरस्त्रता ॥२७॥

पञ्चमं वर्द्धमानाख्यं व्यासान्नाहप्रवृद्धितः। द्विधा भेदा बहून्यत्र वक्ष्यन्ते विश्वकर्मतः

आढ्यादीनां त्रिधा स्थौल्याद्यवधूतं तदष्टधा ।
त्रिधा ह्रस्वाज्जिनाख्यश्च युक्तं सर्वसमेन च ॥ २९ ॥
पञ्चविंशतिलिङ्गानि नाद्ये देवार्चिते तथा । पञ्चसप्तभिरेकत्वाज्जिनैर्भक्तैर्भवन्ति हि॥३०
चतुर्दशसहस्राणि चतुर्दशशतानि च । एवमष्टाङ्गुलविस्तारो नवैककरगर्भतः ॥ ३१ ॥
तेषां कोणार्द्धकोणस्थैश्चिन्त्यात् कोणानि सूत्रकैः ।
विस्तारं मध्यतः कृत्वा स्थाप्यं वा मध्यतस्त्रयम् ॥ ३२ ॥
त्रिभागादूर्ध्वमष्टास्रो द्व्यष्टास्रः स्याच्छिवांशकः ।
पादाज्जान्वन्तको ब्रह्मा नाभ्यन्तो विष्णुरित्यतः ॥ ३३ ॥
मूर्द्धान्तो भूतभागेशो व्यक्तेऽव्यक्ते च तद्वति । पञ्चलिङ्गव्यवस्थायां शिरो वर्तुलमुच्यते
छत्राभं कुक्कुटाभं वा बालेन्दुप्रतिमाकृतिः । एकैकस्य चतुर्भेदैः काम्यभेदात् फलं वदे ॥
लिङ्गमस्तकविस्तारं वसुभक्तन्तुकारयेत् । आद्यभागं चतुर्द्धा तु विस्तारोच्छ्रायतोभजेत्
चत्वारि तत्र सूत्राणि भागभागानुपातनात् ।
पुण्डरीकन्तु भागेन विशालाख्यं विलोपनात् ॥ ३७ ॥
त्रिशातनात् तु श्रीवत्सं शत्रुकृद्वेदलोपनात् । शिरः सर्वसमे श्रेष्ठं कुक्कुटाभं सुराह्वये ॥
चतुर्भागात्मके लिङ्गेत्रपुषं द्वयलोपनात् । अनाद्यस्य शिरः प्रोक्तमर्द्धचन्द्रं शिरः शृणु ॥
अंशात् प्रान्ते युगांशैश्च त्वेकहान्यामृताक्षकम् ।
पूर्णबालेन्दुकुमुदं द्वित्रिवेदक्षयात् क्रमात् ॥ ४० ॥
चतुस्त्रिरेकवदनं मुखलिङ्गमतः शृणु । पूजाभागं प्रकर्त्तव्यं मूर्त्त्यग्निपदकल्पितम्॥४१॥
अर्कांशं पूर्ववत् त्यक्त्वा षट् स्थानानि विवर्त्तयेत् ।
शिरोन्नतिः प्रकर्त्तव्या ललाटं नासिका ततः ॥ ४२ ॥
वदनं चिबुकं ग्रीवा युगभागैर्भुजाक्षिभिः । कराभ्यां मुकुलीकृत्य प्रतिमायाः प्रमाणतः
मुखं प्रति समः कार्यो विस्तारादष्टमांशतः । चतुर्मुखं मया प्रोक्तं त्रिमुखञ्चोच्यते शृणु
कर्णपादाधिकास्तस्य ललाटादीनि निर्दिशेत् ।
भुजौ चतुर्भिर्भागैस्तु कर्त्तव्यौ पश्चिमोज्जितम् ४५ ॥

विस्तरादष्टमांशेन मुखानां प्रतिनिर्गमः । एकवक्त्रं तथा कार्य्यं पूर्वस्यां सौम्यलोचनम्
ललाटनासिकावक्त्रग्रीवायाञ्च विवर्त्तयेत् । भुजाच्च पञ्चमांशेन भुजहीनं विवर्त्तयेत् ॥
विस्तारस्य षड़ंशेन मुखैर्निर्गमनं हितम् । सर्वेषां मुखलिङ्गानां त्रपुषं चाथ कुक्कुटम् ॥

इत्यादिमहापुराणे आग्नेये व्यक्ताव्यक्तलक्षणं नाम चतुःपञ्चाशत्तमोऽध्यायः ।

---

## पञ्चपञ्चाशत्तमोऽध्यायः

### पिण्डिकालक्षणकथनम ।

भगवानुवाच ।

अतःपरं प्रवक्ष्यामि प्रतिमानान्तुपिण्डिकाम् । दैर्घ्येणप्रतिमातुल्या तदर्द्धेन तु विस्तृता
उच्छ्रितायामतोऽर्द्धेन सुविस्ताराद्र्धभागतः । तृतीयेन तु वा तुल्यं तत्त्रिभागेण मेखला॥
खातं च तत्प्रमाणं तु किञ्चिदुत्तरतो नतम् । विस्तारस्य चतुर्थेन प्रणालस्यविनिर्गमः
सममूलस्य विस्तारमग्रे कुर्य्यात् तदर्द्धतः । विस्तारस्य तृतीयेन तोयमार्गन्तु कारयेत्

पिण्डिकार्द्धेन वा तुल्यं दैर्घ्यमीशस्य कीर्तितम् ।
ईशं वा तुल्यदीर्घञ्च ज्ञात्वा सूत्रं प्रकल्पयेत् ॥ ५ ॥
उच्छ्रायं पूर्ववत् कुर्य्याद् भागषोड़शसङ्ख्यया ।
अधः षट्कं द्विभागन्तु कण्ठं कुर्यात् त्रिभागकम् ॥ ६ ॥

शेषास्त्वेकैकशःकार्याःप्रतिष्ठानिर्गमास्तथा । पट्टिकापिण्डिका चेयंसामान्यप्रतिमासु च
प्रासादद्वारमानेन प्रतिमाद्वारमुच्यते । गजव्यालकसंयुक्ता प्रभा स्यात् प्रतिमासु च ॥
पिण्डिकाऽपि यथाशोभं कर्त्तव्या सततं हरेः । सर्वेषामेव देवानां विष्णूक्तं मानमुच्यते

देवीनामपि सर्वासां लक्ष्म्युक्तं मानमुच्यते ॥ ९ ॥

इत्यादिमहापुराणे आग्नेये पिण्डिकालक्षणं नाम पञ्चपञ्चाशत्तमोऽध्यायः ।

---

# षट्पञ्चाशत्तमोऽध्यायः

## दिक्पालयागकथनम् ।

भगवानुवाच ।

प्रतिष्ठापञ्चकंवक्ष्ये प्रतिमात्मा तु पूरुषः । प्रकृतिःपिण्डिकालक्ष्मीःप्रतिष्ठायोगकस्तयोः

इच्छाफलार्थिभिस्तस्मात् प्रतिष्ठा क्रियते नरैः ।

गर्भसूत्रं तु निःसार्य्य प्रासादस्याग्रतो गुरुः ॥ २ ॥

अष्टषोड़शविंशान्तं मण्डपञ्चाधमादिकम् । स्नानार्थं कलशार्थञ्च यागद्रव्यार्थमर्द्धतः ॥

त्रिभागेणार्द्धभागेन वेदिं कुर्यात् तु शोभनाम् ।

कलशैर्घटिकाभिश्च वितानाद्यैश्च भूषयेत् ॥ ४ ॥

पञ्चगव्येनसम्प्रोक्ष्यसर्वद्रव्याणिधारयेत् । अलङ्कृतोगुरुर्विष्णुंध्यात्वाऽऽत्मानंप्रपूजयेत्

अङ्गुलीयप्रभृतिभिर्मूर्त्तिपान् बलयादिभिः ।

कुण्डे कुण्डे स्थापयेच्च मूर्त्तिपांस्तत्र पारगान् ॥ ६ ॥

चतुष्कोणे चार्द्धकोणे वर्तुले पद्मसन्निभे । पूर्वादौ तोरणार्थन्तु पिप्पलोदुम्बरौ वटम्

प्लक्षं सुशोभनं पूर्वं सुभद्रन्दक्षतोरणम् । सुकर्म च सुहोत्रञ्च आप्ये सौम्येसमुच्छ्रयम्

पञ्चहस्तं तु संस्थाप्य स्योनापृथ्वीति पूजयेत् ।

तोरणस्तम्भमूले तु कलशान्मंगुलांकुरान् ॥ ६ ॥

प्रदद्यादुपरिष्टाच्च कुर्य्याच्चक्रं सुदर्शनम् । पञ्चहस्तप्रमाणन्तु ध्वजं कुर्याद् विचक्षणः ॥

वैपुल्यं चास्य कुर्वीत षोड़शांगुलसम्मितम् । सप्तहस्तोच्छ्रितंवास्यकुर्यात्कुण्डंसुरोत्तम

अरुणोऽग्निनिभश्चैव कृष्णः शुक्लोऽथ पीतकः । रक्तवर्णस्तथाश्वेतःश्वेतवर्णादिकक्रमात्

कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः । शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ।१२

पूज्या कोटिगुणैर्युक्ताः पूर्वाद्या ध्वजदेवताः । जलाढ़कसुपूरास्तु पक्वबिम्बोपमा घटाः

अष्टाविंशाधिकशतैँकालमण्डनवर्जिताः । सहिरण्यावस्त्रकण्ठाःसोदकास्तोरणाद्बहिः

घटाः स्थाप्याश्च पूर्वादौ वेदिकायाश्च कोणगान् ।
चतुरः स्थापयेत् कुम्भानाजिघ्रेति च मन्त्रतः ॥ १६ ॥
कुम्भेष्वावाह्य शक्रादीन् पूर्वादौ पूजयेत् क्रमात् ।
इन्द्रागच्छ देवराज ! वज्रहस्त ! गजस्थित ! ॥ १७ ॥
पूर्वद्वारञ्च मे रक्ष देवैः सह नमोऽस्तु ते ! । त्रातारमिन्द्रमन्त्रेण अर्चयित्वा यजेद् बुधः
आगच्छाग्ने ! शक्तियुत ! छागस्थ ! बलसंयुत ! ।
रक्षाग्नेयीं दिशं देवैः पूजां गृह्ण नमोऽस्तु ते ॥ १९ ॥
अग्निर्मूर्द्धेति मन्त्रेण यजेद् वा अग्नये नमः । महिषस्थ ! समागच्छदण्डहस्त ! महाबल
रक्ष त्वं दक्षिणद्वारं वैवस्वत! नमोऽस्तु ते । वैवस्वतं सङ्गमनमित्यनेन यजेद् यमम् ॥
नैर्ऋतागच्छ खड्गाढ्य ! बलवाहनसंयुत !। इदमर्घ्यमिदं पाद्यं रक्ष त्वं नैर्ऋतीं दिशम्
एष ते नैर्ऋते ! मन्त्रेण यजेदर्घ्यादिभिर्नरः । मकरारूढ़ ! वरुण ! पाशहस्त ! महाबल
आगच्छ पश्चिमं द्वारं रक्ष रक्ष नमोऽस्तु ते । उरुं हि राजावरुणं यजेदर्घ्यादिभिर्गुरुः
आगच्छ वायो ! सबल ! ध्वजहस्त ! सवाहन ! ।
वायव्यं रक्ष देवैस्त्वं समरुद्भिर्नमोऽस्तु ते ॥ २५ ॥
वात इत्यादिभिश्चार्चेदोन्नमो वायवेऽपि वा । आगच्छसोम ! सबल! गदाहस्तसवाहन
रक्ष त्वमुत्तरद्वारं सकुवेर ! नमोऽस्तु ते । सोमं राजानमितिवा यजेत् सोमाय वै नमः
आगच्छेशान ! सबल ! शूलहस्त ! वृषस्थित !। यज्ञमण्डपस्यैशानींदिशंरक्ष नमोऽस्तुते
ईशानमस्येति यजेदीशानाय नमोऽपि वा । ब्रह्मन्नागच्छ हंसस्थ ! स्रुक्स्रुवव्यग्रहस्तक
सलोकोर्ध्वां दिशं रक्ष यज्ञस्याज ! नमोऽस्तु ते ।
हिरण्यगर्भेति यजेन्नमस्ते ब्रह्मणेऽपि वा ॥ ३० ॥
अनन्तागच्छ चक्राढ्य ! कूर्म्मस्थाहिगणेश्वर ! । अधोदिशंरक्ष रक्ष अनन्तेश नमोस्तुते
नमोस्तु सर्पेति यजेदनन्ताय नमोऽपि वा ॥ ३१ ॥
इत्यादिमहापुराणे आग्नेये दिक्पतियागो नाम षट्पञ्चाशत्तमोऽध्यायः ।

———

# सप्तपञ्चाशत्तमोऽध्यायः

## कुम्भादिवासविधिः ।

भगवानुवाच ।

भूमेः परिग्रहं कुर्य्यात् क्षिपेद् व्रीहींश्च सर्षपान् ।
नारसिंहेन रक्षोघ्नान् प्रोक्षयेत् पञ्चगव्यतः ॥ १ ॥

भूमिं घटे तु सम्पूज्य सरत्ने साङ्गकं हरिम् । अस्त्रमन्त्रेण करकं तत्र चाष्टशतं यजेत् ॥

अच्छिन्नधारया सिञ्चन् व्रीहीन् संस्कृत्य धारयेत् ।
प्रदक्षिणं परिभ्राम्य कलशं विकिरोपरि ॥ ३ ॥

सवस्त्रे कलशे भूयः पूजयेदच्युतंश्रियम् । योगे योगेति मन्त्रेण न्यसेच्छय्यान्तुमण्डले

कुशोपरि तूलिकाञ्च शय्यायां दिग्विदिक्षु च ।
विद्याधिपान् यजेद्विष्णुं मधुघातं त्रिविक्रमम् ॥ ५ ॥

वामनं दिक्षु वाय्वादौ श्रीधरञ्च हृषीकपम् । पद्मनाभं दामोदरमैशान्यां स्नानमण्डपे ॥

अभ्यर्च्यपश्चादैशान्यां चतुष्कुम्भेसवेदिके । स्नानमण्डपके सर्व्वद्रव्याण्यानीय निक्षिपेत्

स्नानकुम्भेषु कुम्भास्तांश्चतुर्दिक्ष्वधिवासयेत् ।
कलशाः स्थापनीयास्तु अभिषेकार्थमादरात् ॥ ८ ॥

वटोदुम्बरकाश्वत्थांश्चम्पकाशोकश्रीद्रुमान् । पलाशार्जुनप्लक्षांस्तु कदम्बवकुलाम्रकान्

पल्लवांस्तु समानीय पूर्वकुम्भे विनिक्षिपेत् । पद्मकं रोचनां दूर्वां दर्भपिञ्जलमेव च ॥

जातीपुष्पं कुन्दपुष्पञ्चन्दनं रक्तचन्दनम् । सिद्धार्थं तगरञ्चैव तण्डुलं दक्षिणे न्यसेत् ॥

सुवर्णं रजतञ्चैव कूलद्वयमृदन्तथा । नद्याः समुद्रगामिन्या विशेषात् जाह्नवीमृदम् ॥

गोमयञ्च यवान् शालींस्तिलांश्चैवापरे न्यसेत् ।
विष्णुपर्णीं श्यामलतां भृङ्गराजं शतावरीम् ॥ १३ ॥

सहदेवांमहादेवीं बलां व्याघ्नींसलक्ष्मणाम् । ऐशान्यामपरेकुम्भे मङ्गल्यान्विनिवेशयेत्

वल्मीकमृत्तिकां सप्तस्थानोत्थामपरे न्यसेत् । जाह्नवीवालुकातोयं विन्यसेदपरे घटे ॥
वराहवृषनागेन्द्रविषाणोद्धृतमृत्तिकाम् । मृत्तिकां पद्ममूलस्य कुशस्य त्वपरे न्यसेत् ॥
तीर्थपर्वतमृद्भिश्च युक्तमप्यपरे न्यसेत् । नागकेशरपुष्पञ्च काश्मीरमपरे न्यसेत् ॥ १७ ॥
चन्दनागुरुकर्पूरैः पुष्पं चैवापरे न्यसेत् । वैदूर्यं विद्रुमं मुक्तां स्फटिकं वज्रमेव च ॥१८॥
एतान्येकत्र निक्षिप्य स्थापयेद् देवसत्तम ! । नदीनदतड़ागानां सलिलैरपरं न्यसेत् ॥

एकाशीतिपदे चान्यान्मण्डपे कलशान् न्यसेत् ।
गन्धोदकाद्यैः सम्पूर्णान् श्रीसूक्तेनाभिमन्त्रयेत् ॥ २० ॥
यवं सिद्धार्थकं गन्धं कुशाग्रं चाक्षतं तथा ।
तिलान् फलं तथा पुष्पमर्घ्यार्थं पूर्वतो न्यसेत् ॥ २१ ॥

पद्मं श्यामलतां दूर्वां विष्णुपर्णीं कुशांस्तथा । पाद्यार्थं दक्षिणे भागे मधुपर्कं तु दक्षिणे
कङ्कोलकं लवङ्गञ्च तथा जातीफलं शुभम् । उत्तरे ह्याचमनाय अग्नौ दूर्वाक्षतान्वितम् ॥
पात्रं नीराजनार्थं च तथोद्वर्त्तनमानिले । गन्धपुष्पान्वितं पात्रमैशान्यां पात्रके न्यसेत्
सुरामांसीं चामलकं सहदेवां निशादिकम् । षष्टिदीपान्न्यसेदष्टौ न्यसेन्नीराजनाय च ॥
शङ्खं चक्रञ्च श्रीवत्सं कुलिशं पङ्कजादिकम् । हेमादिपात्रे कृत्वा तु नानावर्णादिपुष्पकम्

इत्यादिमहापुराणे आग्नेये कलशाधिवासो नाम सप्तपञ्चाशत्तमोऽध्यायः ।

———

## अष्टपञ्चाशत्तमोऽध्यायः

### स्नानादिविधिः ।

भगवानुवाच ।

ऐशान्यांजनयेत् कुण्डं गुरुर्वह्निञ्चवैष्णवम् । गायत्र्याष्टशतंहुत्वा सम्पातविधिना घटान्
प्रोक्षयेत्कारुशालायां शिल्पिभिर्मूर्त्तिपैर्व्रजेत् । तूर्य्यशब्दैःकौतुकञ्च बन्धयेद् दक्षिणेकरे

विष्णवे शिपविष्टेति ऊर्णासूत्रेण सर्षपैः ।

पट्टवस्त्रेण कर्तव्यं देशिकस्यापि कौतुकम् ॥ ३ ॥

मण्डपे प्रतिमां स्थाप्य सवस्त्रां पूजितां स्तुवन् ।

नमस्तेऽर्च्ये ! सुरेशानि ! प्रणीते ! विश्वकर्मणा ! ॥ ४ ॥

प्रभाविताशेषजगद्धात्रि ! तुभ्यं नमो नमः । त्वयि सम्पूजयामीशे ! नारायणमनामयम्

रहिता शिल्पिदोषैस्त्वमृद्धियुक्ता सदा भव ।

एवं विज्ञाप्य प्रतिमां नयेत् तां स्नानमण्डपम् ॥ ६ ॥

शिल्पिनं तोषयेद् द्रव्यैर्गुरवे गां प्रदापयेत् । चित्रं देवेति मन्त्रेण नेत्रे चोन्मीलयेत् ततः अग्निर्ज्योतीति दृष्टिञ्च दद्याद् वै भद्रपीठके । ततः शुक्लानि पुष्पाणि घृतं सिद्धार्थकंतथा दूर्वां कुशाग्रं देवस्य दद्याच्छिरसिदेशिकः । मधुवातेति मन्त्रेण नेत्रे चाभ्यञ्जयेद्गुरुः ॥ ९

हिरण्यगर्भमन्त्रेण इमं मेति च कीर्त्तयेत् । घृतेनाभ्यञ्जयेत् पश्चात् पठन् घृतवतीं पुनः मसूरपिष्टेनोद्वर्त्य अतो देवेति कीर्त्तयन् । क्षालयेदुष्णतोयेन सप्त तेऽग्नेति देशिकः ॥

द्रुपदादिवेत्यनुलिम्पेदापोहिष्ठेति सेचयेत् ।

नदीजैस्तीर्थजैः स्नानं पावमानीति रत्नजैः ॥ १२ ॥

समुद्रं गच्छ चन्दनैस्तीर्थमृत्कलशेन च । शन्नो देवीः स्नापयेच्च गायत्र्याप्युष्णवारिणा पञ्चमृद्भिर्हिरण्येति स्नापयेत् परमेश्वरम् । सिकताद्भिरिमं मेति लक्ष्मीकोदघटेन च ॥

तद्विष्णोरिति ओषध्यद्भिर्या ओषधीति मन्त्रतः ।

यज्ञायज्ञेति काषायैः पञ्चभिर्गव्यकैस्ततः ॥ १५ ॥

पयःपृथिव्यां मन्त्रेण याः फलिनीफलाम्बुभिः । विश्वतश्चक्षुः सौम्येन पूर्वेण कलसेनच सोमं राजानमित्येवं विष्णो रराटं दक्षतः । हंसः शुचिः पश्चिमेन कुर्य्यादुद्वर्त्तनं हरेः ॥

मूर्द्धानन्दिवमन्त्रेण धात्रीं मांसीं च के ददेत् ।

मानस्तोकेति मन्त्रेण गन्धद्वारेति गन्धकैः ॥ १८ ॥

इदमापेति च घटैरेकाशीतिपदस्थितैः । एह्येहि भगवन् ! विष्णो ! लोकानुग्रहकारक ! यज्ञभागंगृहाणेमं वासुदेव ! नमोऽस्तु ते । अनेनावाह्य देवेशं कुर्यात् कौतुकमोचनम्

मुञ्चामि त्वेति सूक्तेन देशिकस्यापि मोचयेत् ।

हिरण्मयेन पाद्यं दद्यादतो देवेति चार्घ्यकम् ॥ २१ ॥

मधुवाता मधुपर्कं मयि गृह्णामि चाचमेत् । अक्षन्नमीमदन्तेति किरेद् दूर्वाक्षतं बुधः ॥

काण्डान्निर्मञ्छनंकुर्य्याद्गन्धंगन्धवतीतिचं । उन्नयामीतिमाल्यञ्चइदंविष्णुःपवित्रकम्

बृहस्पते ! वस्त्रयुग्मं वेदाहमित्युत्तरीयकम् । महाव्रतेन सकलीपुष्पं चौषधयः क्षिपेत्

धूपं दद्याद् धूरसीति विभ्राट्सूक्तेन चाञ्जनम् ।

युञ्जन्तीति च तिलकं दीर्घायुष्ट्वेति माल्यकम् ॥ २५ ॥

इन्द्रच्छत्रेति छत्रन्तु आदर्शन्तु विराजतः । चामरन्तु विकर्णेन भूषां रथन्तरेण च॥२६॥

व्यजनं वायुदैवत्यैर्मुञ्चामि त्वेति पुष्पकम् । वेदाद्यैः संस्तुतिं कुर्य्याद्धरेः पुरुषसूक्ततः

सर्वमेतत् समं कुर्य्यात् पिण्डिकादौ हरादिके ।

देवस्योत्थानसमये सौपर्णं सूक्तमुच्चरेत् ॥ २८ ॥

उत्तिष्ठेति समुत्थाप्य शय्यायां मण्डपे नयेत् । शाकुनेनैव सूक्तेन देवं ब्रह्मरथादिना ॥

अतो देवेति सूक्तेन प्रतिमां पिण्डिकां तथा ।

श्रीसूक्तेन च शय्यायां विष्णोस्तु शकलीकृतिः ॥ ३० ॥

मृगराजं वृषं नागं व्यजनं कलशं तथा । वैजयन्तीं तथा भेरीं दीपमित्यष्टमङ्गलम्॥३१॥

दर्शयेदश्वसूक्तेन पाददेशे त्रिपादिति । उखां पिधानकं पात्रमम्बिकां दर्विकां ददेत् ॥

मुषलोलूखलं दद्याच्छिलां सम्मार्जनीं तथा। तथा भोजनभाण्डानि गृहोपकरणानि च

शिरोदेशे च निद्राख्यं वस्त्ररत्नयुतंघटम् । खण्डखाद्यैःपूरयित्वा स्नपनस्यविधिःस्मृतः

इत्यादिमहापुराणे आग्नेये स्नपनादिविधानं नाम अष्टपञ्चाशत्तमोऽध्यायः ।

---

## ऊनषष्टितमोऽध्यायः

### अधिवासनकथनम् ।

भगवानुवाच ।

हरेः सान्निध्यकरणमधिवासनमुच्यते । सर्वज्ञं सर्वगं ध्यात्वा आत्मानं पुरुषोत्तमम् ॥

ओंकारेण समायोज्य चिच्छक्तिमभिमानिनीम् ।
निःसार्य्यात्मैकतां कृत्वा स्वस्मिन् सर्वगते विभौ ॥ २ ॥
योजयेन् महता पृथ्वीं वह्निवीजेन दीपयेत् । संहरेद्वायुना चाग्निं वायुमाकाशतो नयेत्
अधिभूतादिदेवैस्तु साध्याख्यैर्विभवैः सह ।
तन्मात्रपात्रकान् कृत्वा संहरेत् तत्क्रमाद् वुधः ॥ ४ ॥
आकाशं मनसाहृत्य मनोऽहङ्करणे कुरु । अहङ्कारञ्च महति तञ्चाप्यव्याकृते नयेत् ॥५॥
अव्याकृतं ज्ञानरूपे वासुदेवः स ईरितः । स तामव्याकृतिं मायामवभ्यष्ट सिसृक्षया ॥
सङ्कर्षणं स शब्दात्मा स्पर्शाख्यमसृजत् प्रभुः ।
क्षोभ्य मायां स प्रद्युम्नं तेजोरूपं स चासृजत् ॥ ७ ॥
अनिरुद्धं रसमात्रं ब्रह्माणं गन्धरूपकम् । अनिरुद्धः स च ब्रह्मा अप आदौ ससर्ज ह ॥
तस्मिन् हिरण्मयश्चाण्डं सोऽसृजत् पञ्चभूतवत् ।
तस्मिन् सङ्क्रामिते जीवे शक्तिरात्मोपसंहृता ॥ ९ ॥
प्राणो जीवेन संयुक्तो वृत्तिमानिति शब्द्यते ।
जीवोव्याहृतिसञ्ज्ञस्तु प्राणेष्वाध्यात्मिकः स्मृतः ॥ १० ॥
प्राणैर्युक्ता ततो बुद्धिः सञ्जाता चाष्टमूर्त्तिकी । अहङ्कारस्ततो जज्ञे मनस्तस्मादजायत
अर्थाःप्रजज्ञिरे पञ्च सङ्कल्पादियुतास्ततः । शब्दःस्पर्शश्च रूपञ्च रसो गन्ध इति स्मृताः
ज्ञानशक्तियुतान्येतैरारब्धानीन्द्रियाणि तु ।
त्वक्श्रोत्रघ्राणचक्षूंषि जिह्वाबुद्धीन्द्रियाणि तु ॥ १३ ॥
पादौ पायुस्तथा पाणी वागुपस्थश्च पञ्चमः । कर्मेन्द्रियाणि चैतानि पञ्चभूतान्यतःशृणु
आकाशवायुतेजांसि सलिलं पृथिवी तथा । स्थूलमेभिः शरीरन्तु सर्वाधारं प्रजायते ॥
एतेषां वाचका मन्त्रा न्यासायोच्यन्त उत्तमाः ।
जीवभूतं मकारन्तु देवस्य व्यापकं न्यसेत् ॥ १६ ॥
प्राणतत्त्वं भकारन्तु जीवोपाधिगतं न्यसेत् । हृदयस्थंवकारन्तु बुद्धितत्त्वं न्यसेद्बुधः
फकारमपि तत्रैव अहङ्कारमयं न्यसेत् । मनस्तत्त्वं पकारन्तु न्यसेत् सङ्कल्पसम्भवम् ॥

शब्दतन्मात्रतत्त्वं तु नकारं मस्तकेन्यसेत् । स्पर्शात्मकंधकारन्तु वक्त्रदेशे तु विन्यसेत्
दकारं रूपतत्त्वं तु हृद्देशे विनिवेशयेत् । थकारं वस्तिदेशे तु रसतन्मात्रकं न्यसेत् ॥
तकारं गन्धतन्मात्रं जङ्घयोर्विनिवेशयेत् । णकारं श्रोत्रयोर्न्यस्य ढकारं विन्यसेत्त्वचि

डकारं नेत्रयुग्मे तु रसनायां ठकारकम् ।
टकारं नासिकायान्तु ञकारं वाचि विन्यसेत् ॥ २२ ॥

झकारं करयोर्न्यस्य पाणितत्त्वं विचक्षणः । जकारं पदयोर्न्यस्य छं पायौ चमुपस्थके
विन्यसेत् पृथिवीतत्त्वं ङकारंपादयुग्मके । वस्तौ घकारं गं तत्त्वं तैजसं हृदिविन्यसेत्
खकारं वायुतत्त्वञ्च नासिकायां निवेशयेत् । ककारं विन्यसेन्नित्यं खतत्त्वं मस्तकेबुधः

हृत्पुण्डरीके विन्यस्य यकारं सूर्य्यदैवतम् ।
द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः ॥ २६ ॥

कलाषोड़शसंयुक्तं मकारं तत्र विन्यसेत् । तन्मध्ये चिन्तयेन्मन्त्री विन्दुं वह्नेस्तु मंडलम्
हकारं विन्यसेत् तत्र प्रणवेन सुरोत्तमम् । ओं आं परमेष्ठ्यात्मने आं नमः पुरुषात्मने ॥

ओं वां मनोनिवृत्त्यात्मने नाञ्च विश्वात्मने नमः ।
ओं वं नमः सर्वात्मने इत्युक्ताः पञ्च शक्तयः ॥ २९ ॥

स्थाने तु प्रथमा योज्या द्वितीया आसने मता । तृतीया शयने तद्वच्चतुर्थी पानकर्म्मणि

प्रत्यर्च्चायां पञ्चमीस्यात् पञ्चोपनिषदः स्मृतः ।
हूङ्कारं विन्यसेन्मध्ये ध्यात्वा मन्त्रमयं हरिम् ॥ ३१ ॥
यां मूर्त्तिं स्थापयेत् तस्मात् मूलमन्त्रं न्यसेत् ततः ।
ओं नमो भगवते वासुदेवाय मूलकम् ॥ ३२ ॥

शिरोघ्राणललाटेषु मुखकण्ठहृदि क्रमात् । भुजयोर्जङ्घयोरङ्घ्र्योः केशवंशिरसि न्यसेत्

नारायणं न्यसेद् वक्त्रे ग्रीवायां माधवं न्यसेत् ।
गोविन्दं भुजयोर्न्यस्य विष्णुञ्च हृदये न्यसेत् ॥ ३४ ॥

मधुसूदनकं पृष्ठे वामनं जठरे न्यसेत् । कट्यां त्रिविक्रमं न्यस्यजङ्घायां श्रीधरं न्यसेत्
हृषीकेशं दक्षिणायां पद्मनाभन्तु गुल्फके । दामोदरं पादयोश्च हृदयादिषडङ्गकम् ॥ ३६ ॥

एतत् साधारणं प्रोक्तमादिमूर्त्तेस्तु सत्तम ! । अथवायस्य देवस्य प्रारब्धं स्थापनंभवेत्
तस्यैव मूलमन्त्रेण सजीवकरणं भवेत् ।
यस्या मूर्त्तेऽस्तु यन्नाम तस्याद्यं चाक्षरञ्च यत् ॥ ३८ ॥
तत् स्वरैर्द्वादशैर्भेद्य ह्यङ्गानि परिकल्पयेत् । हृदयादीनि देवेश ! मूलञ्च दशमाक्षरम् ॥
यथा देवे तथा देहे तत्त्वानिविनियोजयेत् । चक्राब्जमण्डलेविष्णुं यजेद्गन्धादिनातथा
पूर्ववच्चासनं ध्यायेत्सगात्रं सपरिच्छदम् ।
शुभञ्चक्रं द्वादशारं ह्युपरिष्टाद् विचिन्तयेत् ॥ ४१ ॥
त्रिनाभिचक्रं द्विनेमि स्वरैस्तच्च समन्वितम् । पृष्ठदेशेततःप्राज्ञःप्रकृत्यादीन् निवेशयेत् ॥
पूजयेदारकाग्रेषु सूर्य्यं द्वादशधा पुनः । कलाषोड़शसंयुक्तं सोमं तत्र विचिन्तयेत् ॥४३
सबलं त्रितयं नाभौ चिन्तयेद् देशिकोत्तमः । पद्मञ्च द्वादशदलं पद्ममध्ये विचिन्तयेत् ॥
तन्मध्ये पौरुषीं शक्तिं ध्यात्वाऽभ्यचर्य च देशिकः ।
प्रतिमायां हरिं न्यस्य तत्र तं पूजयेत् सुरान् ॥ ४५ ॥
गन्धपुष्पादिभिः सम्यक् साङ्गं सावरणं क्रमात् ।
द्वादशाक्षरबीजैस्तु केशवादीन् समर्च्चयेत् ॥ ४६ ॥
द्वादशारे मण्डले तु लोकपालादिकंक्रमात् । प्रतिमामर्च्चयेत्पश्चाद्गन्धपुष्पादिभिर्द्विजः
पौरुषेणतु सूक्तेन श्रियासूक्तेन पिण्डिकाम् । जननादिक्रमात् पश्चाज्जनयेद्वैष्णवानलम्
हुत्वाग्निं वैष्णवैर्मन्त्रैः कुर्य्याच्छान्त्युदकं बुधः ।
तत् सिक्त्वा प्रतिमामूर्द्धिन वह्निप्रणयनं चरेत् ॥ ४९ ॥
दक्षिणेऽग्निं हुतमिति कुण्डेऽग्निं प्रणयेद् बुधः ।
अग्निमग्नीति पूर्वे तु कुण्डेऽग्निं प्रणयेद् बुधः ॥ ५० ॥
उत्तरे प्रणयेदग्निमग्निमग्नी हवामहे । अग्निप्रणयने मन्त्रस्त्वमग्ने ! ह्यग्निरुच्यते ॥
पलाशसमिधानान्तु अष्टोत्तरसहस्रकम् । कुण्डे कुण्डे होमयेच्च व्रीहीन् वेदादिकैस्तथा
साज्यांस्तिलान्व्याहृतिभिर्मूलमन्त्रेण वै घृतम् । कुर्य्यात्ततःशान्तिहोमंमधुरत्रितयेन च
द्वादशार्णैः स्पृशेत् पादौ नाभिं हृन्मस्तकं ततः । घृतं दधिपयोहुत्वास्पृशेन्मूर्द्धन्यथोततः

स्पृष्ट्वा शिरोनाभिपादांश्चतस्रः स्थापयेन्नदीः। गङ्गा च यमुना गोदाक्रमाज्ज्ञाज्ञालसरस्वती
दहेत् तु विष्णुगायत्र्या गायत्र्या श्रपयेच्चरुम्।
होमयेच्च बलिं दद्यादुत्तरे भोजयेद् द्विजान्॥ ५६॥
सामाधिपानां तुष्ट्यर्थं हेमगां गुरवे ददेत्। दिक्पतिभ्योबलिंदत्वा रात्रौकुर्याच्चजागरम्
ब्रह्मगीतादिशब्देन सर्वभागधिवासनात्॥ ५७॥
इत्यादिमहापुराणे आग्नेये अधिवासनं नाम ऊनषष्टितमोऽध्यायः।

---

## षष्टितमोऽध्यायः

### वासुदेवप्रतिष्ठादिविधिः।

भगवानुवाच।

पिण्डिकास्थापनार्थन्तु गर्भाकारन्तु सप्तधा। विभजेद् ब्रह्मभागेनुप्रतिमांस्थापयेद्बुधः
देवमानुषपैशाचभागेषु न कदाचन। ब्रह्मभागं परित्यज्य किञ्चिदाश्रित्य चाण्डजम्॥
देवमानुषभागाभ्यां स्थाप्या यत्नात् तु पिण्डिका।
नपुंसकशिलायान्तु रत्नन्यासं समाचरेत्॥ ३॥
नारसिंहेन हुत्वाऽथ रत्नन्यासञ्च तेन वै।
व्रीहीन् रत्नांस्त्रिधातूंश्च लोहादींश्चन्दनादिकान्॥ ४॥
पूर्वादिनवगर्त्तेषु न्यसेन् मध्ये यथारुचि। अथ चेन्द्रादिमन्त्रैश्च गर्त्तो गुग्गुलुनावृतः॥
रत्नन्यासविधिं कृत्वा प्रतिमामालभेद् गुरुः। सशलाकैर्दर्भपुञ्जैः सहदेवैः समन्वितैः
सवाह्यान्तैश्च संस्कृत्य पञ्चगव्येन शोधयेत्। प्राक्षयेद् दर्भतोयेन नदीतीर्थोदकेन च॥
होमार्थे स्थण्डिलं कुर्य्यात् सिकताभिः समन्ततः।
सार्द्धहस्तप्रमाणन्तु चतुरस्रं सुशोभनम्॥ ८॥
अष्टदिक्षु यथान्यासं कलशानपि विन्यसेत्। पूर्वाद्यानष्टवर्णेन अग्निमानीय संस्कृतम्

त्वमग्नेद्युभिरिति गायत्र्या समिधो हुनेत्। अष्टार्णेनाष्टशतकमाज्यं पूर्णांप्रदापयेत्

शान्त्युदकमाम्रपत्रैः मूलेन शतमन्त्रितम्।
सिञ्चेद्देवस्य तन्मूर्द्धिन श्रीश्च ते ह्यनया ऋचा॥ ११॥

ब्रह्मयानेन चोद्धृत्य उत्तिष्ठ ब्रह्मणस्पते!। तद्विष्णोरिति मन्त्रेण प्रासादाभिमुखंनयेत्

शिविकायां हरिं स्थाप्य भ्रामयीत पुरादिकम्।
गीतवेदादिशब्दैश्च प्रासाद्द्वारि धारयेत्॥ १३॥

स्त्रीभिर्विप्रैर्मङ्गलाष्टघटैः संस्नापयेद्धरिम्। ततो गन्धादिनाभ्यर्च्य मूलमन्त्रेण देशिकः॥

अतो देवेति वस्त्राद्यमष्टाङ्गार्घ्यं निवेद्य च।
स्थिरे लग्ने पिण्डिकायां देवस्य त्वोत धारयेत्॥ १५॥
ओं त्रैलोक्यविक्रान्ताय नमस्तेऽस्तु त्रिविक्रम!।
संस्थाप्य पिण्डिकायान्तु स्थिरं कुर्य्याद्विचक्षणः॥ १६॥

ध्रुवा द्यौरिति मन्त्रेण विश्वतश्चक्षुरित्यपि। पञ्चगव्येन संस्नाप्य क्षाल्य गन्धोदकेन च

पूजयेत् सकलीकृत्य साङ्गं सावरणं हरिम्।
ध्यायेन् स्वं तस्य मूर्त्तिन्तु पृथिवी तस्य पीठिका॥ १८॥

कल्पयेद्विग्रहं तस्य तैजसैः परमाणुभिः। जीवमावाहयिष्यामि पञ्चविंशतितत्त्वगम्॥
चैतन्यं परमानन्दं जाग्रत्स्वप्नविवर्जितम्। देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितम्॥
ब्रह्मादिस्तम्बपर्य्यन्तं हृदयेषु व्यवस्थितम्। हृदयात् प्रतिमाबिम्बे स्थिरो भवपरेश्वरः॥

सजीवं कुरु बिम्बं त्वं सबाह्याभ्यन्तरस्थितः।
अङ्गुष्ठमात्रः पुरुषो देहोपाधिषु संस्थितः॥ २२॥

ज्योतिर्ज्ञानं परं ब्रह्म एकमेवाद्वितीयकम्। सजीवीकरणं कृत्वा प्रणवेन निबोधयेत्॥
सान्निध्यकरणं नाम हृदयं स्पृश्य वै जपेत्। सूक्तन्तु पौरुषं ध्यायन् इदं गुह्यमनुं जपेत्
नमस्तेऽस्तु सुरेशाय सन्तोषविभवात्मने। ज्ञानविज्ञानरूपाय ब्रह्मतेजोऽनुयायिने॥२५
गुणातिक्रान्तवेशाय पुरुषाय महात्मने। अक्षयाय पुराणाय विष्णो! सन्निहितो भव
यच्च ते परमं तत्त्वं यच्च ज्ञानमयं वपुः। तत् सर्वमेकतो लीनमस्मिन् देहे विबुध्यताम्॥

आत्मानं सन्निधीकृत्य ब्रह्मादिपरिवारकान् ।
स्वनाम्ना स्थापयेदन्यानायुधादीन् स्वमुद्रया ॥ २८ ॥
यात्रावर्षादिकं दृष्ट्वा ज्ञेयः सन्निहितो हरिः ।
नत्वा स्तुत्वा स्तवाद्यैश्च जप्त्वा चाष्टाक्षरादिकम् ॥ २९ ॥
चण्डप्रचण्डौ द्वारस्थौ निर्गत्याभ्यर्चयेद् गुरुः ।
अग्निमण्डपमासाद्य गरुडं स्थाप्य पूजयेत् ॥ ३० ॥
दिगीशान् दिशि देवांश्च स्थाप्य सम्पूज्य देशिकः ।
विश्वक्सेनं तु संस्थाप्य शङ्खचक्रादि पूजयेत् ॥ ३१ ॥
सर्वपार्षदकेभ्यश्च बलिं भूतेभ्य अर्पयेत् । ग्रामवस्त्रसुवर्णादि गुरवे दक्षिणां ददेत् ॥३२
यागोपयोगि द्रव्याद्यमाचार्य्याय नरोऽर्पयेत् ।
आचार्य्यदक्षिणार्द्धन्तु ऋत्विग्भ्यो दक्षिणां ददेत् ॥ ३३ ॥
अन्येभ्यो दक्षिणां दद्याद् भोजयेद् ब्राह्मणांस्ततः ।
अवारितान् फलान् दद्याद् यजमानाय वै गुरुः ॥ ३४ ॥
विष्णुं नयेत् प्रतिष्ठाता चात्मना सकलं कुलम् । सर्वेषामेव देवानामेषसाधारणो विधिः
मूलमन्त्राः पृथक् तेषां शेषं कार्य्यं समानकम् ॥ ३६ ॥
इत्यादिमहापुराणे आग्नेये वासुदेवप्रतिष्ठादिकथनं नाम षष्टितमोऽध्यायः ।

---

## एकषष्टितमोऽध्यायः

### द्वारप्रतिष्ठाध्वजारोहणादिविधिः ।

भगवानुवाच ।

वक्ष्ये चावभृथस्नानं विष्णोर्न त्वेति होमयेत् ।
एकाशीतिपदे कुम्भान् स्थाप्य संस्थापयेद्धरिम् ॥ १ ॥

पूजयेद् गन्धपुष्पाद्यैर्बलिं दत्त्वा गुरुं यजेत् । द्वारप्रतिष्ठां वक्ष्यामि द्वाराधो हेम वै ददेत्

अष्टभिः कलशैः स्थाप्य शाखोदुम्बरकौ गुरुः ।
गन्धादिभिः समभ्यर्च्य मन्त्रैर्वेदादिभिर्गुरुः ॥ ३ ॥
कुण्डेषु होमयेद् वह्निं समिल्लाजतिलादिभिः ।
दत्त्वा शय्यादिकञ्चाधो दद्यादाधारशक्तिकाम् ॥ ४ ॥

शाखयोर्विन्यसेन्मूले देवौ चण्डप्रचण्डकौ । ऊर्ध्वोदुम्बरके देवीं लक्ष्मीं सुरगणार्चिताम्

न्यस्याभ्यर्च्य यथान्यायं श्रीसूक्तेन चतुर्मुखम् ।
दत्त्वा तु श्रीफलादीनि आचार्यादेस्तु दक्षिणाम् ॥ ६ ॥
प्रतिष्ठासिद्धद्वारस्य त्वाचार्य्यः स्थापयेद्धरिम् ।
प्रासादस्य प्रतिष्ठन्तु हृत्प्रतिष्ठेति तां शृणु ॥ ७ ॥

समाप्तौ शुकनाशाया वेद्याः प्राग्दर्भमस्तके । सौवर्णं राजतं कुम्भमथवा शुक्रनिर्मितम् ॥
अष्टरत्नौषधीधातुवीजलौहान्वितं शुभम् । सवस्त्रं पूरितं चा द्विर्मण्डले चाधिवासयेत् ॥
सपल्लवं नृसिंहेन हुत्वा सम्पातसञ्चितम् । नारायणाख्यतत्त्वेन प्राणभूतं न्यसेत् ततः ॥
वैराजभूतं तं ध्यायेत् प्रासादस्य सुरेश्वर ! ततः पुरुषवत् सर्वं प्रासादं चिन्तयेद् बुधः

अधो दत्त्वा सुवर्णं तु तद्वद् भूतं घटं न्यसेत् ।
गुर्वादौ दक्षिणां दद्याद् ब्राह्मणादेश्च भोजनम् ॥ १२ ॥

ततः पश्चाद् वेदिबन्धं तदूर्ध्वं कण्ठबन्धनम् । कण्ठोपरिष्टात् कर्त्तव्यं विमलामलसारकम्
तदूर्ध्वं वृकलं कुर्य्याश्चक्रञ्चाद्यं सुदर्शनम् । मूर्त्तिं श्रीवासुदेवस्य ग्रहगुप्तां निवेदयेत् ॥

कलशं वाथ कुर्वीत तदूर्ध्वं चक्रमुत्तमम् ।
वेद्याश्च परितः स्थाप्या अष्टौ विघ्नेश्वरास्त्वज ! ॥ १५ ॥

चत्वारो वा चतुर्दिक्षु स्थापनीया गरुत्मतः । ध्वजारोहं च वक्ष्यामि येनभूतादिनश्यति

प्रासादबिम्बद्रव्याणां यावन्तः परमाणवः ।
तावद्वर्षसहस्राणि तत्कर्त्ता विष्णुलोकभाक् ॥ १७ ॥
कुम्भाण्डवेदिविम्बानां भ्रमणाद् वायुनाऽनघ ! ।

कण्ठस्यावेष्टनाज् ज्ञेयं फलं कोटिगुणं ध्वजात् ॥ १८ ॥

पताकां प्रकृतिं विद्धि दण्डं पुरुषरूपिणम् । प्रासादं वासुदेवस्य मूर्त्तिभेदं निबोध मे ॥
धारणाद्धरणीं विद्धि आकाशं शुषिरात्मकम् । तेजस्तत् पावकंविद्धि वायुंस्पर्शगतंतथा
पाषाणादिष्वेवजलंपार्थिवंपृथिवीगुणम् । प्रतिशब्दोद्भवं शब्दं स्पर्शंस्यात्कर्कशादिकम्
शुक्लादिकं भवेद्रूपं रसमन्नादिदर्शनम् । धूपादिगन्धं गन्धन्तु वाग् भेर्य्यादिषु संस्थिता॥

शुकनासाश्रिता नासा बाहू तद्रथकौ स्मृतौ ।
शिरस्त्वण्डं निगदितं कलशं मूर्द्धजं स्मृतम् ॥ २३ ॥
कण्ठं कण्ठमिति ज्ञेयं स्कन्धं वेदी निगद्यते ।
पायूपस्थे प्रणाले तु त्वक् सुधा परिकीर्त्तिता ॥ २४ ॥
मुखं द्वारं भवेदस्य प्रतिमा जीव उच्यते ।
तच्छक्तिं पिण्डिकां विद्धि प्रकृतिं च तदाकृतिम् ॥ २५ ॥
निश्चलत्वञ्च गर्भोऽस्या अधिष्ठाता तु केशवः ।
एवमेष हरिः साक्षात् प्रासादत्वेन संस्थितः ॥ २६ ॥
जङ्घा त्वस्य शिवो ज्ञेयः स्कन्धे धाता व्यवस्थितः ।
ऊर्द्ध्वभागे स्थितो विष्णुरेवं तस्य स्थितस्य हि ॥ २७ ॥
प्रासादस्य प्रतिष्ठान्तु ध्वजरूपेण मे शृणु ।
ध्वजं कृत्वा सुरैर्दैत्या जिताः शस्त्रादिचिह्नितम् ॥ २८ ॥
अण्डोर्द्ध्वं कलशं न्यस्य तदूर्द्ध्वं विन्यसेद् ध्वजम् ।
बिम्बार्द्धमानं दण्डस्य त्रिभागेनाथ कारयेत् ॥ २९ ॥

अष्टारं द्वादशारं वा मध्ये मूर्त्तिमतान्वितम् । नारसिंहेन तार्क्ष्येण ध्वजदण्डस्तु निर्व्रणः

प्रासादस्य तु विस्तारो मानं दण्डस्य कीर्त्तितम् ।
शिखरार्द्धेन वा कुर्य्यात् तृतीयार्द्धेन वा पुनः ॥ ३१ ॥

द्वारस्य दैर्घ्याद् द्विगुणं दण्डं वा परिकल्पयेत् । ध्वजयष्टिर्देवगृहेऐशान्यां वायवेऽथवा

क्षौमाद्यैश्च ध्वजं कुर्य्याद् विचित्रं वैकवर्णकम् ।

घण्टाचामरकिङ्किण्या भूषितं पापनाशनम् ॥ ३३ ॥
दण्डाग्राद्धस्तीयाबद्धस्तैकं विस्तरेण तु । महाध्वजःसर्वदःस्यात् तुर्य्यांशाद्धीनतोऽर्चितः
ध्वजे चार्द्धेन विज्ञेया पताका मानवर्जिता ।
विस्तारेण ध्वजः कार्य्यो विंशदङ्गुलसन्निभः ॥ ३५ ॥
अधिवासविधानेन चक्रं दण्डं ध्वजं तथा । देववत् सकलं कृत्वा मण्डपस्नपनादिकम्
नेत्रोन्मीलनकंत्यक्त्वापूर्वोक्तंसर्वमाचरेत् । अधिवासयेच्चविधिनाशय्यायांस्थाप्यदेशिकः
ततः सहस्रशीर्षेति सूक्तं चक्रे न्यसेद्बुधः । तथा सुदर्शनं मन्त्रं मनस्तत्त्वं निवेशयेत् ॥
मनोरूपेण तस्यैव सजीवकरणं स्मृतम् । अरेषु मूर्त्तयो न्यस्याः केशवाद्याः सुरोत्तम !।
नाभ्यब्जप्रतिनेमीषु न्यसेत् तत्त्वानि देशिकः। नृसिंहं विश्वरूपं वा अब्जमध्ये निवेशयेत्
सकलं विन्यसेद्दण्डेसूत्रात्मानंसजीवकम् । निष्कलंपरमात्मानंध्वजेध्यायन्न्यसेद्धरिम्
तच्छक्तिं व्यापिनीं ध्यायेत् ध्वजरूपां बलाबलम् ।
मण्डपे स्थाप्य चाभ्यर्च्य होमं कुण्डेषु कारयेत् ॥ ४२ ॥
कलशे स्वर्णकलशं न्यस्य रत्नानि पञ्च च । स्थापयेच्चक्रमन्त्रेण स्वर्णं चक्रमधस्ततः ॥
पारदेन तु संप्लाव्य नेत्रपट्टेन छादयेत् । ततो निवेशयेच्चक्रं तन्मध्ये नृहरिं स्मरेत् ॥
ओं क्ष्रौं नृसिंहाय नमः पूजयेत् स्थापयेद्धरिम् ।
ततो ध्वजं गृहीत्वा तु यजमानः सबान्धवः ॥ ४५ ॥
दधिभक्तयुते पात्रे ध्वजस्याग्रं निवेशयेत् । ध्रुवाद्येन फडन्तेन ध्वजं मन्त्रेण पूजयेत् ॥
शिरस्याधाय तत् पात्रं नारायणमनुस्मरन् । प्रदक्षिणन्तु कुर्वीत तुर्य्यमङ्गलनिःस्वनैः ॥
ततो निवेशयेत् दण्डं मन्त्रेणाष्टाक्षरेण तु ।
मुञ्चामि त्वेति सूक्तेन ध्वजं मुञ्चेद् विचक्षणः ॥ ४८ ॥
पात्रं ध्वजं कुञ्जरादिद्द्यादाचार्य्यके द्विजः । एष साधारणःप्रोक्तोध्वजस्यारोहणेविधिः
यस्य देवस्य यच्चिह्नं तन्मन्त्रेणस्थिरं चरेत् । स्वर्गत्वा ध्वजदानात्तु भुविराजाबलीभवेत्
इत्यादिमहापुराणे आग्नेये ध्वजारोहणं नाम एकषष्टितमोऽध्यायः ।

---

# द्विषष्टितमोऽध्यायः

## लक्ष्मीप्रतिष्ठाविधिः ।

भगवानुवाच ।

समुदायेन देवादेः प्रतिष्ठां प्रवदामि ते । लक्ष्म्याः प्रतिष्ठा प्रथमं तथा देवीगणस्य च ॥

पूर्ववत् सकलं कुर्य्यान्मण्डपस्नपनादिकम् ।

भद्रपीठे श्रियं न्यस्य स्थापयेदष्ट वै घटान् ॥ २ ॥

घृतेनाभ्यज्य मूलेन स्नपयेत् पञ्चगव्यकैः । हिरण्यवर्णां हरिणीं नेत्रे चोन्मीलयेच्छ्रियाः

तास्म आवह इत्येवं प्रदद्यान्मधुरत्रयम् । अश्वपूर्वेति पूर्वेण तां कुम्भेनाभिषेचयेत् ॥४॥

कामो (कांसो)ऽस्मितेति याम्येन पश्चिमेनाभिषेचयेत् ।

चन्द्रं (न्द्रां) प्रभासामुच्चार्य्यादित्यवर्णेति चोत्तरात् ॥ ५ ॥

उपैतुमतिचाग्नेयात् क्षुत्पिपासेतिनैर्ऋतात् । गन्धद्वारेतिवायव्यांमनसः काममाकूतिम्

ईशानकलशेनैव शिरः सौवर्णकर्दमात् । एकाशीतिघटैः स्नानं मन्त्रेणापः सृजन्क्षितिम्

आर्द्रां पुष्करिणीं गन्धैरार्द्रामित्यादिपुष्पकैः । तन्मयावहमन्त्रेण य आनन्दऋचाखिलम्

शायन्तीयेन शय्यायां श्रीसूक्तेन च सन्निधिम् ।

लक्ष्मीवीजेन चिच्छक्तिं विन्यस्याभ्यर्चयेत् पुनः ॥ ६ ॥

श्रीसूक्तेन मण्डपेऽथ कुण्डेष्वब्जानि होमयेत् । करवीराणि वा हुत्वा सहस्रं शतमेव वा

गृहोपकरणान्तादि श्रीसूक्तेनैव चार्पयेत् । ततः प्रासादसंस्कारं सर्वं कृत्वा तु पूर्ववत् ॥

मन्त्रेण पिण्डिकां कृत्वा प्रतिष्ठानं ततः श्रियः ।

श्रीसूक्तेन च सान्निध्यं पूर्ववत् प्रत्यृचं जपेत् ॥ १२ ॥

चिच्छक्तिं बोधयित्वातुमूलात्सान्निध्यकंचरेत् । भूस्वर्णवस्त्रगोऽन्नादिगुरवेब्रह्मणेऽर्पयेत्

एवं देव्योऽखिलाः स्थाप्यावाह्य स्वर्गादि भावयेत् ॥ १३ ॥

इत्यादिमहापुराणे आग्नेये लक्ष्मीस्थापनं नाम द्विषष्टितमोऽध्यायः ।

## त्रिषष्टितमोऽध्यायः

### सुदर्शनचक्रादिप्रतिष्ठाकथनम् ।

भगवानुवाच ।

एवं तार्क्ष्यस्य चक्रस्य ब्रह्मणो नृहरेस्तथा । प्रतिष्ठाविष्णुवत्कार्यास्वस्वमन्त्रेणतांश्शृणु सुदर्शन ! महाचक्र ! शान्त ! दुष्टभयङ्कर ! । छिन्द छिन्द भिन्दभिन्द विदारय विदारय परमन्त्रान् ग्रस ग्रस भक्षय भक्षय भूतान् । त्रासय त्रासय हूं फट् सुदर्शनाय नमः ॥

अभ्यच्चर्य चक्रं चानेन रणे दारयते रिपून् ॥ २ ॥

ओं क्ष्रौं नरसिंह ! उग्ररूप ! ज्वल ज्वल प्रज्वल प्रज्वल स्वाहा ॥

नरसिंहस्य मन्त्रोऽयं पातालाख्यस्य वच्मि ते ।

ओं क्ष्रौं नमो भगवते नरसिंहाय प्रदीप्तसूर्यकोटिसहस्रसमतेजसे वज्रनखदंष्ट्रायुधाय स्फुटविकटविकीर्णकेसरसटाप्रक्षुभितमहार्णवाम्भोददुन्दुभिनिर्घोषाय सर्वमन्त्रोत्तारणाय एह्येहि भगवन्नरसिंह ! पुरुषपरापरब्रह्मसत्येन स्फुर स्फुर विजृम्भ विजृम्भ आक्रम आक्रम गर्ज गर्ज मुञ्च मुञ्च सिंहनादान् विदारय विदारय विद्रावय विद्रावय आविश आविश सर्वमन्त्ररूपाणि सर्वमन्त्रजातयश्च हन हन छिन्द छिन्द सङ्क्षिप सङ्क्षिप सर सर दारय दारय स्फुट स्फुट स्फोटय स्फोटय ज्वालामालासङ्घातमय ! सर्वतोऽनन्तज्वालावज्राशनिचक्रेण सर्वपातालान् उत्सादय उत्सादय सर्वतोऽनन्तज्वालावज्रशरपञ्जरेण सर्वपातालान् परिवारय परिवारय सर्वपातालासुरवासिनां हृदयान्याकर्षय आकर्षय शीघ्रं दह दह पच पच मथ मथ शोषय शोषय निकृन्तय निकृन्तय तावद् यावन्मे वशमागताः पातालेभ्यः फट् असुरेभ्यः फट् मन्त्ररूपेभ्यः फट् मन्त्रजातिभ्यः फट् संशयान्मां भगवन्नरसिंहरूप ! विष्णो ! सर्वापद्भ्यः सर्व मन्त्ररूपेभ्यो रक्ष रक्ष हूं फट् नमोऽस्तु ते ॥

नरसिंहस्य विद्येयं हरिरूपार्थसिद्धिदा ॥ ३ ॥

त्रैलोक्यमोहनैर्मन्त्रैः स्थाप्य त्रैलोक्यमोहनः ।
गदी दक्षे शान्तिकरो द्विभुजो वा चतुर्भुजः ॥ ४ ॥
वामोदूर्ध्वे कारयेच्चक्रं पाञ्चजन्यमथो ह्यधः । श्रीपुष्टिसंयुतं कुर्य्याद् बलेन सह भद्रया
प्रासादे स्थापयेद् विष्णुं गृहे वा मण्डपेऽपि वा। वामनञ्चैववैकुण्ठंहयास्यमनिरुद्धकम्
स्थापयेज्जलशय्यास्थं मत्स्यादींश्चावतारकान् । सङ्कर्षणं विश्वरूपं लिङ्गं वै रुद्रमूर्त्तिकम्
अर्द्धनारीश्वरं तद्वद्धरिशङ्करमातृकाः । भैरवञ्च तथा सूर्य्यं ग्रहांस्तद्वद् विनायकम् ॥ ८ ॥
गौरीमिन्द्रादिकां लेप्यां चित्रजाञ्च बलाबलाम् ।
पुस्तकानां प्रतिष्ठाञ्च वक्ष्ये लिखनतद्विधिम् ॥ ९ ॥
स्वस्तिके मण्डलेऽभ्यर्च्य शरपत्रासनेस्थितम् । लेख्यञ्चलिखितंपुस्तंगुरुर्विद्यांहरिंयजेत्
यजमानो गुरुं विद्यां हरिं लिपिकृतं नरम् ।
प्राङ्मुखः पद्मिनीं ध्यायेत् लिखित्वा श्लोकपञ्चकम् ॥ ११ ॥
रौप्यस्थमस्या हैम्या च लेखन्या नागराक्षरम् ।
ब्राह्मणान् भोजयेच्छक्त्या शक्त्या दद्याच्च दक्षिणाम् ॥ १२ ॥
गुरुं विद्यां हरिं प्राच्य पुराणादि लिखेन्नरः । पूर्ववन्मण्डलाद्ये च ऐशान्यां भद्रपीठके
दर्पणे पुस्तकं दृष्ट्वा सेचयेत् पूर्ववद् घटैः । नेत्रोन्मीलनकं कृत्वा शय्यायान्तु न्यसेन्नरः
न्यसेत् तु पौरुषं सूक्तं वेदाद्यं तत्र पुस्तके । कृत्वा सजीवीकरणं प्राच्य हुत्वा चरुं ततः
सम्प्राश्य दक्षिणाभिस्तु गुर्वादीन् भोजयेद् द्विजान् ।
रथेन हस्तिना वापि भ्रामयेत् पुस्तकं नरैः ॥ १६ ॥
गृहे देवालयादौ तु पुस्तकं स्थाप्य पूजयेत् । वस्त्रादिवेष्टितं पाठादावन्ते समर्च्चयेत्
जगच्छान्तिश्चावधार्य्य पुस्तकं वाचयेन्नरः । अध्यायमेकं कुम्भाद्भिर्यजमानादि सेचयेत्
द्विजाथं पुस्तकं दत्त्वा फलस्यान्तो न विद्यते ।
त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ॥ १९ ॥
विद्यादानफलं दत्त्वा मस्यन्तं पत्रसञ्चयम् ।
यावत् तु पत्रसङ्ख्यानमक्षराणां तथाऽनघ ! ॥ २० ॥

तावद्वर्षसहस्राणि विष्णुलोके महीयते। पञ्चरात्रं पुराणानि भारतानि ददन्नरः॥
कुलैकविंशमुद्धृत्य परे तत्त्वे तु लीयते॥ २१॥
इत्यादिमहापुराणे आग्नेये देवादिप्रतिष्ठापुस्तकप्रतिष्ठाकथनं नाम त्रिषष्टितमोऽध्यायः॥

---

## चतुःषष्टितमोऽध्यायः

### कूपादिप्रतिष्ठाकथनम्।

भगवानुवाच।

कूपवापीतडागानां प्रतिष्ठां वच्मि तां शृणु। जलरूपेण हि हरिः सोमो वरुण उत्तमः
अग्नीषोममयं विश्वं विष्णुरापस्तु कारणम्। हैमं रौप्यं रत्नजं वा वरुणं कारयेन्नरः॥
द्विभुजं हंसपृष्ठस्थं दक्षिणेनाभयप्रदम्। वामेन नागपाशं तं नदीनागादिसंयुतम्॥ ३॥
यागमण्डपमध्ये स्याद् वेदिका कुण्डमण्डिता।
तोरणं वारुणं कुम्भं न्यसेच्च करकान्वितम्॥ ४॥
भद्रके चार्द्धचन्द्रे वा स्वस्तिके द्वारि कुम्भकान्।
अग्न्याधानं चाप्यकुण्डे कृत्वा पूर्णां प्रदापयेत्॥ ५॥
वरुणं स्नानपीठे तु ये ते शतेति संस्पृशेत्। घृतेनाभ्यञ्जयेत् पश्चान्मूलमन्त्रेण देशिकः
शन्नो देवीति प्रक्षाल्य शुद्धवत्याशिवोदकैः। अधिवासयेदष्टकुम्भान् सामुद्रंपूर्वकुम्भके
गाङ्गमग्नौ वर्षतोयं दक्षे रक्षस्तु नैर्ऋरम्। नदीतोयं पश्चिमे तु वायव्ये तु नदोदकम्॥
औद्भिज्जं चोत्तरे स्थाप्य ऐशान्यां तीर्थसम्भवम्।
अलाभे तु नदीतोयं यासां राजेति मन्त्रयेत्॥ ६॥
देवं निर्माज्य निर्मञ्छ्य दुर्मित्रियेति विचक्षणः। नेत्रे चोन्मीलयेच्चित्रं तच्चक्षुर्मधुरत्रयैः
ज्योतिः सम्पूरयेद्धैम्यां गुरवे गामथार्पयेत्। समुद्रज्येष्ठेत्यभिषिञ्चेद्वरुणं पूर्वकुम्भतः
समुद्रं गच्छ गाङ्गेयात् सोमो धेन्विति वर्षकात्।

देवीरापो निर्झराद्भिर्नदाद्भिः पञ्चनद्यतः ॥ १२ ॥
उद्भिदद्भ्यश्चोद्भिदेन पावमान्याऽथ तीर्थकैः ।
आपो हि ष्ठा पञ्चगव्याद्धिरण्यवर्णेति स्वर्णजात् ॥ १३ ॥
आपो अस्मेति वर्षोत्थैर्व्याहृत्या कूपसम्भवैः । वरुणञ्च तड़ागोत्थैर्वरुजाद्भिस्तु वश्यतः
आपो देवीति गिरिजैरेकाशीतिघटैस्ततः ।
स्नापयेद् वरुणस्येति त्वन्नो वरुण ! चार्घ्यकम् ॥ १५ ॥
व्याहृत्या मधुपर्कन्तु वृहस्पतेति वस्त्रकम् । वरुणेति पवित्रन्तु प्रणवेनोत्तरीयकम् ॥
यद्वारुण्येन पुष्पादि प्रदद्याद् वरुणाय तु । चामरं दर्पणं छत्रं व्यजनं वैजयन्तिकाम् ॥
मूलेनोत्तिष्ठेत्युत्थाप्य तां रात्रिमधिवासयेत् । वरुणञ्चेति सान्निध्यंयद्वारुण्येनपूजयेत्
सजीवीकरणं मूलात् पुनर्गन्धादिना यजेत् ।
मण्डपे पूर्ववत् प्राचर्य कुण्डेषु समिदादिकम् ॥ १६ ॥
वेदादिमन्त्रैर्गन्धाद्याश्चतस्रो धेनवो दुहेत् । दिक्ष्वथो वै यवचरुं ततः संस्थाप्यहोमयेत्
व्याहृत्या वाथ गायत्र्या मूलेनामन्त्रयेत् तथा ।
सूर्याय प्रजापतये द्यौः स्वाहा चान्तरिक्षकः ॥ २१ ॥
तस्यै पृथिव्यै देहधृत्यै इह स्वधृतये ततः । इह रत्यै चेह रमत्या उग्रो भीमश्च रौद्रकः ॥
विष्णुश्च वरुणो धाता रायस्पोषो महेन्द्रकः । अग्निर्यमो नैर्ऋतोऽथ वरुणो वायु रेवच
कुवेर ईशोऽनन्तोऽथ ब्रह्मा राजाजलेश्वरः । तस्मै स्वाहेदंविष्णुश्चतद् विप्रासेतिहोमयेत्
सोमो धेन्विति षड् हुत्वा इमं मेति च होमयेत् ।
आपो हि ष्ठेति तिसृभिरिमा रुद्रेति होमयेत् ॥ २५ ॥
दशदिक्षु वलिं दद्यात् गन्धपुष्पादिनाऽर्चयेत् ।
प्रतिमां तु समुत्थाप्य मण्डले विन्यसेद् बुधः ॥ २६ ॥
पूजयेद् गन्धपुष्पाद्यैहमपुष्पादिभिःक्रमात् । जलाशयांस्तुदिग्भागेवितस्तिद्वयसम्मितान्
कृत्वाऽष्टौ स्थण्डिलान् रम्यान् सैकतान् देशिकोत्तमः ।
वरुणस्येति मन्त्रेण साज्यमष्टशतं ततः ॥ २८ ॥

चरुं यवमयं हुत्वा शान्तितोयं समाचरेत् । सेचयेन्मूर्ध्नि देवं तु सजीवकरणं चरेत् ॥
ध्यायेत् तु वरुणं शुक्लं गौर्यानदनदीगणैः । ओं वरुणायनमोऽभ्यर्च्यततःसान्निध्यमाचरेत्

उत्थाप्य नागपृष्ठाद्यैर्भ्रामयेत् तैः समङ्गलैः ।
आपो हिष्ठेति च क्षिपेत् त्रिमध्वाक्ते घटे जले ॥ ३१ ॥

जलाशयेमध्यगतंसुगुप्तंविनिवेशयेत् । स्नात्वाध्यायेच्च वरुणं सृष्टिं ब्रह्माण्डसञ्ज्ञिकाम्
अग्निबीजेन सन्दग्ध्य तद्भस्म प्लावयेद्धराम् । सर्वमापोमयं लोकंध्यायेत्तत्र जलेश्वरम्
तोयमध्यस्थितं देवं ततो यूपं निवेशयेत् । चतुरस्रमथाष्टास्रं वर्तुलंवा प्रवर्तितम् ॥३४॥
आराध्य देवतालिङ्गं दशहस्तं तु कूपके । यूपं यज्ञीयवृक्षोत्थं मूले हैमं फलं न्यसेत् ॥
वाप्यां पञ्चदशकरं पुष्करिण्यां तु विंशकम् । तड़ागे पञ्चविंशाख्यं जलमध्ये निवेशयेत्
यागमण्डपाङ्गणे वा यूपव्रस्केति मन्त्रतः । स्थाप्यतद्वेष्टयेद्वस्त्रैर्यूपोपरिपताकिकाम्

तदभ्यर्च्य च गन्धाद्यैर्जगच्छान्तिं समाचरेत् ।
दक्षिणां गुरवे दद्याद् भूगोहेमाम्बुपात्रकम् ॥ ३८ ॥
द्विजेभ्यो दक्षिणा देया आगतान् भोजयेत् तथा ।
आब्रह्मस्तम्भपर्य्यन्ता ये केचित् सलिलार्थिनः ॥ ३६ ॥

ते तृप्तिमुपगच्छन्तु तड़ागस्थेन वारिणा । तोयमुत्सर्जयेद्देवं पञ्चगव्यं विनिक्षिपेत् ॥

आपो हिष्ठेति तिसृभिः शान्तितोयं द्विजैः कृतम् ।
तीर्थतोयं क्षिपेत् पुण्यं गोकुलञ्चार्पयेद् द्विजान् ॥ ४१ ॥

अनिवारितमन्नाद्यं सर्वजन्यञ्च कारयेत् । अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ॥
एकाहं स्थापयेत् तोयं तत् पुण्यमयुतायुतम् । विमाने मोदते स्वर्गे नरकं न स गच्छति

गवादि पिबते यस्मात् तस्मात् कर्त्तुर्न पातकम् ।
तोयदानात् सर्वदानफलं प्राप्य दिवं व्रजेत् ॥ ४४ ॥

इत्यादिमहापुराणे आग्नेये कूपवापीतड़ागादिप्रतिष्ठाकथनं नाम चतुःषष्टितमोऽध्यायः ।

———

# पञ्चषष्टितमोऽध्यायः

## सभास्थापनकथनम् ।

भगवानुवाच ।

सभादिस्थापनं वक्ष्ये तथैतेषां प्रवर्त्तनम् ।
भूमौ परीक्षितायाञ्च वास्तुयागं समाचरेत् ॥ १ ॥
स्वेच्छया तु सभां कृत्वा स्वेच्छया स्थापयेत् सुरान् ।
चतुष्पथे ग्रामादौ च न शून्ये कारयेत् सभाम् ॥ २ ॥
निर्मलः कुलमुद्धृत्य कर्त्ता स्वर्गे विमोदते । अनेन विधिना कुर्य्यात् सप्तभौमं हरेर्गृहम्
यथा राज्ञां तथाऽन्येषां पूर्वाद्याश्च ध्वजादयः ।
कोणभुजान् वर्जयित्वा चतुःशालं तु वर्त्तयेत् ॥ ४ ॥
त्रिशालं वा द्विशालं वा एकशालमथापि वा । व्ययाधिकं न कुर्वीत व्ययदोषकरं हितत्
आयाधिके भवेत् पीड़ा तस्मात् कुर्य्यात् समं द्वयम् ।
करराशिं समस्तन्तु कुर्य्याद्वसुगुणं गुरुः ॥ ६ ॥
सप्तार्च्चिषा हृते भागे गर्गविद्याविचक्षणः । अष्टधा भाजिते तस्मिन् यच्छेषंसव्ययोगतः
अथवा करराशिं तु हन्यात् सप्तार्च्चिषा बुधः। वसुभिःसंहृतेभागेपृथ्व्वादिपरिकल्पयेत्
ध्वजो धूम्रस्तथा सिंहः श्वा वृषस्तु खरो गजः ।
तथा ध्वाङ्क्षस्तु पूर्व्वादावुद्भवन्ति विकल्पयेत् ॥ ९ ॥
त्रिशालकत्रयं शस्तं उदक्पूर्वविवर्जितम् । याम्यां परगृहोपेतं द्विशालं लभ्यते सदा ॥
याम्ये शालैकशालं तु प्रत्यक्शालमथापि वा ।
एकशालद्वयं शस्तं शेषास्त्वन्ये भयावहाः ॥ ११ ॥
चतुःशालं सदा शस्तं सर्व्वदोषविवर्जितम् । एकभौमादि कुर्वीत भवनं सप्तभौमकम् ॥
द्वारवेधादिरहितं पूरणेन विवर्जितम् । देवगृहं देवतायाः प्रतिष्ठाविधिना सदा ॥ १३ ॥

संस्थाप्य मनुजानाञ्च समुदायोक्तकर्मणा। प्रातः सर्वौषधीस्नानं कृत्वा शुचिरतन्द्रितः

मधुरैस्तु द्विजान् भोज्य पूर्णकुम्भादिशोभितम्।

सतोरणं स्वस्ति वाच्य द्विजान् गोपृष्ठहस्तकः ॥ १५ ॥

गृही गृहं प्रविशेच्च दैवज्ञान् प्राच्यं संविशेत्। गृहे पुष्टिकरं मन्त्रं पठेच्चेमं समाहितः ॥

ओं नन्दे नन्दाय वाशिष्ठे! वसुभिः प्रजया सह।

जये! भार्गवदायादे! प्रजानां विजयावहे! ॥ १७ ॥

पूर्णेऽङ्गिरसदायादे! पूर्णकामं कुरुष्व माम्। भद्रे! काश्यपदायादे! कुरु भद्रांमतिमम

सर्ववीजौषधीयुक्ते! सर्वरत्नौषधीवृते!। रुचिरे! नन्दने! नन्दे! वासिष्ठे रम्यतामिह

प्रजापतिसुते! देवि! चतुरस्त्रे! महीयसि!।

सुभगे! सुव्रते! देवि! गृहे काश्यपि! रम्यताम् ॥ २० ॥

पूजिते! परमाचार्य्यैर्गन्धमाल्यैरलङ्कृते!। भवभूतिकरे! देवि!गृहे भार्गवि! रम्यताम्

अव्यक्ते! व्याकृते! पूर्णे! मुनेरङ्गिरसःसुने!। इष्टके! त्वं प्रयच्छेष्टंप्रतिष्ठांकारयाम्यहम्

देशस्वामिपुरस्वामिगृहस्वामिपरिग्रहे!। मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव ॥२३॥

इत्यादिमहापुराणे आग्नेये सभागृहस्थापनं नाम पञ्चषष्टितमोऽध्यायः।

---

## षट्षष्टितमोऽध्यायः

### साधारणप्रतिष्ठाविधानम्।

भगवानुवाच।

समुदायप्रतिष्ठाञ्च वक्ष्ये सा वासुदेववत्।

आदित्या वसवो रुद्राः साध्या विश्वेऽश्विनौ तथा ॥ १ ॥

ऋषयश्च तथा सर्वे वक्ष्ये तेषां विशेषकम्। यस्य देवस्य यन्नाम तस्याद्यं गृह्यचाक्षरम्

मात्राभिर्भेदयित्वा तु दीर्घाण्यङ्गानि भेदयेत्। प्रथमं कल्पयेद्बीजं सविन्दुप्रणवंनतिम्

सर्वेषां मूलमन्त्रेण पूजनं स्थापनं तथा । नियमव्रतकृच्छ्राणां मठसङ्क्रमवेश्मनाम् ॥४॥

मासोपवासं द्वादश्यामित्यादिस्थापनं वदे ।

शिलां पूर्णघटं कांस्यं सम्भारं स्थापयेत् ततः ॥ ५ ॥

ब्रह्मकूर्चं समाहृत्य श्रपेद् यवमयं चरुम् । क्षीरेण कपिलायास्तु तद्विष्णोरिति साधकः

प्रणवेनाभिधार्य्यैव दर्व्यासङ्घट्टयेत् ततः । साधयित्वाऽवतार्य्याथ विष्णुमभ्यर्च्य होमयेत्

व्याहृत्या चैव गायत्र्या तद्विप्रासेति होमयेत् । विश्वतश्चक्षुर्वेदाद्यैर्भूरग्नये तथैव च ॥

सूर्य्याय प्रजापतये अन्तरिक्षाय होमयेत् । द्यौः स्वाहा ब्रह्मणे स्वाहा पृथिवीमहाराजकः

तस्मै सोमञ्च राजानमिन्द्राद्यैर्होममाचरेत् ।

एवं हुत्वा चरोर्भागान् दद्याद्दिग्बलिमादरात् ॥ १० ॥

समिधोऽष्टशतं हुत्वा पालाशाश्चाज्यहोमकम् ।

कुर्य्यात् पुरुषसूक्तेन इरावती तिलाष्टकम् ॥ ११ ॥

हुत्वा तु ब्रह्मविष्ण्वीशदेवानामनुयायिनाम् । ग्रहाणामाहुतीर्हुत्वा लोकेशानामथो पुनः

पर्वतानां नदीनाञ्च समुद्राणां तथाऽऽहुतीः । हुत्वाच व्याहृतीर्दद्यात् स्रुवपूर्णाहुतित्रयम्

वौषडन्तेन मन्त्रेण वैष्णवेन पितामह ! । पञ्चगव्यं चरुंप्राश्यदत्त्वाऽऽचार्य्यायदक्षिणाम्

तिलपात्रं हेमयुक्तं सवस्त्रं गामलङ्कृताम् । प्रीयतां भगवान् विष्णुरित्युत्सृजेद्व्रतंबुधः

मासोपवासादेरन्यां प्रतिष्ठां वच्मि पूर्णतः । यज्ञेनातोष्य देवेशं श्रपयेद् वैष्णवं चरुम्

तिलतण्डूलनीवारैः श्यामाकैरथवा यवैः ।

आज्येनाधार्य्य चोत्तार्य्य होमयेन्मूर्त्तिमन्त्रकैः ॥ १७ ॥

विष्ण्वादीनां मासपानां तदन्ते होमयेत् पुनः ।

ओं विष्णसु (त्रे) स्वाहा । ओं विष्णवे निभूयपाय स्वाहा ।

विष्णवे शिपिविष्टाय स्वाहा । ओं नरसिंहाय स्वाहा ।

ओं पुरुषोत्तमाय स्वाहा ।

द्वादशाश्वत्थसमिधो होमयेद् घृतसंप्लुताः ॥ १८ ॥

विष्णो रराटमन्त्रेण ततो द्वादश चाहुतीः । इदं विष्णुरिरावती चरोर्द्वादश आहुतीः ॥

हुत्वा चाज्याहुतीस्तद्वत्तद्विप्रासेति होमयेत् ।
शेषहोमं ततः कृत्वा दद्यात् पूर्णाहुतित्रयम् ॥ २० ॥
युञ्जतेत्यनुवाकन्तु जप्त्वा प्राशीत वै चरुम् । प्रणवेन स्वशब्दान्ते कृत्वा पात्रे तु पैप्पले
ततो मासाधिपानान्तु विप्रान् द्वादश भोजयेत् ।
त्रयोदशो गुरुस्तत्र तेभ्यो दद्यात् त्रयोदश ॥ २२ ॥
कुम्भान् स्वाद्धस्वसंयुक्तान् सच्छत्रोपानहान्वितान् ।
सवस्त्रहेममाल्याढ्यान् व्रतपूर्त्यै त्रयोदश ॥ २३ ॥
गावः प्रीतिं समायान्तु प्रचरन्तु प्रहर्षिताः । इति गोपथमुत्सृज्य यूपं तत्र निवेशयेत्
दशहस्तं प्रपाऽऽराममठसङ्क्रमणादिषु । गृहे च होममेवन्तु कृत्वा सर्वं यथाविधि ॥
पूर्वोक्तेन विधानेन प्रविशेच्च गृहं गृही । अनिवारितमन्नाद्यं सर्वेष्वेतेषु कारयेत् ॥२६॥
द्विजेभ्यो दक्षिणा देया यथाशक्त्या विचक्षणैः ।
आरामं कारयेद् यस्तु नन्दने स चिरं वसेत् ॥ २७ ॥
मठप्रदानात् स्वर्लोके शक्रलोके वसेत् ततः । प्रपादानाद् वारुणेन सङ्क्रमेणवसेद्दिवि
इष्टकासेतुकारी च गोलके मार्गकृद् गवाम् ।
नियमव्रतकृद् विष्णुः कृच्छकृत् सर्वपापहा ॥ २६ ॥
गृहं दत्त्वा वसेत् स्वर्ग यावदाभूतसंप्लवम् । समुदायप्रतिष्ठेष्टाशिवादीनां गृहात्मनाम्
इत्यादिमहापुराणे आग्नेये समुदायप्रतिष्ठाकथनं नाम षट्षष्टितमोऽध्यायः ।

---

## सप्तषष्टितमोऽध्यायः ।

### जीर्णोद्धारविधानम् ।

भगवानुवाच ।

जीर्णोद्धारविधिं वक्ष्ये भूषितां स्नपयेद् गुरुः ।

अचलां विन्यसेद् गेहे अतिजीर्णां परित्यजेत् ॥ १ ॥
व्यङ्गां भग्नाञ्च शैलाढ्यां न्यसेदन्याञ्च पूर्ववत् ।
संहारविधिना तत्र तत्त्वान् संहृत्य देशिकः ॥ २ ॥
सहस्रं नारसिंहेन हुत्वा तामुद्धरेद् गुरुः । दारवीं दारयेद् वह्नौ शैलजां प्रक्षिपेज्जले ॥३॥
धातुजां रत्नजां वापि अगाधे वा जलेऽम्बुधौ ।
यानमारोप्य जीर्णाङ्गं छाद्य वस्त्रादिना नयेत् ॥ ४ ॥
वादित्रैः प्रक्षिपेत्तोये गुरवे दक्षिणां ददेत् ।
यत्प्रमाणा च यद्द्रव्या तन्मानां स्थापयेद् दिने ॥
कूपवापीतडागादेर्जीर्णोद्धारे महाफलम् ॥ ५ ॥
इत्यादिमहापुराणे आग्नेये जीर्णोद्धारकथनं नाम सप्तषष्टितमोऽध्यायः ॥

---

## अष्टषष्टितमोऽध्यायः ।

### यात्रोत्सवविधिकथनम् ।

भगवानुवाच ।

वक्ष्ये विधिं चोत्सवस्य स्थापितेतु सुरे चरेत् । तस्मिन्नब्दे चैकरात्रं त्रिरात्रञ्चाष्टरात्रकम्
उत्सवेन विना यस्मात् स्थापनं निष्फलं भवेत् । अयने विषुवे चापि शयनोपवने गृहे
कारकस्यानुकूले वा यात्रां देवस्य कारयेत् ।
मङ्गलाङ्कुररोपैस्तु गीतनृत्यादिवाद्यकैः ॥ ३ ॥
शरावघटिकापालीस्त्वङ्कुरारोहणे हिताः ।
यवाञ्छालींस्तिलान् मुद्गान् गोधूमान् सितसर्षपान् ॥ ४ ॥
कुलत्थमाषनिष्पावान् क्षालयित्वा तु वापयेत् ।
पूर्वादौ च बलिं दद्यात् भ्रमन् दीपैः पुरं निशि ॥ ५॥

इन्द्राद्यैः कुमुदाद्यैश्च सर्वभूतेभ्य एव च। अनुगच्छन्ति ते तत्र प्रतिरूपधराः पुनः ॥ ६ ॥
पदे पदेऽश्वमेधस्य फलं तेषां न संशयः। आगत्य देवतागारं देवं विज्ञापयेद् गुरुः ॥

तीर्थयात्रा तु या देव ! श्वः कर्त्तव्या सुरोत्तम ! ।
तस्यारम्भमनुज्ञातुमर्हसे देव ! सर्वथा ॥ ८ ॥

देवमेवन्तु विज्ञाप्य ततः कर्म्म समारभेत्। प्ररोहघटिकाभ्यान्तु वेदिकां भूषितां व्रजेत्

चतुःस्तम्भान्तु तन्मध्ये स्वस्तिके प्रतिमां न्यसेत् ।
काम्यार्थां लेख्यचित्रेषु स्थाप्य तत्राधिवासयेत् ॥ १० ॥

वैष्णवैः सह कुर्वीत घृताभ्यङ्गन्तु मूलतः। घृतधाराभिषेकं वा सकलां शर्वरीं बुधः ॥

दर्पणं दर्श्य नीराजं गीतवाद्यैश्च मङ्गलम् ।
व्यजनं पूजनं दीपं गन्धपुष्पादिभिर्यजेत् ॥ १२ ॥

हरिद्रामुद्गकाश्मीरशुक्लचूर्णादि मूर्द्धनि । प्रतिमायाश्च भक्तानां सर्वतीर्थफलं धृते ॥

स्नापयित्वा समभ्यर्च्य यात्राविम्बं रथे स्थितम् ।
नयेद् गुरुर्न्नदीर्नादैश्छत्राद्यै राष्ट्रपालिकाः ॥ १४ ॥
निम्नगायोजनादर्व्वाक् तत्र वेदीन्तु कारयेत् ।
वाहनादवतार्य्यैनं तस्यां वेद्यां निवेशयेत् ॥ १५ ॥
चरुं वै श्रपयेत् तत्र पायसं होमयेत् ततः ।
अब्लिङ्गैर्वैदिकैर्मन्त्रैस्तीर्थानावहयेत् ततः ॥ १६ ॥

आपो हिष्ठोपनिषदैः पूजयेदर्घ्यमुख्यकैः। पुनर्देवं समादाय तोये कृत्वाऽघमर्षणम् ॥
स्नायान्महाजनैर्विप्रैर्वेद्यामुत्तार्य्य तं न्यसेत्। पूजयित्वा तदह्ना च प्रासादं तु नयेत् ततः

पूजयेत् पावकस्थन्तु गुरुः स्याद्‌ भुक्तिमुक्तिकृत् ॥ १८ ॥

इत्यादिमहापुराणे आग्नेये देवयात्रोत्सवकथनं नाम अष्टषष्टितमोऽध्यायः ॥

---

# अथोनसप्ततितमोऽध्यायः

## स्नानविधानम् ।

अग्निरुवाच ।

ब्रह्मन् ! शृणु प्रवक्ष्यामि स्नपनोत्सवविस्तरम् ।
प्रासादस्याग्रतः कुम्भान्मण्डपे मण्डले न्यसेत् ॥ १ ॥
कुर्य्याद् ध्यानार्च्चनं होमं हरेरादौ च कर्म्मसु ।
सहस्रं वा शतं वापि होमयेत् पूर्णया सह ॥ २ ॥
स्नानद्रव्याण्यथाहृत्य कलशांश्चापि विन्यसेत् ।
अधिवास्य सूत्रकण्ठान् धारयेन्मण्डले घटान् ॥ ३ ॥
चतुरस्रं पुरं कृत्वा रुद्रैस्तं प्रविभाजयेत् ।
मध्येन तु चरुं स्थाप्य पार्श्वे पङ्क्तिं प्रमार्जयेत् ॥ ४ ॥

शालिचूर्णादिनापूर्य्य पूर्व्वादिनवकेषु च । कुम्भमुद्रां ततो बध्वा घटं तत्रानयेद् बुधः ॥
पुण्डरीकाक्षमन्त्रेण दर्भांस्तांस्तु विसर्जयेत् । अद्भिः पूर्णं सर्वरत्नयुतं मध्ये न्यसेद्घटम् ॥

यवव्रीहितिलांश्चैव नीवारान् श्यामकान् क्रमात् ।
कुलत्थमुद्गसिद्धार्थांस्तच्छुक्तानष्टदिक्षु च ॥ ७ ॥
ऐन्द्रे तु नवके मध्ये घृतपूर्णं घटं न्यसेत् ।
पलाशाश्वत्थन्यग्रोधविल्वोदुम्बरशीरिषाम् ॥ ८ ॥

जम्बूशमीकपित्थानां त्वक्कषायैर्घटाष्टकम् । आग्नेयनवके मध्ये मधुपूर्णं घटं न्यसेत् ॥
गोशृङ्गनश्वगङ्गागजेन्द्रदशनेषु च । तीर्थक्षेत्रखलेष्वष्टौ मृत्तिकाः स्युर्घटाष्टके ॥ १० ॥
याम्ये तु नवके मध्ये तिलतैलघटं न्यसेत् । नारङ्गमथ जम्बीरं खर्जूरं मृद्विकां क्रमात् ॥
नारिकेलं न्यसेत् पूगं दाड़िमं पनसं फलम् । नैर्ऋते नवके मध्ये क्षीरपूर्णं घटं न्यसेत्

कुङ्कुमं नागपुष्पञ्च चम्पकं मालतीं क्रमात् ।

मल्लिकामथ पुन्नागं करवीरं महोत्पलम् ॥ १३ ॥

पुष्पाणि चाप्ये नवके मध्ये वै नारिकेलकम् । नादेयमथ सामुद्रं सारसं कौपमेव च ॥

वर्षजं हिमतोयञ्च नैर्ऋरङ्गाङ्गमेव च । उदकान्यथ वायव्ये नवके कदलीफलम् ॥ १५ ॥

सहदेवीं कुमारीं च सिंहीं व्याघ्रीं तथाऽमृताम् ।

विष्णुपर्णीं शतशिवां वचां दिव्यौषधीर्न्यसेद् ॥ १६ ॥

पूर्व्वादौ सौम्यनवके मध्ये दधिघटं न्यसेत् । पत्रमेलां त्वचं कुष्ठं बालकं चन्दनद्वयम्

लतांकस्तूरिकां चैव कृष्णागुरुमनुक्रमात् । सिद्धद्रव्याणि पूर्व्वादौ शान्तितोयमथैकतः

चन्द्रतारं क्रमाच्छुल्कं गिरिसारं त्रपु न्यसेत् ।

घनसारं तथा शीर्षं पूर्व्वादौ रत्नमेव च ॥ १६ ॥

घृतेनाभ्यज्य चोद्वर्त्य स्नपयेन्मूलमन्त्रतः । गन्धाद्यैः पूजयेद्द वह्नौ हुत्वा पूर्णाहुतिचरेत्

बलिञ्च सर्वभूतेभ्यो भोजयेद्द दत्तदक्षिणः । देवैश्च मुनिभिर्भूपैर्देवं संस्थाप्य चेश्वराः ॥

बभूवुः स्थापयित्वेत्थं स्नपनोत्सवकं चरेत् । अष्टोत्तरसहस्रेण घटानां सर्वभाग्भवेत्

यज्ञावभृथस्नानेन पूर्णसंस्नापनं कृतम् । गौरीलक्ष्मीविवाहादि चोत्सवं स्नानपूर्वकम्

इत्यादिमहापुराणे आग्नेये यज्ञावभृथस्नानं नाम ऊनसप्ततितमोऽध्यायः ।

---

## सप्ततितमोऽध्यायः

### वृक्षादिप्रतिष्ठाकथनम् ।

भगवानुवाच ।

प्रतिष्ठांपादपानाञ्च वक्ष्येऽहं भुक्तिमुक्तिदाम् । सर्वौषध्युदकैर्लिप्तान् पिष्टातकविभूषितान्

वृक्षान्माल्यैरलङ्कृत्यवासोभिरभिवेष्टयेत् । सूच्यासौवर्णयाकार्य्यं सर्वेषां कर्णवेधनम्

हेमशलाकयाऽञ्जनञ्च वेद्यान्तु फलसप्तकम् ।

अधिवासयेच्च प्रत्येकं घटान् बलिनिवेदनम् ॥ २ ॥

इन्द्रादेरधिवासोऽथहोमः कार्य्योवनस्पतेः । वृक्षमध्यादुत्सृजेद् गां ततोऽभिषेकमन्त्रतः

ऋग्यजुःसाममन्त्रैश्च वारुणैर्मङ्गलै रवैः । वृक्षवेदिककुम्भैश्च स्नपनं द्विजपुङ्गवाः ॥

तरूणां यजमानस्य कुर्युश्च यजमानकः । भूषितो दक्षिणां दद्याद् गोभूभूषणवस्त्रकम् ॥

क्षीरेण भोजनं दद्याद् यावद्दिनचतुष्टयम् । होमस्तिलाद्यैः कार्य्यस्तु पलाशसमिधैस्तथा

आचार्य्ये द्विगुणं दद्यात् पूर्ववन्मण्डपादिकम् ।

पापनाशः परा सिद्धिर्वृक्षारामप्रतिष्ठया ॥ ८ ॥

स्कन्दायेशो यथा प्राह प्रतिष्ठाद्यं तथा शृणु । सूर्य्येशगणशक्त्यादेः परिवारस्य वै हरेः

इत्यादिमहापुराणे आग्नेये पादपारामप्रतिष्ठाकथनं नाम सप्ततितमोऽध्यायः ।

# एकसप्ततितमोऽध्यायः

## गणेशपूजाविधिः ।

ईश्वर उवाच ।

गणपूजां प्रवक्ष्यामि निर्विघ्नामखिलार्थदाम् । गणाय स्वाहा हृदयमेकदंष्ट्राय वै शिरः

गजकर्णिने च शिखा गजवक्त्राय वर्म च । महोदराय स्वदन्तहस्तायाक्षि तथाऽस्त्रकम्

गणो गुरुः पादुका च शक्त्यनन्तौ च धर्मकः ।

मुख्यास्थिमण्डलं चाधश्चोर्ध्वच्छदनमर्चयेत् ॥ ३ ॥

पद्मकर्णिकवीजांश्च ज्वालिनीं नन्दयाऽर्चयेत् । सूर्य्येशाकामरूपा च उदया कामवर्त्तिनी

सत्या च विघ्ननाशा च आसनं गन्धमृत्तिका ।

यं शोषो रं च दहनं प्लवो लं वं तथाऽमृतम् ॥ ५ ॥

लम्बोदराय विद्महे महोदराय धीमहि तन्नो दन्ती प्रचोदयात् ।

गणपतिर्गणाधिपो गणेशो गणनायकः । गणक्रीडो वक्रतुण्ड एकदंष्ट्रो महोदरः ॥

गजवक्त्रो लम्बकुक्षिर्विकटो विघ्ननाशनः । धूम्रवर्णो महेन्द्राद्याः पूज्या गणपतेः स्मृताः

इत्यादिमहापुराणे आग्नेये विनायकपूजाकथनं नाम एकसप्ततितमोऽध्यायः ।

द्विसप्ततितमोऽध्यायः

स्नानविशेषादिकथनम्

ईश्वर उवाच ।

वक्ष्यामि स्कन्द ! नित्याद्यं स्नानं पूजां प्रतिष्ठया ।

खात्वाऽसिना समुद्धृत्य मृदमष्टाङ्गुलां ततः ॥ १ ॥

सर्वात्मना समुद्धृत्य पुनस्तेनैव पूरयेत् । शिरसा पयसस्तीरे निधायास्त्रेण शोधयेत्

तृणानिशिखयोद्धृत्य वर्म्मणा विभजेत्त्रिधा । एकयानाभिपादान्तं प्रक्षाल्यपुनरन्यया

अस्त्राभिलब्धयालभ्य दीप्तया सर्वविग्रहम् ।

निरुद्ध्याक्षाणि पाणिभ्यां प्राणान् संयम्य वारिणि ॥ ४ ॥

निमज्यासीतहृद्यस्त्रं स्मरन्कालानलप्रभम् । मलस्नानंविधायेत्थं समुत्थायजलान्तरात्

अस्त्रसन्ध्यामुपास्याथ विधिस्नानं समाचरेत् । सारस्वतादितीर्थानामेकमङ्कुशमुद्रया

हृदाकृष्य तथा स्नाप्य पुनः संहारमुद्रया । शेषं मृद्भागमादाय प्रविश्य नाभिवारिणि

वामपाणितले कुर्य्याद्भागत्रयमुदङ्मुखः । अङ्गैर्दक्षिणमेकाद्यं पूर्वमस्त्रेण सप्तधा ॥ ८ ॥

शिवेन दशधा सौम्यं जपेद् भागत्रयं क्रमात् ।

सर्वदिक्षु क्षिपेत् पूर्वं हूं फडन्तशरात्मना ॥ ९ ॥

कुर्याच्छिवेन सौम्येन शिवतीर्थं भुजक्रमात् । सर्वाङ्गमङ्गजप्तेन मूर्द्धादिचरणावधि ॥

दक्षिणेन समालभ्य पठन्नङ्गचतुष्टयम् । पिधाय खानि सर्वाणि सम्मुखीकरणेन च ॥

शिवं स्मरन्निमज्जेत हरिं गङ्गेति वा स्मरन् ।

वौषडन्तषडङ्गेन के कुर्यादभिषेचनम् ॥ १२ ॥

कुम्भपात्रेण रक्षार्थं पूर्वादौ निक्षिपेज्जलम् । स्नात्वाराजोपचारेण सुगन्धामलकादिभि

स्नात्वा चोत्तीर्य तत्तीर्थं संहारिण्योपसंहरेत् । अथातो विधिशुद्धेन संहितामन्त्रितेन

निवृत्यादिविशुद्धेन भस्मना स्नानमाचरेत् । शिरस्तः पादपर्यन्तं हूं फडन्तशरात्मना

तेन कृत्वा मलस्नानं विधिस्नानं समाचरेत् ।
ईशतत्पुरुषाघोरगुह्यकाजातसञ्ज्ञरैः ॥ १६ ॥
क्रमेणोद्धूनयेन्मूर्ध्नि वक्त्रहृद्गुह्यविग्रहान् ।
सन्ध्यात्रये निशीथे च वर्षापूर्वावसानयोः ॥ १७ ॥
सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम् ।
स्त्रीपुन्नपुंसकं शूद्रं विड़ालशशमूषिकम् ॥ १८

स्नानमाग्नेयकं स्पृष्ट्वा शुचा वुद्धूलकं चरेत् । सूर्यांशुवर्षसम्पर्कैः प्राङ्मुखेनोद्र्ध्वबाहुना
माहेन्द्रं स्नानमैशेन कार्यं सप्तपदावधि । गोसङ्घमध्यग :कुर्यात् खुरोत्खातकरेणुभिः ॥
पावनं नवमन्त्रेण स्नानन्तद्धर्मणाऽथवा । सद्योजातादिभिर्मन्त्रैरम्भोभिरभिषेचनम् ॥
मन्त्रस्नानं भवेदेवं वारुणाग्नेययोरपि । मनसा मूलमन्त्रेण प्राणायामपुरः सरम् ॥२२॥
कुर्वीत मानसं स्नानं सर्वत्रविहितं च यत् । वैष्णवादौ च तन्मन्त्रैरेवंस्नानादिकारयेत्

सन्ध्याविधिं प्रवक्ष्यामि मन्त्रैर्भिन्नैः समं गुह ! ।
संवीक्ष्य त्रिः पिवेदम्बु ब्रह्मतीर्थेन शङ्करैः ॥ २४ ॥
स्वधान्तैरात्मतत्त्वाद्यैस्ततः खानि स्पृशेद्धृदा ।
शकलीकरणं कृत्वा प्राणायामेन संस्थितः ॥ २५ ॥
त्रिः समावर्तयेन्मन्त्री मनसा शिवसंहिताम् ।
आचम्य न्यस्य सन्ध्याञ्च ब्राह्मीं प्रातः स्मरेन्नरः ॥ २६ ॥

हंसपद्मासनां रक्तां चतुर्वक्त्रां चतुर्भुजाम् । प्रस्कन्दमालिनीं दक्षेवामे दण्डकमण्डलुम्

तार्क्ष्ये पद्मासनां ध्यायेन्मध्याह्ने वैष्णवीं सिताम् ।
शङ्खचक्रधरां वामे दक्षिणे सगदाभयम् ॥ २८ ॥
रौद्रीं ध्यायेद् वृषाब्जस्थां त्रिनेत्रां शशिभूषिताम् ।
त्रिशूलाक्षधरां दक्षे वामे साभयशक्तिकाम् ॥ २९ ॥
साक्षिणीं कर्मणां सन्ध्यामात्मानं तत्प्रभानुगम् ।
चतुर्थी ज्ञानिनः सन्ध्या निशीथादौ विभाव्यते ॥ ३० ॥

हृद्बिन्दुब्रह्मरन्ध्रेषु अरूपा तु परे स्थिता। शिवबोधपरा या तु सा सन्ध्या परमोच्यते

पैत्र्यं मूले प्रदेशिन्याः कनिष्ठायाः प्रजापतेः।

ब्राह्ममङ्गुष्ठमूलस्थं तीर्थं दैवं कराग्रतः॥ ३२॥

सव्यपाणितले वह्नेस्तीर्थं सोमस्य वामतः। ऋषीणां तु समग्रेषु अङ्गुलीपर्वसन्धिषु॥

ततः शिवात्मकैर्मन्त्रैः कृत्वा तीर्थं शिवात्मकम्।

मार्जनं संहितामन्त्रैस्तत्तोयेन समाचरेत्॥ ३४॥

वामपाणिपतत्तोययोजनं सव्यपाणिना। उत्तमाङ्गे क्रमान्मन्त्रैर्मार्जनं समुदाहृतम्॥

नीत्वा तदुपनासाग्रं दक्षपाणिपुटस्थितम्। बोधरूपं सितं तोयं वाममाकृष्य स्तम्भयेत्

तत्पापं कज्जलाभासम्पिङ्गयारिच्य मुष्टिना। क्षिपेद् वज्रशिलायान्तु तद्भवेदघमर्षणम्॥

स्वाहान्तशिवमन्त्रेण कुशपुष्पाक्षतान्वितम्।

शिवायार्घ्याञ्जलिं दत्त्वा गायत्रीं शक्तितो जपेत्॥ ३८॥

तर्पणंसम्प्रवक्ष्यामि देवतीर्थेनमन्त्रकात्। तर्पयेद्धौं शिवायेति स्वाहान्यान् स्वाहयायुतान्

ह्रां हृदयाय ह्रीं शिरसे हूं शिखायै ह्रैं कवचाय।

अस्त्रायाष्टौ देवगणान् हृदादित्येभ्य एव च॥ ४०॥

ह्रां वसुभ्योऽथ रुद्रेभ्यो विश्वेभ्यश्चैव मरुद्भ्यः।

भृगुभ्यो ह्रामङ्गिरोभ्य ऋषीन् कण्ठोपवीत्यथ॥ ४१॥

अत्रयेऽथ वसिष्ठाय नमश्चाथ पुलस्तये। क्रतवे भारद्वाजाय विश्वामित्राय वै नमः॥

प्रचेतसे मनुष्यांश्च सनकाय वषट् तथा। ह्रां सनन्दाय वषट् सनातनाय वै वषट्॥

सनत्कुमाराय वषट् कपिलाय तथा वषट्। पञ्चशिखाय द्युभवे संलग्नकरमूलतः॥४४॥

सर्वेभ्यो भूतेभ्यो वौषट् भूतान् देवपितॄनथ। दक्षस्कन्धोपवीतीच कुशमूलाग्रतस्तिलैः

कव्यबालानलायाथ सोमाय च यमाय च।

अर्य्यम्णे चाग्निसोमाय बर्हिषद्भ्यः स्वधायुतान्॥ ४६॥

आज्यपाय च सोमाय विशेषसुरवत् पितॄन्।

ओं ह्रां ईशानाय पित्रे स्वधा दद्यात् पितामहे॥ ४७॥

शान्तप्रपितामहाय तथाप्रेतपितृस्तथा । पितृभ्यः पितामहेभ्यः स्वधाऽथ प्रपितामहे ॥
वृद्धप्रपितामहेभ्यो मातृभ्यश्च स्वधा तथा । हां मातामहेभ्यः स्वधा हां प्रमातामहेभ्यश्च
वृद्धप्रमातामहेभ्यःसर्वेभ्यःपितृभ्यस्तथा । सर्वेभ्यःस्वधा ज्ञातिभ्यः सर्वाचार्य्येभ्यएवच
दिशां दिक्पतिसिद्धानां मातॄणां ग्रहरक्षसाम् ॥ ५० ॥

इत्यादिमहापुराणे आग्नेये स्नानादिविधिर्नाम द्विसप्ततितमोऽध्यायः ।

---

## त्रिसप्ततितमोऽध्यायः

### सूर्य्यपूजाविधिः ।

ईश्वर उवाच ।

वक्ष्येसूर्य्यार्चनंस्कन्द ! कराङ्गन्यासपूर्वकम् । अहंतेजोमयःसूर्य्यइतिध्यात्वाऽर्घ्यमर्चयेत्
पूरयेद्रक्तवर्णेन ललाटाकृष्टविन्दुना । तं सम्पूज्य रवेरङ्गैः कृत्वा रक्षावगुण्ठनम् ॥ २ ॥
सम्प्रोक्ष्य तज्जलैर्द्रव्यं पूर्वास्यो भानुमर्चयेत् ।
ओं अं हृद्बीजादि सर्वत्र पूजनं दण्डिपिङ्गलौ ॥ ३ ॥
द्वारि दक्षे वामपार्श्वे ईशाने अं गणाय च । अग्नौ गुरुं पीठमध्ये प्रभूतं चासनं यजेत्
अग्न्यादौ विमलं सारमाराध्यं परमं सुखम् ।
सितरक्तपीतनीलवर्णान् सिंहनिभान् यजेत् ॥ ५ ॥
पद्ममध्ये रां च दीप्तां रीं सूक्ष्मां रं जयां क्रमात् ।
रूं भद्रां रें विभूतीश्च विमलां रैं ममोघया ॥ ६ ॥
रीं रौं विद्युता शक्तिं पूर्वाद्याः सर्वतोमुखाः ।
रं मध्ये अर्कासनं स्यात् सूर्य्यमूर्त्तिं षड़क्षरम् ॥ ७ ॥
ओं हं खं खोल्कायेतियजेदावाह्यभास्करम् । ललाटाकृष्टमञ्जल्यांध्यात्वा रक्तंन्यसेद्रविम्
हां हीं सः सूर्य्याय नमोमुद्रयावाहनादिकम् । विधायप्रीतये बिम्बमुद्रां गन्धादिकंददेत्

पद्ममुद्रां बिल्वमुद्रां प्रदर्श्याग्नौ हृदीरितम्। ओं आं हृदयाय नमः अर्काय शिरसे तथा

भूर्भुवः स्वः सुरेशाय शिखायै नैर्ऋते यजेत्।

हुं कवचाय वायव्ये हां नेत्रायेति मध्यतः ॥ ११ ॥

वः अस्त्रायेति पूर्वादौ ततो मुद्राः प्रदर्शयेत्। धेनुमुद्रा हृदादीनां गोविषाणा च नेत्रयोः

अस्त्रस्य त्रासनी योज्या ग्रहाणां च नमस्क्रिया।

सों सोमं बुं बुधं वृश्च जीवं भं भार्गवं यजेत् ॥ १३ ॥

दले पूर्वादिकेऽग्न्यादौ अं भौमं शं शनैश्चरम्। रं राहुं कें केतवेचगन्धाद्यैश्च खखोल्कया

मूलं जप्त्वार्घ्यपात्राम्बु दत्त्वा सूर्य्याय संस्तुतिः।

नत्वा पराङ्मुखश्चार्कं क्षमस्वेति ततो वदेत् ॥ १५ ॥

शराणुना फडन्तेन समाहृत्याणुसंहृतिम्। हृत्पद्मे शिवसूर्येतिसंहारिण्योपसंस्कृतिम्

योजयेत् तेजश्चण्डाय रविनिर्म्माल्यमर्प्पयेत्।

अभ्यर्च्यैशे जपाद् ध्यानाद्धोमात् सर्वं रवेर्भवेत् ॥ १७ ॥

इत्यादिमहापुराणे आग्नेये सूर्य्यपूजा नाम त्रिसप्ततितमोऽध्यायः ॥

---

# चतुःसप्ततिमोऽध्यायः

## शिवपूजाकथनम्।

ईश्वर उवाच।

शिवपूजां प्रवक्ष्यामि आचम्य प्रणवार्घ्यवान्।

द्वारमस्त्राम्बुना प्रोक्ष्य होमादिद्वारपान् यजेत् ॥ १ ॥

गणं सरस्वतीं लक्ष्मीमूर्द्ध्वोदुम्बरके यजेत्। नन्दिगङ्गे दक्षिणेऽथ स्थितेवामगते यजेत्

महाकालं च यमुनां दिव्यदृष्टिनिपातितः।

उत्सार्य्य दिव्यान् विघ्नांश्च पुष्पाक्षेपान्तरिक्षगान् ॥ ३ ॥

दक्षपार्ष्णित्रिभिर्घातैर्भूमिष्ठान् यागमन्दिरम् ।
देहलीं लङ्घयेद्‌ वामशाखामाश्रित्य वै विशेत् ॥ ४ ॥
प्रविश्य दक्षपादेन विन्यस्यास्त्रमुदुम्बुरे। ओं हां वास्त्वधिपतये ब्रह्मणे मध्यतो यजे
निरीक्षणादिभिः शस्त्रैः शुद्धानादाय गड्डुकान् ।
लब्धानुज्ञः शिवान्मौनी गङ्गादिकमनुव्रजेत् ॥ ६ ॥
पवित्राङ्गः प्रजप्तेन वस्त्रपूतेन वारिणा । पूरयेदम्बुधौ तांस्तान् गायत्र्या हृदयेन वा।
गन्धकाक्षतपुष्पादिसर्व्वद्रव्यसमुच्चयम् । सन्निधीकृत्य पूजार्थं भूतशुद्ध्यादि कारये
देवदक्षे ततो न्यस्य सौम्यास्यश्च शरीरतः । संहारमुद्रयादाय मूर्ध्नि मन्त्रेण धारयेत्
भोग्यकर्म्मोपभोगार्थं पाणिकच्छपिकाख्यया ।
हृदम्बुजे निजात्मानं द्वादशान्तपदेऽथवा ॥ १० ॥
शोधयेत् पञ्चभूतानि सञ्चिन्त्य शुषिरन्तनौ ।
चरणाङ्गुष्ठयोर्युमान् शुषिरान्तर्वहिः स्मरेत् ॥ ११ ॥
शक्तिं हृद्व्यापिनीं पश्चाद्धूङ्कारे पावकप्रभे । रन्ध्रमध्यस्थितेकृत्वा प्राणरोधंहि चिन्तय
निवेशयेद्रेचकान्ते फडन्तेनाथ तेन च। हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रे विभिद्य च ॥१३
ग्रन्थीन् निर्भिद्य हूङ्कारं मूर्ध्नि विन्यस्य जीवनम् ।
सम्पुटं हृदयेनाथ पूरकाहितचेतनम् ॥ १४ ॥
हूं शिखोपरि विन्यस्य शुद्धं विन्द्वात्मकं स्मरेत् ।
कृत्वाथ कुम्भकं शम्भौ एकोद्घातेन योजयेत् ॥ १५ ॥
रेचकेन वीजवृत्त्या शिवे लीनोऽथ शोधयेत् । प्रतिलोमंस्वदेहे तु विन्दन्तं तत्र विन्दुक
लयं नीत्वा महीवातौ जलवह्नी परस्परम् । द्वौ द्वौ साध्यौ तथाकाशमविरोधेन तच्छृ
पार्थिवं मण्डलं पीतं कठिनं वज्रलाञ्छितम् । हौमित्यात्मीयवीजेनतन्निवृत्तिकलामय
पादादारभ्य मूर्द्धानं विचिन्त्य चतुरस्रकम् । उद्घातपञ्चकेनैव वायुभूतं विचिन्तयेत्
अर्द्धचन्द्रं द्रवं सौम्यं शुभ्रमम्भोजलाञ्छितम् ।
ह्रीमित्यनेन वीजेन प्रतिष्ठारूपतां गतम् ॥ २० ॥

संयुक्तं वामसन्त्रेण पुरुषान्तमकारणम् । अर्घ्यश्चतुर्भिरुद्घातैर्वह्निभूतं विशोधयेत् ॥२१॥

आग्नेयं मण्डलं त्र्यस्त्रं रक्तं स्वस्तिकलाञ्छितम् ।

हूमित्यनेन बीजेन विद्यारूपं विभावयेत् ॥ २२ ॥

घोराणुत्रिभिरुद्घातैर्जलभूतं विशोधयेत् । षडस्रं मण्डलं वायोर्विन्दुभिः षड्भिरङ्कितम्

कृष्णं ह्रूमिति बीजेन जातं शान्तिकलामयम् ।

सञ्चित्योद्घातयुग्मेन पृथ्वीभूतं विशोधयेत् ॥ २४ ॥

नभोविन्दुमयं वृत्तं विन्दुशक्तिविभूषितम् । व्योमाकारं सुवृत्तञ्च शुद्धस्फटिकनिर्मलम्

हौङ्कारेण फडन्तेन शान्त्यतीतकलामयम् । ध्यात्वैकोद्घातयोगेन सुविशुद्धं विभावयेत्

आप्याययेत् ततः सर्वं मूलेनामृतवर्षिणा ।

आधाराख्यामनन्तञ्च धर्म्मज्ञानादिपङ्कजम् ॥ २७ ॥

हृदासनमिदं ध्यात्वा मूर्त्तिमावाहयेत् ततः ।

सृष्ट्या शिवमयं तस्यामात्मानं द्वादशान्ततः ॥ २८ ॥

अथ तां शक्तिमन्त्रेण वौषडन्तेन सर्वतः । दिव्यामृतेन सम्प्लाव्य कुर्वीत सकलीकृतम्

हृदयादिकरान्तेषु कनिष्ठाद्यङ्गुलीषु च । हृदादिमन्त्रविन्यासः सकलीकरणं मतम् ॥

अस्त्रेण रक्ष्य प्राकारं तन्मन्त्रेणाथ तद्बहिः । शक्तिंजालमधश्चोर्ध्वं महामुद्रां प्रदर्शयेत्

आपादमस्तकं यावद् भावपुष्पैः शिवं हृदि । पद्मे यजेत् पूरकेण आकृष्टामृतसद्घृतैः ॥

शिवमन्त्रैर्नाभिकुण्डे तर्पयेत शिवानलम् । ललाटे विन्दुरूपञ्च चिन्तयेच्छुभविग्रहम् ॥

एकं स्वर्णादिपात्राणां पात्रमस्त्राम्बुशोधितम् । विन्दुप्रसूतपीयूषरूपतोयाक्षतादिना ॥

हृदापूर्य्य षडङ्गेन पूजयित्वाऽभिमन्त्रयेत् । संरक्ष्य हेति मन्त्रेण कवचेन विगुण्ठयेत् ॥

रचयित्वाऽर्घ्यमष्टाङ्गं सेचयेद् धेनुमुद्रया । अभिषिञ्चेदथात्मानं मूर्ध्नि तत्तोयविन्दुना

तत्रस्थं यागसम्भारं प्रोक्षयेदस्त्रवारिणा । अभिमन्त्र्य हृदा पिण्डैस्तनुत्राणेन वेष्टयेत्

दर्शयित्वाऽमृतां मुद्रां पुष्पं दत्त्वा निजासने ।

विधाय तिलकं मूर्ध्नि पुष्पं मूलेन योजयेत् ॥ ३८ ॥

स्नाने देवार्चने होमे भोजने यागयोगयोः । आवश्यके जपे धीरः सदा वाचंयमो भवेत्

नादान्तोच्चारणान्मन्त्रं शोधयित्वा सुसंस्कृतम् ।
पूजनेऽभ्यर्च्य गायत्र्या सामान्यार्घ्यमुपाहरेत् ॥ ४१ ॥
ब्रह्मपञ्चकमावर्त्य माल्यमादाय लिङ्गतः । ऐशान्यां दिशि चण्डाय हृदयेन निवेदयेत्।
प्रक्षाल्य पिण्डिकालिङ्गे अस्त्रतोये ततो हृदा ।
अर्घ्यपात्राम्बुना सिञ्चेदिति लिङ्गविशोधनम् ॥ ४२ ॥
आत्मद्रव्यमन्त्रलिङ्गशुद्धौ सर्वान् सुरान् यजेत् ।
वायव्ये गणपतये हां गुरुभ्योऽर्च्चयेच्छिवे ॥ ४३ ॥
आधारशक्तिमङ्कुरनिभां कूर्म्मशिलास्थिताम् । यजेद् ब्रह्मशिलारूढं शिवस्यानन्तमासनम्
विचित्रकेशप्रख्यानमन्योन्यं पृष्ठदर्शिनः । कृतत्रेतादिरूपेण शिवस्यासनपादुकाम् ॥४५॥
धर्म्मं ज्ञानञ्च वैराग्यमैश्वर्य्यञ्चाग्निदिङ्मुखान् ।
कर्पूरकुङ्कुमस्वर्णकज्जलाभान् यजेत् क्रमात् ॥ ४६ ॥
पद्मञ्च कर्णिकामध्ये पूर्वादौ मध्यतो नव । वरदाभयहस्ताश्च शक्तयो धृतचामराः।
वामा ज्येष्ठा च रौद्री च काली कलविकारिणी। बलविकरणी पूज्याबलप्रमथनीक्रमात्
हां सर्वभूतदमनी केशराग्रे मनोन्मनी । क्षित्यादिशुद्धविद्यान्तु तत्त्वव्यापकमासनम्।
न्यसेत् सिंहासने देवं शुक्लं पञ्चमुखं विभुम् । दशबाहुञ्च खण्डेन्दुं दधानं दक्षिणैः करैः
शक्त्यृष्टिशूलखट्वाङ्गवरदं वामकैः करैः । डमरुं बीजपूरञ्च नीलाब्जं सूत्रकोत्पलम्।
द्वात्रिंशल्लक्षणोपेतां शैवीं मूर्त्तिन्तु मध्यतः । हां हं हां शिवमूर्त्तये स्वप्रकाशं शिवंस्मरे
ब्रह्मादिकारणत्यागान्मन्त्रं नीत्वा शिवास्पदम् ।
ततो ललाटमध्यस्थं स्फुरत्तारापतिप्रभम् ॥ ५३ ॥
षडङ्गेन समाकीर्णं विन्दुरूपं परं शिवम् । पुष्पाञ्जलिगतं ध्यात्वा लक्ष्मीमूर्त्तौ निवेशयेत्
ओं हां हौं शिवाय नम आवाहन्या हृदा ततः ।
आवाह्य स्थाप्य स्थापन्या सन्निधायान्तिकं शिवम् ॥ ५५ ॥
निरोधयेन्निष्ठुरया कालकान्त्या फडन्ततः ।
विघ्नानुत्सार्य्य विष्टभ्याथ लिङ्गमुद्रां नमस्कृतिम् ॥ ५६ ॥

हृदावगुण्ठयेत् पश्चाद्दावाहः सम्मुखी ततः ।
निवेशनं स्थापनं स्यात् सन्निधानं तवास्मि भोः ! ॥ ५७ ॥
आकर्म्मकाण्डपर्य्यन्तं सन्निधेयोपरिक्षयः । स्वभक्तेश्च प्रकाशो यस्तद् भवेदवगुण्ठनम्
सकलीकरणं कृत्वा मन्त्रैः षड्भिरथैकताम् ।
अङ्गानामङ्गिना सार्द्धं विदध्यादमृतीकृतम् ॥ ५९ ॥
चिच्छक्तिहृदयं शम्भोः शिव ऐश्वर्य्यमष्टधा । शिखावशित्वं चाभेद्यं तेजः कवचमैश्वरम्
प्रतापो दुःसहश्चास्त्रमन्तरायापहारकम् । नमः स्वधाचस्वाहा च वौषट् चेतियथाक्रमम्
हृत्पुरःसरमुचार्य्य पाद्यादीनि निवेदयेत् । पाद्यं पादाम्बुजद्वन्द्वे वक्त्रेष्वाचमनीयकम्
अर्घ्यं शिरसि देवस्य दूर्वापुष्पाक्षतानि च ।
एवं संस्कृत्य संस्कारैर्दशभिः परमेश्वरम् ॥ ६३ ॥
यजेत् पञ्चोपचारेण विधिना कुसुमादिभिः ।
अभ्युक्ष्योद्वर्त्य निर्मञ्ज्य राजिकालवणादिभिः ॥ ६४ ॥
अर्घ्योदविन्दुपुष्पाद्यैर्गन्धकैः स्नापयेच्छनैः । पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात् ॥
ईशादिमन्त्रितैर्द्रव्यैरर्च्य तेषां विपर्य्ययः । तोयधूपान्तरैः सर्वैर्मूलेन स्नपयेच्छिवम् ॥
विरूक्ष्य यवचूर्णेन यथेष्टं शीतलैर्जलैः । स्वशक्त्या गन्धतोयेन संस्नाप्य शुचिवाससा ॥
निर्म्माज्यार्घ्यं प्रदद्याच्च नोपरि भ्रामयेत् करम् ।
न शून्यमस्तकं लिङ्गं पुष्पैः कुर्य्यात् ततो ददेत् ॥ ६८ ॥
चन्दनाद्यैः समालभ्य पुष्पैः प्रार्च्यशिवाणुना । धूपभाजनमस्त्रेणप्रोक्ष्याभ्यर्च्यशिवाणुना
अस्त्रेण पूजितां घण्टां चादायगुग्गुलं ददेत् । दद्यादाचमनंपश्चात् स्वधान्तं हृदयाणुना
आरात्रिकं समुत्तार्य्य तथैवाचामयेत् पुनः । प्रणम्यादाय देवाज्ञां भोगाङ्गानि प्रपूजयेत्
हृदग्नौ चन्द्रभं चैशे शिवं चामीकरप्रभम् । शिखां रक्ताश्च नैर्ऋत्ये कृष्णं वर्म्मच वायवे
चतुर्वक्त्रं चतुर्बाहुं दलस्थान् पूजयेदिमान् । दंष्ट्राकरालमप्यस्त्रं पूर्वादौ वज्रसन्निभम्
मूले हौं शिवाय नमः ओं हां हूं हीं हों शिरश्च ।
हृं शिखायै हैं वर्म्म हश्चास्त्रं परिबारयुताय च ॥ ७४ ॥

शिवाय दद्यात् पाद्यञ्च आचामञ्चार्घ्यमेव च ।
गन्धं पुष्पं धूपदीपं नैवेद्याचमनीयकम् ॥ ७५ ॥
करोद्वर्त्तनताम्बूलं मुखवासञ्च दर्पणम् । शिरस्यारोप्य देवस्य दूर्वाक्षतपवित्रकम् ॥
मूलमष्टशतं जप्त्वा हृदयेनाभिमन्त्रितम् । चर्म्मणावेष्टितं खड्गं रक्षितं कुशपुष्पकैः ॥
अक्षतैर्मुद्रया युक्तं शिवमुद्भवसञ्ज्ञया । गुह्यातिगुह्यगुप्त्यर्थं गृहाणास्मत्कृतं जपम् ॥
सिद्धिर्भवतु मे येन त्वत्प्रसादात् त्वयि स्थिते ।
भोगी श्लोकं पठित्वाद्यं दक्षहस्तेन शम्भवे ॥ ७६ ॥
मूलाणुनार्घ्यतोयेन वरहस्ते निवेदयेत् । यत्किञ्चित् कुर्म्महे देव ! सदा सुकृतदुष्कृतम्
तन्मे शिवपदस्थस्य हूं क्षः क्षेपय शङ्कर ! शिवो दाता शिवोभोक्ताशिवःसर्वमिदं जगत्
शिवो जयति सर्वत्र यः शिवः सोऽहमेव च । श्लोकद्वयमधीत्यैवं जपं देवाय चार्प्पयेत्
शिवाङ्गानां दशांशञ्च दत्त्वार्घ्यं स्तुतिमाचरेत् । प्रदक्षिणीकृत्य नमेच्चाष्टाङ्गञ्चाष्टमूर्त्तये ॥
नत्वा ध्यानादभिश्चैव यजेच्चित्रेऽनलादिषु ॥ ८३ ॥
इत्यादिमहापुराणे आग्नेये शिवपूजा कथनं नाम चतुःसप्ततितमोऽध्यायः ॥

---

## पञ्चसप्ततितमोऽध्यायः

### अग्निस्थापनादिविधिः ।

ईश्वर उवाच ।

अर्घपात्रकरो यायादग्न्यागारं सुसंवृतः । योगोपकरणं सर्वं दिव्यदृष्ट्या च कल्पयेत्
उदङ्मुखः कुण्डमीक्षेत् प्रोक्षणं ताडनं कुशैः ।
विदध्यादस्त्रमन्त्रेण वर्म्मणाभ्युक्षणं मतम् ॥ २ ॥
खड्गेन खातमुद्धारं पूरणं समतामपि । कुर्वीत वर्मणा सेकं कुट्टनन्तु शरात्मना ॥ ३ ॥
सम्मार्जनं समालेपं कलारूपप्रकल्पनम् । त्रिसूत्रीपरिधानं च वर्म्मणाभ्यर्च्चनं सदा ॥

रेखात्रयमुदक् कुर्य्यादेकां पूर्वाननामधः। कुशेन च शिवास्त्रेण यद्वा तासां विपर्य्ययः
वज्रीकरणमन्त्रेण हृदा दर्भैश्चतुष्पथम्। अक्षपात्रं तनुत्रेण विन्यसेद् विष्टरं हृदा ॥ ६ ॥
हृदा वागीश्वरीं तत्र ईशमावाह्य पूजयेत्। वह्निं सदाश्रयानीतं शुद्धपात्रोपरिस्थितम् ॥

क्रव्यादांशं परित्यज्य वीक्षणादिविशोधितम्।
औदार्य्यं चैन्दवं भौतमेकीकृत्यानलत्रयम् ॥ ८ ॥

ओं हूं वह्निचैतन्याय वह्निवीजेन विन्यसेत्। संहितामन्त्रितं वह्निं धेनुमुद्रामृतीकृतम् ॥
रक्षितं हेतिमन्त्रेण कवचेनावगुण्ठितम्। पूजितं त्रिः परिभ्राम्यकुण्डस्योर्ध्वं प्रदक्षिणम्

शिववीजमिति ध्यात्वा वागीशागर्भगोचरे।
वागीश्वरेण देवेन क्षिप्यमाणं विभावयेत् ॥ ११ ॥
भूमिष्ठजानुको मन्त्री हृदात्मसम्मुखं क्षिपेत्।
ततोऽन्तस्थितवीजस्य नाभिदेशे समूहनम् ॥ १२ ॥

सम्भृत परिधानस्य शौचमाचमनं हृदा। गर्भाग्नेः पूजनं कृत्वा तद्रक्षार्थं शराणुना ॥
बध्नीयाद् गर्भजं देव्याः कङ्कणं पाणिपल्लवे। गर्भाधानाय सम्पूज्यसद्योजातेनपावकम्
ततो हृदयमन्त्रेण जुहुयादाहुतित्रयम्। पुंसवनाय वामेन तृतीये मासि पूजयेत् ॥ १५॥

आहुतित्रितयं दद्याच्छिरसाम्बुकणान्वितम्।
सीमन्तोन्नयनं षष्ठे मासि सम्पूज्य रूपिणा ॥ १६ ॥
जुहुयादाहुतीस्तिस्रः शिखया शिखयैव तु।
वक्त्राङ्गकल्पनां कुर्य्याद् वक्त्रोद्घाटननिष्कृती ॥ १७ ॥
जातकर्म्मनृकर्म्मभ्यां दशमे मासि पूर्ववत्।
वह्निं सन्धुक्ष्य दर्भाद्यैः स्नातं गर्भमलापहम् ॥ १८ ॥

सुवर्णबन्धनं देव्या कृतं ध्यात्वा हृदार्च्चयेत्। सद्यःसूतकनाशाय प्रोक्षयेदस्त्रवारिणा ॥
कुम्भन्तु बहिरस्त्रेण ताडयेद् वर्मणोक्षयेत्। अस्त्रेणोत्तरपूर्व्वाग्रान्मेखलासु वहिःकुशान्

आस्थाप्य स्थापयेत् तेषु हृदा परिधिविस्तरम्।
वक्त्राणामस्त्रमन्त्रेण ततो नालापनुत्तये ॥ २१ ॥

समिधः पञ्च होतव्याः प्रान्त्रे मूले घृतप्लुताः ।
ब्रह्माणं शङ्करं विष्णुमनन्तञ्च हृदार्चयेत् ॥ २२ ॥
पूर्वाक्षतैश्च पर्य्यन्तं परिधिस्थाननुक्रमात् । इन्द्रादीशानपर्य्यन्तान् विष्टरस्थाननुक्रमात्
अग्नेरभिमुखीभूतान् निजदिक्षु हृदार्च्चयेत् ।
निवार्य्य विघ्नसङ्घातं बालकं पालयिष्यथ ॥ २४ ॥
शैवीमाज्ञामिमां तेषां श्रावयेत् तदनन्तरम् । गृहीत्वा स्रुक्स्रुवावूर्ध्ववदनाधोमुखैः क्रमात्
प्रताप्याग्नौ त्रिधा दर्भमूलमध्याग्रकैः स्पृशेत् ।
कुशस्पृष्टप्रदेशे तु आत्मविद्याशिवात्मकम् ॥ २६ ॥
क्रमात् तत्त्वत्रयं न्यस्य हां हीं हूं सं रवैः क्रमात् ।
स्रुचि शक्तिं स्रुवे शम्भुं विन्यस्य हृदयाणुना ॥ २७ ॥
त्रिसूत्रीवेष्टितग्रीवौ पूजितौकुसुमादिभिः । कुशानामुपरिष्टात् तौ स्थापयित्वास्वदक्षिणे
गव्यमाज्यं समादाय वीक्षणादिविशोधितम् ।
स्वकां ब्रह्ममयीं मूर्त्तिं सञ्चिन्त्यादाय तद्घृतम् ॥ २६ ॥
कुण्डस्योद्ध्वं हृदावर्त्य भ्रामयित्वाग्निगोचरे । पुनर्विष्णुमयीं ध्यात्वाघृतमीशानगोचरे
धृत्वादाय कुशाग्रेण स्वाहान्तं शिरसाणुना । जुहुयाद्‌ विष्णवे विन्दुं रुद्ररूपमनन्तरम्
भावयन् निजमात्मानं नाभौ धृत्वाप्लवेत् ततः ।
प्रादेशमात्रदर्भाभ्यामङ्गुष्ठानामिकाग्रकैः ॥ ३२ ॥
धृताभ्यां सम्मुखं वह्नेरस्त्रेणाप्लवमाचरेत् ।
हृदात्मसम्मुखं तद्वत् कुर्य्यात् संप्लवनं ततः ॥ ३३ ॥
हृदालब्धदग्धदर्भं शस्त्रक्षेपात् पवित्रयेत् । दीप्तेनापरदर्भेण निवाह्यानेन दीपयेत् ॥ ३४
अस्त्रमन्त्रेण निर्दग्धं वह्नौ दर्भं पुनः क्षिपेत् ।
क्षिप्त्वा घृते कृतग्रन्थिकुशं प्रादेशसम्मितम् ॥ ३५ ॥
पक्षद्वयमिड़ादीनां त्रयं चाज्ये विभावयेत् । क्रमाद् भागत्रयादाज्यं स्रुवेणादाय होमयेत्
स्वेत्यग्नौ हा घृते भागं शेषमाज्यं क्षिपेत् क्रमात ।

ओं हां अग्नये स्वाहा । ओं हां सोमाय स्वाहा । ओं हां अग्नीषोमाभ्यां स्वाहा ।
उद्घाटनाय नेत्राणां अग्नेर्नेत्रत्रये मुखे ॥ ३७ ॥
स्रुवेण घृतपूर्णेन चतुर्थीमाहुतिं यजेत् । ओं हां अग्नये स्विष्टकृते स्वाहा ।
अभिमन्त्र्य षडङ्गेन बोधयेद्धेनुमुद्रया ॥ ३८ ॥
अवगुण्ठ्य तनुत्रेण रक्षेदाज्यं शराणुना । हृदाज्यबिन्दुविक्षेपात् कुर्य्यादभ्युक्ष्यशोधनम्
वक्त्राभिघारसन्धानं वक्त्रैकीकरणं तथा ।
ओं हां सद्योजाताय स्वाहा । ओं हां वामदेवाय स्वाहा । ओं हां अघोराय स्वाहा
ओं हां तत्पुरुषाय स्वाहा । ओं हां ईशानाय स्वाहा ।
इत्येककघृताहुत्या कुर्य्याद्वक्त्राभिघारकम् ॥ ४० ॥
ओं हां सद्योजातवामदेवाभ्यां स्वाहा । ओं हां वामदेवाघोराभ्यां स्वाहा ।
ओं हां अघोरतत्पुरुषाभ्यां स्वाहा । ओं हां ततपुरुषेशानाभ्यां स्वाहा ।
इतिवक्त्रानुसन्धानं मन्त्रैरेभिः क्रमाच्चरेत् ।
अग्नितो गतया वायुं निर्ऋतादिशिवान्तया ॥ ४१ ॥
वक्त्राणामेकतां कुर्य्यात् स्रुवेण घृतधारया ।
ओं हां सद्योजातवामदेवाघोरतत्पुरुषेशानेभ्यः स्वाहा ।
इतीष्टवक्त्रेवक्त्राणामन्तर्भावस्तदाकृतिः ॥ ४२ ॥
ईशेन वह्निमभ्यर्च्य दत्त्वास्त्रेणाहुतित्रयम् ।
कुर्य्यात् सर्व्वात्मना नाम शिवाग्निस्त्वं हुताशन ! ॥ ४३ ॥
हृदार्च्चितौ विसृष्टाग्नौ पितरौ विधिपूरणीम् ।
मूलेन वौषडन्तेन दद्यात् पूर्णां यथाविधि ॥ ४४ ॥
ततो हृदम्बुजे साङ्गं ससेनं भासुरं परम् । यजेत् पूर्व्ववदावाह्य प्रार्थ्याज्ञां तर्प्पयेच्छिवम्
यागाग्निशिवयो कृत्वा नाडीसन्धानमात्मना ।
शक्त्या मूलाणुना होमं कुर्य्यादङ्गैर्दशांशतः ॥ ४६ ॥
घृतस्य कार्षिको होमः क्षीरस्य मधुनस्तथा । शुक्तिमात्राहुतिर्दध्नः प्रसृतिःपायसस्य तु

यथावत् सर्वभक्षाणां लाजानांमुष्टिसम्मितम् । खण्डत्रयन्तु मूलानां फलानांस्वप्रमाणतः
ग्रासार्द्धमात्रमन्नानां सूक्ष्माणि पञ्च होमयेत् ।
इक्षोरापर्व्विकं मानं लतानामङ्गुलद्वयम् ॥ ४६ ॥
पुष्पं पत्रं स्वमानेन समिधां तु दशाङ्गुलम् । चन्द्रचन्दनकाश्मीरकस्तूरीयक्षकर्दमान् ॥
कलायसम्मितानेतान् गुग्गुलं बदरास्थिवत् ।
कन्दानामष्टमं भागं जुहुयाद् विधिवत् परम् ॥ ५१ ॥
होमं निर्वर्त्तयेदेवं ब्रह्मबीजपदैस्ततः । घृतेन स्रुचि पूर्णायां निधायाधोमुखं स्रुवम् ॥
स्रुगग्रे पुष्पमारोप्य पश्चाद् वामेन पाणिना ।
पुनः सव्येन तौ धृत्वा शङ्खसन्निभमुद्रया ॥ ५३ ॥
समुद्गतोऽर्द्धकायश्च समपादः समुत्थितः । नाभौ तन्मूलमाधाय स्रुगग्रव्यग्रलोचनः ॥
ब्रह्मादिकारणात्यागाद् विनिः सृत्य सुषुम्णया ।
वामस्तनान्तमानीय तयोर्मूलमतन्द्रितः ॥ ५५ ॥
मूलमन्त्रमविस्पष्टं वौषडन्तं समुच्चरेत् । तदग्नौ जुहुयादाज्यं यवसम्मितधारया ॥५६॥
आचामं चन्दनं दत्त्वा ताम्बूलप्रभृतीनपि । भक्त्या तद्भूतिमावन्द्य विदध्यात् प्रणतिंपराम्
ततो वह्निं समभ्यर्च्य फडन्तास्त्रेण संवरान् । संहारमुद्रयाहृत्य क्षमस्वेत्यभिधाय च ॥
भासुरान् परिधीस्तांश्च पूरकेण हृदाऽणुना । श्रद्धया परयात्मीये स्थापयेत हृदम्बुजे ॥
सर्वपाकाग्रमादाय कृत्वा मण्डलकद्वयम् । अन्तर्बहिर्बलिं दद्यादाग्नेय्यां कुण्डसन्निधौ
ओं हां रुद्रेभ्यः स्वाहा पूर्वे मातृभ्यो दक्षिणे तथा ।
वारुणे हां गणेभ्यश्च स्वाहा तेभ्यस्त्वयं बलिः ॥ ६१ ॥
उत्तरे हाञ्च यक्षेभ्य ईशाने हां ग्रहेभ्य उ । अग्नौ हामसुरेभ्यश्च रक्षोभ्यो नैर्ऋते बलिः
वायव्ये हाञ्च नागेभ्यो नक्षत्रेभ्यश्च मध्यतः ।
हां राशिभ्यः स्वाहा वह्नौ विश्वेभ्यो नैर्ऋते तथा ॥ ६३ ॥
वारुण्यां क्षेत्रपालाय अन्तर्बलिरुदाहृतः । द्वितीये मण्डले बाह्ये इन्द्रायाग्नियमाय च ॥
नैर्ऋताय जलेशाय वायवे धनरक्षिणे । ईशानाय च पूर्वादौ हीशाने ब्रह्मणे नमः ॥६५॥

नैर्ऋते विष्णवे स्वाहा वायसादेर्बहिर्बलिः ।
बलिद्वयगतान् मन्त्रान् संहारमुद्रयाऽऽत्मनि ॥ ६६ ॥
इत्यादि महापुराणे आग्नेयेऽग्निस्थापनादिविधिकथनं नाम पञ्चसप्ततितमोऽध्यायः ।

---

## षट्सप्ततितमोऽध्यायः ।

### चण्डपूजाकथनम् ।

ईश्वर उवाच ।

ततः शिवान्तिकं गत्वा पूजाहोमादिकं मम ।
गृहाण भगवन्! पुण्यफलमित्यभिधाय च ॥ १ ॥
अर्घ्योदकेन देवाय मुद्रयोद्भवसञ्ज्ञया । हृद्बीजपूर्वमूलेन स्थिरचित्तो निवेदयेत् ॥ २ ॥
ततः पूर्ववदभ्यर्च्य स्तुत्वा स्तोत्रैः प्रणम्य च ।
अर्घ्यं पराङ्मुखं दत्त्वा क्षमस्वेत्यभिधाय च ॥ ३ ॥
नाराचमुद्रयाऽस्त्रेण फडन्तेनात्मसञ्चयम् । संहृत्य दिव्यया लिङ्गं मूर्त्तिमन्त्रेणयोजयेत्
स्थण्डिले त्वर्च्चिते देवे मन्त्रसङ्घातमात्मनि ।
नियोज्य विधिनोक्तेन विदध्याच्चण्डपूजनम् ॥ ५ ॥
ओं चण्डेशानाय नमो मध्यतश्चण्डमूर्त्तये । ओं धूलिचण्डेश्वरायहूंफट् स्वाहातमाह्वयेत्
चण्डहृदयाय हूं फट् ओं चण्डशिरसे तथा ।
ओं चण्डशिखायै हूं फट् चण्डायुः कवचाय च ॥ ७ ॥
चण्डास्त्राय तथा हूं फट् चण्डं रुद्राग्निजं स्मरेत् ।
शूलटङ्कधरं कृष्णं साक्षसूत्रकमण्डलुम् ॥ ८ ॥
टङ्काकारेऽर्द्धचन्द्रे वा चतुर्वक्त्रं प्रपूजयेत् । यथाशक्ति जपं कुर्य्यादङ्गानान्तु दशांशतः ॥
गोभूहिरण्यवस्त्रादिमणिहेमादिभूषणम् । विहाय शेषनिर्माल्यं चण्डेशाय निवेदयेत् ॥

लेह्यचोष्याद्यनुवरं ताम्बूलं स्रग्विलेपनम् । निर्म्माल्यं भोजनं तुभ्यं प्रदत्तन्तु शिवाज्ञया

सर्वमेतत् क्रियाकाण्डं मया चण्ड ! तवाज्ञया ।
न्यूनाधिकं कृतं मोहात् परिपूर्णं सदाऽस्तु मे ॥ १२ ॥
इति विज्ञाप्य देवेशं दत्त्वाऽर्घ्यं तस्य संस्मरन् ।
संहारमूर्त्तिमन्त्रेण शनैः संहारमुद्रया ॥ १३ ॥

पूरकान्वितमूलेन मन्त्रानात्मनि योजयेत् । निर्म्माल्यापनयस्थानं लिम्पेद् गोमयवारिणा

प्रोक्ष्यार्घ्यादि विसृज्याथ आचान्तोऽन्यत् समाचरेत् ॥ १४ ॥

इत्यादि महापुराणे आग्नेये चण्डपूजाकथनं नाम षट्सप्ततितमोऽध्यायः ।

---

## सप्तसप्ततितमोऽध्यायः ।

### कपिलादिपूजाविधानम् ।

ईश्वर उवाच ।

कपिलापूजनं वक्ष्ये एभिर्मन्त्रैर्यजेच्च गाम् ।
ओं कपिले ! नन्दे ! नमः ओं कपिले ! भद्रिके ! नमः ॥ १ ॥
ओं कपिले ! सुशीले ! नमः कपिले ! सुरभिप्रभे ।
ओं कपिले ! सुमनसे ! नमः ओं भुक्तिमुक्तिप्रदे ! नमः ॥ २ ॥

सौरभेयि ! जगन्मातर्देवानाममृतप्रदे ! गृहाण वरदे ! ग्रासमीप्सितार्थञ्च देहि मे ॥ ३ ॥

वन्दिताऽसि वसिष्ठेन विश्वामित्रेण धीमता ।
कपिले ! हर मे पापं यन्मया दुष्कृतं कृतम् ॥ ४ ॥
गावो ममाग्रतो नित्यं गावः पृष्ठत एव च ।
गावो मे हृदये चापि गवां मध्ये वसाम्यहम् ।
दत्तं गृह्णन्तु मे ग्रासं जप्त्वा स्यां निर्म्मलः शिवः ।

प्राभ्यर्थ्य विद्यापुस्तकानि गुरुपादौ नमेन्नरः ॥ ६ ॥

यजेत् स्नात्वा तु मध्याह्ने अष्टपुष्पिक्रिया शिवम् ।

पीठमूर्ति शिवाङ्गानां पूजा स्यादष्टपुष्पिका ॥ ७ ॥

मध्याह्ने भोजनागारे सुलिप्ते पाकमानयेत् । ततो मृत्युञ्जयेनैव वौषडन्तेन सप्तधा ॥

जप्तैः सदर्भशङ्खस्थैः सिञ्चेत् तं वारिबिन्दुभिः । सर्वपाकाग्रमुद्धृत्यशिवायविनिवेदयेत्

अथार्द्धंचुल्लिकाहोमे विधानायोपकल्पयेत् ।

विशोध्य विधिना चुल्लीं तद्वह्निं पूरकाहुतिम् ॥ १० ॥

हुत्वा नाभ्यग्निना चैकं ततो रेचकवायुना । वह्निबीजं समादाय कादिस्थानगतिक्रमात्

शिवाग्निस्त्वमिति ध्यात्वा चुल्लिकाग्नौ निवेशयेत् ।

ओं हां अग्नये नमो वै हां सोमाय वै नमः ॥ १२ ॥

सूर्य्याय बृहस्पतये प्रजानां पतये नमः । सर्वेभ्यश्चैव देवेभ्यः सर्वविश्वेभ्य एव च ॥

हामग्नये स्विष्टिकृते पूर्वादावर्चयेदिमान् । स्वायान्तामाहुतिं दत्त्वा क्षमयित्वा विसर्जयेत्

चुल्ल्या दक्षिणबाहौ च यजेद्‌ धर्म्माय वै नमः ।

वामबाहावधर्म्माय काञ्जिकादिकभाण्डके ॥ १५ ॥

रसपरिवर्त्तमानाय वरुणाय जलाग्नये । विघ्नराजो गृहद्वारे पेषण्यां सुभगे! नमः॥

ओं रौद्रिके! नमोगिरिके! नमश्चोलूखले यजेत् ।

बलप्रियायायुधाय नमस्ते मुषले यजेत् ॥ १७ ॥

सम्मार्ज्जन्यां देवतोक्ते कामाय शयनीयके । मध्यस्तम्भेचस्कन्धायदत्त्वावास्तुबलिंततः

भुञ्जीत पात्रे सौवर्णे पद्मिन्यादिदलादिके ।

आचार्य्यः साधकः पुत्र! समयी मौनमास्थितः ॥ १६ ॥

वटाश्वत्थार्कवाताविसर्ज्जभल्लातकांस्त्यजेत् । अपोशानं पुरादाय प्राणाद्यैःप्रणवान्वितैः

स्वाहान्तेनाहुतीः पञ्च दत्त्वादीप्योदरानलम् । नागः कूर्म्मोऽथ कृकरो देवदत्तोधनञ्जयः

एतेभ्य उपवायुभ्यः स्वाहापोशानवारिणा । भक्तादिकं निवेद्याय पिबेच्छेषोदकं नरः

अमृतोपस्तरणमसि प्राणाहुतीस्ततो ददेत् । प्राणाय स्वाहाऽपानायसमानायततस्तथा

उदानाय च व्यानाय भुक्त्वा चुल्लकमाचरेत् । अमृतापिधानमसीतिशरीरेऽन्नादिवायवः
इत्यादि महापुराणे आग्नेये कपिलादिपूजाकथनं नाम सप्तसप्ततितमोऽध्यायः ।

---

# अथाष्टसप्ततितमोऽध्यायः

## पवित्रारोहणकथनम् ।

ईश्वर उवाच ।

पवित्रारोहणं वक्ष्ये क्रियाचर्चादिषु पूरणम् । नित्यंतन्नित्यमुद्दिष्टंनैमित्तिकमथापरम् ॥
आषाढादिचतुर्दश्यामथ श्रावणभाद्रयोः । सितासितासु कर्त्तव्यं चतुर्दश्यष्टमीषुतत् ॥
कुर्य्याद् वा कार्त्तिकीं यावत्तिथौ प्रतिपदादिके ।
वह्निब्रह्माम्बिकेभास्यनागस्कन्दार्कशूलिनाम् ॥ ३ ॥
दुर्गायमेन्द्रगोविन्दस्मरशम्भुसुधाभुजाम् । सौवर्णं राजतं ताम्रं कृतादिषुयथाक्रमम् ॥
कलौ कार्प्पासजं वापि पट्टपद्मादिसूत्रकम् । प्रणवश्चन्द्रमा वह्निर्ब्रह्मा नागो गुहो हरिः
सर्वेशः सर्वदेवाः स्युः क्रमेण नवतन्तुषु । अष्टोत्तरशतान्यर्द्धं तदर्धं चोत्तमादिकम् ॥
एकाशीत्याऽथवा सूत्रैस्त्रिंशताऽप्यष्टयुक्तया । पञ्चाशतावाकर्त्तव्यंतुल्यग्रन्थान्तरालकम्
द्वादशाङ्गुलमानानि व्यासादष्टाङ्गुलानि च । लिंगविस्तारमानानि चतुरङ्गुलकानिवा ॥
तथैव पिण्डिकास्पर्शं चतुर्थं सर्वदैवतम् । गङ्गावतारकं कार्य्यं सुजातेन सुधौतकम् ॥
ग्रन्थिं कुर्य्याच्च वामेन अघोरेणाथ शोधयेत् । रञ्जयेत् पुरुषेणैव रक्तचन्दनकुङ्कुमैः ॥
कस्तूरीरोचनाचन्द्रैर्हरिद्रागैरिकादिभिः ।
ग्रन्थयो दश कर्त्तव्या अथवा तन्तुसङ्ख्यया ॥ ११ ॥
अन्तरं वा यथाशोभमेकद्विचतुरङ्गुलम् । प्रकृतिः पौरुषो वीरा चतुर्थी त्वपराजिता ॥
जयाऽन्या विजया षष्ठी अजिता च सदाशिवा ।
मनोन्मनी सर्वमुखी ग्रन्थयोऽभ्यधिकाः शुभाः ॥ १३ ॥

कार्य्या वा चन्द्रवह्न्यर्कपवित्रं शिववद्धृदि। एकैकं निजमूर्त्तौ वा पुस्तके गुरुके गणे॥
स्यादेकैकं तथा द्वारदिक्पालकलशादिषु। हस्तादिनवहस्तान्तंलिङ्गानांस्यात्पवित्रकम्
अष्टाविंशतितो वृद्धं दशभिर्दशभिः क्रमात्।
द्वयङ्गुलाभ्यन्तरास्तत्र क्रमादेकाङ्गुलान्तराः॥ १६॥
ग्रन्थयो मानमप्येषां लिङ्गविस्तारसम्मितम्। सप्तम्यांवात्रयोदश्यांकृतनित्यक्रियःशुचिः
भूषयेत् पुष्पवस्त्राद्यैः सायाह्ने यागमन्दिरम्।
कृत्वा नैमित्तिकीं सन्ध्यां विशेषेण च तर्पणम् ॥ १८॥
परिगृहीते भूभागे पवित्रे सूर्य्यमर्च्चयेत्। आचम्य सकलीकृत्य प्रणवार्घ्यकरोगुरुः॥
द्वाराण्यस्त्रेण सम्प्रोक्ष्य पूर्वादिक्रमतोऽर्च्चयेत्।
हां शान्तिकलाद्वाराय तथा विद्याकलात्मने ॥ २०॥
निवृत्तिकलाद्वाराय प्रतिष्ठाख्यकलात्मने। तच्छाखयोः प्रतिद्वारं द्वौद्वौ द्वाराधिपौयजेत्
नन्दिने महाकालाय भृङ्गिणेऽथ गणाय च। वृषभायचस्कन्दाय देव्यैचण्डायच क्रमात्
नित्यं च द्वारपालादीन् प्रविश्य द्वारपश्चिमे। इष्ट्वा वास्तुं भूतशुद्धिं विशेषार्घ्यकरःशिवः
प्रोक्षणाद्यं विधायाथ यज्ञसम्भारकृन्नरः। मन्त्रयेद् दर्भदूर्वाद्यैः पुष्पाद्यैश्च हृदादिभिः॥
शिवहस्तं विधायेत्थं स्वशिरस्यधिरोपयेत्। शिवोऽहमादिः सर्वज्ञो मम यज्ञप्रधानता
अत्यर्थं भावयेद् देवं ज्ञानखड्गकरो गुरुः। नैर्ऋतीं दिशमासाद्य प्रक्षिपेदुदगाननः॥२६॥
अर्घ्याम्बु पञ्चगव्यञ्च समस्तान् मखमण्डपे।
चतुष्पथान्तसंस्कारैर्वीक्षणाद्यैः सुसंस्कृतैः॥ २७॥
विक्षिप्य विकिरांस्तत्र कुशकूर्चोपसंहरेत्। तानीशदिशि वर्द्धन्यामासनायोपकल्पयेत्॥
नैर्ऋते वास्तुगीर्वाणा द्वारे लक्ष्मीं प्रपूजयेत्।
पश्चिमाभिमुखं कुम्भं सर्वधान्योपरि स्थितम्॥ २६॥
प्रणवेन वृषारूढ सिंहस्थां वर्द्धनीं ततः। कुम्भे साङ्गं शिवं देवं वर्द्धन्यामस्त्रमर्च्चयेत्॥
दिक्षु शक्रादिदिक्पालान् विष्णुब्रह्मशिवादिकान्।
वर्द्धनीं सम्यगादाय घटपृष्ठानुगामिनीम्॥ ३१॥

शिवाज्ञां श्रावयेन्मन्त्री पूर्वादीशानगोचरम् । अविच्छिन्नपयोधारां मूलमन्त्रमुदीरयेत्॥

समन्ताद् भ्रामयेदेनां रक्षार्थं शस्त्ररूपिणीम् ।

पूर्वं कलशमारोप्य शस्त्रार्थं तस्य वामतः ॥ ३३ ॥

समग्रासनके कुम्भे यजेद् देवं स्थिरासने । वर्द्धन्या प्रणवस्थायामायुधं तदनु द्वयोः ॥

भगलिङ्गसमायोगं विदध्याल्लिङ्गमुद्रया । कुम्भे निवेद्य बोधासिं मूलमन्त्रजपं तथा ॥

तद्दशांशेन वर्द्धन्यां रक्षां विज्ञापयेदपि । गणेशं वायवेऽभ्यर्च्य हरं पञ्चामृतादिभिः ॥

स्नापयेत् पूर्ववत् प्रार्च्य कुण्डे च शिवपावकम् ।

विधिवच्च चरुं कृत्वा सम्पाताहुतिशोधितम् ॥ ३७ ॥

देवाग्न्यात्मविभेदेन दर्व्या तं विभजेत् त्रिधा ।

दत्त्वा भागौ शिवाग्निभ्यां संरक्षेद् भागमात्मनि ॥ ३८ ॥

शरेण वर्म्मणा देयं पूर्वतो दन्तधावनम् । तस्माद्घोरशिखाभ्यां वा दक्षिणे पश्चिमेमृदम्

सद्योजातेन च हृदा चोत्तरे वामनीकृतम् । जलं वामेन शिरसा ईशे गन्धान्वितं जलम्

पञ्चगव्यं पलाशादिपुटकं वै समन्ततः । ऐशान्यां कुसुमं दद्यादाग्नेय्यां दिशि रोचनाम्

अगुरुं निर्ऋताशायां वायव्यां च चतुःसमम् ।

होमद्रव्याणि सर्वाणि सद्योजातैः कुशैः सह ॥ ४२ ॥

दण्डाक्षसूत्रकौपीनभिक्षापात्राणि रूपिणे । कज्जलं कुङ्कुमं तैलं शलाकां केशशोधनीम्॥

ताम्बूलं दर्पणं दद्यादुत्तरे रोचनामपि । आसनं पादुके पात्रं योगपट्टातपत्रकम् ॥ ४४ ॥

ऐशान्यामीशमन्त्रेण दद्यादीशानतुष्टये । पूर्वस्याञ्चरुकं साज्यं दद्याद् गन्धादिकं नवे ॥

पवित्राणि समादाय प्रोक्षितान्यर्घ्यवारिणा ।

संहितामन्त्रपूतानि नीत्वा पावकसन्निधिम् ॥ ४६ ॥

कृष्णाजिनादिनाऽऽच्छाद्य स्मरन् संवत्सरात्मकम् ।

साक्षिणं सर्वकृत्यानां गोप्तारं शिवमव्ययम् ॥ ४७ ॥

स्वेति हेति प्रयोगेण मन्त्रसंहितया पुनः । शोधयेच्च पवित्राणि वाराणामेकविंशतिम्

गृहादि वेष्टयेत् सूत्रैर्गन्धाद्यं रवये ददेत् । पूजिताय समाचम्य कृतन्यासः कृतार्घ्यकः ॥

नन्द्यादिभ्योऽथ गन्धाख्यं वास्तोश्चाथ प्रविश्य च ।
शस्त्रेभ्यो लोकपालेभ्य स्वनाम्ना शिवकुम्भके ॥ ५० ॥
वर्द्धन्यै विघ्नराजाय गुरवे ह्यात्मने यजेत् । अथ सर्वौषधीलिप्तं धूपितं पुष्पदूर्वया ॥५१॥
आमन्त्र्य च पवित्रं तत् विधायाञ्जलिमध्यगम् ।
ओं समस्तविधिच्छिद्रपूरणे च विधिं प्रति ॥ ५२ ॥
प्रभवामन्त्रयामि त्वां त्वदिच्छावाप्तिकारिकाम् ।
तत्सिद्धिमनुजानीहि यजतश्चिदचित्पते ! ॥ ५३ ॥
सर्वथासर्वदाशम्भो ! नमस्तेऽस्तुप्रसीदमे । आमन्त्रितोऽसि देवेश ! सहदेव्यागणेश्वरैः
मन्त्रेशैर्लोकपालैश्च सहितः परिचारकैः । निमन्त्रयाम्यहं तुभ्यं प्रभाते तु पवित्रकम् ॥
नियमश्च करिष्यामि परमेश ! तु तवाज्ञया । इत्येवं देवमामन्त्र्य रेचकेनामृतीकृतम् ॥
शिवान्तं मूलमुच्चार्य्य तच्छिवाय निवेदयेत् ।
जपं स्तोत्रं प्रणामञ्च कृत्वा शम्भुं क्षमापयेत् ॥ ५७ ॥
हुत्वा चरोस्तृतीयांशं तद्दद्यीत शिवाग्नये । दिग्वासिभ्यो दिगीशेभ्यो भूतमातृगणेभ्यश्च
रुद्रेभ्यः क्षेत्रपादिभ्यो नमः स्वाहा बलिस्त्वयम् ।
दिङ्नागाद्यैश्च पूर्वादौ क्षेत्राय चाग्नये बलिः ॥ ५९ ॥
समाचम्य विधिच्छिद्रपूरकं होममाचरेत् । पूर्णां व्याहृतिहोमञ्च कृत्वारुन्धीतपावकम्
तत ओमग्नये स्वाहा स्वाहा सोमाय चैव हि ।
ओमग्नीषोमाभ्यां स्वाहाऽग्नये स्विष्टकृते तथा ॥ ६१ ॥
इत्याहुतिचतुष्कन्तु दत्त्वा कुर्य्यात् तु योजनाम् ।
वह्निकुण्डार्च्चितं देवं मण्डलाभ्यर्च्चिते शिवे ॥ ६२ ॥
नाडीसन्धानरूपेण विधिना योजयेत्ततः । वंशादिपात्रे विन्यस्य अस्त्रञ्च हृदयन्ततः ॥
अधिरोप्य पवित्राणि कलाभिर्वाऽथ मन्त्रयेत् ।
षडङ्गं ब्रह्ममूलैर्वा हृद्वर्म्मास्त्रञ्च योजयेत् ॥ ६४ ॥
विधाय सूत्रैः संवेष्ट्य पूजयित्वाऽङ्गसम्भवैः । रक्षार्थं जगदीशाय भक्तिनम्रः समर्पयेत्

पूजिते पुष्पधूपाद्यैर्दत्वासिद्धान्तपुस्तके । गुरोःपादान्तिकंगत्वा भक्त्यादद्यात्पवित्रकम्
निर्गत्य वहिराचम्य गोमये मण्डलत्रये । पञ्चगव्यचरुं दन्तधावनञ्च क्रमाद् यजेत् ॥
आचान्तो मन्त्रसम्बद्धः कृतसङ्गीतजागरः । स्वपेदन्तः स्मरन्नीशं बुभुक्षुर्दर्भसंस्तरे ॥
अनेनैव प्रकारेण मुमुक्षुरपि संविशेत् । केवलं भस्मशय्यायां सोपवासः समाहितः ॥

इत्यादि महापुराणे पवित्रारोहणकथनं नामाष्टसप्ततितमोऽध्यायः ।

---

# अथैकोनाशीतितमोऽध्यायः

## पवित्रारोहणविधिः ।

ईश्वर उवाच ।

अथ प्रातः समुत्थाय कृतस्नानःसमाहितः । कृतसन्ध्यार्चनो मन्त्री प्रविश्यमखमण्डपम्
समादाय पवित्राणि अविसर्जितदैवतः । ऐशान्यां भाजने शुद्धे स्थापयेत् कृतमण्डले
ततो विसर्ज्य देवेशं निर्म्माल्यमपनीय च । पूर्ववद् भूतले शुद्धे कृत्वाह्निकमथ द्वयम् ॥

आदित्यद्वारदिक्पालकुम्भेशानौ शिवेऽनले ।
नैमित्तिकीं सविस्तारां कुर्य्यात् पूजां विशेषतः ॥ ४ ॥

मन्त्राणां तर्पणं प्रायश्चित्तहोमं शरात्मना । अष्टोत्तरशतं कृत्वा दद्यात् पूर्णाहुतिं शनैः
पवित्रं भानवे दत्त्वा समाचम्य ददीत च । द्वारपालादिदिक्पालकुम्भवर्द्धनिकादिषु ॥६॥
सन्निधाने ततः शम्भोरुपविश्य निजासने । पवित्रमात्मने दद्याद् गणाय गुरुवह्नये ॥७॥

ओं कालात्मना त्वया देव ! यद्दिष्टं मामके विधौ ।
कृतं क्लिष्टं समुत्सृष्टं कृतं गुप्तञ्च यत् कृतम् ॥ ८ ॥

तदस्तुक्लिष्टमक्लिष्टं कृतंक्लिष्टमसंस्कृतम् । सर्वात्मनाऽमुना शम्भो ! पवित्रेणत्वदिच्छया
ओं पूरय मखव्रतं नियमेश्वराय स्वाहा । आत्मतत्त्वे प्रकृत्यन्ते पालिते पद्मयोनिना ॥

मूलं लयान्तमुच्चार्य्य पवित्रेणार्चयेच्छिवम् ।

विद्यातत्त्वे च विद्यान्ते विष्णुकारणपालिते ॥ १२ ॥
ईश्वरान्तं समुच्चार्य्य पवित्रमधिरोपयेत् । शिवान्ते शिवतत्त्वे च रुद्रकारणपालिते ॥
शिवान्तं मन्त्रमुच्चार्य्य तस्मै देयं पवित्रकम् । सर्वकारणपालेषु शिवमुच्चार्य्य सुव्रत! ॥

मूलं लयान्तमुच्चार्य्य दद्याद् गङ्गावतारकम् ।
आत्मविद्याशिवैः प्रोक्तं मुमुक्षूणां पवित्रकम् ॥ १४ ॥
विनिर्दिष्टं बुभुक्षूणां शिवतत्त्वात्मभिः क्रमात् ।
स्वाहान्तं वा नमोऽन्तं वा मन्त्रमेषामुदीरयेत् ॥ १५ ॥

ओं हां आत्मतत्त्वाधिपतये शिवाय स्वाहा । ओं हां विद्यातत्त्वाधिपतये शिवायस्वाहा
ओं हौं शिवतत्त्वाधिपतये शिवाय स्वाहा । ओं हौं सर्वतत्त्वाधिपतये शिवाय स्वाहा ।

नत्वा गङ्गावतारन्तु प्रार्थयेत् तं कृताञ्जलिः ।
त्वङ्गतिः सर्वभूतानां संस्थितिस्त्वञ्चराचरे ॥ १६ ॥

अन्तश्चारेण भूतानां द्रष्टा त्वं परमेश्वर! । कर्मणा मनसा वाचा त्वत्तो नान्यागतिर्म्मम

मन्त्रहीनं क्रियाहीनं द्रव्यहीनञ्च यत् कृतम् ।
जपहोमार्च्चनैर्हीनं कृतं नित्यं मया तव ॥ १८ ॥

अकृतं वाक्यहीनं च तत् पूरय महेश्वर! । सूपूतस्त्वं परेशान! पवित्रं पापनाशनम् ॥
त्वया पवित्रितं सर्वं जगत् स्थावरजङ्गमम् । खण्डितंयन्मया देव! व्रतं वैकल्पयोगतः

एकीभवतु तत् सर्वं तवाज्ञासूत्रगुम्फितम् ।
जपं निवेद्य देवस्य भक्त्या स्तोत्रं विधाय च ॥ २१ ॥

नत्वा तु गुरुणादिष्टं गृह्णीयान्नियमन्नरः । चतुर्म्मासं त्रिमासं वा त्र्यहमेकाहमेव च ॥

प्रणम्य क्षमयित्वेशं गत्वा कुण्डान्तिकं व्रती ।
पावकस्थे शिवेऽप्येवं पवित्राणां चतुष्टयम् ॥ २३ ॥

समारोप्य समभ्यर्च्च पुष्पधूपाक्षतादिभिः । अन्तर्बलिं पवित्रञ्च रुद्रादिभ्यो निवेदयेत् ॥

प्रविश्यान्तः शिवं स्तुत्वा सप्रणामं क्षमापयेत् ।
प्रायश्चित्तकृतं होमं कृत्वा हुत्वा च पायसम् ॥ २५ ॥

शनैः पूर्णाहुतिं दत्त्वा वह्निस्थं विसृजेच्छिवम् ।
होमं व्याहृतिभिः कृत्वा रुन्ध्यान्निष्ठुरयाऽनलम् ॥ २६ ॥
अग्न्यादिभ्यस्ततोदद्यादाहुतीनांचतुष्टयम् । दिक्पतिभ्यस्ततोदद्यात् सपवित्रंबहिर्बलिम्
सिद्धान्तपुस्तके दद्यात् सप्रमाणं पवित्रकम् ।
ओं हां भूः स्वाहा । ओं हां भुवः स्वाहा ।
ओं हां स्वः स्वाहा । ओं हां भूर्भुवः स्वः स्वाहा ।
होमं व्याहृतिभिः कृत्वा दत्त्वाऽऽहुतिचतुष्टयम् ॥ २८ ॥
ओं हां अग्नये स्वाहा । ओं हां सोमाय स्वाहा ।
ओं हां अग्नीषोमाभ्यां स्वाहा । ओं हां आग्नये स्विष्टकृते स्वाहा ।
गुरुं शिवमिवाभ्यर्च्य वस्त्रभूषादिविस्तरैः। समग्रं सफलं तस्य क्रियाकाण्डादिर्वार्षिकम्
यस्य तुष्टो गुरुः सम्यगित्याह परमेश्वरः । इत्थं गुरोः समारोप्य हृदालम्बिपत्रिकम्
द्विजादीन् भोजयित्वा तु भक्त्या वस्त्रादिकं ददेत् ।
दानेनानेन देवेश ! प्रीयतां मे सदा शिवः ॥ ३१ ॥
भक्त्या स्नानादिकं प्रातः कृत्वा शम्भोः समाहरेत् ।
पवित्राण्यष्टपुष्पैस्तं पूजयित्वा विसर्जयेत् ॥ ३२ ॥
नित्यंनैमित्तिकं कृत्वा विस्तरेण यथापुरा। पवित्राणिसमारोप्य प्रणम्याग्नौ शिवंयजेत्
प्रायश्चित्तंततोऽस्त्रेणहुत्वापूर्णाहुतिंयजेत् । भुक्तिकामःशिवायाथकुर्य्यात्कर्म्मसमर्पणम्
त्वत्प्रसादेन कर्म्मेदं ममास्तु फलसाधकम् ।
मुक्तिकामस्तु कर्म्मेदं माऽस्तु मे नाथ ! बन्धकम् ॥ ३५ ॥
वह्निस्थंनाड़ीयोगेन शिवं संयोजयेच्छिवे । हृदिन्यस्याग्निसङ्घातं पावकं च विसर्जयेत्
समाचम्य प्रविश्यान्तः कुम्भानुगतसंवरान् । शिवेसंयोज्य साक्षेपं क्षमस्वेतिविसर्जयेत्
विसृज्य लोकपालादीनादायेशात् पवित्रकम् ।
सति चण्डेश्वरेपूजां कृत्वा दत्त्वा पवित्रकम् ॥ ३८ ॥
तन्निर्म्माल्यादिकंतस्मै सपवित्रंसमर्पयेत् । अथवास्थण्डिले चण्डंविधिना पूर्ववद्यजेत्

यत् किञ्चिद् वार्षिकं कर्म कृतं न्यूनाधिकं मया ।
तदस्तु परिपूर्णं मे चण्ड ! नाथ ! तवाज्ञया ॥ ४० ॥
इतिविज्ञाप्यदेवेशंनत्वास्तुत्वाविसर्जयेत् । त्यक्तनिर्माल्यकःशुद्धःस्नापयित्वाशिवंयजेत्
पञ्चयोजनसंस्थोऽपि पवित्रं गुरुसन्निधौ ॥ ४१ ॥
इत्यादि महापुराणे आग्नेये पवित्रारोहणविधिर्नामैकोनाशीतितमोऽध्यायः ।

---

# अशीतितमोऽध्यायः

## दमनकारोहणविधिः ।

ईश्वर उवाच ।

वक्ष्ये दमनकारोहविधिं पूर्ववदाचरेत् । हरकोपात् पुरा जातो भैरवो दमिताः सुराः ॥
तेनाथ शप्तो विटपो भवेति त्रिपुरारिणा । प्रसन्नेनेरितं चेदं पूजयिष्यन्ति ये नराः ॥
परिपूर्णफलं तेषां नान्यथा ते भविष्यति । सप्तम्यां वा त्रयोदश्यां दमनंसंहितात्मभिः
सम्पूज्य बोधयेद् वृक्षं भववाक्येन मन्त्रवित् । हरप्रसादसम्भूत ! त्वमत्र सन्निधीभव
शिवकार्य्यं समुद्दिश्य नेतव्योऽसि शिवाज्ञया ।
गृहेऽप्यामन्त्रणं कुर्य्यात् सायाह्ने चाधिवासनम् ॥ ५ ॥
यथाविधि समभ्यर्च्य सूर्य्यशङ्करपावकान् । देवस्य पश्चिमे मूलं दद्यात् तस्य मृदायुतम्
वामेन शिरसा वाऽथ नालं धात्रीं तथोत्तरे । दक्षिणे भग्नपत्रञ्च प्राच्यां पुष्पञ्चधारणम्
पटिकास्थं फलंमूलमथैशान्यांयजेच्छिवम् । पञ्चाङ्गमञ्जलौकृत्वाआमन्त्र्यशिरसिन्न्यसेत्
आमन्त्रितोसिदेवेश ! प्रातःकाले मयाप्रभो ! । कर्त्तव्यस्तपसो लाभः पूर्णं सर्वंतवाज्ञया
मूलेन शेषं पात्रस्थं पिधायाथ पवित्रकम् । प्रातःस्नात्वाजगन्नाथंगन्धपुष्पादिभिर्यजेत्
नित्यं नैमित्तिकं कृत्वा दमनैः पूजयेत् ततः । शेषमञ्जलिमादाय आत्मविद्याशिवात्मभिः
मूलाद्यैरीश्वरान्तैश्च चतुर्थाञ्जलिना ततः ।

ओं ह्रौं मखेश्वराय मखं पूरय पूरय शूलपाणये नमः ।]
शिवं वह्निं च सम्पूज्य गुरुं प्राच्यार्थ बोधयेत् ॥ १२ ॥
भगवन्नतिरिक्तं वा हीनं वा यन्मया कृतम् । सर्वं तदस्तु सम्पूर्णं यच्च दामनकं मम ॥
सकलं चैत्रमासोत्थं फलं प्राप्य दिवं व्रजेत् ॥ १३ ॥
इत्यादि महापुराणे आग्नेये दमनकारोहणविधिर्नामाशीतितमोऽध्यायः ।

---

# अथैकाशीतितमोऽध्यायः

## समयदीक्षाविधानम् ।

### ईश्वर उवाच ।

वक्ष्यामि भोगमोक्षार्थं दीक्षां पापक्षयङ्करीं । मलमायादिपाशानां विश्लेषः क्रियते यया ज्ञानञ्च जन्यते शिष्ये सा दीक्षाभुक्तिमुक्तिदा । विज्ञातकलनामैको द्वितीयःप्रलयाकलः
तृतीयः समलः शास्त्रेऽनुग्राह्यस्त्रिविधो मतः ।
तत्राद्यो मलमात्रेण मुक्तोऽन्यो मलकर्मभिः ॥ २ ॥
कलादिभूमिपर्य्यन्तं स्तवैस्तु सकलो युतः ।
निराधाराऽथ साधारा दीक्षाऽपि द्विविधा मता ॥ ४ ॥
निराधारा द्वयोस्तेषां साधारा सकलस्य तु। आधारनिरपेक्षेण क्रियते शम्भुचर्य्यया ॥ तीव्रशक्तिनिपातेन निराधारेति सा स्मृता । आचार्य्यमूर्त्तिमास्थाय मायातीव्रादिभेदया
शक्त्या यां कुरुते शम्भुः सा साधिकरणोच्यते ।
इयं चतुर्विधा प्रोक्ता सवीजा वीजवर्जिता ॥ ७ ॥
साधिकारानधिकारा यथा तदभिधीयते । समयाचारसंयुक्ता सवीजा जायते नृणाम् ॥
निर्वीजा त्वसमर्थानां समयाचारवर्जिता ।
नित्ये नैमित्तिके काम्ये यतः स्यादधिकारिता ॥ ८ ॥

साधिकारा भवेद्दीक्षा साधकाचार्य्ययोरतः। निर्बीजा दीक्षितानान्तु यदास ममपुत्रयोः
नित्यमात्राधिकारत्वाद्दीक्षा निरधिकारिका। द्विविधेयं द्विरूपा हि प्रत्येकमुपजायते
एका क्रियावती तत्र कुण्डमण्डलपूर्विका। मनोव्यापारमात्रेण या सा ज्ञानवती मता

इत्थं लब्धाधिकारेण दीक्षाऽऽचार्य्येण साध्यते।
स्कन्ददीक्षां गुरुः कुर्य्यात् कृत्वा नित्यक्रियां ततः॥ १३॥

प्रणवार्घ्यकराम्भोजकृतद्वाराधिपार्चनः। विघ्नानुत्सार्य्य देहल्यांन्यस्यास्त्रंस्वासनेस्थितः
कुर्वीत भूतसंशुद्धिं मन्त्रयोगं यथोदितम्। तिलतण्डुलसिद्धार्थकुशदूर्वाक्षतोदकम्॥
सयवक्षीरनीरञ्च विशेषार्घ्यमिदन्ततः। तदम्बुना द्रव्यशुद्धिं तिलकं स्वासनात्मनोः॥
पूजनं मन्त्रशुद्धिञ्च पञ्चगव्यञ्च पूर्ववत्। लाजचन्दनसिद्धार्थभस्मदूर्वाक्षतं कुशान्॥१७॥

विकिरान् शुद्धलाजांस्तान् सधूपानस्त्रमन्त्रितान्।
शस्त्राम्बुप्रोक्षितानेतान् कवचेनावगुण्ठितान्॥ १८॥

नानाप्रहरणाकारान्विघ्नौघविनिवारकान्। दर्भाणान्तालमानेन कृत्वा षट्त्रिंशतादलैः

सप्तजप्तं शिवास्त्रेण वेणीं बोधासिमुत्तमम्।
शिवमात्मनि विन्यस्य सृष्ट्याधारमभीप्सितम्॥ २०॥
निष्कलं च शिवं न्यस्य शिवोऽहमिति भावयेत्।
उष्णीषं शिरसि न्यस्य अलं कुर्य्यात् स्वदेहकम्॥ २१॥

गन्धमण्डनकंस्वीये विदध्याद्दक्षिणेकरे। विधिनाऽत्रार्च्चयेदीशमित्थंस्याच्छिवमस्तकम्
विन्यस्य शिवमन्त्रेण भास्वरं निजमस्तके। शिवादभिन्नमात्मानं कर्त्तारं भावयेद् यथा
मण्डले कर्म्मणां साक्षी कलशे यज्ञरक्षकः। होमाधिकरणं वह्नौ शिष्ये पाशविमोचकः
स्वात्मन्यनुगृहीतेति षडाधारो य ईश्वरः। सोऽहमेवेति कुर्वीत भवं स्थिरतरं पुनः॥

ज्ञानखड्गकरः स्थित्वा नैर्ऋत्याभिमुखो नरः।
सार्घ्याम्बुपञ्चगव्याभ्यां प्रोक्षयेद् यागमण्डपम्॥ २६॥

चतुष्पथान्तसंस्कारैःसंस्कुर्य्यादीक्षणादिभिः। विक्षिप्य विकिरांस्तत्र कुशकूर्चोपसंहरेत्
तानीशदिशिवर्द्धन्यामासनायोपकल्पयेत्। नैर्ऋतेवास्तुगीर्वाणान् द्वारे लक्ष्मींप्रपूजयेत्

आग्न्ये रत्नैः पूरयन्तीं हृदा मण्डपरूपिणीम् ।
साम्बुवस्त्रे सरत्ने च धान्यास्थे पश्चिमानने ॥ २९ ॥
ऐशेकुम्भेयजेच्छम्भुं शक्तिकुम्भस्यदक्षिणे । पश्चिमस्यान्तुसिंहस्थां वर्द्धनींखड्गरूपिणीम्
दिक्षु शक्रादिदिक्पालान् विष्णवन्तान् प्रणवासनान् ।
वाहनायुधसंयुक्तान् हृदाऽभ्यर्च्य स्वनामभिः ॥ ३१ ॥
प्रथमन्तां समादाय कुम्भस्याग्राभिगामिनीम् ।
अविच्छिन्नपयोधारां भ्रामयित्वा प्रदक्षिणम् ॥ ३२ ॥
शिवाज्ञां लोकपालानां श्रावयेन्मूलमुच्चरन् । संरक्षतयथायोगं कुम्भं धृत्वाऽथ तां धरेत्
ततः स्थिरासने कुम्भे साङ्गं सम्पूज्य शङ्करम् ।
विन्यस्य शोध्यमध्वानं वर्द्धन्यामस्त्रमर्च्चयेत् ॥ ३४ ॥

ओं हः अस्त्रासनाय हूं फट् । ओं ओं अस्त्रमूर्त्तये नमः । ओं हूं फट् पाशुपतास्त्राय नमः । ओं ओं हृदयाय फट् नमः । ओं श्रीं शिरसे हूं फट् नमः । ओं यं शिखायै हूं फट् नमः । ओं गूं कवचाय हूं फट् नमः । ओं फट् अस्त्राय हूं फट् नमः ।

चतुर्वक्त्रं सदंष्ट्रञ्च स्मरेदस्त्रं सशक्तिकम् । समुद्गरत्रिशूलासिं सूर्य्यकोटिसमप्रभम् ॥
भगलिङ्गसमायोगं विदध्याल्लिङ्गमुद्रया । अङ्गुष्ठेन स्पृशेत् कुम्भं हृदा मुष्ट्यास्त्रवर्द्धनीम्
भुक्तये मुक्तये त्वादौ मुष्टिना वर्द्धनीं स्पृशेत् ।
कुम्भस्य मुखरक्षार्थं ज्ञानखड्गं समर्पयेत् ॥ ३७ ॥
शस्त्रञ्च मूलमन्त्रस्य शतं कुम्भे निवेशयेत् ।
तद्दशांशेन वर्द्धन्यां रक्षां विज्ञापयेत् ततः ॥ ३८ ॥
यथेदं कृतयत्नेन भगवन्मखमन्दिरम् । रक्षणीयं जगन्नाथ ! सर्वाध्वरधर ! त्वया ॥३९॥
प्रणवस्थं चतुर्बाहुं वायव्ये गणमर्च्चयेत् । स्थण्डिले शिवमभ्यर्च्य सार्घ्यकुण्डंव्रजेन्नरः
निविष्टो मन्त्रतृप्यर्थमर्घ्यगन्धघृतादिकम् । वामेऽसव्ये तु विन्यस्यसमिद्दर्भतिलादिकम्
कुण्डवह्निस्रुगाज्यादि प्रागवत् संस्कृत्य भावयेत् ।
मुख्यतामूर्द्ध्ववक्त्रस्य हृदि वह्नौ शिवं यजेत् ॥ ४२ ॥

स्वमूर्त्तौ शिवकुम्भे च स्थण्डिले त्वग्निशिष्ययोः ।
सृष्टिन्यासेन विन्यस्य शोध्याध्यानं यथाविधि ॥ ४३ ॥
कुण्डमानं मुखं ध्यात्वा हृदाहुतिभिरीप्सितम् ।
बीजानि सप्तजिह्वानामग्नेर्होमाय भण्यते ॥ ४४ ॥

विरेफावन्तिमौवर्णौ रेफषष्ठस्वरान्वितौ । इन्दुविन्दुशिखायुक्तौ जिह्वाबीजानुपक्रमात् ॥
हिरण्या कनका रक्ता कृष्णा तदनु सुप्रभा । अतिरिक्ता बहुरूपारुद्रेन्द्राग्न्याप्यदिङ्मुखा
क्षीरादिमधुरैर्होमं कुर्य्याच्छान्तिकपौष्टिके । अभिचारे तुपिण्याकसक्तकञ्चुककाञ्जिकैः
लवणैराजिकातक्रकटुतैलैश्च कण्टकैः । समिद्भिरपि वक्राभिः क्रुद्धोभाष्याणुना यजेत्

कदम्बकलिकाहोमाद् यक्षिणी सिध्यति ध्रुवम् ।
वन्धूककिंशुकादीनि वश्याकर्षाय होमयेत् ॥ ४६ ॥
विल्वं राज्याय लक्ष्म्यर्थं पाटलांश्चम्पकानपि ।
पद्मानि चक्रवर्त्तित्वे भक्ष्यभोज्यानि सम्पदे ॥ ५० ॥

दूर्वा व्याधिविनाशाय सर्वसत्त्ववशीकृते । प्रियङ्गुपाटलीपुष्पं चूतपत्रं ज्वरान्तकम् ॥

मृत्युञ्जयो मृत्युजित् स्याद् वृद्धिः स्यात् तिलहोमतः ।
रुद्रशान्तिः सर्वशान्त्यै अथ प्रस्तुतमुच्यते ॥ ५२ ॥

आहुत्यष्टशतैर्मूलमङ्गानि तु दशांशतः । सन्तर्पयेत मूलेन दद्यात् पूर्णां यथा पुरा ॥५३॥
तथा शिष्यप्रवेशाय प्रतिशिष्यं शतं जपेत् । दुर्निमित्तापसाराय सुनिमित्तकृते तथा ॥
शतद्वयञ्च होतव्यं मूलमन्त्रेण पूर्ववत् । मूलाद्यष्टास्त्रमन्त्राणां स्वाहान्तैस्तर्पणं सकृत् ॥

शिखासम्पुटितैर्बीजैर्हूं फडन्तैश्च दीपनम् ।
ओं हौं शिवाय स्वाहेत्यादिमन्त्रैश्च तर्पणम् ॥ ५६ ॥
ओं हूं हौं हीं शिवाय हूं फडित्यादिदीपनम् ।
ततः शिवाम्भसा स्थालीं क्षालितां वर्म्मगुण्ठिताम् ॥ ५७ ॥
चन्दनादिसमालब्धां बध्नीयात् कटकं गले ।
वर्म्मास्त्रजप्तसद्दर्भपत्राभ्यां चरुसिद्धये ॥ ५८ ॥

वर्म्माद्यैरासने दत्ते सार्द्धेन्दुकृतमण्डले ।
न्यस्तायां मूर्त्तिभूतायां भावपुष्पैः शिवं यजेत् ॥ ५९ ॥
वस्त्रबद्धमुखायां वा स्थाल्यां पुष्पैर्बहिर्भवैः ।
चुल्ल्यां पश्चिमवक्त्रायां शुद्धायां वीक्षणादिभिः ॥ ६० ॥
न्यस्ताहङ्कारबीजायां न्यस्तायां कुण्डदक्षिणे ।
धर्म्माधर्म्मशरीरायां जप्तायां मानुषात्मना ॥ ६१ ॥
स्थालीमारोपयेदस्त्रजप्तां गव्याम्बुमार्जिताम् । गव्यंपयोऽस्त्रसंशुद्धंप्रासादशतमन्त्रितम्
तण्डुलान् श्यामकादीनां निक्षिपेत्तत्र तद् यथा ।
एकशिष्यविधानाह तेषां प्रसृतिपञ्चकम् ॥ ६३ ॥
प्रसृतिं प्रसृतिं पश्चाद्वर्द्धयेद् द्व्यादिषुक्रमात् । कुर्य्याच्चानलमन्त्रेणपिधानंकवचाणुना
शिवाग्नौ मूलमन्त्रेण पूर्वास्यश्चरुकं पचेत् ।
सुस्विन्ने तत्र तच्चुल्ल्यां श्रुवमापूर्य्य सर्पिषा ॥ ६५ ॥
स्वाहान्तैः संहितामन्त्रैर्द्दत्वा तप्ताभिघारणम् ।
संस्थाप्य मण्डले स्थालीं सद्दर्भेऽस्त्राणुना कृते ॥ ६६ ॥
प्रणवेन पिधायास्यां तद्देहलेपनं हृदा । सुशीतलो भवत्येवं प्राप्य शीताभिघारणम् ॥
विदध्यात् संहितामन्त्रैः शिष्यं प्रति सकृत् सकृत् ।
धर्म्माद्यासनके हुत्वा कुण्डमण्डलपश्चिमे ॥ ६८ ॥
सम्पातञ्च स्रुचा हुत्वा शुद्धिं संहितया चरेत् । चरुकं सकृदालभ्य तथैव वषडन्तया ॥
धेनुमुद्रामृतीभूतं स्थण्डिलेशान्तिकं नयेत् । साज्यभागं स्वशिष्याणां भागोदेवायवह्नये
कुर्य्यात् तु लोकपालादेः समध्वाज्यमिदं त्रयम् ।
नमोऽन्तेन हृदा दद्यात् तेनैवाचमनीयकम् ॥ ७१ ॥
साज्यं मन्त्रशतं हुत्वा दद्यात् पूर्णां यथाविधि ।
मण्डलं कुण्डतः पूर्वे मध्ये वा शम्भुकुम्भयोः ॥ ७२ ॥
रुद्रमातृगणादीनां निर्वर्त्यान्तर्बलिं हृदा । शिवमध्येऽप्यलब्धाज्ञो विधायैकत्वभावनम्

सर्वज्ञतादियुक्तोऽहं समन्ताच्चोपरि स्थितः। ममांशो योजनास्थानमधिष्ठाताऽहमध्वरे
शिवोऽहमित्यहङ्कारी निष्क्रमेद् यागमण्डपात्। न्यस्तपूर्वाग्रसन्दर्भेशस्त्राणुकृतमण्डले
प्रणवासनके शिष्यं शुक्लवस्त्रोत्तरीयकम्। स्नातञ्चोदङ्मुखं मुक्त्यै पूर्ववक्त्रन्तु भुक्तये॥

ऊर्ध्वं कायं समारोप्य पूर्वास्यं प्रविलोकयेत्।
चरणादिशिखां यावन्मुक्तौ भुक्तौ विलोमतः॥ ७७॥

चक्षुषा सप्रसादेन शैवं धाम विवृण्वता। अस्त्रोदकेन सम्प्रोक्ष्य मन्त्राम्बुस्नानसिद्धये
भस्मस्नानाय विघ्नानां शान्तये पापभित्तये। सृष्टिसंहारयोगेनताड़येदस्त्रभस्मना॥

पुनरस्त्राम्बुना प्रोक्ष्य सकलीकरणाय तम्।
नाभेरूद्‌र्ध्वं कुशाग्रेण मार्जनीयास्त्रमुच्चरन्॥ ८०॥

त्रिधाऽऽलभेत तन्मूलैरघमर्षाय नाभ्यधः। द्विविध्याय च पाशानामालभेत शराणुना॥

तच्छरीरे शिवं साङ्गं सासनं विन्यसेत् ततः।
पुष्पादिपूजतस्यास्य नेत्रे नेत्रेण वा हृदा॥ ८२॥

बध्वामन्त्रितवस्त्रेण सितेन सदशेन च। प्रदक्षिणक्रमादेनं प्रवेश्य शिवदक्षिणम्॥८३॥
सवस्त्रमासनं दद्यात् यथावर्णं निवेदयेत्। संहारमुद्रयात्मानं मूर्त्या तस्य हृदम्बुजे॥

निरुध्य शोधिते काये न्यासं कृत्वा तमर्चयेत्।
पूर्व्वाननस्य शिष्यस्य मूलमन्त्रेण मस्तके॥ ८५॥

शिवहस्तं प्रदातव्यं रुद्रेशपददायकम्। शिवसेवाग्रहोपायं दत्तहस्तं शिवाणुना॥ ८६॥
शिवे प्रक्षेपयेत् पुष्पमपनीयार्च्चकान्तरम्। तत्पात्रस्थानमन्त्राढ्यं शिवदेवगणानुगम्॥

विप्रादीनां क्रमान्नाम कुर्य्याद् वा स्वेच्छया गुरुः।
प्रणतिं कुम्भवर्द्धन्योः कारयित्वाऽनलान्तिके॥ ८८॥

सदक्षिणासने तद्वत् सौम्यास्यमुपवेशयेत्।
शिष्यदेहविनिष्क्रान्तां सुषुम्णामिव चिन्तयेत्॥ ८९॥

निजविग्रहलीनाञ्च दर्भमूलेन मन्त्रितम्। दर्भाग्रं दक्षिणे तस्य विधाय करपल्लवे॥९०॥
तन्मूलमात्मजङ्घायामग्रञ्चेति शिखिध्वजे। शिष्यस्य हृदयं गत्वा रेचकेन शिवाणुना॥

पूरकेण समागत्य स्वकीयं हृदयान्तरम् । शिवाग्निना पुनः कृत्वा नाडीसन्धानमीदृशम्
हृदा तत् सन्निधानार्थं जुहुयादाहुतित्रयम् । शिवहस्तस्थिरत्वार्थं शतं मूलेन होमयेत्
इत्थं समयदीक्षायां भवेद् योग्यो भवार्च्चने ॥ ६३ ॥

इत्यादि महापुराण आग्नेये समयदीक्षाकथनं नामैकशीतितमोऽध्यायः ।

---

## द्व्यशीतितमोऽध्यायः

### संस्कारदीक्षाकथनम्

ईश्वर उवाच ।

वक्ष्येसंस्कारदीक्षाया विधानं शृणुषण्मुख! । आवाहयेन्महेशस्यच हिस्थस्य शिरोहृदि
संश्लिष्टौ तौ समभ्यर्च्य सन्तर्प्य हृदयात्मना । तयोः सन्निधये दद्यात्तेनैवाहुतिपञ्चकम्
कुसुमेनास्त्रलिप्तेन ताडयेत्तं हृदा शिशुम् ।
प्रस्फुरत्तारकाकारं चैतन्यं तत्र भावयेत् ॥ ३ ॥

प्रविश्य तत्र हुङ्कारमुक्तं रेचकयोगतः । संहारिण्या तदाकृष्य पूरकेण हृदि न्यसेत् ॥
ततो वागीश्वरीयोनौ मुद्रयोद्भवसञ्ज्ञया । हृत्सम्पुटितमन्त्रेण रेचकेन विनिक्षिपेत् ॥
ओं हां हां हां आत्मने नमः ।

जाज्वल्यमाने निर्द्धूमे जुहुयादिष्टसिद्धये । अप्रवृद्धे सधूमे तु होमो वह्नौ न सिध्यति ॥
स्निग्धः प्रदक्षिणावर्त्तःसुगन्धिःशस्यतेऽनलः । विपरीतस्फुलिङ्गी च भूमिस्पर्शःप्रशस्यते
इत्येवमादिभिश्चिह्नैर्हुत्वा शिष्यस्य कल्मषम् । पापाभक्षणहोमेन दहेद्वा तं भवात्मना
द्विजत्वापादनार्थाय तथारुद्रांशभावने । आहारबीजसंशुद्धौ गर्भाधानाय संस्थितौ ॥
सीमन्ते जन्मतो नामकरणाय च होमयेत् । शतानि पञ्च मूलेन वौषडादिदशांशतः ॥
शिथिलीभूतबन्धस्य शक्तावुत्कर्षणं च यत् । आत्मनो रुद्रपुत्रत्त्वे गर्भाधानं तदुच्यते ॥
स्वान्तत्र्यात्मगुणव्यक्तिरिह पुंसवनं मतम् । मायात्मनोर्विवेकेन ज्ञानं सीमन्तवर्द्धनम् ॥

शिवादितत्त्वशुद्धेस्तु स्वीकारो जननं मतम्।
बोधनं यच्छिवत्वेन शिवत्वार्हस्य नो मतम् ॥ १३ ॥

संहारमुद्रयात्मानं स्फुरद्वह्निकणोपमम्। विदधीत समादाय निजे हृदयपङ्कजे ॥ १४ ॥
ततःकुम्भकयोगेन मूलमन्त्रमुदीरयेत्। कुर्य्यात् सनवशीभावं तदा च शिवयोर्हृदि॥
ब्रह्मादिकारणात्यागक्रमाद्रेचकयोगतः । नीत्वा शिवान्तमात्मानमादायोद्भवमुद्रया ॥
हृत्सम्पुटितमन्त्रेण रेचकेन विधानवित्। शिष्यस्य हृदयाम्भोजकर्णिकायांविनिक्षिपेत्

पूजां शिवस्य वह्नेश्च गुरुः कुर्य्यात्तदोचिताम्।
प्रणतिश्चात्मने शिष्यं समयान् श्रावयेत्तथा ॥ १८ ॥
देवं न निन्देच्छास्त्राणि निर्म्माल्यादि न लङ्घयेत्।
शिवाग्निगुरुपूजा च कर्त्तव्या जीविताविधि ॥ १९ ॥

बालबालिशवृद्धस्त्रीभोगभुग्व्याधितात्मनाम्। यथाशक्ति ददीतार्थं समर्थस्यसमग्रकान्
भूताङ्गानि जटाभस्मदण्डकौपीनसंयमान् । ईशानाद्यैर्हृदाद्यैर्वा परिजप्ययथाक्रमात् ॥

स्वाहान्तसंहितामन्त्रैः पात्रेष्वारोप्य पूर्ववत्।
सम्पादितद्रुतं हुत्वा स्थण्डिलेशाय दर्शयेत् ॥ २२ ॥

रक्षणाय घटाधस्तादारोप्य क्षणमात्रकम्। शिवादाज्ञां समादाय ददीत व्रतिने गुरुः ॥
एवं समयदीक्षायां विशिष्टायां विशेषतः। वह्निहोमागमज्ञानयोग्यः सञ्जायते शिशुः ॥

इत्यादि महापुराणे आग्नेये संस्कारदीक्षाकथनं नाम द्व्यशीतितमोऽध्यायः ।

---

# त्र्यशीतितमोऽध्यायः

## निर्वाणदीक्षाकथनम्

ईश्वर उवाच।

अथ निर्वाणदीक्षायां कुर्य्यान्मूलादिदीपनम्। पाशबन्धनशक्त्यर्थं ताड़नादिकृतेन वा॥

एकैकया तदाहुत्या प्रत्येकं तत् त्रयेणवा। बीजगर्भशिखाद्धंन्तु हूंफडन्तम्रुवादिना ॥
ओं हूं हौं हौं हूं फडिति मूलमन्त्रस्य दीपनम्।
ओं हूं हौं हूं फडितिहृदय एवं शिरोमुखे ॥ ३ ॥
प्रत्येकं दीपनं कुर्य्यात् सर्व्वस्मिन् क्रूरकर्मणि।
शान्तिके पौष्टिके चास्य वषडन्तादिनाणुना ॥ ४ ॥
वषड्वौषट् समोपेतैः सर्वकाम्योपरिस्थितैः।
हवनं संवरैः कुर्य्यात् सर्वत्राप्यायनादिषु ॥ ५ ॥
ततः स्वसव्यभागस्थं मण्डले शुद्धविग्रहम्।
शिष्यं सम्पूज्य तत्सूत्रं सुषुम्णेति विभावितम् ॥ ६ ॥
मूलेन तच्छिखावन्धं पादाङ्गुष्ठान्तमानयेत्। संहारेणमुमुक्षोस्तुबध्नीयाच्छिष्यकायके
पुंसस्तु दक्षिणे भागे वामे नार्य्या नियोजयेत्। शक्तिंचशक्तिमन्त्रेणपूजितान्तस्यमस्तके
संहारमुद्रयाऽऽदाय सूत्रं तेनैव योजयेत्। नाडीन्त्वादाय मूलेन सूत्रे न्यस्य हृदार्चयेत्
अवगुण्ठ्य तु रुद्रेण हृदयेनाहुतित्रयम्। प्रदद्यात् सन्निधानार्थं शक्तावप्येवमेवहि ॥
ओं हां वर्णाध्वने नमो हां भवनाध्वनेनमः। ओं हांकलाध्वनेनमःशोध्याध्वानं हिसूत्रके
न्यस्यास्त्रवारिणा शिष्यं प्रोक्ष्यास्त्रमन्त्रितेन च।
पुष्पेण हृदि सन्ताड्य शिष्यदेहे प्रविश्य च ॥ १२ ॥
गुरुश्च तत्र हूङ्कारयुक्तं रेचकयोगतः। चैतन्यं हंसवीजस्थं विशिलष्येदायुधात्मना ॥
ओं हौं हूं फट्।
आच्छिद्य शक्तिसूत्रेण हां हं स्वाहेति चाणुना।
संहारमुद्रया सूत्रे नाडीभूते नियोजयेत् ॥ १४ ॥
ओं हां हं हां आत्मने नमः।
व्यापकं भावयेदेनं तनुत्रेणावगुण्ठयेत्। आहुतित्रितयं दद्यात् हृदा सन्निधिहेतवे ॥
विद्यादेहञ्च विन्यस्य यान्यतीतावलोकनम्। तस्यामितरतत्त्वाद्यं मन्त्रभूतं विचिन्तयेत्
॥ ओं हां हौं शान्यतीतकलापाशाय नम इत्यनेनावलोकयेत्।

द्वे तत्वे मन्त्रमप्येकं पदंवर्णाश्च षोडश। तथाऽष्टौ भुवनान्यस्यां बीजनाडीकथद्वयम्
विषयश्च गुणश्चैकं कारणं च सदा शिवम्। सितायांशान्त्यतीतायामन्तर्भाव्यप्रपीडयेत्
ओं हौं शान्त्यतीतकलापाशाय हूं फट्। संहारमुद्रयाऽऽदाय विदध्यात् सूत्रमस्तके।

पूजयेदाहुतीस्तिस्रो दद्यात् सन्निधिहेतवे ॥ १६ ॥

तत्त्वे द्वे अक्षरेद्वे च बीजनाडीकथद्वयम्। गुणौ मन्त्रौ तथाब्जस्थमेकंकारणमीश्वरम्

पदानि भानुसङ्ख्यानि भुवनानि दश सप्त च।

एकश्च विषयं शान्तौ कृष्णायामच्युतं स्मरेत् ॥ २१ ॥

ताडयित्वा समादाय मुखसूत्रे नियोजयेत्। जुहुयान्निजबीजेनसान्निध्यायाहुतित्रयम्

विद्यायां सप्त तत्त्वानि पादानामेकविंशतिम्।

षड्वर्णान् सञ्चरं चैकं लोकानां पञ्चविंशतिम् ॥ २३ ॥

गुणानान्त्रयमेकञ्च विषयं रुद्रकारणम्। अन्तर्भाव्यातिरिक्तायां बीजनाडीकथद्वयम् ॥
अस्त्रमादाय दद्याच्च पदं द्व्यधिकविंशतिम्। लोकानाञ्च कलानाञ्च षष्टिं गुणचतुष्टयम्
मन्त्राणां त्रयमेकञ्च विषयं कारणं हरिम्। अन्तर्भाव्यप्रतिष्ठायांशुक्लायांताड़नादिकम्
विधाय नाभिसूत्रस्थां सन्निधायाहुतीर्यजेत्। ह्रीं भुवनानां शतंसाग्रंपदानामष्टविंशतिम्
बीजनाडीसमीराणां द्वयोरिन्द्रिययोरपि। वर्णन्तत्त्वञ्च विषयमेककं गुणपञ्चकम् ॥
हेतुं ब्रह्माण्डमन्त्रस्थं शम्बराणां चतुष्टयम्। निवृत्तौ पीतवर्णायामन्तर्भाव्य प्रताडयेत्
आदौयत्तत्त्वभागान्ते सूत्रे विन्यस्य पूजयेत्। जुहुयादाहुतीस्तिस्रःसन्निधानायपावके

इत्यादाय कलासूत्रे योजयेच्छिष्यविग्रहात्।

सबीजायान्तु दीक्षायां समयाचारयागतः ॥ ३१ ॥

देहारम्भकरक्षार्थं मन्त्रसिद्धिफलादपि। इष्टापूर्त्तादिधर्म्मार्थं व्यक्तिरिक्तं प्रबन्धकम् ॥
चैतन्यबोधकं सूक्ष्मं कलानामन्तरे स्मरेत्। अमुनैव क्रमेणाथ कुर्य्यात्तर्पणदीपने ॥३३॥

आहुतिभिः स्वमन्त्रेण तिसृभिस्तसृभिस्तथा।

ओं हौं शान्त्यतीतकलापाशायस्वाहेत्यादितर्पणम्।

ओं हां हं हां शान्त्यतीतकलापाशायहूंफडित्यादिदीपनम्।

तत्सूत्रं व्याप्तिबोधाय कलास्थानेषु पञ्चसु ॥ ३५ ॥
सङ्गृह्यकुङ्कुमाज्येनतत्रसाङ्गं शिवंयजेत् । हूम्फडन्तैःकलामन्त्रैर्भिस्वापाशाननुक्रमात्
नमोऽन्तैश्च प्रविश्यान्तः कुर्य्याद् ग्रहणबन्धने ।
ओं हूं हां हौं हां हुं फट् शान्त्यतीतकलां गृह्णामि ।
बध्नामि चेत्यादिमन्त्रैः कलानां ग्रहणबन्धनादिप्रयोगः ।
पाशादीनाञ्च स्वीकारो ग्रहणं बन्धनं पुनः ॥ ३६ ॥
पुरुषं प्रति निःशेषव्यापारप्रतिपत्तये । उपवेश्याथ तत् सूत्रं शिष्यस्कन्धे निवेशयेत् ३७
विस्तृताघप्रमोषाय शतं मूलेन होमयेत् । परावसम्पुटे पुंसः स्त्रियाश्च प्रणितोदरे॥३८॥
हृदस्त्रसम्पुटं सूत्रं विधायाभ्यर्च्चयेद्धृदा । सूत्रं शिवेन साङ्गेन कृत्वासम्पातशोधितम्
निदध्यात् कलशस्याधो रक्षां विज्ञापयेदिति ।
शिष्यं पुष्पं करे दत्त्वा सम्पूज्य कलशादिकम् ॥ ४० ॥
प्रणमय्य वहिर्यायाद् यागमन्दिरमध्यतः । मण्डलत्रितयं कृत्वा मुमुक्षूनुत्तराननान् ४१
भुक्तये पूर्व्ववक्त्रांश्च शिष्यांस्तत्र निवेशयेत् । प्रथमे पञ्चगव्यस्य प्राशयेच्चुलुकत्रयम् ॥
पाणिना कुशयुक्तेन अर्च्चितानन्तरान्तरम् ।
चरुन्ततस्तृतीये तु ग्रासत्रितयसम्मितम् ॥ ४३ ॥
अष्टग्रासप्रमाणं वा दशनस्पर्शवर्जितम् । पालाशपुटके मुक्तौ भुक्तौ पिप्पलपत्रके ॥४४॥
हृदा सम्भोजनं दत्त्वा पूतैराचामयेज्जलैः ।
दन्तकाष्ठं हृदा कृत्वा प्रक्षिपेच्छोभने शुभम् ॥ ४५ ॥
न्यूनादिदोषमोषाय मूलेनाष्टोत्तरं शतम् । विधाय स्थण्डिलेशाय सर्व्वकर्म्मसमर्पणम्
पूजाविसर्जनञ्चास्य चण्डेशस्य च पूजनम् । निर्म्माल्यमपनीयाथ शेषमग्नौ यजेच्चरोः
कलशं लोकपालांश्च पूजयित्त्वा विसृज्य च ।
विसृजेद् गणमग्निञ्च रक्षितं यदि वाह्यतः ॥ ४८ ॥
वाह्यतो लोकपालानां दत्त्वा सङ्क्षेपतो बलिम् ।
भस्मना शुद्धतोयैर्वा स्नात्वा यागालयं विशेत् ॥ ४९ ॥

गृहस्थान् दर्भशय्यायां पूर्वशीर्षान् सुरक्षितान् ।
हृदा सङ्गस्मशय्यायां यतीन् दक्षिणमस्तकान् ॥ ५० ॥
शिखाबद्धशिखानस्त्रसप्तमाणवकान्वितान् ।
विज्ञाय स्नापयेच्छिष्यांस्ततो यायात् पुनर्बहिः ॥ ५१ ॥

ओं हिलि हिलि त्रिशूलपाणये स्वाहा ।

पञ्चगव्यञ्चरुं प्राश्य गृहीत्वा दन्तधावनम् ।
समाचम्य शिवं ध्यात्वा शय्यामास्थाय पावनीम् ॥ ५२ ॥
दीक्षागतं क्रियाकाण्डं संस्मरन् संविशेद्गुरुः ।
इति सङ्क्षेपतः प्रोक्तो विधिर्दीक्षाधिवासने ॥ ५३ ॥

इत्यादि महापुराणे आग्नेये निर्वाणदीक्षाकथनं नाम त्र्यशीतितमोऽध्यायः ।

———

## चतुरशीतितमोऽध्यायः

### निर्व्वाणदीक्षाविधानम् ।

ईश्वर उवाच ।

अथ प्रातः समुत्थाय कृतस्नानादिको गुरुः । दध्यार्द्रमांसमद्यादेःप्रशस्ताऽभ्यवहारिता
गजाश्वारोहणं स्वप्ने शुभं शुक्लांशुकादिकम् । तैलाभ्यङ्गादिकंहीनं होमो घोरेण शान्तये

नित्यकर्म्मद्वयं कृत्वा प्रविश्य मखमण्डपम् ।
स्वाचान्तो नित्यवत् कर्म्म कुर्य्यान्नैमित्तिके विधौ ॥ ३ ॥
ततः संशोध्य चात्मानं शिवहस्तं तथात्मनि ।
विन्यस्य कुम्भगं प्रार्च्य इन्द्रादीनामनुक्रमात् ॥ ४ ॥
मण्डले स्थण्डिले वाऽपि प्रकुर्वीत शिवार्च्चनम् ।
तर्पणं पूजनं वह्नेः पूर्णान्तं मन्त्रतर्पणम् ॥ ५ ॥

दुःस्वप्नदोषमोषाय शस्त्रेणाष्टाधिकंशतम्। हुत्वा हूं सम्पुटेनैव विदध्यान्मन्त्रदीपनम्
अन्तर्वलिविधानञ्च मध्ये स्थण्डिलकुम्भयोः। कृत्वाशिष्यप्रवेशायलब्धानुज्ञोवहिर्व्रजेत्
कुर्य्यात् समयवत्तत्र मण्डलारोपणादिकम्। सम्पातहोमं तन्नाडीरूपदर्भकरानुगम्॥

तत्सन्निधानाय तिस्रो हुत्वा मूलाणुनाऽऽहुतीः।
कुम्भस्थं शिवमभ्यर्च्च्य पाशसूत्रमुपाहरेत्॥ ९॥
स्वदक्षिणोद्र्ध्वकायस्य शिष्यस्याभ्यर्च्चितस्य च।
तच्छिखायां निबध्नीयात् पादाङ्गुष्ठावलम्बितम्॥ १०॥

तं निवेश्य निवृत्तेस्तु व्याप्तिमालोक्य चेतसा। ज्ञेयानि भुवनान्यस्यां शतमष्टाधिकंततः
कपालोऽजश्च बुद्धश्च वज्रदेहः प्रमर्द्दनः। विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः
अग्नो रुद्रो हुताशी च पिङ्गलः खादको हरः। ज्वलनो दहनो बभ्रुर्भस्मान्तकक्षपान्तकौ

याम्यमृत्युहरो धाता विधाता कार्य्यरञ्जकः।
कालो धर्मोऽप्यधर्मश्च संयोक्ता च वियोगकः॥ १४॥

नैर्ऋतो मारणो हन्ता क्रूरदृष्टिर्भयानकः। उद्र्ध्वांशको विरूपाक्षो धूम्रलोहितदंष्ट्रवान्
बलश्चातिवलश्चैव पाशहस्तो महाबलः। श्वेतश्च जयभद्रश्च दीर्घबाहुर्जलान्तकः॥ १६॥

वडवास्यश्च भीमश्च दशैते वारुणाः स्मृताः।
शीघ्रो लघुर्वायुवेगः सूक्ष्मस्तीक्ष्णः क्षपान्तकः॥ १७॥

पञ्चान्तकः पञ्चशिखः कपर्द्दी मेघवाहनः। जटामुकुटधारी च नानारत्नधरस्तथा॥१८॥

निधीशो रूपवान् धन्यो सौम्यदेहः प्रसादकृत्।
प्रकाशोऽप्यथ लक्ष्मीवान् कामरूपो दशोत्तरे॥ १९॥

विद्याधरो ज्ञानधरः सर्वज्ञो वेदपारगः। मातृवृत्तश्च पिङ्गाक्षो भूतपालो बलिप्रियः॥
सर्वविद्याविधाता च सुखदुःखहरा दश। अनन्तः पालको धीरः पातालाधिपतिस्तथा
वृषो वृषधरो वीर्य्यो ग्रसनः सर्वतोमुखः। लोहितश्चैव विज्ञेया दश रुद्राःफणिस्थिताः
शम्भुर्विभुर्गणाध्यक्षस्त्र्यक्षस्त्रिदशवन्दितः। संहारश्च विहारश्चलाभो लिप्सुर्विचक्षणः॥

अत्ता कुहककालाग्निरुद्रो हाटक एव च।

कुष्माण्डश्चैव सत्यश्च ब्रह्मा विष्णुश्च सप्तमः ॥ २४ ॥

रुद्रश्चाष्टाविमे रुद्राः कटाहाभ्यन्तरे स्थिताः । एतेषामेव नामानि भुवनानामपि स्मरेत्

भवोद्भवः सर्वभूतः सर्वभूतसुखप्रदः । सर्वसान्निध्यकृद् ब्रह्मविष्णुरुद्रशराच्चितः ॥२६॥

संस्तुत पूर्वस्थित ओं साक्षिन् ओं रुद्रान्तक-

ओं पतङ्ग ओं शब्द ओं सूक्ष्म ओं शिव सर्वसर्वद सर्वसान्निध्यकर-

ब्रह्मविष्णुरुद्रकर ओंनमः शिवाय ओं नमो नमः ।

अष्टाविंशति पादानि व्योमव्यापि मनो गुह ।

सद्यो हृदस्त्रनेत्राणि मन्त्रवर्णाष्टको मतः ॥ २७ ॥

बीजाकारो मकारश्च नाड्याविड़ापिङ्गलाह्वये ।

प्राणापानावुभौ वायू घ्राणोपस्थौ तथेन्द्रिये ॥ २८ ॥

गन्धस्तु विषयः प्रोक्तो गन्धादिगुणपञ्चके । पार्थिवं मण्डलं पीतं वज्राङ्कं चतुरस्रकम्

विस्तारो योजनानान्तु कोटिरस्य शताहता ।

अत्रैवान्तर्गता ज्ञेया योनयोऽपि चतुर्द्दश ॥ ३० ॥

प्रथमा सर्वदेवानां मन्या(न्वा)द्या देवयोनयः । मृगपक्षी च पशवश्चतुर्द्धा तु सरीसृपाः

स्थावरं पञ्चमं सर्वं योनिः षष्ठी अमानुषी ।

पैशाचं राक्षसं याक्षं गान्धर्वं चेन्द्रमेव च ॥ ३२ ॥

सौम्यं प्राणेश्वरं ब्राह्ममष्टमं परिकीर्त्तितम् ।

अष्टानां पार्थिवन्तत्त्वमधिकारास्पदं मतम् ॥ ३३ ॥

लयस्तु प्रकृतौ बुद्धौ भोगो ब्रह्मा च कारणम् ।

ततो जाग्रदवस्थानैः समस्तैर्भुवनादिभिः ॥ ३४ ॥

निवृत्ति गर्भितां ध्यात्वा स्वमन्त्रेण नियोज्य च ।

ओं हां हूं हां निवृत्तिकलापाशाय हूं फट् तत् ओं हां हां निवृत्तिकलापाशाय स्वाहेत्यनेनाङ्कुशमुद्रया पूरकेणाकृष्य ओं हूं हां हं निवृत्तिकलापाशाय हूं फडित्यनेन संहारमुद्रया कुम्भकेनाधः स्थानादादाय ओं ओं हं हां निवृत्तिकलापाशाय नमः

इत्यनेनोद्भवमुद्रया रेचकेन कुम्भे संस्थाप्य ओं हां निवृत्तिकलापाशाय नम इत्यनेना-
र्घ्यं दत्त्वा सम्पूज्य विमुखेनैव स्वाहान्तेनैव सन्निधानायाहुतित्रयं सन्तपर्णाहुतित्रयं
च दत्त्वा ओं हां ब्रह्मणे नम इति ब्रह्माणमावाह्य सम्पूज्य च स्वाहान्तेन सन्तर्प्य।

ब्रह्मन् तवाधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहम् ॥ ३९ ॥

भाव्यं त्वयाऽनुकूलेन विधिं विज्ञापयेदिति । आवाहयेत्ततो देवीं रक्षां वागीश्वरीं हृदा
इच्छाज्ञानक्रियारूपां षड्विधां ह्येककारणम् । पूजयेत्तर्पयेद्देवीं प्रकारेणामुना ततः॥
वागीश्वरीं विनिःशेषयोनिविक्षोभकारणम् । हृत्सम्पुटार्थवीजादिहूंफडन्तशराणुना॥
ताड़येद्धृदये तस्य प्रविशेत्स विधानवित् । ततः शिष्यस्यचैतन्यं हृदि वह्निकणोपमम्

निवृत्तिस्थं युतं पाशैर्ज्येष्ठया विभजेद् यथा ।

ओं हां हूं हः हूं फट् ।

ओं हां स्वाहेत्यनेनाथ पूरकेणाङ्कुशमुद्रया ॥ ४० ॥

तदाकृष्य स्वमन्त्रेण गृहीत्वाऽऽत्मनि योजयेत् ।

ओं हां हूं हां आत्मने नमः ।

पित्रोर्विभाव्य संयोगं चैतन्यं रेचकेन तत् ॥ ४१ ॥

ब्रह्मादिकारणत्यागक्रमान्नीत्वा शिवास्पदम् । गर्भाधानार्थमादाय युगपत् सर्वयोनिषु

क्षिपेद्वागीश्वरीयोनौ वामयोद्भवमुद्रया । ओं हां हां हां आत्मने नमः ।

पूजयेद्प्यनेनैव तर्पयेदपि पञ्चधा ॥ ४२ ॥

अन्ययोनिषु सर्व्वासु देहशुद्धिं हृदाचरेत् । नात्र पुंसवनं स्त्र्यादिशरीरस्यापि सम्भवात्
सीमन्तोन्नयनं वापि दैवान्यङ्गानि देहवत् । शिरसा जन्मकुर्व्वीत जुगुप्सन्सर्वदेहिनाम्
तथैव भावयेदेषामधिकारं शिवाणुना । भोगं कवचमन्त्रेण शस्त्रेण विषयात्मनः॥
मोहरूपमभेदञ्च लयसञ्ज्ञं विभावयेत् । शिवेन श्रोतसां शुद्धिं हृदा तत्त्वविशोधनम्॥
पञ्च पञ्चाहुतीः कुर्य्यात् गर्भाधानादिषु क्रमात् । मायया मलकर्मादिपाशबन्धनिवृत्तये
निष्कृत्यैव हृदा पश्चाद् यजेत शतमाहुतीः । मलशक्तिनिरोधेन पाशानाञ्चवियोजनम्
स्वाहान्तायुधमन्त्रेण पञ्चपञ्चाहुतीर्यजेत मायाद्यन्तस्य पाशस्य सप्तवारास्त्रजप्तया॥

कर्त्तव्याच्छेदनं कुर्य्यात् कल्पशस्त्रेण तद् यथा। ओं हूं निवृत्तिकलापाशाय हूं फट्॥
बन्धकत्वञ्च निर्वर्त्य हस्ताभ्याञ्च शराणुना ॥ ५१ ॥
विसृज्य वर्त्तुलीकृत्य घृतपूर्णे स्रुवे धरेत्। दहेदनुकलास्त्रेण केवलास्त्रेण भस्मसात्॥
कुर्य्यात् पञ्चाहुतीर्दत्त्वा पाशाङ्कुशनिवृत्तये। ओं हः अस्त्राय हूं फट्।
प्रायश्चित्तं ततः कुर्य्यादस्त्राहुतिभिरष्टभिः ॥ ५३ ॥
अथावाह्य विधातारं पूजयेत्तर्पयेत्तथा।
तत ओं हां शब्दस्पर्शशुद्धब्रह्मन् गृहाण स्वाहेत्याहुतित्रयेणाधिकारमस्यसमर्पयेत्
दग्धनिःशेषपापस्य ब्रह्मन्नस्य पशोस्त्वया ॥ ५४ ॥
बन्धाय न पुनः स्थेयं शिवाज्ञां श्रावयेदिति। ततोविसृज्य धातारं नाड्यादक्षिणयाशनैः
संहारमुद्रयात्मानं कुम्भकेन निजात्मना। राहुयुक्तैकदेशेन चन्द्रबिम्बेन सन्निभम्॥
आदाय योजयेत् सूत्रे रेचकेनोद्भवाख्यया। पूजयित्वार्घ्यपात्रस्थतोयविन्दुसुधोपमम्
आप्यायनाय शिष्यस्य गुरुः शिरसि विन्यसेत्।
विसृज्य पितरौ दद्याद्वौषडन्तशिवाणुना। पूरणाय विधिः पूर्णा निवृत्तिरितिशोधिता
इत्यादि महापुराणे आग्नेने निर्वाणदीक्षाविधानं नाम चतुरशीतितमोऽध्यायः।

---

# पञ्चाशीतितमोऽध्यायः

## प्रतिष्ठाकलाशोधनोक्तिः।

ईश्वर उवाच।

तत्त्वयोरथ सन्धानं कुर्य्याच्छुद्धविशुद्धयोः। ह्रस्वदीर्घप्रयोगेण नादनादान्तसङ्गिना॥
ओं हां हूं हां अप्तेजोवायुराकाशं तन्मात्रेन्द्रियबुद्धयः।
गुणत्रयमहङ्कारश्चतुर्विंशः पुमानिति ॥ २ ॥
प्रतिष्ठायां निविष्टानि तत्त्वान्येतानि भावयेत्।

पञ्चविंशतिसङ्ख्यानि खादियान्ताक्षराणि च ॥ ३ ॥

पञ्चाशदधिका षष्टिर्भुवनैस्तुल्यसञ्ज्ञिताः । तावन्त एवरुद्राश्च विज्ञेयास्तत्र तद् यथा
अमरेशः प्रभावश्च नैमिषः पुष्करोऽपि च । तथापादिश्च दण्डिश्च भावभूतिरथाष्टमः ॥
नकुलीशो हरिश्चन्द्रःश्रीशैलोदशमःस्मृतः । अन्वीशोऽम्रातिकेशश्चमहाकालोऽथमध्यमः

केदारो भैरवश्चैव द्वितीयाष्टकमीरितम् ।

ततो गयाकुरुक्षेत्रखलानादिकनादिके ॥ ७ ॥

विमलश्चाट्टहासश्च महेन्द्रो भीम एव च । वस्वापदं रुद्रकोटिरवियुक्तो महाबलः ॥८॥
गोकर्णो भद्रकर्णश्च स्वर्णाक्षः स्थाणुरेव च । अजेशश्चैव सर्वज्ञो भास्वरः सूदनान्तरः

सुबाहुर्मत्तरूपी च विशालो जटिलस्तथा ।

रौद्रोऽथ पिङ्गलाक्षश्च कालदंष्ट्री भवेत्ततः ॥ १० ॥

विदुरश्चैव घोरश्च प्राजापत्यो हुताशनः । कामरूपी तथा कालः कर्णोऽप्यथ भयानकः
मतङ्गः पिङ्गलश्चैव हरो वै धातृसञ्ज्ञकः । शङ्कुकर्णो विधानश्च श्रीकण्ठश्चन्द्रशेखरः ॥

सहैतेन च पर्य्यन्ताः कथ्यन्तेऽथ पदान्यपि ।

व्यापिन् ओं अरूप ओं प्रमथ ओं तेजः ओं ज्योतिः ओं पुरुष ओं अग्ने ओं अधूम ओं अभस्म ओं अनादि ओं नाना ओं धूधू ओं भूः ओं भुवः ओं स्वः ओं निधनोद्भव शिव सर्व परमात्मन् महेश्वर महादेव सद्भावेश्वर महातेजः योगाधिपतये मुञ्च प्रथम सर्व सर्वेश्वर द्वात्रिंशत् पदानि ।

बीजभावे त्रयो मन्त्रा वामदेवः शिवः शिखा ॥ १३ ॥

गान्धारी च सुषुम्णा च नाड्यौ द्वौ मारुतौ तथा ।

समानोदाननामानौ रसनापायुरिन्द्रिये ॥ १४ ॥

रसस्तु विषयो रूपशब्दस्पर्शरसा गुणाः । मण्डलं वर्त्तुलं तच्च पुण्डरीकाङ्कितं सितम्

स्वप्नावस्थाप्रतिष्ठायां कारणं गरुडध्वजम् ।

प्रतिष्ठान्त कृतं सर्वं सञ्चिन्त्य भुवनादिकम् ॥ १६ ॥

सूत्रं देहे स्वमन्त्रेण प्रविश्यैनां वियोजयेत् ।

ओं हां क्लीं हां प्रतिष्ठाकलापाशाय ओं फट् स्वाहान्तेनानेनैव पूरकेणाङ्कुशमुद्रया समाकर्षेत् ततः ओं हां हूं हां हूं प्रतिष्ठाकलाशापाय हूं फडित्यनेन संहारमुद्रया कुम्भकेन हृदयादधो नाडीसूत्रादादाय ओं हां हूं हां हां प्रतिष्ठाकलापाशाय नम इत्यनेनोद्भवमुद्रया रेचकेन कुम्भे समारोपयेत् ओं हां हीं प्रतिष्ठाकलापाशाय नम इत्यनेनार्च्चयित्वा सम्पूज्य स्वाहान्तेनाहुतीनां त्रयेण सन्निधाय ततः ओं हां विष्णवे नम इति विष्णुमावाह्य सम्पूज्य सन्तर्प्य ।

विष्णो तवाधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहम् ॥ १७ ॥
भाव्यं त्वयानुकूलेन विष्णुं विज्ञापयेदिति ।
ततो वागीश्वरीं देवीं वागीशमपि पूर्ववत् ॥ १८ ॥
आवाह्याभ्यर्च्य सन्तर्प्य शिष्यं वक्षसि ताडयेत् ।
ओं हां हां हं फट् । प्रविशेदप्यनेनैव चैतन्यं विभजेत्ततः ॥ १९ ॥
शस्त्रेण पाशसंयुक्तं ज्येष्ठयाऽङ्कुशमुद्रया । ओं हां हं हों हूं फट् ।
स्वाहान्तेन हृदाकृष्य तेनैव पुटितात्मना ॥ २० ॥
गृहीत्वा तं नमोऽन्तेन निजात्मनि नियोजयेत् ।
ओं हां हं हों आत्मने नमः ।
पूर्ववत् पितृसंयोगं भावयित्वोद्भवाख्यया ॥ २१ ॥
वामया तदनेनैव देवीगर्भे विनिक्षिपेत् ।
ओं हां हं हां आत्मने नमः ।
देहोत्पत्तौ हृदा ह्येवं शिरसा जन्मना तथा ॥ २२ ॥

शिखया वाधिकाराय भोगाय कवचाणुना । तत्त्वशुद्धौ हृदा ह्येवं गर्भाधानाय पूर्ववत् शिरसा पाशशैथिल्ये निष्कृत्यैवं शतं जपेत् । एवं पाशवियोगेऽपि ततः शस्त्रात्मजप्तया छिन्द्यादस्त्रेण कर्त्तर्य्या कलाबीजवता यथा । ओं हीं प्रतिष्ठाकलापाशाय हः फट् ॥

विसृज्य वर्त्तुलीकृत्य पाशमस्त्रेण पूर्ववत् ॥ २५ ॥
घृतपूर्णे श्रुवे दत्त्वा कलास्त्रेणैव होमयेत् । अस्त्रेण जुहुयात् पञ्च पाशाङ्कुरनिवृत्तये ॥

प्रायश्चित्तनिषेधार्थं दद्यादष्टाहुतीस्ततः । ओं हः अस्त्राय हूं फट् ।
हृदावाह्य हृषीकेशं कृत्वा पूजनतर्पणे ॥ २७ ॥
पूर्वोक्तविधिना कुर्य्यादधिकारसमर्पणम् ।
ओं हां रसशुल्कं गृहाण स्वाहा । निःशेषदग्धपाशस्यपशोरस्य हरे त्वया ॥ २८ ॥
न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ।
ततो विसृज्य गोविन्दं विद्यात्मानं नियोज्य च ॥ २९ ॥
बाहुमुक्तार्द्धद्धृयेन चन्द्रविम्बेन सन्निभम् । संहारमुद्रया स्वस्थं विधायोद्भवमुद्रया ॥
सूत्रे संयोज्य विन्यस्य तोयविन्दुंयथापुरा । विसृज्य पितरौ वह्नेःपूजितौकुसुमादिभिः
दद्यात्पूर्णां विधानेन प्रतिष्ठाऽपि विशोधिता ॥ ३१ ॥
इत्यादि महापुराणे आग्नेये प्रतिष्ठाकलाशोधनोक्तिर्नाम पञ्चाशीतितमोऽध्यायः ।

---

## षड़शीतितमोऽध्यायः

### विद्याविशोधनविधानम् ।

ईश्वर उवाच ।

सन्धानमथ विद्यायाः प्राचीनकलया सह । कुर्वीतपूर्ववत् कृत्वा तत्त्वं वर्णय तद् यथा
ओं हों क्ष्मीमिति सन्धानम् ।
रागश्च शुद्धविद्या च नियतिः कलया सह ।
कालो माया तथाऽविद्या तत्त्वानामिति सप्तकम् ॥ २ ॥
रलवाः शषसाः वर्णाः षड् विद्यायां प्रकीर्त्तिताः ।
पदानि प्रणवादीनि एकविंशतिसङ्ख्यया ॥ ३ ॥
ओं नमः शिवाय सर्वप्रभवे हं शिवाय ईशानमूर्द्धाय तत्पुरुषवक्त्राय अघोरहृदयाय
वामदेवगुह्याय सद्योजातमूर्त्तये ओं नमो नमो गुह्यातिगुह्याय गोप्त्रे अनिधनाय सर्वा-

धिपाय ज्योतीरूपाय परमेश्वराय भावेन ओं व्योम ।
ओं रुद्राणां भुवनानाञ्च स्वरूपमथ कथ्यते ।
प्रथमो वामदेवः स्यात्ततः सर्वभवोद्भवः ॥ ४ ॥
वज्रदेहः प्रभुर्धाता क्रमविक्रमसुप्रभाः । वटुः प्रशान्तनामा च परमाक्षरसञ्ज्ञकः ॥ ५ ॥
शिवश्च सशिवो बभ्रुरक्षयः शम्भुरेव च । अदृष्टरूपनामानौ तथाऽन्यो रूपवर्द्धनः ॥ ६ ॥
मनोन्मनोमहावीर्य्यश्चित्राङ्गस्तदनन्तरम् । कल्याण इति विज्ञेयाः पञ्चविंशतिसङ्ख्यया
मन्त्रो घोरामरौ वीजे नाड्यौ द्वे तत्र ते यथा ।
पुषा च हस्तिजिह्वा च व्याननागौ प्रभञ्जनौ ॥ ८ ॥
विषयो रूपमेवैकमिन्द्रिये पादचक्षुषी । शब्दः स्पर्शश्च रूपञ्च त्रय एते गुणाः स्मृताः
अवस्थाऽत्र सुषुप्तिश्च रुद्रो देवस्तु कारणम् । विद्यामध्यगतं सर्वं भावयेद्भुवनादिकम्
ताडनं छेदनं तत्र प्रवेशश्चापि योजनम् । आकृष्य ग्रहणं कुर्य्याद्धियया हृत्प्रदेशतः॥११॥
आत्मन्यारोप्य सङ्गृह्य कलां कुण्डे निवेशयेत् ।
रुद्रं कारणमावाह्य विज्ञाप्य च शिशुं प्रति ॥ १२ ॥
पित्रोरावाहनं कृत्वा हृदये ताडयेच्छिशुम् ।
प्रविश्य पूर्वमन्त्रेण तदात्मनि नियोजयेत् ॥ १३ ॥
आकृष्यादाय पूर्वोक्तविधिनाऽऽत्मनि योजयेत् ।
वामया योजयेद्द् योनौ गृहीत्वा द्वादशान्ततः ॥ १४ ॥
कुर्वीत देहसम्पत्तिं जन्माधिकारमेव च । भोगं लयन्तथा श्रोतःशुद्धितत्त्वविशोधनम् ॥
निःशेषमलकर्म्मादिपाशबन्धनिवृत्तये । निष्कृत्यैव विधानेन यजेत शतमाहुतीः ॥ १६ ॥
अस्त्रेण पाशशैथिल्यं मलशक्ति तिरोहिताम् ।
छेदनं मर्दनं तेषां वर्त्तुलीकरणं तथा ॥ १७ ॥
दाहं तदक्षराभावं प्रायश्चित्तमथोदितम् । रुद्राण्यावाहनं पूजा रूपगन्धसमर्पणम् ॥१८॥
ओं ह्रीं रूपगन्धौ शुल्कं रुद्र गृहाण स्वाहा ।
संश्राव्य शाम्भवीमाज्ञां रुद्रं विसृज्य कारणम् ।

विधायात्मनि चैतन्यं पाशसूत्रे निवेशयेत् ॥ १९ ॥
बिन्दुं शिरसि विन्यस्य विसृजेत् पितरौ ततः ।
दद्यात् पूर्णां विधानेन समस्तविधिपूरणीम् ॥ २० ॥
पूर्वोक्तविधिना कार्य्यं विद्यायां ताडनादिकम् ।
स्ववीजन्तु विशेषः स्यादिति विद्या विशोधिता ॥ २१ ॥

इत्यादि महापुराणे आग्नेये विद्याविशोधनविधानं नाम षडशीतितमोऽध्यायः ।

---

# सप्ताशीतितमोऽध्यायः ।

## शान्तिशोधनकथनम्

ईश्वर उवाच ।

सन्दध्यादधुना विद्यां शान्त्या सार्द्धं यथाविधि ।
शान्तौ तत्त्वद्वयं लीनं भावेश्वरसदाशिवौ ॥ १ ॥
हकारश्च क्षकारश्च द्वौ वर्णौ परिकीर्त्तितौ ।
रुद्राः समाननामानो भुवनैः सह तद् यथा ॥ २ ॥
प्रभवः समयः क्षुद्रो विमलः शिव इत्यपि । घनौ निरञ्जनाकारौ स्वशिवौ दीप्तिकारणौ
त्रिदशेश्वरनामा च त्रिदशः कालसञ्ज्ञकः ।
सूक्ष्माम्बुजेश्वरश्चेति रुद्राः शान्तौ प्रतिष्ठिताः ॥ ४ ॥

व्योमव्यापिने व्योमव्याप्यरूपाय सर्वव्यापिने शिवाय अनन्ताय अनाथाय अनाश्रिताय ध्रुवाय शाश्वताय योगपीठसंस्थिताय नित्ययोगिने ध्यानाहारायेति द्वादशपदानि ।

पूरुषः कवचौ मन्त्रौ वीजे विन्दूपकारकौ । अलम्वुषायसानाड्यौ वायू कृकरकूर्म्मकौ॥
इन्द्रिये त्वक्पायस्या स्पर्शस्तु विषयो मतः । गुणौ स्पर्शनिनादौ द्वावेकःकारणमीश्वर

तुर्य्यावस्थेति शान्तिस्थं सम्भाव्य भुवनादिकम् ।
विदध्यात्ताडनं भेदं प्रवेशञ्च वियोजनम् ॥ ७ ॥
आकृष्य ग्रहणं कुर्य्याच्छान्तेर्वदनसूत्रतः। आत्मन्यारोप्य सङ्गृह्य कलां कुण्डे निवेशयेत्
ईश तवाधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहम् ।
भव्यं त्वयाऽनुकूलेन कुर्य्यात् विज्ञापनामिति ॥ ६ ॥
आवाहनादिकं पित्रोः शिष्यस्य ताडनादिकम् ।
विधायादाय चैतन्यं विधिनाऽऽत्मनि योजयेत् ॥ १० ॥
पूर्ववत् पितृसंयोगं भावयित्वोद्भवाख्यया ।
हृत्सम्पुटात्मबीजेन देवीगर्भे नियोजयेत् ॥ ११ ॥
देहोत्पत्तौ हृदा पञ्च शिरसा जन्महेतवे । शिखया वाऽधिकाराय भोगाय कवचाणुना
लयाय शस्त्रमन्त्रेण श्रोतःशुद्धौ शिवेन च । तत्त्वशुद्धौ हृदा ह्येवं गर्भाधानादिपूर्ववत् ॥
वर्म्मणा पाशशैथिल्यं निष्कृत्यैवं शतं जपेत् । मलशक्तितिरोधाने शस्त्रेणाहुतिपञ्चकम्
एवं पाशवियोगेऽपि ततः सप्तास्त्रजप्तया । छिन्द्यादस्त्रेण कर्त्तर्य्या पाशान्बीजवता यथा
ओं हौं शान्तिकलापाशाय हः हूं फट् । विसृज्य वर्त्तुलीकृत्य पाशमस्त्रेण पूर्ववत् ॥
घृतपूर्णे श्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ॥ १६ ॥
अस्त्रेण जुहुयात् पञ्च पाशाङ्कुशनिवृत्तये । प्रायश्चित्तनिषेधाय दद्यादष्टाहुतीरथ ॥ १७ ॥
ओं हः अस्त्राय हूं फट् ।
हृदेश्वरं समावाह्य कृत्वा पूजनतर्पणे । विदधीत विधानेन तस्मै शुल्कसमर्पणम् ॥१८॥
ओं हां ईश्वर बुद्ध्यहङ्कारौ शुल्कं गृहाण स्वाहा ।
निःशेषदग्धपाशस्य पशोरस्येश्वर त्वया ।
न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ॥ १६ ॥
विसृजेदीश्वरन्देवं रौद्रात्मानं नियोजयेत् ।
ईषच्चन्द्रमिवात्मानं विधिनाऽऽत्मनि योजयेत् ॥ २० ॥
सूत्रे संयोजयेदेनं शुद्धयोद्भवमुद्रया । दद्यान्मूलेन शिष्यस्य शिरस्यमृतबिन्दुकम् ॥

विसृज्य पितरौ वह्नेः पूजितौ कुसुमादिभिः ।
दद्यात् पूर्णां विधानज्ञो निःशेषविधिपूरणीम् ॥ २२ ॥
अस्यामपि विधातव्यं पूर्ववत् ताड़नादिकम् ।
स्वबीजन्तु विशेषः स्याच्छुद्धिः शान्तेरपीड़िता ॥ २३ ॥

इत्यादि महापुराणे आग्नेये शान्तिशोधनकथनं नाम सप्ताशीतितमोऽध्यायः ।

## अष्टाशीतितमोऽध्यायः ।

### निर्वाणदीक्षाकथनम् ।

ईश्वर उवाच ।

सन्धानं शान्त्यतीतायाः शान्त्या सार्द्धं विशुद्धया ।
कुर्वीत पूर्ववत् तत्र तत्त्ववर्णादि तद् यथा ॥ १ ॥
ओं ह्रीं क्षौं हौं हां इति सन्धानानि । उभौ शक्तिशिवौ तत्त्वे भुवनाष्टकसिद्धिकम् ॥
दीपकं रोचिकञ्चैव मोचकं चोर्द्ध्वगामि च ॥ २ ॥
व्योमरूपमनाथञ्च स्यादनाश्रितमष्टमम् । ओङ्कारपदमीशाने मन्त्रो वर्णाश्च षोड़श ॥
अकारादिविसर्गान्ता बीजेन देहकारकौ । कुहूश्च शङ्खिनी नाड्यौ देवदत्तधनञ्जयौ ॥४॥
मारुतौ स्पर्शनं श्रोत्रं इन्द्रिये विषयो नभः ।
शब्दो गुणोऽस्यावस्था तु तुर्य्यातीता तु पञ्चमी ॥ ५ ॥
हेतुः सदाशिवो देव इति तत्त्वादिसञ्चयम् ।
सञ्चिन्त्य शान्त्यतीताख्यं विदध्यात् ताड़नादिकम् ॥ ६ ॥
कलापाशं समाताड्य फड़न्तेन विभिद्य च । प्रविश्यान्तर्न्नमोऽन्तेनफड़न्तेनवियोजयेत्
शिखाहृत्सम्पुटीभूतं स्वाहान्तं सृणिमुद्रया । पूरकेण समाकृष्य पाशं मस्तकसूत्रतः ॥
कुम्भकेन समादाय रेचकेनोद्भवाख्यया । हृत्सम्पुटनमोऽन्तेन वह्निं कुण्डे निवेशयेत् ॥

अस्याः पूजादिकं सर्वं निवृत्तेरिव साधयेत्।
सदाशिवं समावाह्य पूजयित्वा प्रतर्प्य च ॥ १० ॥
सदा ख्यातेऽधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहम्।
भाव्यं त्वयाऽनुकूलेन भक्त्या विज्ञापयेदिति ॥ ११ ॥

पित्रोरावाहनं पूजां कृत्वा तर्पणसन्निधी। हृत्सम्पुटात्मवीजेन शिष्यं वक्षसि ताड़येत्

ओं हां हूं हं फट्।
प्रविश चाप्यनेनैव चैतन्यं विभजेत् ततः।
शस्त्रेण पाशसंयुक्तं ज्येष्ठयाऽङ्कुशमुद्रया ॥ १३ ॥
ओं हां हः हूं फट्।
स्वाहान्तेन तदाकृष्य तेनैव पुटितात्मना।
गृहीत्वा तन्नमोऽन्तेन निजात्मनि नियोजयेत् ॥ १४ ॥
ओं हां हं हीं आत्मने नमः।
पूर्ववत् पितृसंयोगं भावयित्वोद्भवाख्यया।
वामया तदनेनैव देव्या गर्भे नियोजयेत् ॥ १५ ॥
गर्भाधानादिकं सर्वं पूर्वोक्तविधिना चरेत्।
मूलेन पाशशैथिल्ये निष्कृत्यैव शतं जपेत् ॥ १६ ॥

नलशक्तितिरोधाने पाशानाञ्च वियोजने। पञ्च पञ्चाहुतीर्दद्यादायुधेन यथा पुरा ॥१७॥

पाशानायुधमन्त्रेण सप्तवाराभिजप्तया। छिन्द्यादस्त्रेण कर्त्तर्य्या कलावीजयुजा यथा॥

ओं हां शान्त्यतीतकलापाशाय हः हूं फट्। विसृज्य वर्त्तुलीकृत्य पाशानस्त्रेण पूर्ववत्

घृतपूर्णे श्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ॥ १६ ॥

अस्त्रेण जुहुयात् पञ्च पाशाङ्कुशनिवृत्तये। प्रायश्चित्तनिषेधार्थं दद्यादष्टाहुतीस्ततः ॥

सदाशिवं हृदावाह्य कृत्वा पूजनतर्पणे। पूर्वोक्तविधिना कुर्य्यादधिकारसमर्पणम् ॥

ओं हां सदाशिव! मनोबिन्दुं शुल्कं गृहाण स्वाहा।
निःशेषदग्धपाशस्य पशोरस्य सदाशिव!।

वन्धाय न त्वया स्थेयं शिवाज्ञां श्रावयेदिति ॥ २२ ॥

मूलेन जुहुयात् पूर्णां विसृजेत् तु सदाशिवम् । ततो विशुद्धमात्मानं [illegible]मिवोदितम्

संहारमुद्रया रौद्रया संयोज्यगुरुरात्मनि । कुर्वीत शिष्यदेहस्थमुद्धृत्योद्भवमुद्रया ॥२४॥

दद्यादाप्यायनायास्य मस्तकेऽर्घ्याम्बुविन्दुकम् ।

क्षमयित्वा महाभक्त्या पितरौ विसृजेत् तथा ॥ २५ ॥

खेदितौ शिष्यदीक्षायै यन्मया पितरौ युवाम् ।

कारुण्यान्मोक्षयित्वा तद् व्रज त्वं स्थानमात्मनः ॥ २६ ॥

शिखामन्त्रितकर्त्तर्य्या बोधशक्तिस्वरूपिणीम् ।

शिखां छिन्द्याच्छिवास्त्रेण शिष्यस्य चतुरङ्गुलाम् ॥ २७ ॥

ओं क्लीं शिखायै हूं फट् ओं हः अस्त्राय हूं फट् ।

स्रुचितां घृतपूर्णायां गोविड्गोलकमध्यगाम् ।

संविधायास्त्रमन्त्रेण हूं फडन्तेन होमयेत् ॥ २८ ॥

ओं हौं हः अस्त्राय हूं फट् ।

प्रक्षाल्य स्रुक्स्रुवौ शिष्यं संस्नाप्याचम्य च स्वयम् ।

योजनिकास्थमात्मानं शस्त्रमन्त्रेण ताडयेत् ॥ २९ ॥

वियोज्याकृष्य सम्पूज्य पूर्ववद्द्वादशान्ततः । आत्मीयहृदयाम्भोजकर्णिकायां निवेशयेत्

पूरितं श्रुवमाज्येन विहिताधोमुखश्रुचा । नित्योक्तविधिनाऽऽदाय शङ्खसन्निभमुद्रया ॥

प्रसारितशिरोग्रीवो नादोच्चारानुसारतः । समदृष्टिशिवश्चान्तः परभावसमन्वितः ॥३२॥

कुम्भमण्डलवह्निभ्यः शिष्यादपि निजात्मनः ।

गृहीत्वा षड्विधाध्वानं श्रुगग्रे प्राणनाडिकम् ॥ ३३ ॥

सञ्चिन्त्य बिन्दुवद् ध्यात्वा क्रमशः सप्तधा यथा । प्रथमं प्राणसंयोगस्वरूपमपरन्ततः

हृदयादिक्रमोच्चारविसृष्टं मन्त्रसञ्ज्ञकम् ।

पूरकं कुम्भकं कृत्वा व्यादाय वदनं मनाक् ॥ ३५ ॥

सुषुम्णानुगतं नादस्वरूपन्तु तृतीयकम् । सप्तमे कारणे त्यागात् प्रशान्तविस्वरं लयः

शक्तिनादोर्ध्वसञ्चारस्तच्छक्तिविस्वरं मतम् । प्राणस्य निखिलस्यापि शक्तिप्रमेयवर्जितम्
तत्कालविस्वरं षष्ठं शक्त्यतीतञ्च सप्तमम् । तदेतद् योजनास्थानं विस्वरं तत्त्वसञ्ज्ञकम्

पूरकं कुम्भकं कृत्वा व्यादाय वदनं मनाक् ।
शनैरुदीरयन् मूलं कृत्वा शिष्यात्मनो लयम् ॥ ३६ ॥

हकारे तडिदाकारे षडध्वप्राणरूपिणि । उकारं परतो नाभेर्वितस्ति व्याप्य संस्थितम्
ततः परं मकारन्तु हृदयाच्चतुरङ्गुलम् । ओङ्कारं वाचकं विष्णोस्ततोऽष्टाङ्गुलकण्ठकम्
चतुरङ्गुलतालुस्थं मकारं रुद्रवाचकम् । तद्वल्ललाटमध्यस्थं विन्दुमीश्वरवाचकम् ॥४२॥

नादं सदाशिवं देवं ब्रह्मरन्ध्रावमानकम् ।
शक्तिं च ब्रह्मरन्ध्रस्थां त्यजन्नित्यमनुक्रमात् ॥ ४३ ॥

दिव्यं पिपीलिकास्पर्शं तस्मिन्नेवानुभूय च । द्वादशान्ते परे तत्त्वे परमानन्दलक्षणे ॥

भावशून्ये मनोऽतीते शिवे नित्यगुणोदये ।
विलीय मानसे तस्मिन् शिष्यात्मानं विभावयेत् ॥ ४५ ॥
विमुञ्चन् सर्पिषो धारां ज्वालान्तेऽपि परे शिवे ।
योजनिकास्थिरत्वाय वौषडन्तशिवाणुना ॥ ४६ ॥
दत्त्वा पूर्णां विधानेन गुणापादनमाचरेत् ।

ओं हां आत्मने सर्वज्ञो भव स्वाहा । ओं हां आत्मने परितृप्तो भव स्वाहा । ओं हूं आत्मने अनादिबोधो भव स्वाहा । ओं हैं आत्मने स्वतन्त्रो भव स्वाहा । ओं हौं आत्मन् ! अलुप्तशक्तिर्भव स्वाहा । ओं हः आत्मने अनन्तशक्तिर्भव स्वाहा ।

इत्थं षड्गुणमात्मानं गृहीत्वा परमाक्षरात् ॥ ४७ ॥

विधिना भावनोपेतः शिष्यदेहे नियोजयेत् । तीव्राणुशक्तिसम्पातजनितश्रमशान्तये ॥
शिष्यमूर्द्धनि विन्यस्येदर्घ्यादमृतविन्दुकम् । प्रणमय्येशकुम्भादीन् शिवाद्दक्षिणमण्डले

सौम्यवक्त्रं व्यवस्थाप्य शिष्यं दक्षिणमात्मनः ।
त्वयैवानुगृहीतोऽयं मूर्त्तिमास्थाय मामकीम् ॥ ५० ॥

देवे वह्नौ गुरौ तस्माद्भक्तिं चाप्यस्य वर्द्धय । इति विज्ञाप्य देवेशं प्रणम्य चगुरुःस्वयम्

श्रेयस्तवास्त्विवति ब्रूयादाशिषं शिष्यमादरात् ।
ततः परमया भक्त्या दत्त्वा देवेऽष्टपुष्पिकाम् ।
पुत्रकं शिवकुम्भेन संस्नाप्य विसृजेन्मखम् ॥ ५२

इत्यादि महापुराणे आग्नेये निर्वाणदीक्षाकथनं नामाष्टाशीतितमोऽध्यायः ।

---

# अथोननवतितमोऽध्यायः

## एकतत्त्वदीक्षाकथनम् ।

ईश्वर उवाच ।

अथैकतात्त्विकी दीक्षा लघुत्वादुपदिश्यते ।
सूत्रबन्धादि कुर्वीत यथायोगं निजात्मना ॥ १ ॥
कालाग्न्यादिशिवान्तानि तत्त्वानि परिभावयेत् ।
समतत्त्वे समग्राणि सूत्रे मणिगणानिव ॥ २ ॥
आवाह्य शिवतत्त्वादि गर्भाधानादि पूर्ववत् । मूलेन किन्तु कुर्वीत सर्व्वशुल्कसमर्पणम्
प्रददीत ततः पूर्णां तत्त्ववातोपगर्भिताम् । एकयैव यया शिष्यो निर्व्वाणमधिगच्छति
योजनायै शिवे चान्यां स्थिरत्वापादनाय च ।
दत्त्वा पूर्णां प्रकुर्वीत शिवकुम्भाभिसेचनम् ॥ ५ ॥

इत्यादि महापुराणे आग्नेये एकतत्त्वदीक्षाकथनं नामोननवतितमोऽध्यायः ।

---

# नवतितमोऽध्यायः

## अभिषेकादिकथनम् ।

ईश्वर उवाच ।

शिवमभ्यर्च्याभिषेकं कुर्य्याच्छिष्यादिके श्रिये ।
कुम्भानीशादिकाष्ठासु क्रमशो नव विन्यसेत् ॥ १ ॥
तेषु क्षारोदं क्षीरोदं दध्युदं घृतसागरम् । इक्षुकादम्बरीस्वादुमस्तूदानष्टसागरान् ॥
निवेशयेद् यथासङ्ख्यमष्टौ विद्येश्वरानथ । एकं शिखण्डिनं रुद्रं श्रीकण्ठन्तु द्वितीयकम्
त्रिमूर्त्तमेकरुद्राक्षमेकनेत्रं शिवोत्तमम् । सप्तमं सूक्ष्मनामानमनन्तं रुद्रमष्टमम् ॥ ४ ॥
मध्ये शिवं समुद्रञ्च शिवमन्त्रं च विन्यसेत् । यागालयान् दिगीशस्यरचितेस्नानमण्डपे
कुर्य्यात् करद्वयायामां वेदीमष्टाङ्गुलोच्छ्रिताम् ।
श्रीपर्णाद्यासने तत्र विन्यस्यानन्तमानसम् ॥ ६ ॥
शिष्यं निवेश्य पूर्वास्यं सकलीकृत्य पूजयेत् । काञ्जिकौदनमृद्भस्मदूर्वागोमयगोलकैः
सिद्धार्थदधितोयैश्च कुर्य्यान्निर्मञ्छनं ततः । क्षारोदानुक्रमेणाथ हृदा विद्येशसम्बरैः ॥
कलसैः स्नापयेच्छिष्यं स्वधाधारणयान्वितम् ।
परिधाप्य सिते वस्त्रे निवेश्य शिवदक्षिणे ॥ ६ ॥
पूर्वोदितासने शिष्यं पुनः पूर्ववदर्च्चयेत् । उष्णीषं योगपट्टञ्च मुकुटं कर्त्तरीं घटीम् ॥
अक्षमालां पुस्तकादि शिविकाद्यधिकारकम् ।
दीक्षाव्याख्याप्रतिष्ठाद्यं ज्ञात्वाऽद्यप्रभृति त्वया ॥ ११ ॥
सुपरीक्ष्य विधातव्यमाज्ञां संश्रावयेदिति । अभिवाद्य ततः शिष्यं प्रणिपत्य महेश्वरम्
विघ्नज्वालापनोदार्थं कुर्य्याद् विज्ञापनां यथा ।
अभिषेकार्थमादिष्टस्त्वयाऽहं गुरुमूर्त्तिना ॥ १२ ॥
संहितापारगः सोऽयमभिषिक्तो मया शिव ! । तृप्तय मन्त्रचक्रस्य पञ्चपञ्चाहुतीर्यजेत् ॥

दद्यात् पूर्णां ततः शिष्यं स्थापयेन्निजदक्षिणे ।
शिष्यदक्षिणपाणिस्था अङ्गुष्ठाद्यङ्गुलीः क्रमात् ॥ १५ ॥
लाञ्छयेदुपबद्धाय दग्धदर्भाग्रशम्बरैः । कुसुमानि करे दत्त्वा प्रणामं कारयेदमुम् ॥
कुम्भेऽनले शिवे स्वस्मिंस्ततस्तत्कृत्यमाविशेत् ।
अनुग्राह्यास्त्वया शिष्याः शास्त्रेण सुपरीक्षिताः ॥ १७ ॥
भूपवन्मानवा दीनामभिषेकादभीप्सितम् ।
आं श्रां श्रीं पशुं हूं फडिति अस्त्रराजाभिषेकतः ॥ १८ ॥
इत्यादि महापुराणे आग्नेयेऽभिषेकादिकथनं नाम नवतितमोऽध्यायः ।

———

# एकनवतितमोऽध्यायः

## विविधमन्त्रादिकथनम् ।

ईश्वर उवाच ।

अभिषिक्तः शिवंविष्णुंपूजयेद्भास्करादिकान् । शङ्खभेर्यादिनिर्घोषैःस्नापयेत्पञ्चगव्यकैः
यो देवान् देवलोकं स याति स्वकुलमुद्धरन् । वर्षकोटिसहस्रेषु यत् पापं समुपार्जितम्
घृताभ्यङ्गेन देवानां भस्मीभवति पावके । आढकेन घृताद्यैश्च देवान् स्नाप्य सुरोभवेत्
चन्दनेनानुलिप्याथ गन्धाद्यैः पूजयेत्तथा । अल्पायासनस्तुतिभिस्स्तुता देवास्तु सर्वदा
अतीतानागतज्ञानमन्त्रधीभुक्तिमुक्तिदाः । गृहीत्वा प्रश्नसूक्ष्मार्णं हृते द्वाभ्यां शुभाशुभम्
त्रिभिर्जीवो मूलधातुश्चतुर्भिर्ब्राह्मणादिभिः । पञ्चादौ भूततत्त्वादि शेषे चैवं जपादिकम्
एकत्रिकातित्रिकान्ते पदे द्विपमकान्तके । अशुभं मध्यमं मध्येष्विन्द्रस्त्रिषु नृपः शुभः
सङ्ख्यावृन्दे जीविताब्दं यमोऽब्ददशहा ध्रुवम् ।
सूर्ये भाष्येशदुर्गाश्रीविष्णुमन्त्रैर्लिखेत् कुजे ॥ ८ ॥
कठिन्या जप्तया स्पृष्टे गोमूत्राकृतिरेखया । आरभ्यैकंत्रिकंयावत् त्रिचतुष्कावसानकम्

मरुद्व्योममरुद्बीजैश्चतुःषष्टिपदे तथा । अक्षाणां पतनात् स्पर्शाद्विषमादौ शुभादिकम् ॥
एकत्रिकादिमारभ्य अन्ते चाष्टविकं तथा ।
ध्वजाद्यायाः समा हीना विषमाः शोभनादिदाः ॥ ११ ॥
आई पल्लवितैः काद्यैः षोड़शाक्षरपूर्वगैः । आद्यैस्तैः सस्वरैः काद्यैस्त्रिपुरानाममन्त्रकाः
ह्रीं बीजाः प्रणवाद्याः स्युर्नमोऽन्ता यत्र पूजने ।
मन्त्रा विंशतिसाहस्राः शतं षष्ट्यधिकं ततः ॥ १३ ॥
आं ह्रीं मन्त्राः सरस्वत्याश्चण्डिकायास्तथैव च ।
तथा गौर्य्याश्च दुर्गाया आं श्रीं मन्त्राः श्रियस्तथा ॥ १४ ॥
तथा क्ष्रौं क्रौं मन्त्राः सूर्य्यस्य ओं ह्रीं मन्त्राः शिवस्य च ।
आं गं मन्त्रा गणेशस्य आं मन्त्राश्च तथा हरेः ॥ १५ ॥
शतार्द्धैकाधिकैः काद्यैस्तथा षोडशभिः स्वरैः ।
काद्यैस्तैः सस्वरैराद्यैः कान्तैर्म्मन्त्रास्तथाखिलाः ॥ १६ ॥
रवीशदेवीविष्णूनां स्वान्धिदेवेन्द्रवर्त्तनात् । शतत्रयं षष्ठ्यधिकं प्रत्येकं मण्डलं क्रमात्
अभिषिक्तो जपेद् ध्यायेच्छिष्यादीन् दीक्षयेद् गुरुः ॥ १७ ॥
इत्यादि महापुराणे आग्नेये विविधमन्त्रादिकथनं नामैकनवतितमोऽध्यायः ।

---

## द्विनवतितमोऽध्यायः ।

### प्रतिष्ठाविधिकथनम् ।

ईश्वर उवाच ।

प्रतिष्ठां सम्प्रवक्ष्यामि क्रमात् सङ्क्षेपतो गुह ! ।
पीठं शक्तिं शिवो लिङ्गं तद्योगः सा शिवाणुभिः ॥ १ ॥
प्रतिष्ठायाः पञ्च भेदास्तेषां रूपं वदामि ते । यत्र ब्रह्मशिलायोगः साप्रतिष्ठा विशेषतः

स्थापनन्तु यथायोगं पीठ एव निवेशनम् । प्रतिष्ठाभिन्नपीठस्य स्थितस्थापनमुच्यते
उत्थापनञ्च सा प्रोक्तालिङ्गोद्धारपुरस्सरा । यस्यां तु लिङ्गमारोप्य संस्कारःक्रियतेबुधैः

आस्थापनं तदुद्दिष्टं द्विधा विष्ण्वादिकस्य च ।
आसु सर्वासु चैतन्यं नियुञ्जीत परं शिवम् ॥ ५ ॥

यदाधारादिभेदेन प्रासादेष्वपि पञ्चधा । परीक्षामथमेदिन्याः कुर्य्यात् प्रासादकाम्यया

शुक्लाज्यगन्धा रक्ता च रक्तगन्धा सुगन्धिना ।
पीता कृष्णा सुरागन्धा विप्रादीनां मही क्रमात् ॥ ७ ॥

पूर्वेशोत्तरसर्वत्र पूर्वा चैषां विशिष्यते । आखाते ह्यास्तिके यस्याः पूर्णे मृदधिकाभवेत्

उत्तमान्तां महीं विद्यात् तोयाद्यैर्वा समुक्षिताम् ।
अस्थ्यङ्गारादिभिर्दुष्टामत्यन्तं शोधयेद् गुरुः ॥ ६ ॥

नगरग्रामदुर्गार्थं गृहप्रासादकारणम् । खनकैर्गोकुलावासैः कर्षणैर्वा मुहुर्मुहुः ॥ १० ॥

मण्डपे द्वारपूजादि मन्त्रतृप्त्यवसानकम् ।
कर्म्म निर्वर्त्याघोरास्त्रं सहस्रं विधिना यजेत् ॥ ११ ॥

समीकृत्योपलिप्तायां भूमौ संशोधयेद्दिशः । स्वर्णदध्यक्षतै रेखाः प्रकुर्वीत प्रदक्षिणम्

मध्यादीशानकोष्ठस्थे पूर्णकुम्भे शिवं यजेत् ।
वास्तुमभ्यर्च्य तत्तोयैः सिञ्चेत् कुद्दालकादिकम् ॥ १३ ॥
बाह्ये रक्षोगणानिष्ट्वा विधिना दिग्बलिं क्षिपेत् ।
भूमिं संसिच्य संस्नाप्य कुद्दालाद्यं प्रपूजयेत् ॥ १४ ॥

अन्यं वस्त्रयुगच्छन्नं कुम्भं स्कन्धेद्विजन्मनः । निधाय गीतवाद्यादिब्रह्मघोषसमाकुलम्
पूजां कुम्भे समाहृत्य प्राप्ते लग्नेऽग्निकोष्ठके । कुद्दालेनाभिषिक्तेन मध्वक्तेनतु खानयेत्

नैर्ऋत्यां क्षेपयेन्मृत्स्नां खाते कुम्भजलं क्षिपेत् ।
पुरस्य पूर्वसीमान्तं नयेद् यावदभीप्सितम् ॥ १७ ॥
अथ तत्र क्षणं स्थित्वा भ्रामयेत् परितः पुरम् ।
सिञ्चन् सीमान्तचिह्नानि यावदीशानगोचरम् ॥ १८ ॥

अर्घ्यदानमिदं प्रोक्तं तत्र कुम्भपरिभ्रमात् । इत्थं परिग्रहं भूमेः कुर्वीत तदनन्तरम् ॥१९॥
कर्करान्तंजलान्तं वा शल्यदोषजिघांसया । खानयेद्भूः कुमारींचेद् विधिनाशल्यमुद्धरेत्

अकचटतपयशहान् मानवश्चेत् प्रश्नाक्षराणि तु ।
अग्नेर्ध्वजादिपतिताः स्वस्थाने शल्यमाख्यान्ति ॥ २१ ॥
कर्त्तुश्चाङ्गविकारेण जानीयात् तत् प्रमाणतः ।
पश्वादीनां प्रवेशेन कीर्त्तनैर्विरुतैर्दिशः ॥ २२ ॥
मातृकामष्टवर्गाढ्यां फलके भुवि वा लिखेत् ।
शल्यज्ञानं वर्गवशात् पूर्वादीशान्ततः क्रमात् ॥ २३ ॥

अवर्गे चैव लोहन्तु कवर्गेऽङ्गारमग्नितः । चवर्गेभस्म दक्षे स्यात् टवर्गेऽस्थि च नैर्ऋते
तवर्गे चेष्टका चाप्ये कपालञ्च पवर्गके । यवर्गे शवकीटादि शवर्गे लोहमादिशेत् ॥२५॥
हवर्गे रजतं तद्वदवर्गाच्चानर्थकरानपि । प्रोक्ष्यात्मभिः करापूरैरष्टाङ्गुलमृदन्तरैः ॥२६॥
पादोनं खातमापूर्य्य सजलैर्मुद्गराहतैः । लिप्तां समप्लवां तत्र कारयित्वा भवं गुरुः ॥
सामान्यार्घ्यकरोयायान्मण्डपंवक्ष्यमाणकम् । तोरणद्वाःपतीन्निष्ट्वाप्रत्यग्द्वारेण संविशेत्
कुर्य्यात्तत्रात्मशुद्ध्यादिकुण्डमण्डपसंस्कृतिम् । कलसंवर्द्धनीसक्तंलोकपालशिवार्च्चनम्
अग्नेर्जननपूजादि सर्वं पूर्ववदाचरेत् । यजमानान्वितो यायाच्छिलानां स्नानमण्डपम्

शिलः प्रासादलिङ्गस्य पादधर्म्मादिसञ्ज्ञकाः ।
अष्टाङ्गुलोच्छ्रिताः शस्ताश्चतुरस्राः करायताः ॥ ३१ ॥

पाषाणानां शिलाः कार्य्या इष्टकानां तदर्द्धतः । प्रासादेऽश्मशिलाः शैले इष्टकाइष्टकामये

अङ्किता नववक्त्राद्यैः पङ्कजाः पङ्कजाङ्किताः ।
नन्दा भद्रा जया रिक्ता पूर्णाख्या पञ्चमी मता ॥ ३३ ॥

आसांपद्मो महापद्मः शङ्खोऽथमकरस्तथा । समुद्रश्चेतिपञ्चामी निधिकुम्भाःक्रमादधः

नन्दा भद्रा जया पूर्णा अजिता चापराजिता ।
विजया मङ्गलाख्या च धरणी नवमी शिला ॥ ३५ ॥

सुभद्रश्च विभद्रश्च सुनन्दः पुष्पनन्दकः । जयोऽथ विजयश्चैव कुम्भः पूर्णस्तथोत्तरः

नवानान्तु यथासङ्ख्यं निधिकुम्भा अमी नव ।
आसनं प्रथमं दत्त्वा ताड्योल्लिख्य शराणुना ॥ ३७ ॥

सर्वासामविशेषेण तनुत्रेणावगुण्ठनम् । मृद्भिर्गोमयगोमूत्रकषायैर्गन्धवारिणा ॥३८॥
अस्त्रेण हूंफडन्तेन मलस्नानं समाचरेत् । विधिना पञ्चगव्येन स्नानं पञ्चामृतेन च ॥
गन्धतोयान्तरं कुर्य्यान्निजनामाङ्किताणुना । फलरत्नसुवर्णानां गोशृङ्गसलिलैस्ततः ॥

चन्दनेन समालभ्य वस्त्रैराच्छादयेच्छिलाम् ।
स्वर्णोत्थमासनं दत्त्वा नीत्वा यागं प्रदक्षिणम् ॥ ४१ ॥

शय्यायां कुशतल्पे वा हृदयेननिवेशयेत् । सम्पूज्यन्यस्य बुद्ध्यादिधरान्तं तत्त्वसञ्चयम्

त्रिखण्डव्यापकं तत्त्वत्रयञ्चानुक्रमान् न्यसेत् ।
बुद्ध्यादौ चित्तपर्य्यन्ते चिन्तातन्मात्रकावधौ ॥ ४३ ॥
तन्मात्रादौ धरान्ते च शिवविद्यात्मनां स्थितिः ।
तत्त्वानि निजमन्त्रेण तत्त्वेशांश्च हृदाऽर्चयेत् ॥ ४४ ॥
स्थानेषु पुष्पमालादिचिह्नितेषु यथाक्रमम् ।

ओं हूं शिवतत्त्वाय नमः । ओं हूं शिवतत्त्वाधिपतये रुद्राय नमः । ओं हां विद्यातत्त्वाय नमः ओं हां विद्यातत्त्वाधिपाय विष्णवे नमः । ओं हां आत्मतत्त्वाय नमः। ओं हां आत्मतत्त्वाधिपतये ब्रह्मणे नमः ।

क्षमाग्नियजमानार्कान् जलवातेन्दुखानि च ॥ ४५ ॥

प्रतितत्त्वं न्यसेदष्टौ मूर्तीः प्रतिशिलां शिलां । सर्वं पशुपतिं चोग्रं रुद्रं भवमहेश्वरम् ॥
महादेवञ्च भीमञ्च मूर्त्तीशांश्च यथाक्रमात् । ओं धरामूर्त्तये नमः, ओं धराधिपतये नमः,

इत्यादिमन्त्रान् लोकपालान् यथासङ्ख्यं निजाणुभिः ॥ ४७ ॥
विन्यस्य पूजयेत् कुम्भांस्तन्मन्त्रैर्वा निजाणुभिः ।
इन्द्रादीनां तु बीजानि वक्ष्यमाणक्रमेण तु ॥ ४८ ॥
लूं रूं शूं पूं वूं यूं मूं हूं क्ष्मूमिति ।

उक्तो नवशिलापक्षः शिला पञ्चपदा तथा । प्रतितत्त्वंन्यसेन्मूर्त्तीःसृष्ट्या पञ्चधरादिकाः

ब्रह्मा विष्णुस्तथा रुद्र ईश्वरश्च सदाशिवः । एते च पञ्च मूर्त्तीशा यष्टव्यास्तासु पूर्ववत्

ओं पृथ्वीमूर्त्तये नमः । ओं पृथ्वीमूर्त्यधिपतये ब्रह्मणे नमः । इत्यादिमन्त्राः ।

सम्पूज्य कलशान् पञ्च क्रमेण निजनामभिः ।
निरुन्धीत विधानेन न्यासो मध्यशिलाक्रमात् ॥ ५१ ॥
कुर्य्यात् प्राकारमन्त्रेण भूतिदर्भैस्तिलैस्ततः ।
कुण्डेषु धारिकां शक्तिं विन्यस्याभ्यर्च्य तर्पयेत् ॥ ५२ ॥
तत्त्वतत्त्वाधिपान् मूर्त्तीर्मूर्त्तीशांश्च घृतादिभिः ।
ततो ब्रह्मांशशुद्ध्यर्थं मूलाङ्गं ब्रह्मभिः क्रमात् ॥ ५३ ॥
कृत्वा शतादिपूर्णान्तं प्रोक्षयेः शान्तिजलैः शिलाः ।
पूजयेच्च कुशैः स्पृष्ट्वा प्रतितत्त्वमनुक्रमात् ॥ ५४ ॥

सान्निध्यमथ सन्धानं कृत्वा शुद्धं पुनर्न्यसेत् । एवं भागत्रये कर्मगत्वागत्वासमाचरेत्

ओं आं ईं आत्मतत्त्वविद्यातत्त्वाभ्यां नमः इति ।

संस्पृशेद् दर्भमूलाद्यैर्ब्रह्माङ्गादित्रयं क्रमात् ।
कुर्य्यात् तत्त्वानुसन्धानं ह्रस्वदीर्घप्रयोगतः ॥ ५६ ॥

ओं हां ऊं विद्यातत्त्वशिवतत्त्वाभ्यां नमः । घृतेन मधुना पूर्णास्ताम्रकुम्भान् सरत्नकान्

पञ्चगव्यार्घ्यसंसिक्तान् लोकपालाधिदैवतान् ॥ ५७ ॥

पूजयित्वा निजैर्मन्त्रैः सन्निधौ होममाचरेत् । शिलानामथ सर्वासां संस्मरेदधिदेवताः
विद्यारूपाः कृतस्नाना हेमवर्णाः शिलाम्बराः । न्यूनादिदोषमोषार्थं वास्तुभूमेश्च शुद्धये ।

यजेदस्त्रेण मूर्द्धान्तमाहुतीनां शतं शतम् ॥ ५८ ॥

इत्यादि महापुराणे आग्नेये प्रतिष्ठाविधिकथनं नाम द्विनवतितमोऽध्यायः ।

———

# त्रिनवतितमोऽध्यायः

## वास्तुपूजादिविधानम् ।

ईश्वर उवाच ।

ततः प्रासादमासूत्र्य वर्त्तयेद्वास्तुमण्डपम् । कुर्य्यात् कोष्ठचतुःषष्टिं क्षेत्रे वेदास्रकेसमे
कोणेषु विन्यसेद् वंशी रज्जवोऽष्टौ विकोणगाः ।
द्विपदाः षट्पदास्तास्तु वास्तुं तत्रार्च्चयेद् यथा ॥ २ ॥
आकुञ्चितकचं वास्तुमुत्तानमसुराकृतिम् । स्मरेत् पूजासु कुड्यादिनिवेशे उत्तराननम्
जानुनी कूर्परौ सक्थि दिशि वातहुताशयोः ।
पैत्र्यां पादपुट रौद्र्यां शिरोऽस्य हृदयेऽञ्जलिः ॥ ४ ॥
अस्य देहे समारूढ़ा देवताः पूजिताः शुभाः ।
अष्टौ कोणाधिपास्तत्र कोणार्द्धेष्वष्टसु स्थिताः ॥ ५ ॥
षट्पदास्तु मरीच्याद्या दिक्षु पूर्वादिषु क्रमात् ।
मध्ये चतुष्पदो ब्रह्मा शेषास्तु पदिकाः स्मृताः ॥ ६ ॥
समस्तनाड़ीसंयोगे महामर्म्मानुजं फलम् । त्रिशूलं स्वस्तिकं वज्रं महास्वस्तिकसम्पुटौ
त्रिकटुं मणिबन्धं च सुविशुद्धं पदं तथा ।
इति द्वादश मर्म्माणि वास्तोर्भित्त्यादिषु त्यजेत् ॥ ८ ॥
साज्यमक्षतमीशाय पर्यन्यायाम्बुजोदकम् । ददीताथ जयन्तायपताकां कुङ्कुमोज्ज्वलाम्
रत्नवारि महेन्द्राय रवौ धूम्रं वितानकम् । सत्याय घृतगोधूममाज्यभक्तं भृशाय च॥
विमांसमन्तरीक्षाय शक्तुं तेभ्यस्तु पूर्वतः । मधुक्षीराज्यसम्पूर्णां प्रदद्याद् वह्नये स्रुचम्
लाजान् पूर्णे सुवर्णाम्बु वितथाय निवेदयेत् ।
दद्याद् गृहक्षते क्षौद्रं यमराजे पलौदनम् ॥ १२ ॥
गन्धं गन्धर्वनाथाय जिह्वां भृङ्गाय पक्षिणः । मृगाय पद्मपर्णानि याम्यामित्यष्टदेवताः ।

पित्रे तिलोदकं क्षीरं वृक्षजं दन्तधावनम्। दौवारिकाय देवाय प्रदद्याद् धेनुमुद्रया॥
सुग्रीवाय दिशेत् पूपान् पुष्पदन्ताय दर्भकम्। रक्तं प्रचेतसे पद्ममसुराय सुरासवम्॥
घृतं गुडौदनं शेषे रोगाय घृतमण्डकान्।
लाजान् वा पश्चिमाशायां देवाष्टकमितीरितम्॥ १६॥
मारुताय ध्वजं पीतं नागाय नागकेशरम्। मुख्ये भक्ष्याणि भल्लाटे मुद्गसूपं सुसंस्कृतम्
सोमाय पायसं साज्यं शालूकमृषये दिशेत्। लोपीमदितये दित्यै पुरीमित्युत्तराष्टकम्
मोदकान् ब्रह्मणः प्राच्यां षट्पदाय मरीचये।
सवित्रे रक्तपुष्पाणि वह्न्यधः कोणकोष्ठके॥ १९॥
तदधः कोष्ठके दद्यात् सावित्र्यै च कुशोदकम्।
दक्षिणे चन्दनं रक्तं षट्पदाय विवस्वते॥ २०॥
हरिद्रौदनमिन्द्राय रक्षोधःकोणकोष्ठके। इन्द्रजयाय मिश्रान्नमिन्द्राधस्तान्निवेदयेत्॥
वारुण्यां षट्पदासीने मित्रे सगुडमोदनम्। रुद्राय घृतसिद्धान्नं वायुकोणाधरे पदे॥
तदधो रुद्रदासाय मांसं मार्गमथोत्तरे। ददीत माषनैवेद्यं षट्पदस्थे धराधरे॥ २३॥
आपाय शिवकोणाधः तद्वत्साय च तत्स्थले।
क्रमाद्दद्याद् दधिक्षीरं पूजयित्वा विधानतः॥ २४॥
चतुष्पदे निविष्टाय ब्रह्मणे मध्यदेशतः। पञ्चगव्याक्षतोपेतश्चरुं साज्यं निवेदयेत्॥२५॥
ईशादिवायुपर्य्यन्तकोणेष्वथ यथाक्रमम्। वास्तुबाह्ये चरक्याद्याश्चतस्रः पूजयेद् यथा
चरक्यै सघृतं मांसं विदार्य्यै दधिपङ्कजे। पूतनायै पलं पित्तं रुधिरं च निवेदयेत्॥
अस्थीनि पापराक्षस्यै रक्तपित्तपलानि च। ततो माषौदनं प्राच्यां स्कन्दायविनिवेदयेत्
अर्य्यम्णे दक्षिणाशायां पूपान् कृसरया युतान्।
जम्भकाय च वारुण्यामामिषं रुधिरान्वितम्॥ २६॥
उदीच्यां पिलिपिञ्जाय रक्तान्नं कुसुमानि च। यजेद् वा सकलंवास्तुंकुशदध्यक्षतैर्जलैः
गृहे च नगरादौ च एकाशीतिपदैर्यजेत्। त्रिपदा रज्जवः कार्य्याः षट्पदाश्च विकोणके
ईशाद्याः पादिकास्तस्मिन्नागाद्याश्च द्विकोष्ठगाः।

॥ ... षट्पदस्था मरीच्याद्या ब्रह्मा नवपदः स्मृतः ॥ ३२ ॥
नगरग्रामखेटादौ वास्तुः शतपदोऽपि वा । वंशद्वयं कोणगतं दुर्जयं दुर्द्धरं सदा ॥
यथा देवालये न्यासस्तथा शतपदे हितः । ग्रहाः स्कन्दादयस्तत्र विज्ञेयाश्चैव षट्पदाः ॥

चरक्याद्या भूतपदा रज्जुवंशादि पूर्ववत् ।
देशसंस्थापने वास्तु चतुस्त्रिंशच्छतं भवेत् ॥ ३५ ॥

चतुःषष्टिपदो ब्रह्मा मरीच्याद्याश्च देवताः । चतुःपञ्चाशत्पदिका आपाद्यष्टौ रसाग्निभिः

ईशानाद्या नवपदाः स्कन्दाद्याः शक्तिकाः स्मृताः ।
चरक्याद्यास्तद्वदेव रज्जुवंशादि पूर्ववत् ॥ ३७ ॥

ज्ञेयो वंशसहस्रैस्तु वास्तुमण्डलगः पदैः । न्यासो नवगुणस्तत्र कर्त्तव्यो देशवास्तुवत्

पञ्चविंशत्पदो वास्तुर्वैतालाख्यश्चितौ स्मृतः ।
अन्यो नवपदो वास्तुः षोड़शाङ्घ्रिस्तथापरः ॥ ३९ ॥

षड़स्रत्र्यस्रवृत्तादेर्म्मध्ये स्याच्चतुरस्रकम् । खाते वास्तोः समं पृष्ठे न्यासे ब्रह्मशिलात्मके
शावाकस्य निवेशे च मूर्त्तिसंस्थापने तथा । पायसेन तु नैवेद्यं सर्वेषां वा प्रदापयेत् ॥
उक्तानुक्ते तु वै वास्तुः पञ्चहस्तप्रमाणतः । गृहप्रासादमानेन वास्तुः श्रेष्ठस्तु सर्वदा ॥

इत्यादि महापुराणे आग्नेये वास्तुपूजाविधानं नाम त्रिनवतितमोऽध्यायः ।

---

# चतुरधिकनवतितमोऽध्यायः

## शिलाविन्यासविधानम् ।

### ईश्वर उवाच ।

ईशादिषु चरक्याद्याः पूर्ववत् पूजयेद् बहिः । आहुतित्रितयं दद्यात् प्रतिदेवमनुक्रमात् ।

दत्त्वा भूतबलिं लग्ने शिलान्यासमनुक्रमात् ।
मध्यसूत्रे न्यसेच्छक्तिं कुम्भञ्चानन्तमुत्तमम् ॥ २ ॥

नकारारूढमूलेन कुम्भेऽस्मिन् धारयेच्छिलाम् ।
कुम्भानष्टौ सुभद्रादीन् दिक्षु पूर्वादिषु क्रमात् ॥ ३ ॥

लोकपालाणुभिर्न्यस्य श्वभ्रेषु न्यस्तशक्तिषु । शिलास्तेष्वथनन्दाद्याःक्रमेण विनिवेशयेत्

शम्बरैर्मूर्त्तिनाथानां यथा स्युर्भित्तिमध्यतः ।
तासु धर्म्मादिकानष्टौ कोणात् कोणं विभागशः ॥ ५ ॥

सुभद्रादिषु नन्दाद्याश्चतस्रोऽग्न्यादिकोणगाः ।
अजिताद्याश्च पूर्वादिजयादिष्वथ विन्यसेत् ॥ ६ ॥

ब्रह्माणं चोपरि न्यस्य व्यापकञ्च महेश्वरम् । चिन्तयेदेषु चाधानं व्योमप्रासादमध्यगम्

बलिं दत्त्वा जपेदस्त्रं विघ्नदोषनिवारणम् । शिलापञ्चकपक्षेऽपि मनागुद्दिश्यते यथा ॥

मध्ये पूर्णशिलान्यासः सुभद्रकलशोर्द्ध्वतः ।
पद्मादिषु च नन्दाद्याः कोणेष्वग्न्यादिषु क्रमात् ॥ ९ ॥

मध्यभावे चतस्रोऽपि मातृवद्भावसम्मताः। ओं पूर्णे! त्वं महाविद्ये! सर्वसन्दोहलक्षणे !

सर्वसम्पूर्णमेवात्र कुरुष्वाङ्गिरसः सुते ।
ओं नन्दे ! त्वं नन्दिनी पुंसां त्वामत्र स्थापयाम्यहम् ॥ ११ ॥

प्रासादे तिष्ठ सन्तृप्ता यावच्चन्द्रार्कतारकम् ।
आयुः कामं श्रियं नन्दे ! देहि वासिष्ठि ! देहिनाम् ॥ १२ ॥

अस्मिन् रक्षा सदा कार्य्या प्रासादे यत्नतस्त्वया ।
ओं भद्रे ! त्वं सर्वदा भद्रं लोकानां कुरु काश्यपि ! ॥ १३ ॥

आयुर्दा कामदा देवि ! श्रीप्रदा च सदा भव ।
ओं जये ! ऽत्र सर्वदा देवि ! श्रीदाऽऽयुर्दा सदा भव ॥ १४ ॥

ओं जये ! ऽत्र सर्वदा देवि ! तिष्ठत्वं स्थापिता मया ।
नित्यञ्जयाय भूत्यै च स्वामिनी भव भार्गवि ! ॥ १५ ॥

ओं रिक्ते ! ऽतिरिक्तदोषघ्ने ! सिद्धिमुक्तिप्रदे ! शुभे ! ।
सर्वदा सर्वदेशस्थे ! तिष्ठास्मिन् विश्वरूपिणि ! ॥ १६ ॥

गगनायतनं ध्यात्वा तत्र तत्त्वत्रयं न्यसेत् । प्रायश्चित्तं ततो हुत्वा विधिनाविसृजेन्मखम्

इत्यादि महापुराणे आग्नेये शिलाविन्यासविधानं नाम चतुरधिकनवतितमोऽध्यायः ।

---

## पञ्चनवतितमोऽध्यायः

### प्रतिष्ठासामग्रीविधानम् ।

ईश्वर उवाच ।

वक्ष्ये लिङ्गप्रतिष्ठां च प्रासादे भुक्तिमुक्तिदाम् । ताञ्चरेत् सर्वदा मुक्तौ भुक्तौदेवदिनेसति

विना चैत्रेण माघादौ प्रतिष्ठा मासपञ्चके । गुरुशुक्रोदये कार्य्या प्रथमे करणत्रये ।।२।।

शुक्लपक्षे विशेषेण कृष्णे वा पञ्चमं दिनम् ।
चतुर्थीं नवमीं षष्ठीं वर्जयित्वा चतुर्दशीम् ॥ ३ ॥

शोभनास्तिथयः शेषाः क्रूरवारविवर्जिताः । शतभिषा धनिष्ठार्द्रा अनुराधोत्तरत्रयम्॥

रोहिणी श्रवणश्चेति स्थिरारम्भे महोदयाः । लग्नञ्च कुम्भसिंहालितुलास्त्रीवृषधन्विनाम्

शस्तो जीवो नवर्क्षेषु सप्तस्थानेषु सर्वदा । बुधः षड्ष्टदिक्सप्ततुर्येषु विनतुं शितः॥

सप्तर्त्तुत्रिदशादिस्थः शशाङ्को बलदः सदा । रविर्दशत्रिषट्संस्थो राहुस्त्रिदशषड्गतः॥

षट्त्रिस्थानगताः शस्ता मन्दाङ्गारार्ककेतवः । शुभाः क्रूराश्च पापाश्च सर्व एकादशस्थिताः

एषां दृष्टिर्मुनौ पूर्णा त्वार्द्धिकी ग्रहभूतयोः । पादिकी रामदिक्स्थानेचतुरष्टौपादवर्जिता

पादान्न्यूनचतुर्नाड़ी भोगः स्यान्मीनमेषयोः। वृषकुम्भौ च भुञ्जाते चतस्रःपादवर्जिताः

मकरो मिथुनं पञ्च चापालिहरिकर्कटाः । पादोनाः षट् तुलाकन्ये घटिकाः सार्द्धपञ्च

केशरी वृषभः कुम्भः स्थिराः स्युः सिद्धिदायकाः ।
चरा धनुस्तुलामेषा द्विःस्वभावास्तृतीयकाः ॥ १२ ॥

शुभः शुभग्रहैर्दृष्टः शस्तो लग्नः शुभाश्रितः । गुरुशुक्रबुधैर्युक्तो लग्नो दद्याद् बलायुषी॥

राज्यं शौर्य्यं बलं पुत्रान् यशोधर्म्मादिकं बहु । प्रथमः सप्तमस्तुर्य्यो दशमःकेन्द्र उच्यते

गुरुशुक्रबुधास्तत्र सर्वसिद्धिप्रदायकाः ।
व्येकादशचतुर्थस्था लग्नात् पापग्रहाः शुभाः ॥ १५ ॥
अतोऽप्यनीचकर्माथं योज्यास्तिथ्यादयो बुधैः ।
धाम्नः पञ्चगुणां भूमिं त्यक्त्वा वा धामसम्मिताम् ॥ १६ ॥
हस्ताद् द्वादशसोपानात् कुर्य्यान्मण्डपमग्रतः । चतुरस्रं चतुर्द्वारं स्नानार्थन्तु तदर्द्धतः
एकास्यं चतुरास्यं वा रौद्रयां प्राच्युत्तरेऽथवा ।
हास्तिको दशहस्तो वै मण्डपोऽर्ककरोऽथवा ॥ १८ ॥
द्विहस्तोत्तरया वृद्धया शेषंस्यान्मण्डपाष्टकम् । वेदी चतुष्करामध्येकोणस्तम्भेनसंयुता
वेदीपादान्तरं त्यक्त्वा कुण्डानि नव पञ्च वा ।
एकं वा शिवकाष्ठायां प्राच्यां वा तद्गुरोः परम् ॥ २० ॥
मुष्टिमात्रं शतार्द्धे स्याच्छतेचारत्निमात्रकम् । हस्तंसहस्रहोमेस्यान्नियुतेतुद्विहास्तिकम्
लक्षे चतुष्करं कुण्डं कोटिहोमेऽष्टहस्तकम् । भगाभनग्नौ खण्डेन्द्र दक्षे ऽयस्रञ्चनैर्ऋते
षड़स्रं वायवे पद्मं सौम्ये चाष्टास्रकं शिवे । तिर्य्यक्पातशिवं खातमूर्ध्वं मेखलया सह
तद्वहिर्मेखलास्तिस्रो वेदवह्नियमाङ्गुलैः ।
अङ्गुलैः षड्भिरेका वा कुण्डाकारास्तु मेखलाः ॥ २४ ॥
तासामुपरि योनिः स्यान्मध्येऽश्वत्थदलाकृतिः ।
उच्छ्रायेणाङ्गुलं तस्माद् विस्तारेणाङ्गुलाष्टकम् ॥ २५ ॥
दैर्घ्यंकुण्डार्द्धमानेनकुण्डकण्ठसमोऽधरः । पूर्वाग्नियाम्यकुण्डानांयोनिःस्यादुत्तरानना
पूर्वानना तुशेषाणामैशान्येऽन्यतरा तयोः । कुण्डानांयश्चतुर्विंशोभागःसोऽङ्गुलइत्यतः
प्लक्षोदुम्बरकाश्वत्थवटजास्तोरणाःक्रमात् । शान्तिभूतिबलारोग्यपूर्वाद्यांनामतःक्रमात्
पञ्चषट्सप्तहस्तानि हस्तखातस्थितानि च । तदर्द्धविस्तराणि स्युर्युतान्याम्रदलादिभिः
इन्द्रायुधोपमा रक्ता कृष्णाधूम्राशशिप्रभा । शुक्लाभाहेमवर्णा च पताका स्फाटिकोपमा
पूर्वादितोऽब्जजे रक्तानीलाऽनन्तस्य नैर्ऋते । पञ्चहस्तास्तदर्द्धाश्चध्वजादीर्घाश्चविस्तराः
हस्तप्रदेशिता दण्डा ध्वजानां पञ्चहस्तकाः। वल्मीकाद्दन्तिदन्ताग्रात् तथा वृषभशृङ्गतः

पद्मषण्डाद् वराहाच्च गोष्ठादपि चतुष्पथात् ।
मृत्तिका द्वादश ग्राह्या वैकुण्ठेऽष्टौ पिनाकिनि ॥ ३३ ॥

न्यग्रोधोदुम्बराश्वत्थचूतजम्बुत्वगुद्भवम् । कषायपञ्चकंग्राह्यमार्त्तवञ्च पलाष्टकम् ॥
तीर्थाम्भांसि सुगन्धीनि तथा सर्वौषधीजलम् । शस्तंपुष्पफलंवक्ष्येरत्नगोश्रृङ्गवारिच
स्नानायापाहरेत् पञ्च पञ्चगव्यामृतं तथा । पिष्टनिर्मितवस्त्रादिद्रव्यं निर्म्मञ्जनाय च ॥
सहस्रशुषिरं कुम्भं मण्डलाय च रोचना । शतमोषधिमूलानां विजया लक्ष्मणा बला ॥

गुडूच्यतिवला पाठा सहदेवा शतावरी ।
ऋद्धिः सुवर्चसा वृद्धिः स्नाने प्रोक्ता पृथक् पृथक् ॥ ३८ ॥

रक्षायै तिलदर्भौघो भस्मस्नानन्तु केवलम् । यवगोधूमविल्वानां चूर्णानि च विचक्षणः
विलेपनं सकर्पूरं स्नानार्थं कुम्भगण्डकान् । खट्वाञ्च तूलिकायुग्मंसोपधानंसवस्त्रकम्

कुर्य्याद् वित्तानुसारेण शयने लक्ष्यकल्पने ।
घृतक्षौद्रयुतं पात्रं कुर्य्यात् स्वर्णशलाकिकाम् ॥ ४१ ॥

वर्द्धनीं शिवकुम्भञ्च लोकपालघटानपि । एकं निद्राकृते कुम्भंशान्त्यर्थं कुण्डसङ्ख्यया
द्वारपालादि धर्मादि प्रशान्तादि घटानपि । वास्तुलक्ष्मीगणेशानां कलशानपरानपि ॥

धान्यपुञ्जकृताधारान् सवस्त्रान् स्रग्विभूषितान् ।
सहिरण्यान् समालब्धान् गन्धपानीयपूरितान् ॥ ४४ ॥
पूर्णपात्रफलाधारान् पल्लवाद्यान् सलक्षणान् ।
वस्त्रैराच्छादयेत् कुम्भानाहरेद्गौरसर्षपान् ॥ ४५ ॥
विकिरार्थं तथालाजान् ज्ञानखड्गञ्च पूर्ववत् ।
सपिधानां चरुस्थालीं दर्वीञ्च ताम्रनिर्मिताम् ॥ ४६ ॥

घृतक्षौद्रान्वितं पात्रं पादाभ्यङ्गकृते तथा । विष्टरांस्त्रिशतादर्भदलैर्बाहुप्रमाणकान् ।
चतुरश्चतुरस्तद्वत् पालाशान् परिधीनपि । तिलपात्रं हविःपात्रमर्घपात्रं पवित्रकम् ।

पलविंशाष्टमानानि घटो धूपप्रदानकम् ।
स्रुक्स्रुवौ पिटकं पीठं व्यजनं शुष्कमिन्धनम् ॥ ४९ ॥

पुष्पं पत्रं गुग्गुलञ्च घृतैर्दीपांश्च धूपकम् ।
अक्षतानि त्रिसूत्रींश्च गव्यमाज्यं यवांस्तिलान् ॥ ५० ॥
कुशाः शान्त्यै त्रिमधुरं समिधो दशपर्विकाः । बाहुमात्रं श्रुवं हस्तमर्कादिग्रहशान्तये
समिधोऽर्कपलाशोत्थाः खादिरामार्गपिप्पलाः ।
उदुम्बरशमीदूर्वाकुशोत्थाः शतमष्ट च ॥ ५२ ॥
तदभावे यवतिला गृहोपकरणं तथा ।
स्थालीदर्वीपिधानादि देवादिभ्योंऽशुकंद्वयम् ॥ ५३ ॥
मुद्रामुकुटवासांसि हारकुण्डलकङ्कणान् । कुर्य्यादाचार्य्यपूजार्थं वित्तशाठ्यं विवर्जयेत्
तत्पादपादहीना च मूर्त्तिभृदस्त्रजापिनाम् ।
पूजा स्याज्जापिभिस्तुल्या विप्रदैवज्ञशिल्पिनाम् ॥ ५५ ॥
वज्रार्कशान्तौ नीलातिनीलमुक्ताफलानि च । पुष्पपद्मादिरागञ्च वैदूर्य्यं रत्नमष्टमम् ॥
उषीरमाधवक्रान्तारक्तचन्दनकागुरुम् । श्रीखण्डं सारिकं कुष्ठं शङ्खिनीह्योषधीगणः ॥
हेमताम्रमयं रक्तं राजतञ्च सकांस्यकम् ।
सीसकञ्चेति लोहानि हरितालं मनःशिला ॥ ५८ ॥
गैरिकं हेममाक्षीकं पारदो वह्निगैरिकम् । गन्धकाभ्रकमित्यष्टौ धावतो व्रीहयस्तथा ॥
गोधूमान् सतिलान् माषान् मुद्गानप्याहरेद् यवान् ।
नीवारान् श्यामकानेवं व्रीहयोऽप्यष्ट कीर्त्तिताः ॥ ६० ॥

इत्यादि महापुराणे आग्नेये प्रतिष्ठासामग्रीविधानं नाम पञ्चनवतितमोऽध्यायः ।

---

## षण्णवतितमोऽध्यायः

### अधिवासनविधिः ।

ईश्वर उवाच ।

स्नात्वा नित्यद्वयं कृत्वा प्रणवार्घकरो गुरुः ।

सहायैर्मूर्त्तिपैर्विप्रैः सह गच्छेन्मखालयम् ॥ १ ॥
शान्त्यादितोरणांस्तत्र पूर्ववत् पूजयेत् क्रमात् ।
प्रदक्षिणक्रमादेषा शाखायां द्वारपालकान् ॥ २ ॥

प्राचि नन्दिमहाकालौ याम्ये भृङ्गिविनायकौ । वारुणेवृषभस्कन्दौ देवीचण्डौ तथोत्तरे
तच्छाखामूलदेशस्थौ प्रशान्तशिशिरौ घटौ । पर्ज्जन्यशोकनामानौ भूतं सञ्जीवनामृतौ
धनदश्रीप्रदौ द्वौ द्वौ पूजयेदनुपूर्वशः । स्वनामभिश्चतुर्थ्यन्तैः प्रणवादिनमोऽन्तगैः ॥
लोकग्रहवसुद्वाःस्थस्रवन्तीनां द्वयं द्वयम् । भानुत्रयं युगं वेदो लक्ष्मीर्गणपतिस्तथा ॥
इति देवा मखागारे तिष्ठन्ति प्रतितोरणम् । विघ्नसङ्घापनोदाय क्रतोः संरक्षणाय च

वज्रं शक्तिं तथा दण्डं खड्गं पाशं ध्वजं गदाम् ।
त्रिशूलं चक्रमम्भोजं पताकास्वर्च्चयेत् क्रमात् ॥ ८ ॥

ओं हूं फट् नमः । ओं हूं फट् द्वाःस्थशक्तये हूं फट् नमः इत्यादिमन्त्रैः ।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः । शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः
ध्वजाष्टदेवताः पूज्याः पूर्वादौ भूतकोटिभिः । ओं क्रौं कुमुदाय नम इत्यादिमन्त्रैस्तथा
हेतुकं त्रिपुरघ्नञ्च शक्त्याख्यं यमजिह्वकम् । कालं करालिनं षष्ठमेकाङ्घ्रिं भीममष्टकम्
तथैव पूजयेद् दिक्षु क्षेत्रपालाननुक्रमात् । बलिभिः कुसुमैर्धूपैः सन्तुष्टान् परिभावयेत्

काञ्चीतृणेषु वंशेषु स्थूणास्वन्येष्वनुक्रमात् ।
पञ्च क्षित्यादितत्त्वानि सद्योजातादिभिर्यजेत् ॥ १३ ॥

सदाशिवपदव्यापि मण्डपं धाम शाङ्करम् । पताकाशक्तिसंयुक्तं तत्त्वदृष्ट्याऽवलोकयेत्
दिव्यान्तरिक्षभूमिष्ठविघ्नानुत्सार्य्य पूर्ववत् । प्रविशेत् पश्चिमद्वारा शेषद्वाराणि दर्शयेत्

प्रदक्षिणक्रमाद् गत्वा निविष्टो वेदिदक्षिणे ।
उत्तराभिमुखः कुर्य्याद् भूतशुद्धिं यथा पुरा ॥ १६ ॥

अन्तर्य्यागं विशेषाढ्यं मन्त्रद्रव्यादिशोधनम् । कुर्व्वीतस्वात्मनः पूजां पञ्चगव्यादिपूर्ववत्

साधारं कलसं तस्मिन् विन्यसेत् तदनन्तरम् ।
विशेषाच्छिवतत्त्वाय तत्त्वत्रयमनुक्रमात् ॥ १८ ॥

ललाटस्कन्धपादान्तं शिवविद्यात्मकं परम् । रुद्रनारायणब्रह्मदैवतं निजसञ्चरैः ॥ १९ ॥
ओं हं हां मूर्त्तीस्तदीश्वरांस्तत्र पूर्ववद्विनिवेशयेत् ।
तद्व्यापकं शिवं साङ्गं शिवहस्तञ्च मूर्द्धनि ॥ २० ॥
ब्रह्मरन्ध्रप्रविष्टेन तेजसा बाह्यमन्तरम् । तमःपटलमाधूय प्रद्योतितदिगन्तरम् ॥ २१ ॥
आत्मानं मूर्त्तिपैः सार्द्धं स्रग्वस्त्रकुसुमादिभिः ।
भूषयित्वा शिवोऽस्मीति ध्यात्वा बोधासिमुद्धरेत् ॥ २२ ॥
चतुष्पादान्तसंस्कारैःसंस्कुर्य्यान्मखमण्डपम् । विक्षिप्यविकिरादीनि कुशकूर्चापसंहरेत्
आसनीकृत्य वर्द्धन्यां वास्त्वादीन् पूर्ववद् यजेत् ।
शिवकुम्भास्त्रवर्द्धन्यौ पूजयेच्च स्थिरासने ॥ २४ ॥
स्वदिक्षु कलशारूढांल्लोकपालाननुक्रमात् । वाहायुधादिसंयुक्तान् पूजयेद् विधिनायथा
ऐरावतगजारूढं स्वर्णवर्णं किरीटिनम् । सहस्रनयनं शक्रं वज्रपाणिं विभावयेत् ॥२६॥
सप्तार्च्चिषं च बिभ्राणमक्षमालां कमण्डलुम् ।
ज्वालामालाकुलं रक्तं शक्तिहस्तमजासनम् ॥ २७ ॥
महिषस्थं दण्डहस्तं यमं कालानलं स्मरेत् । रक्तनेत्रं खरारूढं खड्गहस्तञ्च नैर्ऋतम् ॥
वरुणं मकरे श्वेतं नागपाशधरं स्मरेत् ।
वायुं च हरिणे नीलं कुवेरं मेषसंस्थितम् ॥ २९ ॥
त्रिशूलिनं वृषे चैषं कूर्म्मेऽनन्तन्तु चक्रिणम् । ब्रह्माणं हंसगं ध्यायेच्चतुर्वक्त्रंचतुर्भुजम्
स्तम्भमूलेषुकुम्भेषु वेद्यां धर्मादिकान्यजेत् । दिक्षु कुम्भेष्वनन्तादीन् पूजयन्त्यपिकेचन
शिवाज्ञां श्रावयेत् कुम्भं भ्रामयेदात्मपृष्ठगम् ।
पूर्ववत् स्थापयेदादौ कुम्भं तदनु वर्द्धनीम् ॥ ३२ ॥
शिवं स्थिरासनं कुम्भे शस्त्रार्थञ्च ध्रुवासनम् । पूजयित्वा यथापूर्वं स्पृशेदुद्भवमुद्रया
निजयागं जगन्नाथ ! रक्ष भक्तानुकम्पया ।
एभिः संश्राव्य रक्षार्थं कुम्भे खड्गं निवेशयेत् ॥ ३४ ॥
दीक्षास्थापनयोः कुम्भे स्थण्डिले मण्डलेऽथवा ।

मण्डलेऽभ्यर्च्य देवेशं व्रजेद् वै कुण्डसन्निधौ ॥ ३५ ॥
कुण्डनाभिं पुरस्कृत्य निविष्टा मूर्त्तिधारिणः । गुरोरादेशतः कुर्य्युर्निजकुण्डेषुसंस्कृतिम्
जपेयुर्जापिनः सङ्ख्यं मन्त्रमन्येतु संहिताम् ।
पठेयुर्ब्राह्मणाः शान्तिं स्वशाखावेदपारगाः ॥ ३७ ॥
श्रीसूक्तं पावमानीश्च मैत्रकञ्च वृषाकपिम् । ऋग्वेदी पूर्वदिग्भागे सर्वमेतत् समुच्चरेत् ॥
देवव्रतन्तु भारुण्डं ज्येष्ठसाम रथन्तरम् । पुरुषं गीतिमेतानि सामवेदी तु दक्षिणे ॥३९॥
रुद्रं पुरुषसूक्तञ्च श्लोकाध्यायं विशेषतः । ब्राह्मणञ्च यजुर्वेदी पश्चिमायां समुच्चरेत् ॥
नीलरुद्रं तथाथर्वी सूक्ष्मासूक्ष्मं तथैव च । उत्तरेऽथर्वशीर्षञ्च तत्परस्तु समुच्चरेत् ॥४१॥
आचार्य्यश्चाग्निमुत्पाद्य प्रतिकुण्डं प्रदापयेत् ।
वह्नेः पूर्वादिकान् भागान् पूर्वकुण्डादितः क्रमात् ॥ ४२ ॥
धूपदीपचरूणाञ्च दद्यीताग्निं समुद्धरेत् । पूर्ववच्छिवमभ्यर्च्य शिवाग्नौ मन्त्रतर्पणम् ॥
देशकालादिसम्पत्तौदुर्निमित्तप्रशान्तये । होमंकृत्वा तु मन्त्रज्ञः पूर्णां दत्त्वा शुभावहाम्
पूर्ववच्चरुकं कृत्वा प्रतिकुण्डं निवेदयेत् । यजमानालङ्कृतास्तु व्रजेयुः स्नानमण्डपम्
भद्रपीठे निधायेशं ताड़यित्वावगुण्ठयेत् ।
स्नापयेत् पूजयित्वा तु मृदा काषायवारिणा ॥ ४६ ॥
गोमूत्रैर्गोमयेनापि वारिणा चान्तरान्तरा । भस्मना गन्धतोयेन फडन्तास्त्रेण वारिणा
देशिको मूर्त्तिपैः सार्द्धं कृत्वा कारणशोधनम् । धर्मजत्तेन संछाद्य पीतवर्णेन वाससा
सम्पूज्य सितपुष्पैश्च नयेदुत्तरवेदिकाम् । तत्र दत्तासनायाञ्च शय्यायां सन्निवेश्य च
कुङ्कुमालिप्तसूत्रेण विभज्य गुरुरालिखेत् । शलाकया सुवर्णस्य अक्षिणी शस्त्रकर्मणा
अञ्जयेल्लक्ष्मकृत् पश्चाच्छास्त्रदृष्टेन कर्मणा ।
कृतकर्मा च शस्त्रेण लक्ष्मी शिल्पी समुत्क्षिपेत् ॥ ५१ ॥
यशाद्दर्द्धोऽथ पादार्द्धादर्द्धाया अर्द्धतोऽथवा । सर्वकामप्रसिद्ध्यर्थं शुभं लक्ष्मावतारणम्
लिङ्गदीर्घविकारांशे त्रिभुक्ते भागवर्णनात् ।
विस्तारो लक्ष्म देहस्य भवेल्लिङ्गस्य सर्वतः ॥ ५३ ॥

यवस्य नवमकस्य भागैरष्टाभिरावृता । हस्तिके लक्ष्मरेखा च गाम्भीर्याद् विस्तरादपि
एवमष्टांशवृद्ध्या तु लिङ्गे सार्द्धकरादिके । भवेदष्टयवा पृथ्वी गम्भीरात्र च हास्तिके
एवमष्टांशवृद्ध्या तु लिङ्गे सार्द्धकरादिके । भवेदष्टयवा पृथ्वी गम्भीरान्नवहास्तिके ॥

शाम्भवेषु च लिङ्गेषु पादवृद्धेषु सर्वतः ।
लक्ष्म देहस्य विष्कम्भो भवेद् वै यवर्द्धनात् ॥ ५७ ॥

गम्भीरत्वपृथुत्वाभ्यां रेखापि त्र्यंशवृद्धितः ।
सर्वेषु च भवेत् सूक्ष्मं लिङ्गमस्तकमस्तकम् ॥ ५८ ॥

लक्ष्मक्षेत्रेऽष्टधाभक्ते मूर्ध्निभागद्वये शुभे । षड्भागपरिवर्त्तेन भुक्त्वा भागद्वयन्त्वधः ॥
रेखात्रयेण सम्बद्धं कारयेत् पृष्ठदेशगम् । रत्नजे लक्षणोद्धारो यवौ हेमसमुद्भवे ॥ ६० ॥

स्वरूपं लक्षणं तेषां प्रभा रत्नेषु निर्मला ।
नयनोन्मीलनं वक्त्रे सान्निध्याय च लक्ष्म तत् ॥ ६१ ॥

लक्ष्मणोद्धाररेखाञ्च घृतेन मधुना तथा । मृत्युञ्जयेन सम्पूज्य शिल्पिदोषनिवृत्तये ॥

अर्च्चयेच्च ततो लिङ्गं स्नापयित्वा मृदादिभिः ।
शिल्पिनं तोषयित्वा तु दद्याद् गां गुरवे ततः ॥ ६३ ॥

लिङ्गं धूपादिभिः प्राच्य गायेयुर्भर्तृ गाःस्त्रियः ।
सव्येन चापसव्येन सूत्रेणाथ कुशेन वा ॥ ६४ ॥

स्मृत्वाच रोचनं दत्वा कुर्याग्निर्मन्थनादिकम् । गुड़लवणधान्याकदानेन विसृजेत्ततः

गुरुमूर्त्तिधरैः सार्द्धं हृदा वा प्रणवेन वा ।
मृत्स्नागोमयगोमूत्रभस्मभिः सलिलान्तरम् ॥ ६६ ॥

स्नापयेत् पञ्चगव्येन पञ्चामृतपुरःसरम् । विरूक्षणं कषायैश्च सर्वौषधिजलेन वा ॥६७॥
शुभ्रपुष्पफलस्वर्णरत्नश्रृङ्गयवोदकैः । तथा धारासहस्रेण दिव्यौषधिजलेन च ॥ ६८ ॥

तीर्थोदकेन गाङ्गेन चन्दनेन च वारिणा ।
क्षीरार्णवादिभिः कुम्भैः शिवकुम्भजलेन च ॥ ६९ ॥

विरूक्षणं विलेपञ्च सुगन्धैश्चन्दनादिभि । सम्पूज्य ब्रह्मभिः पुष्पैर्वर्मणा रक्तचीवरैः ॥

रक्तरूपेण नीराज्य रक्षातिलकपूर्वकम् । घृतौघैर्जलदुग्धैश्च कुशाद्यैरर्घ्यसूचितैः ॥ ७१ ॥
द्रव्यैः स्तुत्यादिभिस्तुष्टमर्चयेत् पुरुषाणुना । समाचम्य हृदा देवं ब्रूयादुत्थीयतां प्रभो !
देवं ब्रह्मरथेनैव क्षिप्रं द्रव्याणि तन्नयेत् । मण्डपे पश्चिमद्वारशय्यायां विनिवेशयेत् ॥
शक्त्यादिशक्तिपर्य्यन्ते विन्यसेदासने शुभे । पश्चिमे पिण्डिकान्तस्यन्यसेद्ब्रह्मशिलान्तदा
शस्त्रमस्त्रशतालब्धनिद्राकुम्भध्रुवासनम् । प्रकल्प्य शिवकोणे च दत्त्वार्घ्यं हृदयेन तु

उत्थाप्योक्तासने लिङ्गं शिरसा पूर्वमस्तकम् ।
समारोप्य न्यसेत् तस्मिन् सृष्ट्या धर्मादिवन्दनम् ॥ ७६ ॥

दद्याद्धूपञ्च सम्पूज्य तथा वासांसि वर्मणा । गृहोपकृतिनैवेद्यं हृदादद्यात् स्वशक्तितः
घृतक्षौद्रयुतं पात्रमभ्यङ्गाय पदान्तिके । देशिकश्च स्थितस्तत्र षट्त्रिंशत्तत्त्वसञ्चयम् ॥

शक्त्यादिभूमिपर्य्यन्तं स्वतत्त्वाधिपसंयुतम् ।
विन्यस्य पुष्पमालाभिस्त्रिखण्डं परिकल्पयेत् ॥ ७९ ॥

मायापदेशशक्त्यन्तन्तुर्य्यांशाष्टांशवर्त्तुलम् । तत्रात्मतत्त्वविद्याख्यं शिवं सृष्टिक्रमेण तु
एकशः प्रतिभागेषु ब्रह्मविष्णुहराधिपान् । विन्यस्य मूर्त्तिमूर्त्तीशान् पूर्वादिक्रमतो यथा

क्ष्मावह्नियजमानार्क्कजलवायुनिशाकरान् ।
आकाशमूर्त्तिरूपांस्तान् न्यसेत तदधिनायकान् ॥ ८२ ॥

सर्वं पशुपतिं चोग्रं रुद्रं भवमखेश्वरम् । महादेवञ्च भीमञ्च मन्त्रास्तद्वाचका इमे ॥
लवशषचयसाश्च हकारश्च त्रिमात्रिकः । प्रणवो हृदयाणुर्वा मूलमन्त्रोऽथवा क्वचित् ॥

पञ्चकुण्डात्मके यागे मूर्त्तीः पञ्चाथवा न्यसेत् ।
पृथिवीजलतेजांसि वायुमाकाशमेव च ॥ ८५ ॥
क्रमात् तदधिपान् पञ्च ब्रह्माणं धरणीधरम् ।
रुद्रमीशं सदाख्यञ्च सृष्टिन्यायेन मन्त्रवित् ॥ ८६ ॥
मुमुक्षोर्वा निवृत्ताद्याः अजाताद्यास्तदीश्वराः ।
त्रितत्त्वं वाथ सर्वत्र न्यसेद् व्याप्त्यात्मकारणम् ॥ ८७ ॥
शुद्धे चात्मनि विद्येशा अशुद्धे लोकनायकाः ।

द्रष्टव्या मूर्त्तिपाश्चैव भोगिनो मन्त्रनायकाः ॥ ८८ ॥

पञ्चविंशत्तथैवाष्टपञ्चत्रीणि यथाक्रमम् । एषां तत्त्वं तदीशानामिन्द्रादीनां ततो यथा ॥

ओं हां शक्तितत्त्वाय नम इत्यादि । ओं हां शक्तितत्त्वाधिपाय नम इत्यादि । ओं हां क्ष्मामूर्त्तये नमः । ओं हां क्ष्मामूर्त्त्यधीशाय शिवाय नम इत्यादि । ओं हां पृथिवीमूर्त्तये नमः । ओं हां मूर्त्त्यधिपाय ब्रह्मणे नम इत्यादि । ओं हां शिवतत्त्वाधिपाय रुद्राय नम इत्यादि ।

नाभिकन्दात् समुच्चार्य्य घण्टानादविसर्प्पणम् ।
ब्रह्मादिकारणत्यागाद् द्वादशान्तसमाश्रितम् ॥ ९० ॥

मन्त्रञ्च मनसा भिन्नंप्राप्तानन्दरसोपमम् । द्वादशान्तात् समानीयनिष्कलंव्यापकंशिवम्

अष्टत्रिंशत्कलोपेतं सहस्रकिरणोज्ज्वलम् ।
सर्वशक्तिमयं साङ्गं ध्यात्वा लिङ्गे निवेशयेत् ॥ ९२ ॥

जीवन्यासो भवेदेवं लिङ्गे सर्वार्थसाधकः । पिण्डिकादिषुतुन्यासःप्रोच्यतेसाम्प्रतंयथा

पिण्डिकाञ्च कृतस्नानां विलिप्ताञ्चन्दनादिभिः ।
सद्वस्त्रश्च समाच्छाद्य रन्ध्रे च भगलक्षणे ॥ ९४ ॥
पञ्चरत्नादिसंयुक्तां लिङ्गस्योत्तरतः स्थिताम् ।
लिङ्गवत् कृतविन्यासां विधिवत् सम्प्रपूजयेत् ॥ ९५ ॥
कृतस्नानादिकां तत्र लिङ्गमूले शिलां न्यसेत् ।
कृतस्नानादिसंस्कारं शक्त्यन्तं वृषभं तथा ॥ ९६ ॥

प्रणवपूर्वं हुं पूं ह्रीं मध्यादन्यतमेन च । क्रियाशक्तियुतां पिण्डीं शिलामाधाररूपिणीम्

भस्मदर्भतिलैः कुर्य्यात् प्राकारत्रितयं ततः । रक्षायै लोकपालांश्चसायुधान्पूजयेद्बहिः

ओं हूं हं क्रियाशक्तये नमः । ओं हूं हां हः महागौरीरुद्रदयिते स्वाहेति च पिण्डिकायाम् । ओं हां आधारशक्तये नमः । ओं हां वृषभाय नमः ।

धारिका दीप्तिमत्युग्रा ज्योत्स्ना चेता बलोत्कटाः ।
तथा धात्री विधात्री च न्यसेद् वा पञ्चनायिकाः ॥ ९९ ॥

वामा ज्येष्ठा क्रिया ज्ञाना वेधा तिस्रोऽथवा न्यसेत् ।
क्रियाज्ञाना तथेच्छा च पूर्ववच्छान्तिमूर्त्तिषु ॥ १०० ॥
तमी मोहा क्षमी निष्ठा मृत्युर्मायाभवज्वराः ।
पञ्च चाथ महामोहा घोरा च त्रितयज्वराः ॥ १०१ ॥
त्रिस्रोऽथवा क्रियाज्ञाना तथा बाधाधिनायिका ।
आत्मादित्रिषु तत्त्वेषु तीव्रमूर्त्तिषु विन्यसेत् ॥ १०२ ॥
अत्रापि पिण्डिका ब्रह्मशिलादिषु यथाविधिः । गौर्य्यादिसञ्ज्ञैरेव पूर्ववत् सर्वमाचरेत्
एवं विधाय विन्यासं गत्वा कुण्डान्तिकं ततः ।
कुण्डमध्ये महेशानं मेखलासु महेश्वरम् ॥ १०४ ॥
क्रियाशक्तिं तथान्यासु नादमोष्ठे च विन्यसेत् ।
घटं स्थण्डिलवह्नीशैः नाड़ीसन्धानकं ततः ॥ १०५ ॥
पद्मतन्तुसमां शक्तिमुद्घातेन समुद्यताम् । विशन्तीं सूर्य्यमार्गेण निःसरन्तीं समुद्गताम् ॥
पुनश्च शून्यमार्गेण विशतीं स्वस्य चिन्तयेत् । एवं सर्वत्र सन्धेयं मूर्त्तिपैश्च परस्परम् ॥
सम्पूज्य धारिकां शक्तिं कुण्डे सन्तर्प्य च क्रमात् ।
तत्त्वतत्त्वेश्वरा मूर्त्तीर्मूर्त्तीशांश्च घृतादिभिः ॥ १०८ ॥
सम्पूज्य तर्प्पयित्वा तु सन्निधौ संहिताणुभिः । शतं सहस्रमर्द्धं वा पूर्णयासह होमयेत्
तत्त्वतत्त्वेश्वरा मूर्त्तिर्मूर्त्तीशांश्च करेणुकान् । तथा सन्तर्प्य सान्निध्ये जुहुयुर्मूर्त्तिपाअपि
ततो ब्रह्मभिरङ्गैश्च द्रव्यकालानुरोधतः । सन्तर्प्य शक्तिं कुम्भाम्भ प्रोक्षिते कुशमूलतः ॥
लिङ्गमूलञ्च संस्पृश्य जपेयुर्होमसङ्ख्यया । सन्निधानं हृदा कुर्य्युर्वर्म्मणा चावगुण्ठनम्
एवं संशोध्यब्रह्मादिविष्णवन्तादिविशुद्धये । विधायपूर्ववत् सर्वंहोमसङ्ख्याजपादिकम्
कुशमध्याग्रयोगेन लिङ्गमध्याग्रकं स्पृशेत् । यथा यथा च सन्धानं तदिदानीमिहोच्यते
ओँ हां हूं ओँ ओं ओँ एँ ओँ भूँ भूँ वाह्यमूर्त्तये नमः ।
ओँ हां वाँ आँ ओँ आँ षाँ ओँ भूँ भूँ वाँ वह्निमूर्त्तये नमः ।
एवञ्च यजमानादिमूर्त्तिभिरभिसन्धेयम् । पञ्चमूर्त्यात्मकेऽप्येवं सन्धानं हृदयादिभिः ॥

मूलेन स्वीयबीजैर्वा ज्ञेयं तत्त्वत्रयात्मके। शिलापिण्डी वृषेष्वेवं पूर्णाच्छिन्नं सुसंवरैः

भागाभागविशुद्ध्यर्थं होमं कुर्याच्छतादिकम्।
न्यूनादिदोषमोषाय शिवेनाष्टाधिकं शतम्॥ ११७॥
हुत्वाथ यत् कृतं कर्म्म शिवश्रोत्रे निवेदयेत्।
एतत्समन्वितं कर्म त्वच्छक्तौ च मया प्रभो!॥ ११८॥

ओं नमो भगवते रुद्राय रुद्र नमोऽस्तु ते। विधिपूर्णमपूर्णं वा स्वशक्त्यापूर्य्य गृह्यताम्

ओं ह्रीं शाङ्करि! पूरय स्वाहा इति पिण्डिकायाम्।
अथ लिङ्गे न्यसेज् ज्ञानी क्रियाख्यं पीठविग्रहे॥ १२०॥
आधाररूपिणीं शक्तिं न्यसेद्ब्रह्मशिलोपरि।
निबध्य सप्तरात्रं वा पञ्चरात्रं त्रिरात्रकम्॥ १२१॥

एकरात्रमथोवापि यद्वा सद्योऽधिवासनम्। विनाधिवासनं यागः कृतोऽपि न फलप्रदः
स्वमन्त्रैः प्रत्यहं देयमाहुतीनां शतं शतम्। शिवकुम्भादिपूजाञ्च दिग्बलिञ्च निवेदयेत्
गुर्वादिसहितो वासो रात्रौ नियमपूर्वकम्। अधिवासः स वसतावधेर्भावः समीरितः

इत्यादि महापुराणे आग्नेयेऽधिवासनविधिर्नाम षण्णवतितमोऽध्यायः।

---

## सप्तनवतितमोऽध्यायः।

### शिवप्रतिष्ठाकथनम्।

ईश्वर उवाच।

प्रातर्नित्यविधिं कृत्वा द्वारपालप्रपूजनम्।
प्रविश्य प्राग्विधानेन देहशुद्ध्यादिमाचरेत्॥ १॥
दिक्पतींश्च समभ्यर्च्य शिवकुम्भञ्च वर्द्धनीम्।
अष्टमुष्टिकया लिङ्गं वह्निं सन्तर्प्य च क्रमात्॥ २॥

शिवाज्ञातस्ततो गच्छेत् प्रासादं शस्त्रमुच्चरन् ।
तद्गतान् प्रक्षिपेद् विघ्नान् हुम्फडन्तशराणुना ॥ ३ ॥
न मध्ये स्थापयेल्लिङ्गं वेधदोषविशङ्कया । तस्मान्मध्यं परित्यज्य यवार्द्धेन यवेन वा ॥
किञ्चिदीशानमाश्रित्य शिलां मध्ये निवेशयेत् ।
मूलेन तामनन्ताख्यां सर्वाधारस्वरूपिणीम् ॥ ५ ॥
सर्वगां सृष्टियोगेन विन्यसेदचलां शिलाम् । अथवानेन मन्त्रेण शिवस्यासनरूपिणीम्
ओं नमो व्यापिनि ! भगवति ! स्थिरेऽचले ! ध्रुवे ! ।
ह्रं लं ह्रीं स्वाहा । त्वया शिवाज्ञया शक्ते ! स्थातव्यमिह सन्ततम् ॥ ७ ॥
इत्युक्त्वा च समभ्यर्च्य निरुध्याद्रौद्रमुद्रया । वज्रादीनि च रत्नानितथोशीरादिकौषधीः
लोहान् हेमादिकांस्यान्तान् हरितालादिकांस्तथा ।
धान्यप्रभृतिशस्यांश्च पूर्वमुक्काननुक्रमात् ॥ ९ ॥
प्रभारागत्वदेहत्ववीर्य्यशक्तिमयानिमान् । भावयन्नेकचित्तस्तु लोकपालेशसंवरैः ॥
पूर्वादिषु च गर्त्तेषु न्यसेदेकैकशः क्रमात् । हेमजं तारजं कूर्म्मं वृषं वा द्वारसन्मुखम् ।
सरित्तटमृदा युक्तं पर्वताग्रमृदाथवा । प्रक्षिपेन्मध्यगर्त्तादौ यद्वा मेरुं सुवर्णजम् ॥ १२॥
मधूकाक्षतसंयुक्तमञ्जनेन समन्वितम् ।
पृथिवीं राजतीं यद्वा यद्वा हेमसमुद्भवाम् ॥ १३ ॥
सर्ववीजसुवर्णाभ्यां समायुक्तां विनिक्षिपेत् । स्वर्णजं राजतं वापि सर्वलोहसमुद्भवम्
सुवर्णं कुशरायुक्तं पद्मनालं ततो न्यसेत् । देवदेवस्य शक्त्यादिमूर्त्तिपर्य्यन्तमासनम् ।
प्रकल्प्य पायसेनाथ लिप्त्वा गुग्गुलुनाथवा । श्वभ्रमाच्छाद्यवस्त्रेण तनुत्रेणास्त्ररक्षितम्
दिक्पतिभ्यो बलिं दत्त्वा समाचान्तोऽथ देशिकः ।
शिवेन वा शिलाश्वभ्रसङ्गदोषनिवृत्तये ॥ १७ ॥
शस्त्रेण वा शतं सम्यग् जुहुयात् पूर्णया सह ।
एकैकाहुतिदानेन सन्तर्प्य वास्तुदेवताः ॥ १८ ॥
समुत्थाप्य हृदादेवमासनं मङ्गलादिभिः । गुरुर्देवाग्रतो गच्छेन्मूर्त्तिपैश्च दिशि स्थितैः

चतुर्भिः सह कर्त्तव्या देवयज्ञस्य पृष्ठतः । प्रासादादि परिभ्रम्य भद्राख्यद्वारसम्मुखम्

लिङ्गं संस्थाप्य दत्त्वार्घ्यं प्रासादं सन्निवेशयेत् ।

द्वारेण द्वारबन्धेन द्वारदेशेन तच्छिला ॥ २१ ॥

द्वारबन्धे शिखाशून्ये तदर्द्धेनाथ तद्गते । वर्जयन् द्वारसंस्पर्शं द्वारेणैव महेश्वरम् ॥ २२ ॥

देवगृहसमारम्भे कोणेनापि प्रवेशयेत् । अयमेव विधिर्ज्ञेयो व्यक्तलिङ्गेऽपि सर्वतः ॥

गृहे प्रवेशनं द्वारे लोकैरपि समीरितम् । अपद्वारप्रवेशेन विदुर्गोत्रक्षयं गृहम् ॥ २४ ॥

अथ पीठे च संस्थाप्य लिङ्गं द्वारस्य सम्मुखम् ।

तूर्य्यमङ्गलनिर्घोषैर्दूर्व्वाक्षतसमन्वितम् ॥ २५ ॥

समुत्तिष्ठ हरेत्युक्ता महापाशुपतं पठेत् । अपनीय घटं श्वभ्राद् देशिको मूर्त्तिपैः सह ॥

मन्त्रं सन्धारयित्वा तु विलिप्तं कुङ्कुमादिभिः ।

शक्तिशक्तिमतोरैक्यं ध्यात्वा चैव तु रक्षितम् ॥ २७ ॥

लयान्तं मूलमुच्चार्य्य स्पृष्ट्वा श्वभ्रे निवेशयेत् ।

अंशेन ब्रह्मभागस्य यद्वा अंशद्वयेन च ॥ २८ ॥

अर्द्धेन वाष्टमांशेन सर्वस्याथ प्रवेशनम् । पिधाय सीसकं नाभिदीर्घाभिः सुसमाहितः

श्वभ्रं वालुकयापूर्य्य ब्रूयात् स्थिरीभवेति च ।

ततो लिङ्गे स्थिरीभूते ध्यात्वा सकलरूपिणम् ॥ ३० ॥

मूलमुच्चार्य्य शक्त्यन्तं सृष्ट्या च निष्कलं न्यसेत् ।

स्थाप्यमानं यदा लिङ्गं याम्यां दिशमथाश्रयेत् ॥ ३१ ॥

तत्तद्दिगीशमन्त्रेणपूर्णान्तं दक्षिणान्वितम् । सव्येस्थानेच वक्रेच चलिते स्फुटितेऽपिवा

जुहुयात् मूलमन्त्रेण बहुरूपेण वा शतम् । किञ्चान्येष्वपि दोषेषु शिवशान्तिसमाश्रयेत्

युक्तंन्यासादिभिर्लिङ्गं कुर्वन्नेवं न दोषभाक् । पीठबन्धमतःकृत्वा लक्षणस्यांशलक्षणम्

गौरीमन्त्रं लयं नीत्वा सृष्ट्या पिण्डीञ्च विन्यसेत् ।

सम्पूर्य्य पार्श्वसंसिद्धिं वालुकावज्रलेपनम् ॥ ३५ ॥

ततोमूर्त्तिधरैः सार्द्धं गुरुः शान्तिघटोद्धृतः । संस्थाप्यकलसैरन्यैस्तद्वत् पञ्चामृतादिभिः

विलिप्य चन्दनाद्यैश्च सम्पूज्य जगदीश्वरम् । उमामहेशमन्त्राभ्यां तौ स्पृशेल्लिङ्गमुद्रया
ततस्त्रितत्त्वविन्यासं षड़र्चादिपुरःसरम् । कृत्वा मूर्त्ति तदीशानामङ्गानां ब्रह्मणामथ ॥

ज्ञानी लिङ्गे क्रियापीठे विन्यस्य स्नापयेत्ततः ।
गन्धैर्विलिप्य सन्धूप्य व्यापित्वेन शिवे न्यसेत् ॥ ३९ ॥

स्रग्धूपदीपनैवेद्यैर्हृदयेन फलानि च । विनिवेद्य यथाशक्ति समाचम्य महेश्वरम् ॥४०॥
दत्त्वार्घं च जपं कृत्वा निवेद्य वरदे करे । चन्द्रार्कतारकं यावत् मन्त्रेण शैवमूर्त्तिपैः ॥

स्वेच्छयैव त्वया नाथ ! स्थातव्यमिह मन्दिरे ।
प्रणम्यैवं वहिर्गत्वा हृदा वा प्रणवेन वा ॥ ४२ ॥
संस्थाप्य वृषभं पश्चात् पूर्ववद् बलिमाचरेत् ।
न्यूनादिदोषमोषाय ततो मृत्युजिता शतम् ॥ ४३ ॥

शिवेन सशिवो हुत्वा शान्त्यर्थं पायसेन च । ज्ञानाज्ञानकृतं यच्च तत् पूरय महाविभो
हिरण्यपशुभूम्यादि गीतवाद्यादिहेतवे । अम्बिकेशाय तद् भक्त्या शक्त्या सर्वं निवेदयेत्

दानं महोत्सवं पश्चात् कुर्य्याद्दिनचतुष्टयम् ।
त्रिसन्ध्यं त्रिदिनं मन्त्री होमयेन् मूर्त्तिपैः सह ॥ ४६ ॥

चतुर्थेऽहनि पूर्णाञ्च चरुकं बहुरूपिणा । निवेद्य सर्वकुण्डेषु सम्पाताहुतिशोधितम् ॥
दिनचतुष्टयं यावत्तन्निर्म्माल्यं तदूर्ध्वतः । निर्म्माल्यापनयं कृत्वा स्नापयित्वा तु पूजयेत्

पूजा सामान्यलिङ्गेषु कार्य्या साधारणाणुभिः ।
विहाय लिङ्गचैतन्यं कुर्य्यात् स्थाणुविसर्ज्जनम् ॥ ४९ ॥

असाधारणलिङ्गेषु क्षमस्वेति विसर्ज्जनम् । आवाहनमभिव्यक्तिर्विसर्गः शक्तिरूपता ॥

प्रतिष्ठान्ते क्वचित् प्रोक्तं स्थिराद्याहुतिसप्तकम् ।
स्थिरस्तथाप्रमेयश्चानादिबोधस्तथैव च ॥ ५१ ॥

नित्योऽथ सर्वगश्चैवाविनाशी दृष्ट एव च । एते गुणा महेशस्य सन्निधानायकीर्त्तिताः
ओं नमः शिवाय स्थिरो भवेत्याहुतीनांक्रमः । एवमेतच्चसम्पाद्य विधाय शिवकुम्भवत्

कुम्भद्वयञ्च तन्मध्यादेककुम्भामसा भवम् ।

संस्नाप्य तद् द्वितीयन्तु कर्त्तृस्नानाय धारयेत् ॥ ५४ ॥
दत्त्वा बलिं समाचाम्य वहिर्गच्छेत् शिवाज्ञया ।
जगतीवाह्यतश्चण्डमैशान्यां दिशि मन्दिरे ॥ ५५ ॥
धामगर्भप्रमाणे च सुपीठे कल्पितासने । पूर्ववन् न्यासहोमादि विधाय ध्यानपूर्वकम्
संस्थाप्य विधिवत् तत्र ब्रह्माङ्गैः पूजयेत् ततः ।
अङ्गानि पूर्वयुक्तानि ब्रह्माणी त्वर्चना यथा ॥ ५७ ॥
एवं सद्योजाताय ओं ह्रूं फट् नमः । ओं विं वामदेवाय ह्रूं फट् नमः ओं वुँ अघोराय ह्रूँ फट् नमः ओं तत्पुरुषाय वौमीशानाय च ह्रं फट् ।
जपं निवेद्य सन्तर्प्य विज्ञाप्य नतिपूर्वकम् । देवः सन्निहितो यावत् तावत्त्वं सन्निधीभव
न्यूनाधिकञ्च यत् किञ्चित् कृतमज्ञानतो मया ।
त्वत्प्रसादेन चण्डेश ! तत् सर्वं परिपूरय ॥ ५९ ॥
व्यणलिङ्गे वाणरोहे सिद्धलिङ्गे स्वयम्भुवि ।
प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत् ॥ ६० ॥
अद्वैतभावनायुक्ते स्थण्डिलेशविधावपि । अभ्यर्च्य चण्डं ससुतं यजमानं हि भार्य्यया
पूर्वस्थापितकुम्भेन स्नापयेत् स्नापकः स्वयम् ।
स्थापकं यजमानोपि सम्पूज्य च महेशवत् ॥ ६२ ॥
वित्तशाठ्यं विना दद्याद् भूहिरण्यादिदक्षिणाम् ।
मूर्त्तिपान् विधिवत् पश्चात् जापकान् ब्राह्मणांस्तथा ॥ ६३ ॥
देवज्ञं शिल्पिनं प्रार्च्यदीनानाथादिभोजयेत् । यदत्रसम्मुखीभावेखेदितोभगवन् ! मया
क्षमस्व नाथ ! तत् सर्वं कारुण्याम्बुनिधे ! मम ।
इति विज्ञप्तियुक्ताय यजमानाय सद्गुरुः ॥ ६५ ॥
प्रतिष्ठापुण्यसद्भावं स्फुरत्तारकसप्रभम् । कुशपुष्पाक्षतोपेतं स्वकरेण समर्पयेत् ॥
ततः पाशुपतोपेतं प्रणम्य परमेश्वरम् । ततोऽपि बलिभिर्भूतान् सन्निधाय निबोधयेत्
स्थातव्यं भवता तावद्यावत् सन्निहितोहरः । गुरुर्वस्त्रादिसंयुक्तंगृह्णीयाद्यागमण्डपम्

सर्वोपकरणं शिल्पी तथास्नापनमण्डपम् । अन्ये देवादयः स्थाप्या मन्त्रैरागमसम्भवैः
आदिवर्णस्य भेदाद्वा सुतत्वव्याप्तिभाविताः । साध्यप्रमुखदेवाश्च सरिदोषधयस्तथा ॥

क्षेत्रपाः किन्नराद्याश्च पृथिवीतत्त्वमाश्रिताः ।
स्नानं सरस्वतीलक्ष्मीनदीनामम्भसि क्वचित् ॥ ७१ ॥
भुवनाधिपतीनाञ्च स्थानं यत्र व्यवस्थितिः ।
अण्डवृद्धिप्रधानान्तं त्रितत्त्वं ब्रह्मणः पदम् ॥ ७२ ॥

तन्मात्रादिप्रधानान्तं पदमेतत् त्रिकं हरेः । नाट्येशगणमातृणां यक्षेशशरजन्मनाम् ७३
अण्डजाःशुद्धविद्यान्तं पदं गणपतेस्तथा । मायांशदेशशक्त्यन्तं शिवाशिवोत्तरोचिषाम्
पदमीश्वरपर्य्यन्तं व्यक्तार्चासु च कीर्ति तम् । कूर्म्माद्यं कीर्त्तितंयच्चयच्च रत्नादिपञ्चकम्

प्रक्षिपेत् पीठगर्त्ते च पञ्चब्रह्मशिलां विना ।
षड्भिर्विभाजिते गर्त्ते त्यक्त्वा भागञ्च पृष्ठतः ॥ ७६ ॥

स्थापनं पञ्चयांशे च यदि वा वसुभाजिते । स्थापनं सप्तमे भागे प्रतिमासु सुखावहम्

धारणाभिर्विशुद्धिः स्यात् स्थापने लेपचित्रयोः ।
स्नानादि मानसन्तत्र शिलारत्नादिवेशनम् ॥ ७८ ॥

नेत्रोद्घाटनमन्त्रेष्टमासनादिप्रकल्पनम् । पूजा निरम्बुभिः पुष्पैर्यथा चित्रं न दुष्यति ॥

विधिस्तु चललिङ्गेषु सम्प्रत्येव निगद्यते ।
पञ्चभिर्वा त्रिभिर्वापि पृथक् कुर्य्याद् विभाजिते ॥ ८० ॥

भागत्रयेण भागांशो भवेद्भागद्वयेन वा । स्वपीठेष्वेपि तद्वत् स्याल्लिङ्गेषु तत्त्वभेदतः ॥

सृष्टिमन्त्रेण संस्कारो विधिवत् स्फाटिकादिषु ।
किञ्च ब्रह्मशिलारत्नप्रभूतेश्चानिवेदनम् ॥ ८२ ॥

योजनं पिण्डिकायाश्च मनसापरिकल्पयेत् । स्वयम्भू वाणलिङ्गादौसंस्कृतौनियमोनहि
स्नापनं संहितामन्त्रैर्न्यासं होमञ्च कारयेत् । नदीसमुद्ररोहाणां स्थापनं पूर्ववन् मतम्

ऐहिकं मृण्मयं लिङ्गं पिष्टकादि च तत्क्षणात् ।
कृत्वा सम्पूजयेच्छुद्धं दीक्षणादिविधानतः ॥ ८५ ॥

समादाय ततो मन्त्रानात्मानं सन्निधाय च । तज्जले प्रक्षिपेल्लिङ्गं वत्सरात्कामदं भवेत्
विष्वक्सेनादिस्थापनं चैव पृथङ्मन्त्रैः समाचरेत् ।

इत्यादि महापुराणे आग्नेये शिवप्रतिष्ठाविधानं नाम सप्तनवतितमोऽध्यायः ।

———

# अष्टनवतितमोऽध्यायः

## गौरीप्रतिष्ठाकथनम् ।

ईश्वर उवाच ।

वक्ष्येगौरीप्रतिष्ठाञ्च पूजया सहितां शृणु । मण्डपाद्यं पुरोयच्च संस्थाप्यचाधिरोपयेत्
शय्यायान्तांश्च विन्यस्य मन्त्रान्मूर्त्यादिकान् गुह ! ।
आत्मविद्याशिवान्तञ्च कुर्य्यादीशनिवेशनम् ॥ २
शक्तिं परांततो न्यस्य हुत्वा जप्त्वा च पूर्ववत् ।
सन्धाय च तथा पिण्डीं क्रियाशक्तिस्वरूपिणीम् ॥ ३ ॥
सदेशव्यापिकां ध्यात्वा न्यस्तरत्नादिकां तथा ।
एवं संस्थाप्य तां पश्चाद्देवीन्तस्यांन्नियोजयेत् ॥ ४ ॥

परशक्तिस्वरूपान्तां स्वाणुना शक्तियोगतः । ततो न्यसेत् क्रियाशक्तिं पीठे ज्ञानञ्चविग्रहे
ततोऽपिव्यापिनींशक्तिसमावाह्यनियोजयेत् । अम्बिकांशिवनाम्नीञ्च समालभ्यप्रपूजयेत्

ओं आधारशक्तयेनमः । ओं कूर्माय नमः । ओं स्कन्दाय च तथा नमः ।
ओं ह्रीं नारायणाय नमः । ओं ऐश्वर्याय नमः । ओ अं अधश्छदनाय नमः ।
ओं पद्मासनाय नमः । ओं ऊर्द्ध्वच्छादनाय नमः । ओं पद्मासनाय नमः ।
अथ सम्पूज्याः केशवास्तथा । ओं ह्रीं कर्णिकायै नमः । ओं पुष्कराक्षेभ्य
इहार्चयेत् । ओं ह्रां पुष्ट्यै ह्रीं च ज्ञानायै हूं क्रियायै ततो नमः । ओं नालाय नमः ।
रुं धर्माय नमः । रुं ज्ञानाय वै नमः । ओं वैराग्याय नमः । ओं वै अधर्माय नमः ।
ओं रुं अज्ञानाय वै नमः । ओं अवैराग्याय वै नमः । ओं अनैश्वर्याय नमः । हुं वाचे हुं

च रागिण्यै क्रैंज्वालिन्यै ततो नमः। ओं ह्रौं शमायै च नमः। ह्रुं ज्येष्ठायै ततो नमः। ओं ह्रौं रौं क्रौं नवशक्त्यै गौं च गौर्यासनाय च। गौं गौरीमूर्त्तये नमः। गौर्य्या मूलमथोच्यते। ओं ह्रीं सः महागौरी! रुद्रदयिते! स्वाहा। गौर्य्यै नमः। गां ह्रूं ह्रीं शिवो गूं स्यात् शिखायै कवचाय च। गों नेत्राय च गों अस्त्राय ओं गौंविज्ञानशक्तये, ओं गूं क्रियाशक्तये नमः। पूर्वादौ शक्रादिकान्। ओंसुं सुभगायै नमः। ह्रीं बीजललिता ततः। ओं ह्रीं कामिन्यै च नमः। ओं ह्रूँ स्यात् कामशालिनीमन्त्रैर्गौरीं प्रतिष्ठाप्य प्रार्च्य जप्त्वाथ सर्वभाक्।

इत्यादि महापुराणे आग्नेये गौरीप्रतिष्ठाकथनं नामाष्टनवतितमोऽध्यायः।

# एकोनशततमोऽध्यायः

## सूर्य्यप्रतिष्ठाकथनम्।

ईश्वर उवाच।

वक्ष्ये सूर्य्यप्रतिष्ठाञ्च पूर्ववन्मण्डपादिकम्।
स्नानादिकञ्च सम्पाद्य पूर्वोक्तविधिना ततः॥ १॥
विद्यामासनशय्यायां साङ्गं विन्यस्य भास्करम्।
त्रितत्त्वं विन्यसेत् तत्र सस्वरं खादिपञ्चकम्॥ २॥
शुद्ध्यादि पूर्ववत् कृत्वा पिण्डीं संशोध्य पूर्ववत्।
सदेशपदपर्य्यन्तं विन्यस्य तत् तु पञ्चकम्॥ ३॥
शक्त्या च सर्वतोमुख्या संस्थाप्य विधिवत् ततः।
स्वाणुना विधिवत् सूर्य्यं शक्त्यन्तं स्थापयेद् गुरुः॥ ४॥
स्वाम्यन्तमथवादित्यं पादान्तं नाम धारयेत्।
सूर्य्यमन्त्रास्तु पूर्वोक्ता द्रष्टव्याः स्थापनेऽपि च॥ ५॥

इत्यादि महापुराणे आग्नेये सूर्यप्रतिष्ठाकथनं नामैकोनशततमोऽध्यायः।

# शततमोऽध्यायः

## द्वारप्रतिष्ठाकथनम ।

ईश्वर उवाच ।

द्वाराश्रितप्रतिष्ठाया वक्ष्यामि विधिमप्यथ ।
द्वाराङ्गानि कषायाद्यैः संस्कृत्य शयने न्यसेत् ॥ १ ॥

मूलमध्याग्रभागेषु त्रयमात्मादिसेश्वरम् । विन्यस्य सन्निवेश्याथ हुत्वा जप्त्वात्ररूपतः
द्वारादथो यजेद्व वास्तुं तत्रैवानन्तमन्त्रतः । रत्नादिपञ्चकं न्यस्य शान्तिहोमं विधाय च
यवसिद्धार्थकाक्रान्ता ऋद्धिवृद्धिमहातिलाः । गोमृत्सर्षपरागेन्द्रमोहनोलक्ष्मणामृता ॥
रोचना रुग् वचो दूर्वा प्रसादाधश्च पोटलीम् । प्रकृत्योदुम्बरे बध्वा रक्षार्थं प्रणवेन तु
द्वारमुत्तरतः किञ्चिदाश्रितं सन्निवेशयेत् । आत्मतत्त्वमधोन्यस्य विद्यातत्त्वञ्चशाखयोः
शिवमाकाशदेशे च व्यापकं सर्वमङ्गले । ततो महेशनाथं च विन्यसेन्मूलमन्त्रतः । ७ ॥

द्वाराश्रितांश्च तल्पादीन् कृतयुक्तैः स्वनामभिः ।
जुहुयाच्छतमर्द्धं वा द्विगुणं शक्तितोऽथवा ॥ ८ ॥
न्यूनादिदोषमोषार्थं हेतितो जुहुयाच्छतम् ।
दिग्बलिं पूर्ववद्धुत्वा प्रदद्याद्दक्षिणादिकम् ॥ ६ ॥

इत्यादि महापुराणे आग्नेये द्वारप्रतिष्ठाकथनं नाम शततमोऽध्यायः ।

---

# एकाधिकशततमोऽध्यायः

## प्रासादप्रतिष्ठा विधानम् ।

ईश्वर उवाच ।

प्रासादस्थापनं वक्ष्ये तच्चैतन्यं स्वयोगतः । शुकनाशासमाप्तौ तु पूर्ववेद्याश्च मध्यतः ॥

आधारशक्तितः पद्मे विन्यस्ते प्रणवेन च। स्वर्णाद्येकतमोद्भुतं पञ्चगव्येन संयुतम्॥
मधुक्षीरयुतं कुम्भं न्यस्तरत्नादिपञ्चकम्। स्रग्वस्त्रं गन्धलिप्तञ्च गन्धवत्पुष्पभूषितम्॥
चूतादिपल्लवानाञ्च कृती कृत्यञ्च विन्यसेत्। पूरकेण समादाय सकलीकृतविग्रहः॥४॥
सर्वात्मभिन्नमात्मानं स्वाणुना स्वान्तमारुतः। आज्ञया बोधयेच्छम्भो रेचकेनततोगुरुः

द्वादशान्तात् समादाय स्फुरद्वह्निकणोपमम्।
निक्षिपेत् कुम्भगर्भे च न्यस्ततन्त्रातिवाहिकम्॥ ६॥
विग्रहं तद्गुणानाञ्च बोधकञ्च कलादिकम्।
क्षान्तं वागीश्वरं तत् तु व्रातं तत्र निवेशयेत्॥ ७॥

दश नाड़ीर्दश प्राणानिन्द्रियाणि त्रयोदश। तदधिपांश्च संयोज्य प्रणवाद्यैः स्वनामभिः

स्वकार्य्ये कारणत्वेन मायाकाशनियामिकाः।
विद्येशान् प्रेरकान् शम्भुं व्यापिनञ्च सुसम्वरैः॥ ९॥

अङ्गानि च विनिक्षिप्य निरुन्ध्याद्रोधमुद्रया। सुवर्णाद्युद्भवं यद्वा पुरुषं पुरुषानुगम्॥
पञ्चगव्यकषायाद्यैः पूर्ववत् संस्कृतं ततः। शय्यायां कुम्भमारोप्यध्यात्वारुद्रमुमापतिम्

तस्मिंश्च शिवमन्त्रेण व्यापकत्वेन विन्यसेत्।
सन्निधानाय होमञ्च प्रोक्षणं स्पर्शनं जपम्॥ १२॥

सान्निध्यावोधनं सर्वम्भागत्रयविभागतः। विधायैवं प्रकृत्यन्ते कुम्भे तं विनिवेशयेत्

इत्यादि महापुराणे आग्नेये प्रासादप्रतिष्ठाकथनं नामैकशततमोऽध्यायः।

———

## द्व्यधिकशततमोऽध्यायः

### ध्वजारोपणकथनम्।

ईश्वर उवाच।

चूलके ध्वजदण्डे च ध्वजे देवकुले तथा। प्रतिष्ठा च यथोद्दिष्टा तथा स्कन्द ! वदामिते

तड़ागार्द्धप्रवेशाद्वा यद्वा सर्वार्द्धवेशनात् । ऐष्टके दारुजः शूलः शैलजे धाम्नि शैलजः ॥

वैष्णवादौ च चक्राढ्यः कुम्भः स्यान्मूर्त्तिमानतः ।

स च त्रिशूलयुक्तस्तु अग्रचूलाभिधो मतः ॥ ३ ॥

ईशशूलः समाख्यातो मूर्ध्नि लिङ्गसमन्वितः । बीजपूरकयुक्तो वाशिवशास्त्रेषुतद्विधः

चिन्हो ध्वजश्च जङ्घातो यथा जङ्घार्द्धतो भवेत् ।

भवेद्वा दण्डमानस्तु यदि वा तद्यदृच्छया ॥ ५ ॥

महाध्वजः समाख्यातो यस्तु पीठस्य वेष्टकः । शक्रैर्ग्रहै रसैर्वापि हस्तैर्दण्डस्तुसम्मितः

उत्तमादिक्रमेणैव विज्ञेयः शूरिभिस्ततः । वंशजः शालजादिर्वा स दण्डः सर्वकामदः ॥

अयमारोप्यमाणस्तु भङ्गमायाति वै यदि ।

राज्ञोऽनिष्टं विजानीयाद् यजमानस्य वा तथा ॥ ८ ॥

मन्त्रेण बहुरूपेण पूर्ववच्छान्तिमाचरेत् । द्वारपालादिपूजाञ्च मन्त्राणां तर्पणं तथा ॥

विधाय चूलकं दण्डं स्नापयेदस्त्रमन्त्रतः । अनेनैव तु मन्त्रेण ध्वजं संप्रोक्ष्य देशिकः॥

मृदु कषायादिभिः स्नानं प्रासादं कारयेत् ततः ।

विलिप्य रसमाच्छाद्य शय्यायां न्यस्य पूर्ववत् ॥ ११ ॥

चूड़के लिङ्गवण(न्न्या)न्यासो न ज्ञानं न च क्रिया ।

विशेषार्था चतुर्थी च न च कुण्डस्य कल्पना ॥ १२ ॥

दण्डे तथार्थतत्त्वञ्च विद्यातत्त्वं द्वितीयकम् ।

सद्योजातानि वक्राणि शिवतत्त्वं पुनर्ध्वजे ॥ १३ ॥

निष्कलञ्च शिवं तत्र न्यस्ताङ्गानि प्रपूजयेत् ।

चूड़के च ततो मन्त्रो सान्निध्ये सहिताणुभिः ॥ १४ ॥

होमयेत् प्रतिभागञ्चध्वजे तैस्तु फड़न्तकैः । अन्यथापिकृतं यच्च ध्वजसंस्करणंक्वचित्

अस्त्रयागविधावेवं तत् सर्वमुपदर्शितम् । प्रासादेकारिते स्थाने स्रग्वस्त्रादिविभूषिते

जङ्घा वेदी तदूर्ध्वे तु त्रितत्त्वादि निवेश्य च ।

होमादिकं विधायाथ शिवं सम्पूज्य पूर्ववत् ॥ १७ ॥

सर्वतत्त्वमयं ध्यात्वा शिवञ्च व्यापकं न्यसेत् ।
अनन्तं कालरुद्रञ्च विभाव्य च पदाम्बुजे ॥ १८ ॥
कुष्माण्डहाटकौ पीठे पातालनरकैः सह । भुवनैर्लोकपालैश्च शतरुद्रादिभिर्वृतम् ॥
ब्रह्माण्डकमिदं ध्यात्वा जङ्घायाञ्च विभावयेत् ।
वारितेजोऽनिलव्योमपञ्चाष्टकसमन्वितम् ॥ २० ॥
सर्वावरणसञ्ज्ञञ्च बुद्ध्योन्यन्तकान्वितम् । योगाष्टकसमायुक्तं नाशावधि गुणत्रयम् ॥
पटस्थं पुरुषं सिंहं वामञ्च परिभावयेत् । मञ्जरीवेदिकायाञ्च विद्यादिकचतुष्टयम् ॥२२॥
कण्ठे मायां सरुद्राञ्च विद्याश्चामलसारके ।
कलसे चेश्वरं विन्दुं विद्येश्वरसमन्वितम् ॥ २३ ॥
जटाजूटञ्च तं विद्याच्छूलं चन्द्रार्द्धरूपकम् । शक्तित्रयञ्च तत्रैव दण्डे नादं विभाव्य च ॥
ध्वजे च कुण्डलीं शक्तिमिति धाम्नि विभावयेत् ।
जगत्यां वाथ सन्धाय लिङ्गं पिण्डिकयाथवा ॥ २५ ॥
समुत्थाप्य सुमन्त्रैश्च विन्यस्ते शक्तिपङ्कजे । न्यस्तरत्नादिके तत्र स्वाधारे विनिवेशयेत्
यजमानो ध्वजे लग्ने बन्धुमित्रादिभिः सह ।
धाम प्रदक्षिणीकृत्य लभते फलमीहितम् ॥ २७ ॥
गुरुः पाशुपतं ध्यायन् स्थिरमन्त्राधिपैर्युतम् ।
अधिपान् शस्त्रयुक्तांश्च रक्षणाय निबोधयेत् ॥ २८ ॥
न्यूनादिदोषशान्त्यर्थं हुत्वा दत्त्वा च दिग्बलिम् ।
गुरवे दक्षिणां दद्याद् यजमानो दिवं व्रजेत् ॥ २९ ॥
प्रतिमालिङ्गवेदीनां यावन्तः परमाणवः । तावद्युगसहस्राणि कर्त्तुर्भोगभुजः फलम् ॥

इत्यादि महापुराणे आग्नेये ध्वजारोपणकथनं नाम द्व्यधिकशततमोऽध्यायः ।

———

# त्र्यधिकशततमोऽध्यायः

## जीर्णोद्धारवर्णनम् ।

ईश्वर उवाच ।

जीर्णादीनाञ्च लिङ्गानामुद्धारं विधिना वदे । लक्ष्मोज्झितञ्च भग्नञ्च स्थूलं वज्रहतंतथा
सम्पुटं स्फुटितं व्यङ्गं लिङ्गमित्येवमादिकम् ।
इत्यादिदुष्टलिङ्गानां योज्या पिण्डी तथा नृपः ॥ २ ॥
चालितञ्चलितं लिङ्गमत्यर्थं विषमस्थितम् । दिङ्मूढं पातितं लिङ्गं मध्यस्थं पतितं तथा
एवंविधञ्च संस्थाप्य निर्व्रणञ्च भवेद् यदि । नद्यादिकप्रवाहेन तदपाक्रियते यदि ॥
ततोऽन्यत्रापि संस्थाप्य विधिद्दृष्टेन कर्म्मणा ।
सुस्थितं दुस्थितं वापि शिवलिङ्गं न चालयेत् ॥ ५ ॥
शतेनस्थापनं कुर्य्यात्सहस्रेण तु चालनम् । पूजादिभिश्चसंयुक्तं जीर्णाद्यमपिसुस्थितम्
याम्ये मण्डपमीशे वा प्रत्यग्द्वारैकतोरणम् ।
विधाय द्वारपूजादि स्थण्डिले मन्त्रपूजनम् ॥ ७ ॥
मन्त्रान् सन्तर्प्य सम्पूज्य वास्तुदेवांस्तु पूर्ववत् ।
दिग्बलिं च बहिर्दत्त्वा समाचम्य स्वयं गुरुः ॥ ८ ॥
ब्राह्मणान् भोजयित्वा तु शम्भुं विज्ञापयेत् ततः ।
दुष्टलिङ्गमिदं शम्भोः शान्तिरुद्धरणस्य चेत् ॥ ६ ॥
रुचिस्तवादिविधिना अधितिष्ठस्व मां शिव ! । एवंविज्ञाप्यदेवेशंशान्तिहोमंसमाचरेत्
मध्वाज्यक्षीरदूर्वाभिर्मूलेनाष्टाधिकं शतम् ।
ततो लिङ्गं च संस्थाप्य पूजयेत् स्थण्डिले तथा ॥ ११ ॥
ओं व्यापकेश्वरायेति नात्यन्तं शिववादिना ।
ओं व्यापकं हृदयेश्वरायनमः ।

ओं व्यापकेश्वराय शिरसे नमः इत्याद्यङ्गमन्त्राः ।
ततस्तत्राश्रितं तत्त्वं श्रावयेदस्त्रमन्त्रतः ॥ १२ ॥
सत्त्वः कोपीह यः कोपि लिङ्गमाश्रित्य तिष्ठति ।
लिङ्गं त्यक्त्वा शिवाज्ञाभिर्यत्रेष्टं तत्र गच्छतु ॥ १३ ॥
विद्याविद्येश्वरैर्युक्तः स भवोऽत्र भविष्यति । सहस्रं प्रतिभागे च ततः पाशुपताणुना ॥
हुत्वा शान्त्यम्बुना प्रोक्ष्य स्पृष्ट्वा कुशैर्जपेत्. ततः ।
दत्त्वार्घं च विलोमेन तत्त्वतत्त्वाधिपांस्तथा ॥ १५ ॥
अष्टमूर्त्तीश्वरान् लिङ्गपिण्डिकासंस्थितान् गुरुः ।
विसृज्य स्वर्णपाशेन वृषस्कन्धस्थया तथा ॥ १६ ॥
रज्वा बध्वा तथा नीत्वा शिवमन्तं गृणन् जनैः ।
तज्जले निक्षिपेत्सत्री पुष्ट्यर्थं जुहुयाच्छतम् ॥ १७ ॥
तृप्तये दिक्पतीनाञ्च वास्तुशुद्धौ शतं शतम् । रक्षांविधाय तद्धाम्नि महापाशुपता ततः
लिङ्गमन्यत् ततस्तत्रविधिवत् स्थापयेद्गुरुः । असुरैर्मुनिभिर्गोत्रस्तन्त्रविद्भिःप्रतिष्ठितम्
जीर्णं वाप्यथवा भग्नं विधिनापिनचालयेत् । एषएव विधिःकार्यो जीर्णधामसमृद्धृतौ
खड्गे मन्त्रगणं न्यस्य कारयेत् मन्दिरान्तरम् ।
सङ्कोचे मरणं प्रोक्तं विस्तारे तु धनक्षयः ॥ २१ ॥
तद्द्रव्यं श्रेष्ठद्रव्यं वा सुकार्यं तत्प्रमाणकम् ।
इत्यादि महापुराणे आग्नेये जीर्णोद्धारकथनं नाम त्र्यधिकशततमोऽध्यायः ।

---

## चतुरधिकशततमोऽध्यायः

### प्रासादलक्षणम् ।

ईश्वर उवाच ।

वक्ष्ये प्रासादसामान्यलक्षणं ते शिखिध्वज । चतुर्भागीकृते क्षेत्रे भित्तेर्भागेनविस्तरात्

अष्टभागेन गर्भः स्यात् पिण्डिका पादविस्तरात् ।
पञ्चभागीकृते क्षेत्रेऽन्तर्भागे तु पिण्डिका ॥ २ ॥
सुषिरं भागविस्तीर्णं भित्तयो भागविस्तरात् । भागौ द्वौ मध्यमेगर्भेज्येष्ठभागद्वयेनतु
त्रिभिस्तु कलसोगर्भः शेषो भित्तिरिति क्वचित् ।
षोढा भक्तेऽथवा क्षेत्रे भित्तिर्भागैकविस्तरात् ॥ ४ ॥
गर्भो भागेन विस्तीर्णो भागद्वयेन पिण्डिका ।
विस्ताराद् द्विगुणो वापि सपादद्विगुणोऽपि वा ॥ ५ ॥
अर्द्धार्द्धद्विगुणो वापि त्रिगुणः क्वचिदुच्छ्रयः । जगती विस्तरार्द्धेन त्रिभागेन क्वचिद्भवेत्
नेमिः पादोनविस्तीर्णा प्रासादस्य समन्ततः ।
परिधिस्त्र्यंशको मध्ये रथकांस्तत्र कारयेत् ॥ ७ ॥
चामुण्डं भैरवं तेषु नाट्येशं च निवेशयेत् । प्रासादार्द्धेन देवानामष्टौ वग्चतुरोऽपिवा ॥
प्रदक्षिणां वहिः कुर्य्यात् प्रासादादिषु वा न वा ।
आदित्याः पूर्वतः स्थाप्याः स्कन्दोऽग्निर्वायुगोचरे ॥ ६ ॥
एवं यमादयो न्यस्याः स्वस्यां स्वस्यां दिशि स्थिताः ।
चतुर्द्धा शिखरं कृत्वा शुकनासा द्विभागिका ॥ १० ॥
तृतीये वेदिका त्वग्नेः सकण्ठोमलसारकः । वैराजःपुष्पकश्चान्यःकैलासोमणिकस्तथा
त्रिविष्टपञ्च पञ्चैव मेरुमूर्द्धनि संस्थिताः । चतुरस्रस्तु तत्राद्यो द्वितीयोऽपि तदायतः ॥
वृत्तो वृत्तायतश्चान्यो ह्यष्टास्रश्चापि पञ्चमः । एकैको नवधा भेदैश्चत्वारिंशच्च पञ्च च
प्रासादः प्रथमो मेरुर्द्वितीयो मन्दरस्तथा । विमानञ्च तथा भद्रः सर्वतोभद्र एव च ॥
चरुको नन्दिको नन्दिर्वर्द्धमानस्तथापरः । श्रीवत्सश्चेति वैराजान्वयाये च समुत्थिताः
वलभी गृहराजश्च शालागृहञ्च मन्दिरम् । विशालश्च समो ब्रह्म मन्दिरं भुवनं तथा ॥
प्रभवः शिविका वेश्म नवैते पुष्पकोद्भवाः । बलयो दुन्दुभिः पद्मो महापद्मक एव च ॥
वर्द्धनी वान्य उष्णीषः शङ्खश्च कलसस्तथा । खवृक्षश्च तथाप्येतेवृत्ताः कैलाससम्भवाः
गजोऽथ वृषभो हंसो गरुत्मान्नृक्षनायकः । भूषणो भूधरश्चान्ये श्रीजयः पृथिवीधरः ॥

वृत्तायतात् समुद्भूता नवैते मणिकाह्वयात् ।
वज्रं चक्रं तथा चान्यत् स्वस्तिकं वज्रस्वतिकम् ॥ २० ॥
चित्रं स्वस्तिकखड्गञ्च गदा श्रीकण्ठ एव च । विजयो नामतश्चैते त्रिविष्टपसमुद्भवाः ॥
नगराणामिमाः सञ्ज्ञा लाटादीनामिमास्तथा ।
ग्रीवार्द्धेनोन्नतञ्चूलं पृथुलञ्च विभागतः ॥ २२ ॥
दशधा वेदिकां कृत्वा पञ्चभिः स्कन्धविस्तरः ।
त्रिभिः कण्ठं तु कर्तव्यं चतुर्भिस्तु प्रचण्डकम् ॥ २३ ॥
दिक्षुद्वाराणि कार्याणि न विदिक्षु कदाचन ।
पिण्डिका कोणविस्तीर्णा मध्यमान्ता ह्युदाहृता ॥ २४ ॥
क्वचित् पञ्चमभागेन महताङ्गर्भपादतः । उच्छ्राया द्विगुणास्तेषामन्यथा वा निगद्यते ॥
षष्ट्याधिकात् समारभ्य अङ्गुलानां शतादिह । उत्तमान्यपिचत्वारिद्वाराणिदशहानितः
त्रीण्येव मध्यमानि स्युस्त्रीण्येव कन्यसान्यतः ।
उच्छ्रायार्द्धेन विस्तारो ह्युच्छ्रायोऽभ्यधिकस्त्रिधा ॥ २७ ॥
चतुर्भिरष्टभिर्वापि दशभिरङ्गुलैस्ततः । उच्छ्रायात् पादविस्तीर्णा विशाखास्तदुदुम्बरे ॥
विस्तरार्द्धेन बाहुल्यं सर्वेषामेव कीर्त्तितम् ।
द्विपञ्चसप्तनवभिः शाखाभिर्द्वारमिष्टदम् ॥ २९ ॥
अधःशाखाचतुर्थांशे प्रतीहारौ निवेशयेत् । मिथुनैः पादवर्णाभिः शाखाशेषं विभूषयेत्
स्तम्भविद्धे भृत्यता स्यात् वृक्षविद्धे त्वभूतिता ।
कूपविद्धे भयं द्वारे क्षेत्रविद्धे धनक्षयः ॥ ३१ ॥
प्रासादगृहशालादिमार्गविद्धेषु बन्धनम् । सभाविद्धेन दारिद्र्यं वर्णविद्धे निराकृतिः ॥
उलूखलेन दारिद्र्यं शिलाविद्धेन शत्रुता । छायाविद्धेन दारिद्र्यं वेधदोषो न जायते ॥
छेदादुत्पाटनाद् वापि तथा प्राकारलक्षणात् ।
सीमाया द्विगुणत्यागाद् वेधदोषो न जायते ॥ ३४ ॥
इत्यादि महापुराणे आग्नेये प्रासादलक्षणकथनं नाम चतुरधिकशततमोऽध्यायः ।

# पञ्चाधिकशततमोऽध्यायः

## गृहादिवास्तुकथनम् ।

ईश्वर उवाच ।

नगरग्रामदुर्गाद्या गृहप्रासादवृद्धये । एकाशीतिपदैर्वास्तुं पूजयेत् सिद्धये ध्रुवम् ॥ १ ॥

प्रागास्या दशधा नाड्यस्तासां नामानि च ब्रुवे ।

शान्ता यशोवती कान्ता विशाला प्राणवाहिनी ॥ २ ॥

सती वसुमती नन्दा सुभद्राऽथ मनोरमा । उत्तरा द्वादशान्याश्च एकाशीत्यङ्घ्रिकारिका

हरिणी सुप्रभा लक्ष्मी विभूतिविमला प्रिया ।

जया ज्वाला विशोका च स्मृतास्तत्र च पादतः ॥ ४ ॥

ईशाद्याष्टाष्टकं दिक्षु यजेदीशं धनञ्जयम् । शक्रमर्कं तथा सत्यं भृशं व्योम च पूर्वतः ॥

हव्यवाहञ्च पूषानं वितथं भौममेव च । कृतान्तमथ गन्धर्वं भृङ्गं मृगञ्च दक्षिणे ॥ ६ ॥

पितरं द्वारपालञ्च सुग्रीवं पुष्पदन्तकम् । वरुणं दैत्यशेषौ च यक्ष्माणं पश्चिमे सदा ॥

रोगाहिमुख्यो भल्लाटः सौभाग्यमदितिर्दितिः ।

नवान्तः पदगो ब्रह्मा पूज्योऽर्द्धे च षडङ्घ्रिगाः ॥ ८ ॥

ब्रह्मेशान्तरकोष्ठस्थमायाख्यान्तु पदद्वये । तदधश्चापवत् साख्यं केन्द्रान्तरेषु षट्पदे ॥

मरीचिकाग्निमध्ये तु सविता द्विपदस्थितः ।

सावित्री तदधो द्व्यंशे विवस्वान् षट्पदे त्वधः ॥ १० ॥

पितृब्रह्मान्तरे विष्णुमिन्दुमिन्द्रं त्वधो जयम् । वरुणब्रह्मणोर्मध्ये मित्राख्यंषट्पदेयजेत्

रोगब्रह्मान्तरे नित्यं द्विपञ्च रुद्रदासकम् । तदधो द्व्यङ्घ्रिगं यक्ष्म षट्सौम्येषुधराधरम्

चरकीं स्कन्दविकटं विदारीं पूतनां क्रमात् ।

जम्भं पापं पिलिपिच्छं यजेदीशादिबाह्यतः ॥ १२ ॥

एकाशीतिपदं वेश्म मण्डपश्च शताङ्घ्रिकः । पूर्ववद्देवताः पूज्या ब्रह्मा तु षोड़शांशके

मरीचिश्च विवस्वांश्च मित्रं पृथ्वीधरस्तथा । दशकोष्ठस्थिता दिक्षुत्वन्येवेशादिकोणगाः

दैत्यमाता तथेशाग्नी मृगाख्यौ पितरौ तथा ।
पापयक्ष्मानिलौ देवाः सर्वे सार्द्धांशकेस्थिताः ॥ १६ ॥
यत्पाद्योकः प्रवक्ष्यामि सङ्क्षेपेण क्रमाद् गुह ।
सद्विंशत्करैर्दैर्ध्यादष्टाविंशति विस्तरात् ॥ १७ ॥
शिशिराश्रयः शिवाख्यश्च रुद्रहीनः सदोभयोः ।
रुद्रद्विगुणिता नाहाः पृथुष्णोभिर्विना त्रिभिः ॥ १८ ॥
स्याद् ग्रहद्विगुणं दैर्घ्यात् तिथिभिश्चैव विस्तरात् ।
सावित्रः सालयः कुड्यास्तथा त्रिंशांशतः पृथक् ॥ १९ ॥

कुड्यपृथुपजङ्घोच्चात् कुड्यान्तु त्रिगुणोच्छ्रयम् । कुड्यसूत्रसमा पृथिवीवीथीभेदादनेकधा
भद्रेतुल्यश्च वीथीभिर्द्वारवीथीं विनाग्रतः । श्रीजयं पृष्ठतो हीनं भद्रोऽयं पार्श्वयोर्विना ॥
गर्भपृथुसमा वीथी तदर्द्धार्द्धेन वा क्वचित् । वीथ्यर्द्धेनौपवीथ्याद्यमेकद्वित्रिपुरान्वितम्
सामान्यानथ गृहं वक्ष्ये सर्वेषां सर्वकामदम् । एकद्वित्रिचतुःशालमष्टशालं यथाक्रमात्

एकं याम्ये च सौमास्यं द्वे चेत् पश्चात् पुरोमुखम् ।
चतुःशालन्तु साम्मुख्यात् तयोरिन्द्रेन्द्रमुक्तयोः ॥ २४ ॥
शिवास्यमम्बुपास्यैष इन्द्रास्येयमसूर्य्यकम् ।
प्राक्सौम्यस्थे च दण्डाख्यं प्राग्याम्येवातसंज्ञकम् ॥ २५ ॥
आप्येन्दौ गृहवल्याख्यं त्रिशूलं तद्विनर्द्धिकृत् ।
पूर्वशालाविहीनं स्यात् सुक्षेत्रं वृद्धिदायकम् ॥ २६ ॥
याम्ये हीने भवेच्छूली त्रिशालं वृद्धिकृत् परम् ।
यक्षघ्नं जलहीनौकः सुतघ्नं बहुशत्रुकृत् ॥ २७ ॥
इन्द्रादिक्रमतो वच्मि ध्वजाद्यष्टौ गृहाण्यहम् ।
प्राक्शालानुलगावासमग्नौ तस्य महानसम् ॥ २८ ॥

याम्ये रसक्रिया शय्या धनुःशस्त्राणि रक्षसि । धनभुक्त्यम्बुपेशाख्ये सम्यगन्धौचमारुते

सौम्ये धनपशू कुर्य्यादीशे दीक्षावपालयम् ।
स्वामिहस्तमितं वेश्म विस्तारायामपिण्डिकम् ॥ ३० ॥

त्रिगुणं हस्तसंयुक्तं कृत्वाष्टांशैर्हृतं तथा । तच्छेषोऽयंस्थितस्तेनवायसान्तंध्वजादिकम्
त्रयः पक्षाग्निवेदेषु रसर्षिवसुतो भवेत् । सर्वनाशकरं वेश्म मध्ये चान्ते च संस्थितम्
तस्माच्च नवमे भागे शुभकृन्निलयो मतः । तन्मध्ये मण्डपः शस्तः समो वाद्विगुणायतः
प्रत्यगाप्ये चेन्द्रयमे हट्ट एव गृहावली । एकैकभवनाख्यानि दिक्ष्वष्टाष्टकसङ्ख्यया ॥

ईशाद्यदितिकान्तानि फलान्येषां यथाक्रमम् ।
भयं नारी चलत्वं च जयो वृद्धिः प्रतापकः ॥ ३५ ॥
धर्मः कलिश्च नैःस्व्यश्च प्राग्द्वारेष्वष्टसु ध्रुवम् ।
दाहोऽसुखं सुहृन्नाशो धननाशो मृतिर्धनम् ॥ ३६ ॥
शिल्पित्वं तनयः स्याच्च याम्यद्वारफलाष्टकम् ।
आयुःप्राव्राज्यशस्यानि धनशान्त्यर्थसङ्क्षया ॥ ३७ ॥

शोषं भोगं चापत्यञ्च जलद्वारफलानि च । रोगो मदार्त्तिमुख्यत्वं चार्थायुःकृशतामतिः
मानश्च द्वारतः पूर्वे उत्तरस्यां दिशि क्रमात् ।

इत्यादि महापुराणे आग्नेये गृहादिवास्तुकथनं नाम पञ्चाधिकशततमोऽध्यायः ।

———

## षड्धिकशततमोऽध्यायः

### नगरादिवास्तुकथनम् ।

ईश्वर उवाच ।

नगरादिकवास्तुञ्च वक्ष्ये राज्यादिवृद्धये ।
योजनं योजनार्द्धं वा तदर्थं स्थानमाश्रयेत् ॥ १ ॥

अभ्यर्च्य वास्तुनगरं प्राकाराद्यन्तु कारयेत् । ईशादित्रिंशत्पदके पूर्वद्वारं च सूर्यके ॥

गन्धर्वाभ्यां दक्षिणे स्याद् वारुण्ये पश्चिमे तथा।
सौम्यद्वारं सौम्यपदे कार्या हट्टास्तु विस्तराः ॥ ३ ॥
येनेभादि सुखं गच्छेत् कुर्याद् द्वारं तु षट्करम्।
छिन्नकर्णं विभिन्नञ्च चन्द्रार्द्धाभं पुरं न हि ॥ ४ ॥
वज्रसूचीमुखं नेष्टं सकृद्द्वित्रिसमागमम्।
चापाभं वज्रनागाभं पुरारम्भे हि शान्तिकृत् ॥ ५ ॥
प्राच्यर्य विष्णुहरार्कादान् नत्वा दद्याद् बलिं बली।
आग्नेये स्वर्णकर्मारान् पुरस्य विनिवेशयेत् ॥ ६ ॥

दक्षिणे नृत्यवृत्तीनां वेश्यास्त्रीणां गृहाणि च। नटानां चक्रिकादीनां कैवर्त्तादेश्चनैर्ऋते
रथानामायुधानाञ्च कृपाणानाञ्च वारुणे। शौण्डिकाः कर्माधिकृता वायव्येपरिकर्मिणः
ब्राह्मणा यतयः सिद्धाः पुण्यवन्तश्च चोत्तरे। फलाद्यादिविक्रयिण ईशानेचवणिग्जनाः

पूर्वतश्च बलाध्यक्षा आग्नेये विविधं बलम्।
स्त्रीणामादेशिनो दक्षे काण्डारान् नैर्ऋते न्यसेत् ॥ १० ॥
पश्चिमे च महामात्यान् कोषपालांश्च कारुकान्।
उत्तरे दण्डनाथांश्च नायकद्विजसङ्कुलान् ॥ ११ ॥
पूर्वतः क्षत्रियान् दक्षे वैश्यान् शूद्रांश्च पश्चिमे।
दिक्षु वैद्यान् वाजिनश्च बलानि च चतुर्दिशम् ॥ १२ ॥

पूर्वेण चरलिङ्ग्यादीन् श्मशानादीनि दक्षिणे। पश्चिमे गोधनाद्यञ्च कृषिकर्तृंस्तथोत्तरे

न्यसेत् म्लेच्छाश्च कोणेषु ग्रामादिषु तथा स्थितिम्।
श्रियं वैश्रवणं द्वादि पूर्व्वे तौ पश्यतां श्रियम् ॥ १४ ॥

देवादीनां पश्चिमतः पूर्वास्यानि गृहाणि हि। पूर्वतःपश्चिमास्यानिदक्षिणेचोत्तराननान्
नाकेशविष्ण्वादिधामानि रक्षार्थे नगरस्य च। निर्दैवतन्तु नगरग्रामदुर्गगृहादिकम् ॥ १६ ॥
भुज्यते तत् पिशाचाद्यैः रोगाद्यैः परिभूयते। नगरादि सदैवं हि जयदं भुक्तिमुक्तिदम्

पूर्वायां श्रीगृहं प्रोक्तमाग्नेय्यां वै महानसम्।

शयनं दक्षिणस्यान्तु नैर्ऋत्यामायुधाश्रयम् ॥ १८ ॥
भोजनं पश्चिमायान्तु वायव्यां धान्यसंग्रहः । उत्तरे द्रव्यसंस्थानमैशान्यां देवतागृहम्
चतुःशालं त्रिशालं वा द्विशालं चैकशालकम् । चतुःशालगृहाणान्तुशालालिन्दकभेदतः
शतद्वयन्तु जायन्ते पञ्चाशत् पञ्च तेष्वपि । त्रिशालानि तु चत्वारिद्विशालानितुपञ्चधा
एकशालानि चत्वारि एकालिन्दानि वच्मि च ।
अष्टाविंशदलिन्दानि गृहाणि नगराणि च ॥ २२ ॥
चतुर्भिः सप्तभिश्चैव पञ्चपञ्चाशदेव तु । षडलिन्दानि विंशैव अष्टाभिर्विंश एव हि ॥
अष्टालिन्दं भवेदेवं नगरादौ गृहाणि हि ।
इत्यादि महापुराणे आग्नेये नगरादिवास्तुकथनं नाम षडधिकशततमोऽध्यायः ।

---

# सप्ताधिकशततमोऽध्यायः

## स्वायम्भुवसर्गवर्णनम् ।

अग्निरुवाच ।

वक्ष्ये भुवनकोषञ्च पृथ्वीद्वीपादिलक्षणम् । अग्निश्चाग्निबाहुश्च वपुष्मान् द्युतिमांस्तथा
मेधा मेधातिथिर्भव्यः सवनः पुत्र एव च ।
ज्योतिष्मान् दशमस्तेषां सत्यनामा सुतोऽभवत् ॥ २ ॥
प्रियव्रतसुताः ख्याताः सप्तद्वीपान् ददौ पिता ।
जम्बुद्वीपमथाग्नीध्रे प्लक्षं मेधातिथेर्ददौ ॥ ३ ॥
वपुष्मते शाल्मलञ्च ज्योतिष्मते कुशाह्वयम् । क्रौञ्चद्वीपं द्युतिमते शाकं भव्यायदत्तवान्
पुष्करं सवनायादादग्नीध्रेऽदात् सुते शतम् । जम्बुद्वीपं पिता लक्षंनाभेर्दत्तं हिमाह्वयम्
हेमकूटं किम्पुरुषे हरिवर्षाय नैषधम् । इलावृते मेरुमध्यं रम्ये नीलाचलाश्रितम् ॥ ६ ॥
हिरण्वते श्वेतवर्षं कुरूंस्तु कुरवे ददौ । भद्राश्वाय च भद्राश्वं केतुमालाय पश्चिमम् ॥

मेरोः प्रियव्रतः पुत्रानभिषिच्य ययौ वनम् । शालग्रामे तपस्तप्त्वाययौ विष्णोर्लयंनृपः

यानि किम्पुरुषाद्यानि ह्याष्टवर्षाणि सत्तम ! ।

तेषां स्वाभाविकी सिद्धिः सुखप्राया ह्ययत्नतः ॥ ९ ॥

जरामृत्युभयं नास्ति धर्म्माधर्म्मौ युगादिकम् ।

नाधमं मध्यमन्तुल्या हिमाद्देशात्तु नाभितः ॥ १० ॥

ऋषभो मेरुदेव्याञ्च ऋषभाद् भरतोऽभवत् । ऋषभो दत्तश्रीः पुत्रे शालग्रामे हरिङ्गतः ॥

भरताद् भारतं वर्षं भरतात् सुमतिस्त्वभूत् । भरतो दत्तलक्ष्मीकः शालग्रामे हरिं गतः

स योगी योगप्रस्तावे वक्ष्ये तच्चरितं पुनः । सुमतेस्तेजसस्तस्मादिन्द्रद्युम्नोव्यजायत

परमेष्ठी ततस्तस्मात् प्रतीहारस्तदन्वयः । प्रतीहारात् प्रतीहर्त्ता प्रतिहर्त्तुर्भुवस्ततः ॥

उद्गीतोऽथ च प्रस्तारो विभुः प्रस्तारतः सुतः ।

पृथश्चैव ततो नक्तो नक्तस्यापि गयः सुतः ॥ १५ ॥

नरो गयस्य तनयः तत्पुत्रोऽभूद्विराट् ततः । तस्य पुत्रौ महावीर्योधीमांस्तस्मादजायत

महान्तस्तत्सुतश्चभून्मनस्यस्तस्य चात्मजः ।

त्वष्टा त्वष्टुश्च विरजा रजस्तस्याप्यभूत् सुतः ॥ १७ ॥

सत्यजिद्रजसस्तस्य जज्ञे पुत्रशतं मुने । विश्वज्योतिः प्रधानास्ते भारतन्तैर्विवर्द्धितम्

कृतत्रेतादिसर्गेण सर्गः स्वायम्भुवः स्मृतः ।

इत्यादि महापुराणे आग्नेये स्वायम्भुवसर्गवर्णनं नाम सप्तधिकशततमोऽध्यायः ।

---

## अष्टाधिकशततमोऽध्यायः

### भुवनकोषवर्णनम् ।

अग्निरुवाच ।

जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो महान् ।

कुशः क्रौञ्चस्तथा शाकः पुष्करश्चेति सप्तमः ॥ १ ॥
एते द्वीपा समुद्रैस्तु सप्त सप्तभिरावृताः। लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ॥२॥
जम्बूद्वीपो द्वीपमध्ये तन्मध्ये मेरुरुच्छ्रितः। चतुरशीतिसाहस्रो भूयिष्ठः षोड़शाद्रूराट्
द्वात्रिंशन्मूर्दुर्ध्नि विस्तारात् षोड़शाधः सहस्रवान्।
भूयस्तस्यास्य शैलोऽसौ कर्णिकाकार संस्थितः ॥ ४ ॥
हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे। नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥
लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथापरे।
सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ॥ ६ ॥
भारतं प्रथमं वर्षन्ततः किम्पुरुषं स्मृतम्। हरिवर्षन्तथैवान्यन्मेरोर्दक्षिणतो द्विज ! ॥
रम्यकं चोत्तरे वर्षं तथैवान्यद्धिरण्मयम्। उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥
नवसाहस्रमेकैकमेतेषां मुनिसत्तम !। इलावृतश्च तन्मध्य सौवर्णो मेरुरुच्छ्रितः ॥९॥
मेरोश्चतुर्दिशन्तत्र नवसाहस्रविस्तृतम्। इलावृतं महाभाग! चत्वारश्चात्र पर्वताः ॥
विष्कम्भा रचिता मेरोर्योजनायुतविस्तृताः। पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः। कदम्बस्तेषु जम्बुश्च पिप्पलो वट एवच
एकादश शतायामाःपादपा गिरिकेतवः।
जम्बूद्वीपेति सञ्ज्ञा स्यात् फलं जम्बा गजोपमम् ॥ १३ ॥
जम्बूनदीरसेनास्यास्त्विदं जाम्बूनदं परम्।
सुपार्श्वः पूर्वतो मेरोः केतुमालस्तु पश्चिमे ॥ १४ ॥
वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनः। वैभ्राजं पश्चिमे सौम्ये नन्दनञ्च सरांस्यथ ॥
अरुणोदं महाभद्रं संशितोदं समानसम्। शिताभश्चक्रमुञ्जाद्याः पूर्वतः केशराचलाः ॥
दक्षिणेऽद्रेस्त्रिकूटाद्याः शिशिवासमुखा जले।
शङ्खकूटादयः सौम्ये मेरौ च ब्रह्मणः पुरी ॥ १७ ॥
चतुर्दशसहस्राणि योजनानाञ्च दिक्षु च। इन्द्रादिलोकपालानां समन्तात् ब्रह्मणः पुरः
विष्णुपादात् प्लावयित्वा चन्द्रं स्वर्गात् पतन्त्यपि।

पूर्वेण शीता भद्राश्वाच्छैलाच्छैलाद्गतार्णवम् ॥ १६ ॥
तथैवालकनन्दापि दक्षिणेनैव भारतम् । प्रयाति सागरं कृत्वा सप्तभेदाथ पश्चिमम् ॥
अब्धिश्च चक्षुः सौम्याब्धिं भद्रोत्तरकुरूनपि ।
आनीलनिषधायामौ माल्यवद्गन्धमादनौ ॥ २१ ॥
तयोर्म्मध्यगतो मेरुः कर्णिकाकारसंस्थितः ।
भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ॥ २२ ॥
पत्राणि लोकपद्मस्य मर्य्यादाशैलवाह्यतः । जठरो देवकूटश्च मर्य्यादापर्वतावुभौ ॥२३॥
तौ दक्षिणोत्तरायामावानीलनिषधायतौ । गन्धमादनकैलासौ पूर्ववच्चायतावुभौ ॥
अशीतियोजनायामावर्णवान्तर्व्यवस्थितौ । निषधः पारियात्रश्च मर्य्यादापर्वतावुभौ ॥
मेरोः पश्चिमदिग्भागे यथा पूर्वे तथा स्थितौ । त्रिशृङ्गो रुधिरश्चैव उत्तरौ वर्षपर्वतौ
पूर्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ । जठराद्याश्च मर्य्यादाशैला मेरोश्चतुर्दिशम् ॥
केशरादिषु या द्रोण्यस्तासु सन्ति पुराणि हि ।
लक्ष्मीविष्णवग्निसूर्य्यादिदेवानां मुनिसत्तम ! ॥ २८ ॥
भौमानां स्वर्गधर्म्माणां न पापास्तत्र यान्ति च ।
भद्राश्वेऽस्ति हयग्रीवो वराहः केतुमालके ॥ २६ ॥
भारते कूर्म्मरूपी च मत्स्यरूपः कुरुष्वपि । विश्वरूपेण सर्वत्र पूज्यते भगवान् हरिः ॥
किम्पुरुषाद्यष्टसु क्षुद्भीतिशोकादिकं न च ।
चतुर्विंशतिसाहस्रं प्रजा जीवन्त्यनामयाः ॥ ३१ ॥
कृतादिकल्पना नास्ति भौमान्यम्भांसिनाम्बुदाः । सर्वेष्वेतेषुवर्षेषु सप्त सप्त कुलाचलाः
नद्यश्च शतशस्तेभ्यस्तीर्थभूताः प्रजज्ञिरे । भारते यानि तीर्थानि तानि तीर्थानि वच्मि ते

इत्यादि महापुराणे आग्नेये भुवनकोषवर्णनं नामाष्टाधिकशततमोऽध्यायः ।

# नवाधिकशततमोऽध्यायः

## तीर्थमाहात्म्यम् ।

अग्निरुवाच ।

माहात्म्यंसर्वतीर्थानां वक्ष्ये यद्भक्तिमुक्तिदम् । यस्यहस्तौच पादौ च मनश्चैवसुसंयतम्
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते । प्रतिग्रहादुपावृत्तो लब्धाहारो जितेन्द्रियः ॥
निष्पापस्तीर्थयात्री तु सर्वयज्ञफलं लभेत् । अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च

अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ।
तीर्थाभिगमने तत् स्याद्यद्यज्ञेनाप्यते फलम् ॥ ४ ॥
पुष्करं परमं तीर्थं सान्निध्यं हि त्रिसन्ध्यकम् ।
दशकोटिसहस्राणि तीर्थानां विप्र पुष्करे ॥५ ॥
ब्रह्मा सह सुरैरास्ते मुनयः सर्वमिच्छवः ।
देवाः प्राप्ताः सिद्धिमत्र स्नाताः पितृसुरार्च्चकाः ॥ ६ ॥

अश्वमेधफलंप्राप्य ब्रह्मलोकंप्रयान्ति ते । कार्त्तिक्यामन्नदानाच्चनिर्म्मलो ब्रह्मलोकभाक्
पुष्करे दुष्करं गन्तुं पुष्करे दुष्करं तपः । दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करम् ॥

तत्र वासाज्जपाच्छ्राद्धात् कुलानां शतमुद्धरेत् ।
जम्बुमार्गं च तत्रैव तीर्थन्तण्डुलिकाश्रमम् ॥ ९ ॥

कण्वाश्रमं कोटितीर्थं नर्म्मदाचार्बुदं परम् । तीर्थञ्चर्मण्वतीसिन्धुः सोमनाथःप्रभासकम्
सरस्वत्यब्धिसङ्गश्च सागरन्तीर्थमुत्तमम् । पिण्डारकं द्वारका च गोमती सर्वसिद्धिदा
भूमितीर्थं ब्रह्मतुङ्गं तीर्थं पञ्चनदं परम् । भीमतीर्थं गिरीन्द्रश्च देविका पापनाशिनी ॥
तीर्थं विनशनं पुण्यं नागोद्भेदमघार्दनम् । तीर्थं कुमारकोटिश्च सर्वदानीरितानि च ॥
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् । य एवं सततं ब्रूयात्सोऽमलः प्राप्नुयाद्दिवम्

तत्र विष्ण्वादयो देवास्तत्र वासाद्धरिं व्रजेत् ।

सरस्वत्यां सन्निहित्यां स्नानकृद्ब्रह्मलोकभाक् ॥ १५ ॥
पांशवोऽपि कुरुक्षेत्रे नयन्ति परमां गतिम् । धर्मतीर्थं सुवर्णाख्यं गङ्गाद्वारमनुत्तमम्
तीर्थं कनखलं पुण्यं भद्रकर्णह्रदन्तथा । गङ्गासरस्वतीसङ्गं ब्रह्मावर्त्तमघार्दनम् ॥१७॥
भृगुतुङ्गञ्च कुब्जाम्रं गङ्गोद्भेदमघान्तकम् । वाराणसी वरन्तीर्थमविमुक्तमनुत्तमम् ॥
कपालमोचनं तीर्थन्तीर्थराजं प्रयागकम् ।
गोमतीगङ्गयोः सङ्गं गङ्गा सर्वत्र नाकदा ॥ १६ ॥
तीर्थं राजगृहं पुण्यं शालग्राममघान्तकम् । वटेशं वामनन्तीर्थं कालिकासङ्गमुत्तमम् ॥
लौहित्यं करतोयाख्यं शोणञ्चाथर्षभं परम् ।
श्रीपर्वतं कोल्वगिरिं सह्याद्रिर्म्मलयो गिरिः ॥ २१ ॥
गोदावरी तुङ्गभद्रा कावेरी वरदा नदी । तापी पयोष्णी रेवा च दण्डकारण्यमुत्तमम्
कालञ्जरं मुञ्जवटन्तीर्थं सूर्पारकं परम् । मन्दाकिनी चित्रकूटं शृङ्गवेरपुरं परम् ॥ २३ ॥
अवन्ती परमं तीर्थमयोध्या पापनाशिनी । नैमिषं परमं तीर्थं भुक्तिमुक्तिप्रदायकम् ॥
इत्यादि माहापुराणे आग्नेये तीर्थमहात्म्यकथनं नाम नवाधिकशततमोऽध्यायः।

———

## दशाधिकशततमोऽध्यायः

### गङ्गामाहात्म्यम् ।

अग्निरुवाच ।

गङ्गामाहत्म्यमाख्यास्ये सेव्या सा भुक्तिमुक्तिदा ।
येषां मध्ये याति गङ्गा ते देशा पावना वराः ॥ १ ॥
गतिर्गङ्गा तु भूतानां गतिमन्वेषतां सदा । गङ्गा तारयते चोभौ वंशौ नित्यं हि सेविता
चान्द्रायणसहस्रञ्च गङ्गाम्भः पानमुत्तमम् । गङ्गां मासन्तु संसेव्य सर्वयज्ञफलं लभेत् ॥
सकलाघहरी देवी स्वर्गलोकप्रदायिनी । यावदस्थि च गङ्गायां तावत् स्वर्गे स तिष्ठति

अन्धादयस्तु तां सेव्य देवैर्गच्छन्तितुल्यताम् । गङ्गातीर्थसमुद्भूतमृद्धारीसोऽघहार्कवत्

दर्शनात् स्पर्शनात् पानात्तथा गङ्गेतिकीर्त्तनात् ।

पुनाति पुण्यपुरुषान् शतशोऽथ सहस्रशः ॥ ६ ॥

इत्यादि महापुराणे आग्नेये गङ्गामाहात्म्यकथनं नाम दशाधिकशततमोध्यायः ।

---

# एकादशाधिकशततमोऽध्यायः

## प्रयागमाहात्म्यम् ।

अग्निरुवाच ।

वक्ष्ये प्रयागमाहात्म्यं भुक्तिमुक्तिप्रदंपरम् । प्रयागेब्रह्मविष्णवाद्या देवा मुनिवराःस्थिताः

सरितः सागराः सिद्धा गन्धर्वाप्सरसस्तथा ।

तत्र त्रीण्यग्निकुण्डानि तेषां मध्ये तु जाह्नवी ॥ २ ॥

वेगेन समतिक्रान्ता सर्वतीर्थपुरस्कृता । तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुता ॥३॥

गङ्गायमुनयोर्म्मध्यं पृथिव्या जघनं स्मृतम् ।

प्रयागं जघनस्यान्तरुपस्थमृषयो विदुः ॥ ४ ॥

प्रयागं सप्रतिष्ठानं कम्बलाश्वतरावुभौ । तीर्थं भोगवती चैव वेदी प्रोक्ता प्रजापतेः ॥

तत्र वेदाश्च यज्ञाश्च मूर्त्तिमन्तः प्रयागके । स्तवनादस्य तीर्थस्य नामसङ्कीर्त्तनादपि ॥

मृत्तिकालम्भनाद्वापि सर्वपापैः प्रमुच्यते ।

प्रयागे सङ्गमे दानं श्राद्धं जप्यादि चाक्षयम् ॥ ७ ॥

न वेदवचनाद्विप्र ! न लोकवचनादपि । मतिरुत्क्रमणीयान्ते प्रयागे मरणं प्रति ॥ ८ ॥

दशतीर्थसहस्राणि षष्टिकोट्यस्तथापराः ।

तेषां सान्निध्यमात्रैव प्रयागं परमन्ततः ॥ ९ ॥

वासुकेर्भोगवत्यत्र हंसप्रपतनं परम् । गवां कोटिप्रदानाद्यत् त्र्यहं स्नानस्य तत्फलम्

प्रयागे माघमासे तु एवमाहुर्मनीषिणः । सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा ॥
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे । अत्र दानाद्दिवं याति राजेन्द्रो जायतेऽत्र च ॥
वटमूले सङ्गमादौ मृतो विष्णुपुरीं व्रजेत् । उर्वशी पुलिनं रम्यं तीर्थं सन्ध्यावटस्तथा
कोटीतीर्थश्चाश्वमेधंगङ्गायमुनमुत्तमम् । मानसं रजसा हीनं तीर्थं वासरकं परम् ॥
इत्यादि महापुराणे आग्नेये प्रयागमाहात्म्यकथनं नामैकदशाधिकशततमोऽध्यायः ।

———

## द्वादशाधिकशततमोऽध्यायः ।

### वाराणसीमाहात्म्यम् ।

अग्निरुवाच ।

वाराणसी परं तीर्थं गौर्य्यै प्राह महेश्वरः । भुक्तिमुक्तिप्रदं पुण्यं वसतां गृणतां हरिम्

रुद्र उवाच ।

गौरीक्षेत्रं न मुक्तं वै अविमुक्तं ततः स्मृतम् ।
जप्तं तप्तं हुतं दत्तमविमुक्ते किलाक्षयम् ॥ २ ॥

अश्मना चरणौ हत्वा वसेत् काशीन्न हि त्यजेत् । हरिश्चन्द्रंपरंगुह्यंगुह्यमाम्रातकेश्वरम्
जप्येश्वरं परं गुह्यं गुह्यं श्रीपर्वतं तथा । महालयं परं गुह्यं भृगुश्चण्डेश्वरं तथा ॥ ४ ॥
केदारं परमं गुह्यमष्टौ सन्त्यविमुक्तके । गुह्यानां परमं गुह्यमविमुक्तं परं मम ॥ ५ ॥

द्वियोजनन्तु पूर्वं स्याद् योजनार्द्धं तदन्यथा ।
वरणा च नदी चासी मध्ये वाराणसी तयोः ॥ ६ ॥
अत्र स्नानं जपो होमो मरणं देवपूजनम् ।
श्राद्धं दानं निवासश्च यद्यत् स्याद्भुक्तिमुक्तिदम् ॥ ७ ॥

इत्यादि महापुराणे आग्नेये वाराणसीमाहात्म्यकथनं नाम द्वादशाधिकशततमोऽध्यायः।

———

# त्रयोदशाधिकशततमोऽध्यायः

## नर्मदादिमाहात्म्यम् ।

अग्निरुवाच ।

नर्मदादिकमाहात्म्यं वक्ष्येऽहं नर्मदां पराम् ।

सद्यः पुनाति गाङ्गेयं दर्शनाद्वारि नार्म्मदम् ॥ १ ॥

विस्तराद्योजनशतं योजनद्वयमायता । षष्टितीर्थसहस्राणि षष्टिकोट्यस्तथापराः ॥

पर्वतस्य समन्तात्तु तिष्ठन्त्यमरकण्टके । कावेरीसङ्गमं पुण्यं श्रीपर्वतमतः शृणु ॥ ३ ॥

गौरी श्रीरूपिणी तेपे तपस्तामब्रवीद्धरिः ।

अवाप्स्यसि त्वमध्यात्म्यं नाम्ना श्रीपर्वतस्तव ॥ ४ ॥

समन्ताद्योजनशतं महापुण्यं भविष्यति । अत्र दानन्तपो जप्यं श्राद्धं सर्वमथाक्षयम् ॥

मरणं शिवलोकाय सर्वदं तीर्थमुत्तमम् । हरोऽत्र क्रीड़ते देव्या हिरण्यकशिपुस्तथा ॥

तपस्तप्त्वा बली चाभून्मुनयः सिद्धिमाप्नुवन् ।

इत्यादिमहापुराणे आग्नेये नर्मदादिमाहात्म्यकथनंनाम त्रयोदशाधिकशततमोऽध्यायः ।

---

# चतुर्दशाधिकशततमोऽध्यायः

## गयामाहात्म्यम् ।

अग्निरुवाच ।

गयामाहात्म्यमाख्यास्ये गयातीर्थोत्तमोत्तमम् ।

गयासुरस्तपस्तेपे तत्तपस्तापिभिः सुरैः ॥ १ ॥

उक्तः क्षीराब्धिगो विष्णुः पालयास्मान् गयासुरात् ।

तथेत्युक्त्वा हरिर्दैत्यं वरं ब्रूहीति चाब्रवीत् ॥ २ ॥
दैत्योऽब्रवीत्पवित्रोऽहं भवेयं सर्वतीर्थतः ।
तथेत्युक्त्वा गतो विष्णुर्दैत्यं दृष्ट्वा न वा हरिम् ॥ ३ ॥
गताः शून्या मही स्वर्गे देवा ब्रह्मादयः सुराः ।
गता ऊचुर्हरिं देवाः शून्या भूस्त्रिदिवं हरे ॥ ४ ॥
दैत्यस्य दर्शनादेव ब्रह्माणञ्चाब्रवीद्धरिः । यागार्थं दैत्यदेहं त्वं प्रार्थय त्रिदशैः सह ॥
तच्छ्रुत्वा ससुरो ब्रह्मा गयासुरमथाब्रवीत् ।
अतिथिः प्रार्थयामि त्वान्देहं यागाय पावनम् ॥ ६ ॥
गयासुरस्तथेत्युक्त्वाऽपतत् तस्य शिरस्यथ । यागं चकार चलिते देहि पूर्णाहुतिं विभुः
पुनर्ब्रह्माब्रवीद्विष्णुं पूर्णकालेऽसुरोऽचलत् । विष्णुर्धर्ममथाऽऽहूय प्राह देवमयीं शिलाम्
धारयध्वं सुराः सर्वे यस्यामुपरि सन्तु ते । गदाधरो मदीयाथ मूर्त्तिः स्थास्यतिसामरैः
धर्मः शिलां देवमयीं तच्छ्रुत्वाधारयत् पराम् ।
या धर्माद्धर्मवत्याञ्च जाता धर्मव्रता सुता ॥ १० ॥
मरीचिर्ब्रह्मणः पुत्रस्तामुवाह तपोऽन्विताम् ।
यथा हरिः श्रिया रेमे गौर्य्या शम्भुस्तथा तया ॥ ११ ॥
कुशपुष्पाद्यरण्याच्च आनीयातिश्रमान्वितः । भुक्त्वा धर्मव्रतां प्राह पादसंवाहनं कुरु ॥
विश्रान्तस्य मुनेः पादौ तथेत्युक्त्वा प्रियाकरोत् ।
एतस्मिन्नन्तरे ब्रह्मा मुनौ सुप्ते तथागतः ॥ १३ ॥
धर्मव्रताचिन्तयच्च किं ब्रह्माणं समर्चये । पादसंवाहनं कुर्वे ब्रह्मा पूज्यो गुरोर्गुरुः ॥
विचिन्त्य पूजयामास ब्रह्माणं चार्हणादिभिः ।
मरीचिस्तामपश्यत् स शशापोक्तिव्यतिक्रमात् ॥ १५ ॥
शिला भविष्यसि क्रोधाद्धर्मव्रताऽब्रवीच्च तम् । पादाभ्यङ्गंपरित्यज्यतद्गुरुःपूजितोमया
अदोषाहं यतस्त्वं हि शापं प्राप्स्यसि शङ्करात् ।
धर्मव्रता पृथक् शापं धारयित्वाग्निमध्यगात् ॥ १७ ॥

तपश्चचार वर्षाणां सहस्राण्ययुतानिच । ततो विष्ण्वादयो देवा वरं ब्रूहीतिचाब्रुवन् ॥
धर्मव्रताऽब्रवीद्देवान् शापं निवर्त्तयन्तु मे ।

देवा ऊचुः ।

दत्तो मरीचिना शापो भविष्यति नचान्यथा ॥ १९ ॥
शिला पवित्रा देवाङ्घ्रिलक्षिता त्वं भविष्यसि । देवव्रता देवशिला सर्वदेवादिरूपिणी
सर्वदेवमयी पुण्या निश्चलायासुरस्य हि ।

देवव्रतोवाच ।

यदि तुष्टास्थ मे सर्वे मयि तिष्ठन्तु सर्वदा ॥ २१ ॥
ब्रह्मा विष्णुश्च रुद्राद्या गौरीलक्ष्मीमुखाः सुराः ।

अग्निरुवाच ।

देवव्रतावचः श्रुत्वा तथेत्युक्ता दिवङ्गताः ॥ २२ ॥
सा धर्मेणासुरस्यास्य धृता देवमया शिला । सशिलश्चलितो दैत्यःस्थितारुद्रादयस्ततः
सदेवश्चलितो दैत्यस्ततो देवैः प्रसादितः ।
क्षीराब्धिगो हरिः प्रादात् स्वमूर्त्तिं श्रीगदाधरम् ॥ २४ ॥
गच्छन्तु भोः स्वयं यास्ये मूर्त्त्या वै देवगम्यया ।
स्थितो गदाधरो देवो व्यक्ताव्यक्तोभयात्मकः ॥ २५ ॥
निश्चलार्थं स्वयं देवः स्थित आदिगदाधरः ।
गदो नामासुरो दैत्यः स हतो विष्णुना पुरा ॥ २६ ॥
तदस्थिनिर्मिता चाद्या गदा या विश्वकर्मणा । आद्यया गदया हेतिप्रमुखा राक्षसाहताः
गदाधरेण विधिवत् तस्मादादिगदाधरः । देवमय्यां शिलायाञ्च स्थिते चादिगदाधरे ॥
गयासुरे निश्चलेऽथ ब्रह्मा पूर्णाहुतिं ददौ । गयासुरोऽब्रवीद्देवान् किमर्थं वञ्चितो ह्यहम्
विष्णोर्वचनमात्रेण किन्नस्यान्निश्चलोह्यहम् । आक्रान्तो यद्यहं देवा दातुमर्हत मे वरम्

देवा ऊचुः ।

तीर्थस्य करणे यत् त्वमस्माभिर्निश्चलीकृतः । विष्णोःशम्भोर्ब्रह्मणश्चक्षेत्रंतव भविष्यति

प्रसिद्धं सर्वतीर्थेभ्यः पित्रादेर्ब्रह्मलोकदम् । इत्युक्तास्ते स्थिता देवा देव्यस्तीर्थादयः स्थिताः

यागं कृत्वा ददौ ब्रह्मा ऋत्विग्भ्यो दक्षिणां तदा ।

पञ्चक्रोशं गयाक्षेत्रं पञ्चाशत् पञ्च चार्पयेत् ॥ ३३ ॥

ग्रामान् स्वर्णगिरीन् कृत्वा नदीर्दुग्धमधुस्रवाः ।

सरोवराणि दध्याज्यैर्बहूनन्नादिपर्वतान् ॥ ३४ ॥

कामधेनुं कल्पतरुं स्वर्णरूप्यगृहाणि च । न याचयन्तु विप्रेन्द्रा अल्पानुक्त्वा ददौ प्रभुः

धर्मयागे प्रलोभात्तु प्रतिगृह्य धनादिकम् । स्थिता यदा गयायान्ते शप्तास्ते ब्रह्मणा तदा

विद्याविवर्जिता यूयं तृष्णायुक्ता भविष्यथ । दुग्धादिवर्जिता नद्यः शैलाः पाषाणरूपिणः

ब्रह्माणं ब्राह्मणाश्चोचुर्नष्टं शापेन चाखिलम् ।

जीवनाय प्रसादन्नः कुरु विप्रांश्च सोऽब्रवीत् ॥ ३८ ॥

तीर्थोपजीविका यूयं सचन्द्रार्कं भविष्यथ । ये युष्मान् पूजयिष्यन्तिगयायामागतानराः

हव्यकव्यैर्धनैः श्राद्धैस्तेषां कुलशतं व्रजेत् ।

नरकात् स्वर्गलोकाय स्वर्गलोकात् पराङ्गतिम् ॥ ४० ॥

गयोऽपि चाकरोद्यागं बह्वन्नं बहुदक्षिणम् ।

गया पुरी तेन नाम्ना पाण्डवा ईजिरे हरिम् ॥ ४१ ॥

इत्यादि महापुराणे आग्नेये गयामाहात्म्यकथनं नाम चतुर्दशाधिकशततमोऽध्यायः ।

---

# पञ्चदशाधिकशततमोऽध्यायः

## गयायात्राविधिः ।

### अग्निरुवाच ।

उद्यतश्चेद्गयां यातुं श्राद्धं कृत्वा विधानतः । विधाय कार्पटीवेशं ग्रामस्यापि प्रदक्षिणम्

कृत्वा प्रतिदिनं गच्छेत् संयतश्चाप्रतिग्रही । गृहाच्चलितमात्रस्य गयाया गमनं प्रति ॥

स्वर्गारोहणसोपानं पितॄणान्तु पदे पदे। ब्रह्मज्ञानेन किं कार्य्यं गोगृहे मरणेन किम् ॥
किं कुरुक्षेत्रवासेन यदा पुत्रो गयां व्रजेत्।
गयाप्राप्तं सुतं दृष्ट्वा पितॄणामुत्सवो भवेत् ॥ ४ ॥
पद्भ्यामपि जलं स्पृष्ट्वा अस्मभ्यं किन्न दास्यति।
ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा ॥ ५ ॥
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा। काङ्क्षन्ति पितरः पुत्रं नरकाद्भयभीरवः ॥
गयां यास्यति यः पुत्रः स नस्त्राताभविष्यति। मुण्डनश्चोपवासश्च सर्वतीर्थेष्वयंविधि
न कालादिर्गयातीर्थे दद्यात् पिण्डांश्च नित्यशः।
पक्षत्रयनिवासी च पुनात्यासप्तमं कुलम् ॥ ८ ॥
अष्टकासु च वृद्धौ च गयायां मृतवासरे।
अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥ ९ ॥
पित्रादिनवदैवत्यं तथा द्वादशदैवतम्। प्रथमे दिवसे स्नायात्तीर्थे ह्युत्तरमानसे ॥१० ॥
उत्तरे मानसे पुण्ये आयुरारोग्यवृद्धये। सर्वाघौघविघाताय स्नानं कुर्य्याद् विमुक्तये
सन्तर्प्य देवपित्रादीन् श्राद्धकृत् पिण्डदो भवेत्।
दिव्यान्तरीक्षभौमस्थान् देवान् सन्तर्पयाम्यहम् ॥ १२ ॥
दिव्यान्तरीक्षभौमादिपितृमात्रादि तर्पयेत्। पिता पितामहश्चैव तथैव प्रपितामहः ॥
माता पितामही चैव तथैव प्रपितामही। मातामहः प्रमातामहो वृद्धप्रमातामहः ॥१४ ॥
तेभ्योऽन्येभ्य इमान् पिण्डानुद्धाराय ददाम्यहम्।
ओं नमः सूर्य्यदेवताय सोमभौमज्ञरूपिणे ॥ १५ ॥
जीवशुक्रशनैश्चारिराहुकेतुस्वरूपिणे। उत्तरे मानसे स्नात उद्धरेत् सकलं कुलम् ॥१६॥
सूर्य्यं नत्वा व्रजेन्मौनी नरो दक्षिणमानसम्।
दक्षिणे मानसे स्नानं करोमि पितृतृप्तये ॥ १७ ॥
गयायामागतः स्वर्गं यान्तु मे पितरोऽखिलाः।

गयायामागतः स्वर्गयान्तुमेपितरोऽखिलाः । श्राद्धंपिण्डन्ततःकृत्वासूर्यंनत्वावदेदिदम्
ओं नमो भानवे भर्त्रे भवाय भव मे विभो ! । भुक्तिमुक्तिप्रदः सर्वपितॄणां भवभावितः
कव्यवाहानलः सोमो यमश्चैवार्य्यमा तथा । अग्निष्वात्ता बर्हिषद आज्यपाः पितृदेवताः
आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह । मदीयाः पितरोयेच मातृमातामहादयः
तेषां पिण्डप्रदाताहमागतोऽस्मि गयामिमाम् । उदीच्यां मुण्डपृष्ठस्य देवर्षिगणपूजितम्
नाम्ना कनखलं तीर्थं त्रिषु लोकेषु विश्रुतम् । सिद्धानां प्रीतिजननैः पापानाञ्च भयङ्करैः
लेलिहानैर्महानागै रक्ष्यते चैव नित्यशः । तत्र स्नात्वा दिवं यान्ति क्रीड़न्तेभुविमानवाः

फल्गुतीर्थं ततो गच्छेन्महानद्यां स्थितं परम् ।
नागार्ज्जुनार्द्दनात् कूपाद्वटाच्चोत्तरमानसात् ॥ २५ ॥

एतद् गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते । मुण्डपृष्ठनगाद्याश्च सारात् सारमथान्तरम्

यस्मिन् फलति श्रीर्गौर्वा कामधेनुर्जलं मही ।
दृष्टिरम्यादिकं यस्मात् फल्गुतीर्थं न फल्गुवत् ॥ २७ ॥
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ।
एतेन किं न पर्य्याप्तं नृणां सुकृतकारिणाम् ॥ २८ ॥

पृथिव्यां यानि तीर्थानिआसमुद्रात्सरांसि च । फल्गुतीर्थं गमिष्यन्तिवारमेकंदिनेदिने
फल्गुतीर्थे तीर्थराजे करोति स्नानमादृतः । पितॄणां ब्रह्मलोकाप्त्यै आत्मनोभुक्तिमुक्तये
स्नात्वा श्राद्धी पिण्डदोऽथ नमेद्देवं पितामहम् । कलौ माहेश्वरालोकाअत्रदेवोगदाधरः
पितामहो लिङ्गरूपी तन्नमामि महेश्वरम् । गदाधरं बलं काममनिरुद्धं नारायणम् ॥
ब्रह्मविष्णुनृसिंहाख्यं वराहादिं नमाम्यहम् । ततो गदाधरं दृष्ट्वा कुलानां शतमुद्धरेत् ॥
धर्मारण्यं द्वितीयेऽह्नि मतङ्गस्याश्रमेवरे । मतङ्गवाप्यां संस्नाप्य श्राद्धकृत् पिण्डदोभवेत्
मतङ्गेशं सुसिद्धेशं नत्वा चेदमुदीरयेत् । प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः
मयागत्य मतङ्गेऽस्मिन् पितॄणां निष्कृतिः कृता । स्नानतर्पणश्राद्धादिर्ब्रह्मतीर्थेऽथकूपके
तत्कूपयूपयोर्मध्ये श्राद्धं कुलशतोद्धृतौ । महाबोधतरुं नत्वा धर्मवान् स्वर्गलोकभाक्
तृतीये ब्रह्मसरसि स्नानं कुर्य्याद्यतव्रतः । स्नानं ब्रह्मसरस्तीर्थे करोमि ब्रह्मभूतये ॥ ३८॥

पितृणां ब्रह्मलोकाय ब्रह्मर्षिगणसेविते। तर्पणं श्राद्धकृत् पिण्डं प्रदद्यात्तु प्रसेचनम्॥
कुर्य्याच्च वाजपेयार्थी ब्रह्मयूपप्रदक्षिणम्॥ ३९॥
एको मुनिः कुम्भकुशाग्रहस्त आम्रस्य मूले सलिलन्ददाति।
आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रिया द्व्यर्थकरी प्रसिद्धा॥ ४०॥
ब्रह्माणञ्च नमस्कृत्य कुलानां शतमुद्धरेत्। फल्गुतीर्थे चतुर्थेऽह्निस्नात्वा देवादितर्पणम्
कृत्वा श्राद्धं सपिण्डञ्च गयाशिरसि कारयेत्। पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः
तत्र पिण्डप्रदानेन कुलानां शतमुद्धरेत्। मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता॥ ४३॥
मुण्डपृष्ठे शिरः साक्षाद् गयाशिर उदाहृतम्।
साक्षाद् गयाशिरस्तत्र फल्गुतीर्थाश्रमं कृतम्॥ ४४॥
अमृतं तत्र वहति पितृणान्दत्तमक्षयम्। स्नात्वा दशाश्वमेधे तु दृष्ट्वा देवं पितामहम्
रुद्रपादं नरः स्पृष्ट्वा नेह भूयोऽभिजायते। शमीपत्रप्रमाणेन पिण्डं दत्वा गयाशिरे॥
नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः। पायसेनाथपिष्टेनशक्तुनाचरुणातथा
पिण्डदानं तण्डुलैश्च गोधूमैस्तिलमिश्रितैः। पिण्डं दत्वा रुद्रपदे कुलानां शतमुद्धरेत्॥
तथा विष्णुपदे श्राद्धपिण्डदो ह्यृणमुक्तिकृत्। पित्रादीनां शतकुलंस्वात्मानं तारयेन्नरः
तथा ब्रह्मपदे श्राद्धी ब्रह्मलोकं नयेत्पितॄन्।
दक्षिणाग्निपदे तद्वद्गार्हपत्यपदे तथा॥ ५०॥
पदे वाहवनीयस्य श्राद्धो यज्ञफलंलभेत्। आवसथ्यस्य चन्द्रस्य सूर्य्यस्य च गणस्य च
अगस्त्यकार्त्तिकेयस्य श्राद्धी तारयते कुलम्। आदित्यस्य रथं नत्वाकर्णादित्यंनमेन्नरः
कनकेशपदं नत्वा गयाकेदारकं नमेत्। सर्व्वपापविनिर्मुक्तः पितॄन् ब्रह्मपुरं नयेत्॥५३॥
विशालोऽपि गयाशीर्षे पिण्डदोऽभूच्च पुत्रवान्।
विशालायां विशालोऽभूद्राजपुत्रोऽब्रवीद् द्विजान्॥ ५४॥
कथं पुत्रादयः स्युर्म्मे द्विजा ऊचुर्विशालकम्। गयायां पिण्डदानेन तव सर्वं भविष्यति
विशालोऽपिगयाशीर्षे पितृपिण्डान्ददौततः। दृष्ट्वाऽऽकाशेसितंरक्तंपुरुषांस्तांश्चपृष्टवान्
के यूयन्तेषु चेत्रेकः सितःप्रोचे विशालकम्। अहं सितस्ते जनक इन्द्रलोकं गतःशुभात्

मम रक्तः पिता पुत्र कृष्णश्चैव पितामहः । अब्रवीत् नरकं प्राप्ता त्वया मुक्तीकृतावयम्
पिण्डदानाद् ब्रह्मलोकं व्रजामइतिते गताः । विशालः प्राप्तपुत्रादी राज्यं कृत्वा हरिंययौ
प्रेतराजः स्वमुक्त्यै च वणिजञ्चेदमब्रवीत् । प्रेतैः सर्व्वैः सहार्तःसन्सुकृतंभुज्यतेफलम्
श्रवणद्वादशीयोगे कुम्भः सान्नश्च सोदकः । दत्तः पुरा स मध्याह्ने जीवनायोपतिष्ठते
धनं गृहीत्वा मे गच्छ गयायांपिण्डदोभव । वणिग्धनंगृहीत्वातुगयायांपिण्डदोऽभवत्
प्रेतराजः सह प्रेतैर्मुक्तो नीतो हरेः पुरम् । गयाशीर्षे पिण्डदानादात्मानं स्वपितृंस्तथा
पितृवंशे मृता ये च मातृवंशे तथैव च । गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥
ये मे कुले लुप्तपिण्डाःपुत्रदारविवर्जिताः । क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा
विरूपा आमगर्भा ये ज्ञाताज्ञाताः कुले मम । तेषां पिण्डो मयादत्तोह्यक्षय्यमुपतिष्ठताम्
ये केचित् प्रेतरूपेण तिष्ठन्ति पितरो मम । ते सर्वे तृप्तिमायान्तु पिण्डदानेन सर्वदा ॥
पिण्डो देयस्तु सर्वेभ्यः सर्वैर्वै कुलतारकैः । आत्मनस्तु तथा देयोह्यक्षयंलोकमिच्छता
पञ्चमेऽह्नि गदालोले स्नायान्मन्त्रेण बुद्धिमान् । गदाप्रक्षालने तीर्थे गदालोलेऽतिपावने
स्नानं करोमि संसारगदशान्त्यै जनार्द्दन । नमोऽक्षयवटायैव अक्षयस्वर्गदायिने ॥ ७०॥
पित्रादीनामक्षयाय सर्वपापक्षयाय च । श्राद्धं वटतले कुर्य्याद् ब्राह्मणानाञ्च भोजनम्
एकस्मिन् भोजिते विप्रे कोटिर्भवतिभोजिता । किम्पुनर्बहुभिर्भुक्तैःपितृणांदत्तमक्षयम्
गयायामन्नदाता यः पितरस्तेन पुत्रिणः । वटं वटेश्वरं नत्वा पूजयेत् प्रपितामहम् ॥
अक्षयांल्लभते लोकान् कुलानां शतमुद्धरेत् । क्रमतोऽक्रमतो वापि गयायात्रा महाफला

इत्यादिमहापुराणे आग्नेये गयायात्राकथनं नाम पञ्चदशाधिकशततमोऽध्यायः ।

---

# षोड़शाधिकशततमोऽध्यायः

## गयायात्राविधिकथनम् ।

### अग्निरुवाच ।

गायत्र्यैव महानद्यां स्नातःसन्ध्यांसमाचरेत् । गायत्र्या अग्रतःप्रातः श्राद्धंपिण्डमथाक्षयम्

मध्याह्ने चोद्यतिस्नात्वा गीतवाद्यैर्ह्युपास्य च। सावित्रीपुरतःसन्ध्यांपिण्डदानश्चतत्पदे
अगस्त्यस्य पदे कुर्याद्योनिद्वारं प्रविश्य च। निर्गतो न पुनर्योनिंप्रविशेन्मुच्यतेभवात्
बलिं काकशिलायाश्च कुमारश्च नमेत्ततः। स्वर्गद्वार्य्यां सोमकुण्डेवायुतीर्थेऽथपिण्डदः
भवेदाकाशगङ्गायां कपिलायाश्च पिण्डदः। कपिलेशं शिवं नत्वारुक्मिकुण्डेचपिण्डदः
कोटितीर्थे च कोटीशं नत्वामोघपदे नरः। गदालोले वानरके गोप्रचारे च पिण्डदः॥
नत्वा गावं वैतरण्यामेकविंशकुलोद्धृतिः। श्राद्धपिण्डप्रदातास्यात्क्रौञ्चपादेचपिण्डदः
तृतीयायां विशालायांनिश्चिरायाश्चपिण्डदः। ऋणमोक्षेपापमोक्षेभस्मकुण्डेऽथभस्मना
स्नानकृन् मुच्यते पापान्नमेद्देवं जनार्द्दनम्। एष पिण्डो मया दत्तस्तव हस्तेजनार्द्दन!
परलोकगते मह्यमक्षय्यमुपतिष्ठताम्। गयायां पितृरूपेण स्वयमेव जनार्द्दनः॥ १०॥
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते वै ऋणत्रयात्। मार्कण्डेयेश्वरं नत्वानमेद्गृध्रेश्वरंनरः
मूलक्षेत्रे महेशस्य धारायां पिण्डदो भवेत्। गृध्रकूटे गृध्रवटे धौतपादे च पिण्डदः॥
पुष्करिण्यां कर्दमाले रामतीर्थे च पिण्डदः। प्रभासेशन्नमेत् प्रेतशिलायांपिण्डदोभवेत्
दिव्यान्तरीक्षभूमिष्ठाःपितरोबान्धवादयः। प्रेतादिरूपामुक्ताःस्युःपिण्डैर्दत्तैर्मयाखिलाः
स्थानत्रये प्रेतशिला गयाशिरसि पावनी। प्रभासे प्रेतकुण्डे च पिण्डदस्तारयेतकुलम्
वसिष्ठेशन्नमस्कृत्यतदग्रेपिण्डदो भवेत्। गयानाभौसुषुम्णायांमहाकोष्ठ्याञ्चपिण्डदः
गदाधराग्रतो मुण्डपृष्ठे देव्याश्चसन्निधौ। मुण्डपृष्ठं नमेदादौ क्षेत्रपालादिसंयुतम्॥
पूजयित्वा भयं न स्याद्विषरोगादिनाशनम्। ब्रह्माणञ्च नमस्कृत्यब्रह्मलोकं नयेत्कुलम्
सुभद्रां बलभद्रञ्च प्रपूज्य पुरुषोत्तमम्। सर्वकामसमायुक्तं कुलमुद्धृत्य नाकभाक्॥
हृषीकेशं नमस्कृत्य यदग्रे पिण्डदो भवेत्। माधवं पूजयित्वा च देवोवैमानिकोभवेत्
महालक्ष्मींप्रार्च्यगौरींमङ्गलाञ्चसरस्वतीम्। पितॄनुद्धृत्यस्वर्गस्थोभुक्तभोगोऽत्रशास्त्रधीः

द्वादशादित्यमभ्यर्च्य वह्निं रैवन्तमिन्द्रकम्।
रोगादिमुक्तः स्वर्गी स्याच्छ्रीकपर्दिविनायकम्॥ २२॥

प्रपूज्य कार्त्तिकेयञ्च निर्विघ्नः सिद्धिमाप्नुयात्। सोमनाथञ्च कालेशङ्केदारं प्रपितामहम्
सिद्धेश्वरञ्च रुद्रेशं रामेशं ब्रह्मकेश्वरम्। अष्टलिङ्गानि गुह्यानि पूजयित्वा तु सर्वभाक्

नारायणं वराहञ्च नारसिंहं नमेच्छ्रिये । ब्रह्मविष्णुमहेशाख्यं त्रिपुरघ्नमशेषदम् ॥ २५ ॥
सीतां रामञ्च गरुड़ं वामनं सम्प्रपूज्य च । सर्वकामानवाप्नोति ब्रह्मलोकं नयेत् पितॄन्
देवैः सार्द्धं सम्प्रपूज्य देवमादिगदाधरम् । ऋणत्रयविनिर्मुक्तस्तारयेत् सकलं कुलम् ॥
देवरूपा शिला पुण्या तस्माद्देवमयी शिला । गयायां नहि तत् स्थानं यत्रतीर्थंनविद्यते

यन्नाम्ना पातयेत् पिण्डं तन्नयेद्ब्रह्म शाश्वतम् ।
फल्ग्वीशं फल्गुचण्डीं च प्रणम्याङ्गारकेश्वरम् ॥ २६ ॥

मतङ्गस्य पदे श्राद्धी भरताश्रमके भवेत् । हंसतीर्थे कोटितीर्थे यत्र पाण्डुशिलान्नदः ॥
तत्र स्यादग्निधारायां मधुस्रवसि पिण्डदः । रुद्रेशं किलिकिलेशं नमेद्वृद्धिविनायकम्॥
पिण्डदो धेनुकाऽरण्ये पदे धेनोर्नमेच्चगाम् । सर्वान् पितॄंस्तारयेच्चसरस्वत्याञ्चपिण्डदः
सन्ध्यामुपास्य सायाह्ने नमेद्देवीं सरस्वतीम् । त्रिसन्ध्याकृद्भवेद्विप्रो वेदवेदाङ्गपारगः ॥
गयां प्रदक्षिणीकृत्य गयाविप्रान् प्रपूज्य च । अन्नदानादिकं सर्वं कृतन्तत्राक्षयं भवेत् ॥
स्तुत्वा सम्प्रार्थयेद्देवमादिदेवं गदाधरम् । गदाधरं गयावासं पित्रादीनां गतिप्रदम् ॥
धर्म्मार्थकाममोक्षार्थं योगदं प्रणमाम्यहम् । देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितम् ॥
नित्यशुद्धं बुद्धियुक्तं सत्यं ब्रह्म नमाम्यहम् । आनन्दमद्वयं देवं देवदानववन्दितम् ॥
देवदेवीवृन्दयुक्तं सर्वदा प्रणमाम्यहम् । कलिकल्मषकालार्त्तिदमनं वनमालिनम् ॥३८॥
पालिताखिललोकेशं कुलोद्धरणमानसम् । व्यक्ताव्यक्तविभक्तात्माविभक्तात्मानमात्मनि
स्थितं स्थिरतरं सारं वन्दे घोराघमर्दनम् । आगतोऽस्मि गयां देव! पितृकार्य्येगदाधरः
त्वं मे साक्षी भवाद्येह अनृणोऽहमृणत्रयात् । साक्षिणः सन्तुमेदेवाब्रह्मेशानादयस्तथा

मया गयां समासाद्य पितॄणां निष्कृतिः कृता ।
गयामाहात्म्यपठनाच्छ्राद्धादौ ब्रह्मलोकभाक् ॥ ४२ ॥
पितॄणामक्षयं श्राद्धमक्षयं ब्रह्मलोकदम् ।

इत्यादिमहापुराणे आग्नेये गयायात्राविधिवर्णनं नाम षोड़शाधिकशततमोऽध्यायः ।

---

# सप्तदशाधिकशततमोऽध्यायः

## श्राद्धकल्पवर्णनम् ।

अग्निरुवाच ।

कात्यायनो मुनीनाह यथा श्राद्धं तथा वदे ।
गयादौ श्राद्धं कुर्वीत सङ्क्रान्त्यादौ विशेषतः ॥ १ ॥
काले वाऽपरपक्षे च चतुर्थ्या ऊर्द्ध्वमेव वा । सम्पाद्य च पदर्क्षे पूर्वेद्युश्च निमन्त्रयेत् ॥
यतीन् गृहस्थसाधून् वा स्नातकाञ्छ्रोत्रियान् द्विजान् ।
अनवद्यान् कर्म्मनिष्ठान् शिष्टानाचारसंयुतान् ॥ ३ ॥
वर्ज्जयेच्छ्वित्रिकुष्ठ्यादीन्न गृह्णीयान्निमन्त्रितान् ।
स्नाताञ्छुचींस्तथा दान्तान् प्राङ्मुखान् देवकर्म्मणि ॥ ४ ॥
उपवेशयेत् त्रीन् पित्र्यादीनेकैकमुभयत्र वा । एवं मातामहादेश्च शाकैरपि च कारयेत्
तदह्निब्रह्मचारीस्यादकोपोऽत्वरितोमृदुः । सत्योऽप्रमत्तोऽनध्वन्योअस्वाध्यायश्चवाग्यतः
सर्वांश्च पङ्क्तिमूर्द्धन्यान् पृच्छेत् प्रश्ने तथाऽऽसने ।
दर्भानास्तीर्य्य द्विगुणान् पित्रे देवादिकञ्चरेत् ॥ ७ ॥
विश्वान्देवानावाहयिष्ये पृच्छेदावाहयेति च ।
विश्वेदेवास आवाह्य विकीर्य्याथ यवान् जपेत् ॥ ८ ॥
विश्वे देवाः शृणुतेमं पितॄनावाहयिष्ये च । पृच्छेदावाहयेत्युक्ते उशन्तस्त्वा समाह्वयेत्
तिलान्विकीर्य्याथजपेदायान्त्वित्यादि पित्रके। सपवित्रे निषिञ्चेद्वाशन्नोदेवीरभितृवा
यवोऽसीतियवान्दत्वापित्रे सर्वत्रवैतिलान् । तिलोऽसिसोमदेवत्योगोसवोदेवनिर्म्मितः
प्रत्नभद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वधा । इति ।
श्रीश्च तेति ददेत् पुष्पं पात्रे हैमेऽथ राजते ॥ ११ ॥
औदुम्बरे वा खड्गेवा पर्णपात्रे प्रदक्षिणम् । देवानामपसव्यं तु पितॄणां सव्यमाचरेत्

एकैकस्य एकैकेन सपवित्रकरेषु च ।
या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्य्याः ।
हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः संश्योनाः सुहवा भवन्तु ।
विश्वे देवा एष वोऽर्घ्यः स्वाहा च पितरेष ते ॥ १३ ॥

स्वधैवं पितामहादेःसंस्रवात् प्रथमे चरेत् । पितृभ्यःस्थानमसीति न्युब्जंपात्रं करोत्यधः
अत्र गन्धपुष्पधूपदीपाच्छादनदानकम् । घृताक्तमन्नमुद्धृत्य पृच्छत्यग्नौ करिष्ये च ॥
कुरुष्वेत्यभ्यनुज्ञातो जुहुयात् साग्निकोऽनले । अनग्निकः पितृहस्ते सपवित्रे तु मन्त्रतः
अग्नये कव्यवाहनाय स्वाहेति प्रथमाहुतिः । सोमाय पितृमतेऽथ यमायाङ्गिरसे परे ॥

हुतशेषं चान्नपात्रे दत्वा पात्रं समालभेत् ।
पृथिवी ते पात्रन्द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतम् जुहोमि स्वाहेति ।
जप्त्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठन्निवेशयेत् ॥ १८ ॥
अपहतेति च तिलान् विकीर्य्यान्नं प्रदापयेत् ।
जुषध्वमिति चोक्त्वाऽथ गायत्र्यादि ततो जपेत् ॥ १९ ॥

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वधायै स्वाहायै नित्यमेव भवन्तुते

तृप्तान् ज्ञात्वान्नं विकिरेदपो दद्यात् सकृत् सकृत् ।
गायत्रीं पूर्ववज्जप्त्वा मधु मध्विति वै जपेत् ॥ २१ ॥

तृप्ताः स्थ इति सम्पृच्छेत् तृप्ताः स्म इति वै वदेत् । शेषमन्नमनुज्ञाप्य सर्वमन्नमथैकतः
उद्धृत्योच्छिष्टपार्श्वे तु कृत्वा चैवावनेजनम् । दद्यात्कुशेषुत्रीन्पिण्डानाचान्तेषुपरेजगुः
आचान्तेषूदकं पुष्पाण्यक्षतानि प्रदापयेत् । अक्षय्योदकमेवाथ आशिषः प्रार्थयेन्नरः ॥
अघोराः पितरः सन्तु गोत्रन्नो वर्द्धतां सदा । दातारोनोऽभिवर्द्धन्तांवेदाःसन्ततिरेवच
श्रद्धा च नो माव्यगमद् बहुदेयञ्च नोऽस्त्विति । अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि

याचितारश्च नः सन्तु मा च याचिस्म कञ्चन ।
स्वधावाचनीयान् कुशानास्तीर्य्य सपवित्रकान् ॥ २७ ॥

स्वधां वाचयिष्ये पृच्छेदनुज्ञातश्च वाच्यताम् । पितृभ्यः पितामहेभ्यः प्रपितामहमुख्यके

स्वधोच्यतामस्तुस्वधाउच्यमानस्तथैवच । अपोनिषिञ्चेदुत्तानंपात्रंकृत्वाऽथदक्षिणाम्
यथाशक्ति प्रदद्याच्च दैवे पैत्र्येऽथ वाचयेत् । विश्वे देवाः प्रीयन्ताञ्च वाजेवाजेविसर्जयेत्
आमावाजस्येत्यनुव्रज्यकृत्वाविप्रान्प्रदक्षिणम् । गृहेविशेदमावास्यांमासिमासिचरेत्तथा
एकोद्दिष्टं प्रवक्ष्यामि श्राद्धं पूर्ववदाचरेत् । एकं पवित्रमेकार्घम् एकं पिण्डम्प्रदापयेत्

नावाहनाग्नौकरणं विश्वे देवा न चात्र हि ।
तृप्तिप्रश्ने स्वदितमिति वदेत् सुस्वदितं द्विजः ॥ ३३ ॥
उपतिष्ठतामित्यक्षय्ये विसर्गे चाभिरम्यताम् ।
अभिरताः स्म इत्यपरे शेषं पूर्ववदाचरेत् ॥ ३४ ॥
सपिण्डीकरणं वक्ष्ये अब्दान्ते मध्यतोऽपि वा ।
पितॄणां त्रीणि पात्राणि एकम्प्रेतस्य पात्रकम् ॥ ३५ ॥

सपवित्राणि चत्वारि तिलपुष्पयुतानि च । गन्धोदकेन युक्तानि पूरयित्वाऽभिषिञ्चति
प्रेतपात्रं पितृपात्रे येसमाना इति द्वयात् । पूर्ववत् पिण्डदानादि प्रेतानां पितृताभवेत् ॥
अथाभ्युदयिकं श्राद्धं वक्ष्ये सर्वं तु पूर्ववत् । जपेत्पितृमन्त्रवर्ज्जंपूर्वाह्णेतत्प्रदक्षिणम्
उपचारा ऋजुकुशास्तिलार्थैश्च यवैरिह । तृप्तिप्रश्नस्तु सम्पन्नं सुसम्पन्नं वदेद् द्विजः

दध्यक्षतवदराद्याः पिण्डा नान्दीमुखान् पितॄन् ।
आवाहयिष्ये पृच्छेच्च प्रीयन्तामिति चाक्षये ॥ ४० ॥
नान्दीमुखाश्च पितरो वाचयिष्येऽथ पृच्छति ।
नान्दीमुखान् पितृगणान्प्रीयन्तामित्यथो वदेत् ॥ ४१ ॥

नान्दीमुखाश्च पितरस्तत्पिता प्रपितामहः । मातामहः प्रमातामहो वृद्धप्रमातृकामहः ॥
स्वधाकारन्नयुञ्जीत युग्मान्विप्रांश्चभोजयेत् । तृप्तिंवक्ष्येपितॄणाञ्चग्राम्यैरोषधिभिस्तथा
मासं तृप्तिस्तथारण्यैः कन्दमूलफलादिभिः । मत्स्यैर्मासद्वयं मार्गैस्त्रयं वै शाकुनेन च
चतुरो रौरवेणाऽथ पञ्च षट् छागलेन तु । कूर्मेण सप्त चाष्टौ च वाराहेण नवैव तु ॥
मेषमांसेन दश च माहिषैः पार्षतैः शिवैः । संवत्सरन्तु गव्येन पयसा पायसेन वा ॥
वार्ध्रीनसस्य मांसेन तृप्तिर्द्वादशवार्षिकी । खड्गमांसं कालशाकं लोहितच्छागलो मधु

महाशल्काश्च वर्षासु मघाश्राद्धमथाक्षयम् ।
मन्त्राध्याय्यग्निहोत्री च शाखाध्यायी षडङ्गवित् ॥ ४८ ॥
तृणाचिकेतः त्रिमधुर्धर्मद्रोणस्य पाठकः । त्रिषुपर्णज्येष्ठसामज्ञानी स्युः पङ्क्तिपावनाः
काम्यानां कल्पमाख्यास्ये प्रतिपत्सु धनं बहु ।
स्त्रियः परा द्वितीयायाश्चतुर्थ्यां धर्मकामदः ॥ ५० ॥
पञ्चम्यां पुत्रकामस्तु षष्ठ्याश्चश्रैष्ठ्यभागपि । कृषिभागी च सप्तम्यामष्टम्यामर्थलाभकः
नवम्याश्चएकशफा दशम्याङ्गीगणोभवेत् । एकादश्यांपरीवारो द्वादश्यान्धनधान्यकम्
ज्ञातिश्रैष्ठ्यंत्रयोदश्यां चतुर्दश्याश्चशस्त्रतः । मृतानांश्राद्धं सर्वाप्तममावास्यांसमीरितम्
सप्त व्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ । चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे
तेऽभिजाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः । प्रस्थिता दूरमध्वानं यूयन्तेभ्योऽवसीदत
श्राद्धादौ पठिते श्राद्धं पूर्णं स्याद् ब्रह्मलोकदम् ।
श्राद्धं कुर्य्याच्च पुत्रादिः पितुर्जीवति तत्पितुः ॥ ५६ ॥
तत्पितुस्तत्पितुः कुर्य्याज्जीवति प्रपितामहे । पितुः पितामहस्याथ परस्य प्रपितामहात्
एवंमात्रादिकस्यापि तथा मातामहादिके । श्राद्धकल्पं पठेद्यस्तु स लभेत् श्राद्धकृत्फलम्
तीर्थेयुगादौ मन्वादौ श्राद्धंदत्तमथाक्षयम् । अश्वयुक्च्छुक्लनवमी द्वादशी कार्त्तिकेतथा
तृतीयाचैव माघस्य तथा भाद्रपदस्य च । फाल्गुनस्याप्यमावास्यापौषस्यैकादशीतथा
आषाढ़स्यापि दशमी माघमासस्य सप्तमी । श्रावणेचाष्टमी कृष्णा तथाषाढ़े च पूर्णिमा
कार्त्तिकी फाल्गुनी तद्वज्ज्यैष्ठे पञ्चदशी सिता ।
स्वायम्भुवाद्या मनवस्तेषामाद्याः किलाक्षयाः ॥ ६२ ॥
गयाप्रयागौ गङ्गा च कुरुक्षेत्रञ्च नर्म्मदा । श्रीपर्वतः प्रभासश्च शालग्रामो वराणसी ॥
गोदावरी तेषु श्राद्धं श्रीपुरुषोत्तमादिषु ।
इत्यादिमहापुराणे आग्नेये श्राद्धकल्पकथनं नाम सप्तदशाधिकशततमोऽध्यायः ।

---

# अष्टादशाधिकशततमोऽध्यायः

## भारतवर्षवर्णनम्।

अग्निरुवाच।

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्। वर्षं तद् भारतं नाम नवसाहस्रविस्तृतम्
कर्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम्। महेन्द्रो मलयः सह्यः शुक्तिमान् हेमपर्वतः॥
विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः। इन्द्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान्
नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः। अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः
योजनानां सहस्राणि द्वीपोऽयं दक्षिणोत्तरात्। नव भेदा भारतस्य मध्यभेदेऽथ पूर्वतः
किराता यवनाश्चापि ब्राह्मणाद्याश्च मध्यतः। वेदस्मृतिमुखा नद्यः पारियात्रोद्भवास्तथा
विन्ध्याच्च नर्मदाद्याः स्युः सह्यात्तापीपयोष्णिका।
गोदावरीभीमरथीकृष्णवेण्यादिकास्तथा॥ ७॥
मलयात्कृतमालाद्यास्त्रिसामाद्यामहेन्द्रजाः। कुमाराद्याः शुक्तिमतोहिमाद्रेश्चन्द्रभागका
पश्चिमे कुरुपाञ्चालमध्यदेशादयः स्थिताः।

इत्यादिमहापुराणे आग्नेये भारतवर्षवर्णनं नामाष्टादशाधिकशततमोऽध्यायः।

---

# अथैकोनविंशत्यधिकशततमोऽध्यायः

## महाद्वीपादिवर्णनम्।

अग्निरुवाच।

लक्षयोजनविस्तारं जम्बूद्वीपं समावृतम्। लक्षयोजनमानेन क्षीरोदेन समन्ततः॥ १॥
संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः। सप्तमेधातिथेःपुत्राः प्लक्षद्वीपेश्वरास्तथा

स्याच्छान्तभयः शिशिरः सुखोदय इतः परः। आनन्दश्चशिवःक्षेमोध्रुवस्तन्नामवर्षकम्
मर्य्यादाशैलो गोमेधश्चन्द्रो नारददुन्दुभी। सोमकःसुमनाःशैलोवैभ्राजास्तज्जनाः शुभाः
नद्यः प्रधानाः सप्तात्र प्लक्षाच्छोकान्तिकेषु च। जीवनं पञ्चसाहस्रंधर्मोवर्णाश्रमात्मकः
आर्य्यकाः कुरवश्चैव विविंशा भाविनश्चते।
विप्राद्यास्तैश्च सोमोऽर्च्यो द्विलक्षश्चाब्धिलक्षकः ॥ ६ ॥
मानेनेक्षुरसोदेन वृतो द्विगुणशाल्मलः। वपुष्मतः सप्त पुत्राः शाल्मलेशास्तथाभवन्॥
श्वेतोऽथ हरितश्चैव जीमूतो लोहितः क्रमात्। वैद्युतो मानसश्चैव सुप्रभोनामवर्षकः
द्विगुणो द्विगुणेनैव सुरोदेन समावृतः। कुमुदश्चानलश्चैव तृतीयस्तु वलाहकः ॥ ६ ॥
द्रोणः कङ्कोऽथ महिषः ककुद्मान् सप्त निम्नगाः।
कपिलाश्चारुणाः पीताः कृष्णाः स्युर्ब्राह्मणादयः ॥ १० ॥
वायुरूपं यजन्ति स्म सुरोदेनायमावृतः। ज्योतिष्मतःकुशेशाःस्युरुद्भिजोधेनुमान्सुतः
द्वैरथो लम्बनो धैर्य्यः कपिलश्च प्रभाकरः। विप्राद्या दधिमुख्यास्तु ब्रह्मरूपं यजन्ति ते
विद्रुमो हेमशैलश्च द्यु तिमान् पुष्पवांस्तथा। कुशेशयो हरिः शैलो वर्षार्थं मन्दराचलः
वेष्टितोऽयं घृतोदेन क्रौञ्चद्वीपेन सोऽप्यथ। क्रौञ्चेश्वराःद्यु तिमतःपुत्रास्तन्नामवर्षकाः
कुशलो मनोनुगश्चोष्णःप्रधानोऽथान्धकारकः। मुनिश्चदुन्दुभिःसप्तसप्तशैलाश्चनिम्नगाः
क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः। देवावृत् पुण्डरीकश्च दुन्दुभिर्द्विगुणो मिथः
द्वीपा द्वीपेषु ये शैला यथा द्वीपानि ते तथा।
पुष्कराः पुष्कला धन्यास्तीर्था विप्रादयो हरिम् ॥ १७ ॥
यजन्ति क्रौञ्चद्वीपस्तु दधिमण्डोदकावृतः। संवृतः शाकद्वीपेन हव्याच्छाकेश्वराःसुताः
जलदश्च कुमारश्च सुकुमारो मणीवकः। कुशोत्तरथो मोदाकी द्रुमस्तन्नामवर्षकाः॥
उदयाख्यो जलधरो रैवतः श्यामकोद्रकौ। आम्बिकेयस्तथारम्यः केशरी सप्त निम्नगाः
मगा मगधमानस्या मन्दगाश्च द्विजातयः। यजन्ति सूर्य्यरूपं तु शाकःक्षीराब्धिना वृतः
पुष्करेणावृतः सोऽपि द्वौपुत्रौ सवनस्य च। महावीतो धातकिश्च वर्षे द्वेनामचिह्निते
एकोऽद्रिर्म्मानसाख्योऽत्र मध्यतो वलयाकृतिः।

योजनानां सहस्राणि विस्तारोच्छ्रायतः समः ॥ २३ ॥
जीवनं दशसाहस्रं सुरैर्ब्रह्माऽत्रपूज्यते । स्वादूदकेनोदधिना वेष्टितो द्वीपमानतः ॥२४ ॥
ऊनातिरिक्तता चापां समुद्रेषु न जायते । उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः
दशोत्तराणि पञ्चैव अङ्गुलानां शतानि वै । अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणांमहामुने !
स्वादूदका बहुगुणा भूर्हैमी जन्तुवर्ज्जिता । लोकालोकस्ततः शैलो योजनायुतविस्तृतः
लोकालोकस्तु तमसावृतोऽथाण्डकटाहतः । भूमिःसाण्डकटाहेनपञ्चाशत्कोटिविस्तरा
इत्यादिमहापुराणे आग्नेये महाद्वीपादिवर्णनं नामैकोनविंशत्यधिकशततमोऽध्यायः ।

---

# विंशत्यधिकशततमोऽध्यायः

## भुवनकोषवर्णनम् ।

### अग्निरुवाच ।

विस्तारस्तु स्मृतो भूमेःसहस्राणिचसप्ततिः । उच्छ्रायोदशसाहस्रं पातालञ्चैकमेककम्
अतलं वितलञ्चैव नितलञ्च गभस्तिमत् । महाख्यं सुतलञ्चाग्र्यंपातालञ्चापिसप्तमम्
कृष्णपीतारुणाः शुक्लशर्कराशैलकाञ्चनाः । भूमयस्तेषु रम्येषु सन्ति दैत्यादयः सुखम् ॥
पातालानामधश्चास्तेशेषोविष्णुश्चतामसः । गुणानन्त्यात्स चानन्तःशिरसाधारयन्महीम्
भुवोऽधो नरका नैके न पतेत्तत्र वैष्णवः । रविणा भासिता पृथ्वीयावत्तावन्नभोमतम्
भूमेर्योजनलक्षन्तु वशिष्ठरविमण्डलम् । रवेर्लक्षेण चन्द्रश्च लक्षान्नाक्षत्रमिन्दुतः ॥
द्विलक्षाद्भाद्बुधश्चास्तेबुधाच्छुक्रो द्विलक्षतः । द्विलक्षेणकुजःशुक्राद्भौमाद्द्विलक्षतोगुरुः
गुरोर्द्विलक्षतः सौरिर्लक्षात्सप्तर्षयः शनेः । लक्षाद्ध्रुवोह्यृषिभ्यस्तुत्रैलोक्यञ्चोच्छ्रयेणच
ध्रुवात्कोट्यामहर्लोकोयत्रतेकल्पवासिनः । जनो द्विकोटितस्तस्माद्यत्रासन्सनकादयः
जनात्तपश्चाष्टकोट्या वैराजा यत्र देवताः । षण्णवत्या तु कोटीनां तापसःसत्यलोककः
अपुनर्म्मारका यत्र ब्रह्मलोको हि स स्मृतः । पादगम्यस्तु भूर्लोकोभुवःसूर्य्यान्तरःस्मृतः

स्वर्गलोको ध्रुवान्तस्तु नियुतानि चतुर्द्दश । एतदण्डकटाहेन वृतोब्रह्माण्डविस्तरः ॥
वारिवन्ह्यनिलाकाशैस्ततो भूतादिना वहिः । कृतं दशगुणैरण्डं भूतादिर्म्महता तथा ॥
दशोत्तराणि शेषाणि एकैकस्मान्महामुने । महान्तश्च समावृत्य प्रधानं समवस्थितम् ॥
अनन्तस्य न तस्यान्तः सङ्ख्यानं नापि विद्यते । हेतुभूतमशेषस्य प्रकृतिःसा पुरा मुने ॥
असङ्ख्यातानि चाण्डानि तत्र जातानि चेदृशाम् ।
दारुण्यग्निर्यथा तैलं तिले तद्वत् पुमानिति ॥ १६ ॥
प्रधाने च स्थितो व्यापी चेतनात्मात्मवेदनः । प्रधानश्च पुमांश्चैव सर्व्वभूतात्मभूतया
विष्णुभक्त्या महाप्राज्ञ वृतौ संश्रयधर्म्मिणौ । तयोःसैव पृथग्भावे कारणं संश्रयस्य च
क्षोभकारणभूतश्च सर्गकाले महामुने । यथा शैत्यं जले वातो विभर्त्ति कणिकागतम्
जगच्छक्तिस्तथा विष्णोः प्रधानप्रतिपादिकाम् ।
विष्णुशक्तिं समासाद्य देवाद्याःसम्भवन्ति हि ॥ २० ॥
स च विष्णुः स्वयं ब्रह्म यतः सर्व्वमिदंजगत् । योजनानांसहस्राणिभास्करस्यरथोनव
ईशादण्डस्तथैवास्य द्विगुणो मुनिसत्तम ! । सार्द्धकोटिस्तथासप्तनियुतान्यधिकानिवै
योजनानान्तु तस्याक्षस्तत्र चक्रंप्रतिष्ठितम् । त्रिनाभिमतिपञ्चारंषण्णेमिद्व्यायनात्मकम्
संवत्सरमयं कृत्स्नं कालचक्रं प्रतिष्ठितम् । चत्वारिंशत्सहस्राणिद्वितीयाक्षोविवस्वतः
पञ्चान्यानि तु सार्द्धानि स्यन्दनस्य महामते । अक्षप्रमाणमुभयोःप्रमाणन्तद्युगार्द्धयोः
ह्रस्वोऽक्षस्तद्युगार्द्धश्च ध्रुवाधारं रथस्यवै । हयाश्च सप्त छन्दांसि गायत्र्यादीनिसुव्रत
उदयास्तमनं ज्ञेयं दर्शनादर्शनं रवेः । यावन्मात्रप्रदेशे तु वशिष्ठोऽवस्थितो ध्रुवः ॥
स्वयमायाति तावत्तु भूमेराभूतसंप्लवे । ऊर्द्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः
एतद्विष्णुपदं दिव्यं तृतीयं व्योम्निभास्वरम् । निर्द्धूतदोषपङ्कानांयतीनांस्थानमुत्तमम्
ततो गङ्गा प्रभवति स्मरणात् पापनाशनी । दिवि रूपं हरेर्ज्ञेयं शिशुमाराकृति प्रभो !
स्थितः पुच्छे ध्रुवस्तत्र भ्रमन् भ्रामयति ग्रहान् ।
स रथोऽधिष्ठितो देवैरादित्यैर्ऋषिभिर्वरैः ॥ ३१ ॥
गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः । हिमोष्णवारिवर्षाणां कारणं भगवान् रविः

ऋग्वेदादिमयो विष्णुः स शुभाशुभकारणम् । रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः
वामदक्षिणतो युक्ता दश तेन चरत्यसौ । त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च ॥
त्रयस्त्रिंशत्तथा देवाः पिवन्ति क्षणदाकरं । एकां कलाञ्च पितर एकामारश्मिसंस्थिताः
वाय्वग्निद्रव्यसम्भूतो रथश्चन्द्रसुतस्य च । अष्टाभिस्तुरगैर्युक्तो बुधस्तेन चरत्यपि ॥
शुक्रस्यापि रथोऽष्टाश्वो भौमस्यापि रथस्तथा । बृहस्पतेरथोऽष्टाश्वः शनेरष्टाश्वकोरथः
स्वर्भानोश्चरथोऽष्टाश्वः केतोश्चाष्टाश्वकोरथः । यद्यद्वैष्णवः कायस्ततो विप्र ! वसुन्धरा
पद्माकारा समुद्भूता पर्वताद्यादिसंयुता । ज्योतिर्भुवननद्यद्रिसमुद्रवनकं हरिः ॥३६ ॥
यदस्तिनास्ति तद्विष्णुर्विष्णुज्ञानविजृम्भितम् । न विज्ञानमृते किञ्चिज्ज्ञानं विष्णुः परम्पदं

तत् कुर्य्याद् येन विष्णुः स्यात् सत्यं ज्ञानमनन्तकम् ।
पठेद् भुवनकोषं हि यः सोऽवाप्तसुखात्मभाक् ॥ ४१ ॥
ज्योतिःशास्त्रादिविद्याश्च शुभाशुभाधिपो हरिः ।

इत्यादि महापुराणे आग्नेये भुवनकोषवर्णनं नाम विंशाधिकशततमोऽध्यायः ।

---

# एकविंशाधिकशततमोऽध्यायः

## ज्योतिःशास्त्रवर्णनम् ।

अग्निरुवाच ।

ज्योतिःशास्त्रं प्रवक्ष्यामि शुभाशुभविवेकदम् ।
चातुर्लक्षस्य सारं यत् तज्ज्ञात्वासर्वविद्भवेत् ॥ १

षड़ष्टके विवाहो न न च द्विद्वादशे स्त्रियाः । न त्रिकोणे ह्यथ प्रीतिः शेषे च समसप्तके
द्विद्वादशे त्रिकोणे च मैत्रीक्षेत्रपयोर्यदि । भवेदेकाधिपत्यञ्च ताराप्रीतिरथापि वा ॥
तथापि कार्य्यः संयोगो नतुषट्काष्टकेपुनः । जीवे भृगौ चास्तमितेम्रियतेचपुमान्स्त्रिया
गुरुक्षेत्रगते सूर्य्ये सूर्य्यक्षेत्रगते गुरौ । विवाहं न प्रशंसन्ति कन्यावैधव्यकृद्भवेत् ॥

अतिचारे त्रिपक्षं स्याद्वक्रे मासचतुष्टयम्। व्रतोद्वाहौ न कुर्व्वीत गुरोर्वक्रातिचारयोः
चैत्रे पौषे न रिक्तासु हरौ सुप्ते कुजे रवौ। चन्द्रक्षयेचाशुभंस्यात्सन्ध्याकालःशुभावहः
रोहिणी चोत्तरा मूलं स्वाती हस्तोऽथ रेवती। तुलेनमिथुनेशस्तोविवाहःपरिकीर्त्तितः
विवाहे कर्णवेधे च व्रते पुंसवने तथा। प्राशने चाद्यचूड़ायां विद्धर्क्षञ्च विवर्ज्जयेत्॥
श्रवणे मूलपुष्ये च सूर्य्यमङ्गलजीवके। कुम्भे सिंहे च मिथुने कर्म्म पुंसवनं स्मृतम्॥
हस्ते मूले मृगे पौष्णे बुधे शुक्रे च निष्कृतिः। अर्केन्दुजीवभृगुजे मूले ताम्बूलभक्षणम्
अन्नस्य प्राशनं शुक्रे जीवे मृगे च मीनके। हस्तादिपञ्चके पुष्ये कृत्तिकादित्रये तथा
अश्विन्यामथ रेवत्यां नवान्नफलभक्षणम्। पुष्योहस्ततथाज्येष्ठारोहिणीश्रवणाश्विनौ
स्वातिसौम्ये च भैषज्यं कुर्य्यादन्यत्र वर्जयेत्। पूर्वात्रयं मघायाम्यं पावनं श्रवणत्रयम्

भौमादित्यशनेर्वारे स्नातव्यं रोगमुक्तितः।
पार्थिवे चाष्टह्रींकारं मध्ये नाम च दिक्षु च॥ १५॥

ह्रीं पुटं पार्थिवे दिक्षु ह्रीं विदिक्षु लिखेद्वसून्। गोरोचनाकुङ्कुमेन भूर्जे वस्त्रे गले धृतम्
शत्रवोवशमायान्ति मन्त्रेणानेननिश्चितम्। श्रीं ह्रीं सम्पुटं नाम श्रीं ह्रीं पत्राष्टकेक्रमात्
गोरोचनाकुङ्कुमेन भूर्जेऽथ सुभगावृते। गोमध्यवागमः पत्रे हरिद्राया रसेन च॥१८॥

शिलापट्टेऽरीन् स्तम्भयति भूमावधोमुखीकृतम्।
ओं ह्रूं सः सम्पुटन्नाम ओं ह्रूं सः पत्राष्टके क्रमात्॥ १९॥

गोरोचनाकुङ्कुमेन भूर्जे मृत्युनिवारणम्। एकपञ्चनवप्रीत्यै द्विषट्द्वादशयोगकाः॥२०॥
त्रिसप्तैकादशे लाभो वेदाष्टद्वादशे रिपुः। तनुर्धनञ्च सहजः सुहृत् सुतो रिपुस्तथा॥
जाया निधनधर्म्मौ च कर्म्मायव्ययकं क्रमात्। स्फुटं मेषादिलग्नेषु नवताराबलं वदेत्
जन्म सम्पद्विपत् क्षेमं प्रत्यरिः साधकः क्रमात्। निधनं मित्रपरममित्रं ताराबलं विदुः
वारे ज्ञगुरुशुक्राणां सूर्य्यचन्द्रमसोस्तथा। माघादिमासषट्के तु क्षौरमाद्यं प्रशस्यते॥
कर्णवेधो बुधे जीवे पुष्ये श्रवणचित्रयोः। पञ्चमेऽब्दे चाध्ययनं षष्ठीं प्रतिपदन्त्यजेत्
रिक्तां पञ्चदशीं भौमंप्राच्यं वाणीं हरिंश्रियम्। माघादिमासषट्के तु मेखलाबन्धनंशुभम्
चूड़ाकरणकाद्यञ्च श्रावणादौ न शस्यते। अस्तं याते गुरौ शुक्रे क्षीणे च शशलाञ्छने

उपनीतस्य विप्रस्य मृत्युं जाड्यं विनिर्दिशेत्। क्षौरर्क्षे शुभवारे च समावर्तनमिष्यते
शुभक्षेत्रे विलग्नेषु शुभयुक्तेक्षितेषु च। अश्विनीमघाचित्रासु स्वातीयाम्योत्तरासु च
पुनर्वसौ तथा पुष्ये धनुर्वेदः प्रशस्यते। भरण्यार्द्रा मघाश्लेषा वह्निभगर्क्षयोस्तथा॥
जिजीविषुर्न्न कुर्वीत वस्त्रप्रावरणं नरः। गुरौ शुक्रे बुधे वस्त्रं विवाहादौ न भादिकम्
रेवत्यश्विधनिष्ठासु हस्तादिषु च पञ्चसु। शङ्खविद्रुमरत्नानां परिधानं प्रशस्यते॥३२॥
याम्यसर्पधनिष्ठासु त्रिषु पूर्वेषु वारुणे। क्रीतं हानिकरं द्रव्यं विक्रीतं लाभकृद्भवेत्॥
अश्विनीस्वातिचित्रासु रेवत्यां वारुणे हरौ। क्रीतं लाभकरं द्रव्यं विक्रीतं हानिकृद्भवेत्
भरणीत्रीणिपूर्वाणि आर्द्राश्लेषामघानिलाः। वह्निज्येष्ठाविशाखासुस्वामिनोनोपतिष्ठते
द्रव्यं दत्तं प्रयुक्तं वा यत्र निक्षिप्यते धनम्। उत्तरे श्रवणे शाक्रे कुर्याद्राजाभिषेचनम्
चैत्रं ज्येष्ठं तथा भाद्रमाश्विनं पौषमेव च। माघं चैव परित्यज्य शेषमासे गृहं शुभम्
अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम्। स्वाती हस्तानुराधा च गृहारम्भे प्रशस्यते

आदित्यभौमवर्जन्तु वापीप्रासादके तथा।
सिंहराशिगते जीवे गुर्वादित्ये मलिम्लुचे॥ ३६॥

बाले वृद्धेऽस्तगे शुक्रे गृहकर्म्म विवर्जयेत्। अग्निदाहो भयं रोगो राजपीड़ा धनक्षतिः
सङ्ग्रहे तृणकाष्ठानां कृते श्रवणपञ्चके। गृहप्रवेशनं कुर्य्याद्धनिष्ठोत्तरवारुणे॥ ४१॥
नौकाया घटने द्वित्रिपञ्चसप्तत्रयोदशी। नृपदर्शो धनिष्ठासु हस्तापौष्णाश्विनीषु च॥
पूर्वात्रयन्धनिष्ठार्द्रावह्निःसौम्यविशाखयोः। अश्लेषाचाश्विनीचैवयात्रासिद्धिस्तुसम्पदा

त्रिषूत्तरेषु रोहिण्यां सिनीवाली चतुर्द्दशी।
श्रवणा चैव हस्ता च चित्रा च वैष्णवी तथा॥ ४४॥

गोष्ठयात्रां न कुर्वीत प्रवेशं नैव कारयेत्। अनिलोत्तररोहिण्यां मृगमूलपुनर्वसौ॥४५॥
पुष्यश्रवणहस्तेषु कृषिकर्म्म समाचरेत्। पुनर्वसूत्तरास्वातीभगमूलेन्द्रवारुणे॥ ४६॥
गुरोः शुक्रस्य वारे वा वारे च सोमभास्वतोः। वृषलग्ने च कर्त्तव्यङ्कन्यायां मिथुनेतथा
द्विपञ्च दशमी सप्त तृतीया च त्रयोदशी। रेवतीरोहिणीन्द्राग्निहस्तमैत्रोत्तरेषु च॥
मन्दारवर्ज्जं वीजानि वापयेत् सम्पदर्थ्यपि। रेवतीहस्तमूलेषु श्रवणे भगमैत्रयोः॥४९॥

१७—

पितृदैवे तथा सौम्ये धान्यच्छेदं मृगोदये । हस्तचित्रादितिस्वातौ रैवत्यां श्रवणत्रये

स्थिरे लग्ने गुरोर्वारे अथ भार्गवसौम्ययोः ।
याम्यादितिमघाज्येष्ठासूत्तरेषु प्रवेशयेत् ॥ ५१ ॥
ओं धनदाय सर्व्वधनेशाय देहि मे धनं स्वाहा ।

ओं नवे वर्षे इलादेवि ! लोकसंवर्द्धनि ! कामरूपिणि ! देहि मे धनं स्वाहा ॥

पत्रस्थं लिखितं धान्यराशिस्थं धान्यवर्द्धनम् ।
त्रिपूर्वासु विशाखायां धनिष्ठावारुणेऽपि च ॥ ५२ ॥

एतेषु षट्सु विज्ञेयं धान्यनिष्क्रमणं बुधैः । देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ ॥
मिथुनस्थे रवौ दर्शाद्यदि स्याद् द्वादशी तिथिः । सदातत्रैव कर्त्तव्यंशयनं चक्रपाणिनः
सिंहतौलिङ्गते चार्के दर्शाद्द्वादशीद्वयम् । आदाविन्द्रसमुत्थानं प्रबोधश्च हरेः क्रमात्
तथा कन्यागते भानौ दुर्गोत्थाने तथाष्टमी । त्रिपादेषु च ऋक्षेषु यदाभद्रातिथिर्भवेत्
भौमादित्यशनैश्चारि विज्ञेयं तत् त्रिपुष्करम् । सर्वकर्म्मण्युपादेया विशुद्धिश्चन्द्रतारयोः
जन्माश्रितस्त्रिषष्ठश्च सप्तमो दशमस्तथा । एकादशः शशीयेषान्तेषामेव शुभं वदेत् ॥
शुक्लपक्षे द्वितीयश्च पञ्चमो नवमः शुभः। मित्रातिमित्रसाधकसम्पत्क्षेमादितारकाः ॥५६॥
जन्मना मृत्युमाप्नोति विपदा धनसङ्क्षयम् । प्रत्यरौमरणंविद्यान्निधनेयातिपञ्चताम्
कृष्णाष्टमीदिनादूर्द्ध्वंयावच्छुक्लाष्टमीदिनम् । तावत्कालंशशीक्षीणःपूर्णस्तत्रोपरिस्मृतः
वृषे च मिथुने भानौ जीवे चन्द्रेन्द्रदैवते । पौर्णमासी गुरोर्वारे महाज्यैष्ठी प्रकीर्त्तिता
ऐन्द्रे गुरुः शशी चैवप्राजापत्येरविस्तथा । पूर्णिमाज्यैष्ठमासस्यमहाज्यैष्ठी प्रकीर्त्तिता

स्वात्यन्तरे यन्त्रनिष्ठे शक्रस्योत्थापयेद् ध्वजम् ।
हर्य्यृक्षपादे चाश्विन्यां सप्ताहान्ते विसर्जयेत् ॥ ६४ ॥

सर्वं हेमसमन्दानं सर्वे ब्रह्मसमा द्विजाः । सर्वं गङ्गासमन्तोयं राहुग्रस्ते दिवाकरे ॥

ध्वाङ्क्षी महोदरी घोरा मन्दा मन्दाकिनी द्विजाः ।
राक्षसी च क्रमेणार्कात्सङ्क्रान्तिर्नामभिः स्मृता ॥ ६६ ॥

वालत्रे कौलवे नागे तैतिले करणे यदि। उत्तिष्ठन् सङ्क्रमत्यर्कस्तदा लोकःसुखीभवेत्

गरे ववे वणिग्विष्टौ किन्तुघ्ने शकुनौ व्रजेत् ।
राज्ञो दोषेण लोकोऽयमपीड्यते सम्पदा समम् ॥ ६८ ॥
चतुष्पाद्विष्टिवाणिज्येशयितःसङ्क्रमेद्रविः । दुर्भिक्षं राजसंग्रामोदम्पत्योःसंशयोभवेत्
आघाने जन्मनक्षत्रे व्याधौ क्लेशादिकं भवेत् । कृत्तिकायान्नवदिनन्त्रिरात्रंरोहिणीषुच
मृगशिरःपञ्चरात्रं आर्द्रासु प्राणनाशनम् । पुनर्वसौ च पुष्ये च सप्तरात्रं विधीयते ॥
नवरात्रं तथाश्लेषा श्मशानान्तं मघासुच । द्वौ मासौपूर्वफाल्गुन्यामुत्तरासुत्रिपञ्चकम्

हस्ते तु दृश्यते चित्रा अर्द्धमासन्तु पीड़नम् ।
मासद्वयन्तथा स्वातिर्विशाखा विंशतिर्दिनम् ॥ ७३ ॥

मैत्रे चैव दशाहानि ज्येष्ठास्वेवार्द्धमासकम् । मूले न जायतेमोक्षःपूर्वाषाढ़ात्रिपञ्चकम्
उत्तरा दिनविंशत्या द्वौ मासौ श्रवणेन च । धनिष्ठा चार्द्धमासञ्च वारुणे च दशाहकम्
न च भाद्रपदे मोक्ष उत्तरासु त्रिपञ्चकम् । रेवती दशरात्रञ्च अहोरात्रन्तथाश्विनी ॥

भरण्यां प्राणहानिः स्याद् गायत्रीहोमतः शुभम् ।
पञ्चधान्यतिलाज्याद्यैर्धेनुदानं द्विजे शमम् ॥ ७७ ॥

दशा सूर्य्यस्य षष्ठाब्दा इन्दोः पञ्चदशैव तु । अष्टौ वर्षाणि भौमस्य दशसप्तदशा बुधे
दशाब्दानि दशा पङ्गोरूनविंशद्गुरोर्द्दशा । राहोर्द्वादशवर्षाणि भार्गवस्यैकविंशतिः ॥
इत्यादि महापुराणे आग्नेये ज्योतिःशास्त्रकथनं नामैकविंशत्यधिकशततमोऽध्यायः ।

---

# द्वाविंशत्यधिकशततमोऽध्यायः

## कालगणनवर्णनम् ।

### अग्निरुवाच ।

कालः समागणो वक्ष्येगणितंकालबुद्धये । कालःसमागणोऽर्कघ्नोमासैश्चैत्रादिभिर्युतः
द्विघ्नो द्विष्ठःसवेदःस्यात् पञ्चाङ्गाष्ट्युतोगुणः । त्रिष्ठो मध्यो वसुगुणःपुनर्वेदगुणश्चसः
अष्टरन्ध्राग्निहीनः स्यादधः सैकरसाष्टकैः । मध्यो हीनः षष्टिहतो लब्धयुक्तस्तथोपरि
न्यूनः सप्तकृतो वारस्तदधस्तिथिनाडयः । सगुणो द्विगुणश्चोर्द्ध्वं त्रिभिरूनोगुणःपुनः

अधः खरामसंयुक्तो रसार्क्काष्टफलैर्युतः । अष्टाविंशच्छेषपिण्डस्तिथिनाड्या अधःस्थितः
गुणस्तिसृभिरूनोद्र्ध्वं द्वाभ्यां च गुणयेत् पुनः। मध्येरुद्रगुणःकार्यो ह्यधःसैकोनवाग्निभिः
लब्धहीनोभवेन्मध्योद्वाविंशतिविवर्ज्जितः । षष्टिशेषे ऋणं ज्ञेयं लब्धमूद्र्ध्वं विनिक्षिपेत्
सप्तविंशतिशेषस्तुध्रुवो नक्षत्रयोगयोः । मासिमासिक्षिपेद्वारंद्वात्रिंशद्धटिकास्थितौ
द्वे पिण्डे द्वे च नक्षत्रे नाड्य एकादशाहृणे । वारस्थानेतिथिन्दद्यात् सप्तभिर्भागमाहरेत्
शेषवाराश्च सूर्य्याद्या घटिकासु च पातयेत् । पिण्डकेषु तिथिन्दद्याद्धरेच्चै वचतुर्द्दश ।
ऋणं धनं धनमृणं क्रमाज् ज्ञेयं चतुर्द्दशे । प्रथमे त्रयोदशे पञ्च द्वितीयद्वादशे दश ॥११॥
पञ्चदशस्तृतीये च तथाचैकादशे स्मृतम् । चतुर्थे दशमे चैव भवेदेकोनविंशतिः ॥१२॥
पञ्चमे नवमे चैव द्वाविंशतिरुदाहृताः । षष्ठाष्टमे त्वखण्डाः स्युश्चतुर्विंशतिरेव च ॥१३॥
सप्तमे पञ्चविंशः स्यात्खण्डशःपिण्डिकाद्भवेत् । कर्कटादौहरेद्राशिमृतुवेदत्रयैःक्रमात्
तुलादौ प्रातिलोम्येन त्रयो वेदरसाः क्रमात् । मकरादौ दीयते च रसवेदत्रयः क्रमात्
मेषादौ प्रातिलोम्येन त्रयो वेदरसाः क्रमात् । खेषवः खयुगा मैत्रं मेषादौ विकलाधनम्
कर्कटे प्रातिलोम्यं स्याद्वृणमेतत् तुलादिके । चतुर्गुणा तिथिर्ज्ञेया विकलाश्चेह सर्वदा ॥
हत्वा ह्लिप्तागतागामिपिण्डसङ्ख्याफलान्तरैः । षष्ट्याप्तं प्रथमोच्चार्ये हानौदेयन्धनेधनम्
द्वितीयोच्चरिते वर्गेवैपरीत्यमितिस्थितिः । तिथिर्द्विगुणिताकार्य्याषड्भागपरिवर्ज्जिता
रविकर्म्मविपरीता तिथिनाड़ीसमायुता । ऋणे शुद्धे तु नाड्यः स्युर्ऋणंशुध्येत नोयदा
सषष्टिकंप्रदेयन्तत् षष्ट्याधिक्येचतत्त्यजेत् । नक्षत्रंतिथिमिश्रंस्याच्चतुर्भिर्गुणितातिथिः
तिथिस्त्रिभागसंयुक्ताऋणेन च तथान्विता । तिथिरत्रचिताकार्य्यातद्वेदाद्योगशोधनम्
रविचन्द्रौ समौ कृत्वायोगो भवतिनिश्चलः । एकोनातिथिर्द्विगुणासप्तभिन्नाकृतिर्द्विधा
तिथिश्च द्विगुणैकोना कृताङ्गैःकरणन्निशि । कृष्णचतुर्द्दश्यन्तेशकुनिःपर्वणिहचतुष्पदम्
प्रथमे तिथ्यर्द्धतो हि किन्तुघ्नं प्रतिपन्मुखे ।

इत्यादि महापुराणे आग्नेये कालगणकथनं नाम द्वाविंशत्यधिकशततमोऽध्यायः ।

---

# त्रयोविंशत्यधिकशततमोऽध्यायः

## युद्धजयार्णवीयनानायोगाः ।

अग्निरुवाच ।

वक्ष्ये जयशुभाद्यर्थं सारं युद्धजयार्णवे । अइउएओ स्वराः स्युः क्रमान्नन्दादिका तिथिः
कादिहान्ता भौमरवी ज्ञसोमौ गुरुभार्गवौ ।
शनिर्द्दक्षिणनाड्यान्तु भौमार्कशनयः परे ॥ २
खार्णवः खरसैगुण्यो रुद्रैर्भागं समाहरेत् । रसाहतन्तु तत् कृत्वा पूर्वभागेन भाजयेत्
वह्निभिश्चाहतं कृत्वा रूपन्तत्रैव निक्षिपेत् । स्पन्दनं नाड्याः पलानि सप्राणस्पन्दनंपुनः
अनेनैव तु मानेन उदयन्ति दिने दिने । स्फुरणैस्त्रिभिरुछ्वास उछ्वासैस्तु पलंस्मृतम् ॥
षष्टिभिश्च पलैर्लिप्ता लिप्ताषष्टिस्त्वहर्निशम् । पञ्चमार्द्धोदये बालकुमारयुववृद्धकाः ॥
मृत्युर्येनोदयस्तेन चास्तमेकादशांशकैः । कुलागमे भवेद्भङ्गः समृत्युः पञ्चमोऽपिवा ॥

स्वरोदयश्चक्रम् ।

शनिचक्रे चार्द्धमासङ्ग्रहाणामुदयः क्रमात् । विभागैः पञ्चदशभिः शनिभागस्तुमृत्युदः

शनिचक्रम् ।

दशकोटिसहस्राणि अर्बुदान्यर्बुदं हरेत् । त्रयोदशे च लक्षाणि प्रमाणं कूर्म्मरूपिणः ॥
मघादौ कृतिकाद्यन्तस्तद्देशान्तः शनिस्थितौ ॥ ६ ॥

कूर्म्मचक्रम् ॥

राहुचक्रे च सप्तोद्ध्वर्वमधःसप्त च संलिखेत् । वाय्वग्नयोश्चैवनैर्ऋत्ये पूर्णिमाग्नेयभागतः
अमावास्यां वायवे च राहुर्वै तिथिरूपकः । रकारं दक्षभागेतु हकारं वायवे लिखेत् ॥
प्रतिपदादौ ककारादीन् सकारं नैर्ऋते पुनः ।
राहोर्मुखे तु भङ्गः स्यादिति राहुरुदाहृतः । विष्टिरग्नौ पौर्णमास्यां कराणीन्द्रेतृतीयकम्
घोरा यास्यान्तु सप्तम्यां दशम्यां रौद्रसौम्यगा । चतुर्दश्यान्तुवायव्येचतुर्थ्यांवरुणाश्रये
शुक्लाष्टम्यां दक्षिणे च एकादश्यां भृशन्त्यजेत् । रौद्रश्चैव तथा श्वेतो मैत्रःसारभटस्तथा

सावित्रो विरोचनश्च जयदेवोऽभिजित्तथा । रावणो विजयश्चैव नन्दी वरुण एव च ॥
यमसौम्यौ भवश्चान्ते दशपञ्चमुहूर्त्तकाः । रौद्रे रौद्राणि कुर्वीतश्वेते स्नानादिकं चरेत्
मैत्रे कन्याविवाहादि शुभं सारभटे चरेत् । सावित्रे स्थापनाद्यं वा विरोचनेनृपक्रिया
जयदेवे जयं कुर्य्याद् रावणे रणकर्म्म च । विजये कृषिवाणिज्यं पट्टबन्धं च नन्दिनि ॥
वरुणे च तड़ागादि नाशकर्म्म यमे चरेत् । सौम्ये सौम्यादि कुर्वीत भवेल्लग्नमहर्द्दिवा ॥
योगानाम्नाविरुद्धाःस्युर्योगानाम्नैवशोभनाः । राहुरिन्द्रात्समीरञ्चवायोर्द्दक्षंयमाच्छिवम्
शिवादाप्यञ्जलादग्निरग्नेः सौम्यन्ततस्त्रयम् । ततश्च सङ्क्रमं हन्ति चतस्रोघटिकाभ्रमन्

राहुचक्रम् ।

चण्डीन्द्राणीवाराहीचमुशलीगिरिकर्णिका । बलाचातिबलाक्षीरीमल्लिकाजातियूथिका
यथालाभं धारयेत्ताः श्वेत्तार्कश्च शतावरी । गुड़ूची वागुरी दिव्याओषध्योधारिताजये

ओं नमो भैरवाय खड्गपरशुहस्ताय ओं ह्रूं विघ्नविनाशाय ओं ह्रूं फट् ।

अनेनैव तु मन्त्रेण शिखाबन्धादिकृज्जये । तिलकश्चाञ्जनञ्चैव धूपलेपनमेव च ॥ २५ ॥
स्नानपानानि तैलानि योगधूलिमतः श्रृणु ।
शुभगा मनः शिला तालं लाक्षारससमन्वितम् ॥ २६ ॥
तरुणीक्षीरसंयुक्तो ललाटे तिलको वशे । विष्णुक्रान्ता च सर्पाक्षी सहदेवश्च रोचना
अजादुग्धेन संपिष्टं तिलकोवश्यकारकः ! प्रियङ्गुकुङ्कुमं कुष्टं मोहनी तगरं घृतम् ॥२८॥
तिलको वश्यकृत्तच्च रोचना रक्तचन्दनम् । निशा मनःशिला तालं प्रियङ्गुसर्षपास्तथा ॥
मोहिनी हरिता कान्ता सहदेवी शिखा तथा । मातुलुङ्गरसै पिष्टं ललाटे तिलको वशे
सेन्द्राः सुरा वशं यान्ति किं पुनः क्षुद्रमानुषाः ।
मञ्जिष्ठा चन्दनं रक्तं कटुकन्दा विलासिनी ॥ ३१ ॥
पुनर्नवासमायुक्तो लेपोऽयं भास्करो वशे । चन्दनं नागपुष्पञ्च मञ्जिष्ठा तगरं वचा ॥
लोध्रप्रियङ्गुरजनीमाशीतैलं वशङ्करम् ।

इत्यादि महापुराणे आग्नेये युद्धजयार्णवीयनानायोगवर्णनं नाम
त्रयोविंशत्यधिकशततमोऽध्यायः ।

# चतुर्विंशत्यधिकशततमोऽध्यायः

## युद्धजयार्णवीयज्योतिःशास्त्रसारः ।

अग्निरुवाच ।

ज्योतिःशास्त्रादिसारञ्च वक्ष्ये युद्धजयार्णवे ।
विना मन्त्रौषधाद्यञ्च यथोमामीश्वरोऽब्रवीत् ॥ १ ॥

देव्युवाच ।

देवैर्जिता दानवाश्च येनोपायेन तद्वद । शुभाशुभविवेकाद्यं ज्ञानं युद्धजयार्णवम् ॥ २ ॥

ईश्वर उवाच ।

मूलदेवेच्छया जाता शक्तिः पञ्चादशाक्षरा ।
चराचरं ततो जातं यामाराध्याखिलार्थवित् ॥ ३ ॥

मन्त्रपीठं प्रवक्ष्यामि पञ्चमन्त्रसमुद्भवम् । ते मन्त्राः सर्वमन्त्राणां जीविते मरणे स्थिताः

ऋग्यजुः सामाथर्वाख्यवेदमन्त्राः क्रमेण ते ।
सद्योजातादयो मन्त्रा ब्रह्मा विष्णुश्च रुद्रकः ॥ ५ ॥
ईशः सप्तशिखा देवाः शक्राद्याः पञ्च च स्वराः ।
अइउएओ कलाश्च मूलं ब्रह्मेति कीर्त्तितम् ॥ ६ ॥

काष्ठमध्ये यथा वह्निरप्रवृद्धो न दृश्यते । विद्यमाना तथा देहे शिवशक्तिर्न दृश्यते ॥७॥
आदौ शक्तिः समुत्पन्ना ओङ्कारस्वरभूषिता । ततो विन्दुर्महादेवि ! एकारेणव्यवस्थितः
जातो नाद उकारस्तु नदते हृदि संस्थितः । अर्द्धचन्द्र इकारस्तु मोक्षमार्गस्य बोधकः ॥
अकारो व्यक्त उत्पन्नो भोगमोक्षप्रदः परः । अकार ऐश्वरै भूमिर्निवृत्तिश्च कला स्मृता

गन्धोनवीजः प्राणाख्य इडाशक्तिः स्थिरा स्मृता ।
इकारश्च प्रतिष्ठाख्यो रसो पालश्च पिङ्गला ॥ ११ ॥
क्रूरा शक्तिरीवीजः स्याद्धरवीजोऽग्निरूपवान् ।

विद्या समाना गान्धारी शक्तिश्च दहनी स्मृता ॥ १२ ॥
प्रशान्तिर्वार्य्युपस्पर्शोयश्चोदानश्चलाक्रिया । ओङ्कारःशान्त्यतीताख्यःखशब्दयूथपाणिनः
पञ्च वर्गा स्वराः जाताः कुजज्ञगुरुभार्गवाः ।
शनिः क्रमादकाराद्याः ककाराद्यास्त्वधः स्थिताः ॥ १४ ॥
एतन्मूलमतः सर्वं ज्ञायते सचराचरम् । विद्यापीठं प्रवक्ष्यामि प्रणवः शिव ईरितः ॥
उमा सोमःस्वयं शक्तिर्वामा ज्येष्ठा च रौद्र्यपि ।
ब्रह्मा विष्णुः क्रमाद्रुद्रो गुणाः सर्गादयस्त्रयः ॥ १६ ॥
रत्नाड़ीत्रयश्चैव स्थूलः सूक्ष्मः परोऽपरः । चिन्तयेच्छ्वेतवर्णन्तं मुञ्चमानं परामृतम् ॥
प्लाव्यमानं यथात्मानं चिन्तयेत्तं दिवानिशम् । अजरत्वं भवेद्देवि ! शिवत्वमुपगच्छति
अङ्गुष्ठादौ न्यसेदङ्गान्नेत्रं मध्येऽथ देहके । मृत्युञ्जयं ततः प्राच्यं रणादौ विजयो भवेत्
शून्यो निरालयः शब्दः स्पर्शं तिर्यङ्नतं स्पृशेत् ।
रूपस्योर्द्धगतिः प्रोक्ता जलस्याधः समाश्रिता ॥ २० ॥
सर्वस्थानविनिर्मुक्तो गन्धो मध्ये च मूलकम् । नाभिमूलेस्थितंकन्दंशिवरूपन्तु मण्डितम्
शक्तिव्यूहेन सोमोऽर्कौ हरिस्तत्र व्यवस्थितः । दशवायुसमोपेतं पञ्चतन्मात्रमण्डितम् ॥
कालानलसमाकारं प्रस्फुरन्तं शिवात्मकम् । तज्जीवं जीवलोकस्य स्थावरस्य चरस्य च
तस्मिन्नष्टे मृतं मन्ये मन्त्रपीठेऽनिलात्मकम् ।

इत्यादि महापुराणे आग्नेये युद्धजयार्णवीयज्योतिःशास्त्रसारकथनं नाम चतुर्विंशत्यधिकशततमोऽध्यायः ।

# पञ्चविंशत्यधिकशततमोऽध्यायः

## युद्धजयार्णवीयनानाचक्राणि ।

ईश्वर उवाच ।

ओं ह्रीं कर्णमोटनि वहुरूपे बहुदंष्ट्रे हूं फट् ओं हः ओं ग्रस ग्रस कृन्त कृन्त छक छकूं ह्र फट् नमः ।

पठ्यमानो ह्ययं मन्त्रः क्रुद्धः संरक्तलोचनः । मारणे पातने वापि मोहनोच्चाटने भवेत् ॥
कर्णमोटी महाविद्या सर्ववर्णेषु रक्षिका ।
नानाविद्या ।
पञ्चोदयं प्रवक्ष्यामि स्वरोदसमाश्रितम् ॥ २ ॥
नाभिहृद्यन्तरं यावत्तावच्चरति मारुतः । उच्चाटयेद्रणादौ तु कर्णाक्षीणि प्रभेदयेत् ॥३॥
करोति साधकः क्रुद्धो जपहोमपरायणः । हृदयात्पायुकं कण्ठं ज्वरदाहारिमारणे ॥४॥
कण्ठोद्भवो रसो वायुः शान्तिकं पौष्टिकं रसम् ।
दिव्यं स्तम्भं समाकर्षं गन्धो नासान्तिको ध्रुवः ॥ ५ ॥
गन्धलीनं मनः कृत्वा स्तम्भयेन्नात्र संशयः । स्तम्भनं कीलनाद्यञ्च करोत्येवहिसाधकः
चण्डघण्टा कराली च सुमुखी दुर्मुखी तथा । रेवती प्रथमा घोरा वायुचक्रेषुता यजेत्
उच्चाटकारिका देव्यः स्थितास्तेजसि संस्थिताः ।
सौम्या च भीषणी देवी जया च विजया तथा ॥ ८ ॥
अजिता चापराजिता महाकोटी च रौद्रया ।
शुष्ककाया प्राणहरा रसचक्रे स्थिता अमूः ॥ ६ ॥
विरूपाक्षी परा दिव्यास्तथा चाकाशमातरः । संहारी जातहारी च दंष्ट्राला शुष्करेवती ॥
पिपीलिका पुष्टिहरा महापुष्टिप्रवर्द्धना । भद्रकाली सुभद्रा च भद्रभीमा सुभद्रिका ॥
स्थिरा च निष्ठुरा दिव्या निष्कम्पा गदिनी तथा ।
द्वात्रिंशन्मातरश्चक्रे अष्टाष्टक्रमशः स्थिताः ॥ १२ ॥
एक एव रविश्चन्द्र एकश्चैकैकशक्तिका । भूतभेदेन तीर्थानि यथा तोयं महीतले ॥१३॥
प्राण एको मण्डलैश्च भिद्यते भूतपञ्जरे । वामदक्षिणयोगेन दशधा सम्प्रवर्त्तते ॥ १४ ॥
विन्दुमुण्डविचित्रश्च तत्त्ववस्त्रेण वेष्टितम् । ब्रह्माण्डेन कपालेन पिबेत परमामृतम् ॥
पञ्चवर्गबलाद्युद्धे जयो भवति तत् शृणु । अआकचटतपयाः श आद्यो वर्ग ईरितः॥१६॥
इईखछठथफराः षो वर्गश्च द्वितीयकः । उऊगजडदबलाः सो वर्गश्च तृतीयकः ॥ १७ ॥
एऐघझढधभवा हो वर्गश्च चतुर्थकः । ओ औ अं अः ङञणनमा मो वर्गः पञ्चमो भवेत्

वर्णाश्चाभ्युदये नृणां चत्वारिंशच्च पञ्च च ।
बालः कुमारो युवा स्याद् वृद्धो मृत्युश्च नामतः ॥ १९ ॥
आत्मपीड़ा शोषकः स्यादुदासीनश्च कालकः ।
कृत्तिका प्रतिपद् भौम आत्मनो लाभदः स्मृतः ॥ २० ॥

षष्ठींभौमोमघापीड़ा आर्द्रा चैकादशीकुजः । मृत्युर्मघाद्वितीया ज्ञो लाभश्चार्द्राचसप्तमी बुधे हानिर्भरणी ज्ञः श्रवणं काल ईदृशः । जीवो लाभाय च भवेत् तृतीया पूर्वफल्गुनी जीवोऽष्टमीधनिष्ठार्द्राजीवोऽश्लेषात्रयोदशी । मृत्यौशुक्रश्चतुर्थीस्यात् पूर्वभाद्रपदाप्रिये पूर्वाषाढ़ा च नवमी शुक्रःपीड़ाकरो भवेत् । भरणीभूतजा शुक्रो यमदण्डो हि हानिकम् कृत्तिकापञ्चमीमन्दो लाभाय तिथिरीरिता । अश्लेषादशमी मन्दोयोगः पीड़ाकरोभवेत्

मघा शनिः पूर्णिमा च योगो मृत्युकरः स्मृतः ।

तिथियोगः ।

पूर्वोत्तराग्निनैर्ऋत्यदक्षिणानिलचन्द्रमाः ॥ २६ ॥

ब्रह्माद्याःस्युर्दृष्टयः स्युःप्रतिपन्नवमीमुखाः । राशिभिःसहितादृष्टा ग्रहाद्याः सिद्धयेस्मृताः मेषाद्याश्चतुरःकुम्भा जयः पूर्णेऽन्यथामृतिः । सूर्य्यादिरिक्ता पूर्णाच क्रमादेवम्प्रदापयेत्

रणे सूर्य्ये फलं नास्ति सोमे भङ्गः प्रशाम्यति ।
कुजेन कलहं विद्याद् बुधः कामाय वै गुरुः ॥ २९ ॥

जयाय मनसे शुक्रो मन्दे भङ्गो रणे भवेत् । देयानि पिङ्गलाचक्रे सूर्य्यगानिच भानि हि मुखेनेत्रे ललाटेऽथ शिरोहस्तोरुपादके । पादेमृतिस्त्रिऋक्षे स्यात् त्रीणि पक्षेऽर्थनाशनम्

मुखस्थे च भवेत् पीड़ा शिरस्थे कार्य्यनाशनम् ।
कुक्षिस्थिते फलं स्याच्च राहुचक्रं वदाम्यहम् ॥ ३२ ॥

इन्द्राच्चनैर्ऋतञ्चछेन्नैर्ऋतात् सोममेवच । सोमाद्धुताशनंवह्नेराप्यमाप्याच्छिवालयम रुद्राद्यमं यमाद्वायुं वायोश्चन्द्रं व्रजेत् पुनः । भुङ्क्ते चतस्रो नाड्यस्तु राहुपृष्ठे जयो रणे

अग्रतो मृत्युमाप्नोति तिथिराहुं वदामि ते ।
आग्नेयादिशिवान्तश्च पूर्णिमामादितः प्रिये ! ॥ ३५ ॥

पूर्वे कृष्णाष्टमीं यावत् राहुदृष्टौ भयोभवेत् । ऐशान्याग्नेयनैर्ऋत्यवायव्ये फणिराहुकः
मेषाद्या दिशि पूर्वादौ यत्रादित्योऽग्रतो मृतिः ।
तृतीया कृष्णपक्षे तु सप्तमी दशमी तथा ॥ ३७ ॥
चतुर्दशी तथा शुक्ले चतुर्थैकादशी तिथिः । पञ्चदशी विष्टयस्तुः पूर्णिमाग्नेयवायवे
अंकचटतपयशा वर्गाः सूर्य्यादयो ग्रहाः । गृध्रोलूकश्येनकाश्च पिङ्गलः कौशिकःक्रमात्
सारसश्च मयूरश्च गोरङ्कुः पक्षिणः स्मृताः ।
आदौ साध्यो हुतो मन्त्र उच्चाटे पल्लवः स्मृतः ॥ ४० ॥
वश्ये ज्वरे तथाकर्षे प्रयोगः सिद्धिकारकः ।
शान्तौ प्रीतौ नमस्कारौ वौषट् पुष्टौ वशादिषु ॥ ४१ ॥
हुं मृत्यौप्रीतिसन्नाशेविद्वेषोच्चाटनेचफट् । वषट् सुतेचदीप्त्यादौमन्त्राणांजातयश्चषट्
ओषधीः सम्प्रवक्ष्यामि महारक्षाविधायिनी ।
महाकाली तथा चण्डी वाराही चेश्वरी तथा ॥ ४३ ॥
सुदर्शना तथेन्द्राणी गात्रस्था रक्षयन्ति तम् । बला चातिबला भीरुर्मुसली सहदेव्यपि
जाती च मल्लिका यूथी गारुड़ी भृङ्गराजकः । चक्ररूपा महौषध्यो धारिताविजयादिदाः
ग्रहणे च महादेवि ! उद्धृताः शुभदायिकाः । मृदा च कुञ्जरं कृत्वा सर्वलक्षणलक्षितम्
तस्य पादतले कृत्वा स्तम्भयेच्छत्रुमात्मनः । नगाग्रे चैकवृक्षे च वज्राहतप्रदेशके ॥४७॥
वल्मीकमृदमाहृत्य मातरौ योजयेत्ततः ।
ओं नमो महाभैरवाय विकृतदंष्ट्रोग्ररूपाय पिङ्गलोक्षाय त्रिशूलखड्गधराय वौषट्
पूजयेत् कर्द्दमं देवि ! स्तम्भयेच्छस्त्रजालकम् ॥ ४८ ॥
अग्निकार्य्यंप्रवक्ष्यामि रणादौजयवर्द्धनम् । श्मशानेनिशि काष्ठाग्नौ नग्नोमुक्तशिखोनरः
दक्षिणास्यस्तु जुहुयान्नृमांसं रुधिरं विषम् ।
तुषास्थिखण्डमिश्रन्तु शत्रुनाम्ना शताष्टकम् ॥ ५० ॥
ओं नमो भगवति ! कौमारि ! लल लल लालय लालय घण्टादेवि ! अमुकं
मारय मारय सहसा नमोऽस्तु ते भगवति विद्ये स्वाहा ।

अनया विद्यया होमाद्बन्धत्वञ्जायते रिपोः।

ओं वज्रकाय वज्रतुण्ड। कपिलपिङ्गल! करालवदन! ऊर्ध्वकेश! महाबल
रक्तमुख! तड़िज्जिह्व! महारौद्र! दंष्ट्रोत्कट! कह करालिन्! महादृढ़प्रहार! लङ्केश्वर-
सेतुबन्ध? शैलप्रवाह गगनचर! एह्येहि भगवन्महाबल। पराक्रम! भैरवो ज्ञापयति
एह्येहि महारौद्र! दीर्घलाङ्गूलेन अमुकं वेष्टय जम्भय जम्भय खन खन वैते हूं फट्

अष्टत्रिंशच्छतन्देवि! हनुमान् सर्वकर्मकृत्॥ ५१॥
पटे हनूमत्सन्दर्शनाद्भङ्गमायान्ति शत्रवः।

इत्यादि महापुराणे आग्नेये युद्धजयार्णवीयनानाचक्रवर्णनं नाम
पञ्चविंशत्यधिकशततमोऽध्यायः।

---

## षड्विंशत्यधिकशततमोऽध्यायः

### नक्षत्रनिर्णयवर्णनम्।

ईश्वर उवाच।

वक्ष्याम्यृक्षात्मकं पिण्डं शुभाशुभविवृद्धये। यस्मिन्नृक्षे भवेत्सूर्यस्तदादौ त्रीणिमूर्द्धनि
एकम्मुखे द्वयन्नेत्रे हस्तपादे चतुष्टयम्। हृदि पञ्च सुते जानौ आयुर्वृद्धिं विचिन्तयेत्
शिरस्थे तु भवेद्राज्यं पिण्डतो वक्त्रयोगतः। नेत्रयोः कान्तसौभाग्यं हृदये द्रव्यसंग्रह
हस्ते धृतं तस्करत्वङ्गतासुरध्वगः पदे। कुम्भाष्टके भानि लिख्य सूर्यकुम्भस्तु रिक्तकः

अशुभः सूर्यकुम्भः स्याच्छुभः पूर्व्वादिसंस्थितः।
फणिराहुं प्रवक्ष्यामि जयाजयविवेदकम्॥ ५॥

अष्टाविंशांल्लिखेद्बिन्दून्पुनर्भाज्यस्त्रिभिस्त्रिभिः। अथर्क्षाणिचत्वारिरेखास्तत्रैवदापये
यस्मिन्नृक्षे स्थितो राहुस्तदृक्षं फणिमूर्द्धनि। तदादि विन्यसेद् भानि सप्तविंशक्रमेणतु
चक्रे सप्तगते ऋक्षे म्रियते सर्व आहवे। स्कन्धे भङ्गं विजानीयात्सप्तमेषु च मध्यतः

उदरस्थेन पूजा च जयश्चैवात्मनस्तथा । कटिदेशे स्थिते योध आहवे हरते परान् ॥६॥
पुच्छस्थितेन कीर्त्तिः स्याद्राहुदृष्टे च मे मृतिः । पुनरन्यं प्रवक्ष्यामि रविराहुबलन्तव ॥
रविः शुक्रो बुधश्चैव सोमः सौरिर्गुरुस्तथा । लोहितः सैंहिकश्चैव एते यामार्द्धभागिनः
सौरिं रविञ्च राहुञ्च कृत्वा यत्नेन पृष्ठतः । स जयेत्सैन्यसङ्घातं द्यूतमध्वानमाहवम् ॥

रोहिणी चोत्तरास्तिस्रो मृगः पञ्च स्थिराणि हि ।
अश्विनी रैवती स्वाती धनिष्ठा शततारका ॥ १३ ॥

क्षिप्राणि पञ्चभान्येव यात्रार्थी चैव योजयेत् । अनुराधाहस्तमूलं मृगः पुष्यं पुनर्वसुः

सर्वकार्येषु चैतानि ज्येष्ठा चित्रा विशाखया ।
पूर्वास्तिस्रोऽग्निर्भरणी मघाद्राश्लेषादारुणाः ॥ १५ ॥

स्थावरेषु स्थिरं ह्यृक्षं यात्रायां क्षिप्रमुत्तमम् । सौभाग्यार्थेमृदून्येव उग्रेषूग्रन्तु कारयेत्
दारुणे दारुणं कुर्याद्वक्ष्ये चाधोमुखादिकम् । कृत्तिका भरण्यश्लेषाविशाखापितृनैर्ऋतम्
पूर्वात्रयमधोवक्त्रं कर्म चाधोमुखञ्चरेत् । एषु कूपतड़ागादि विद्याकर्मभिषक्क्रिया ॥
स्थापनञ्चौकाभूपादिविधानं खननन्तथा । रैवती चाश्विनी चित्रा हस्तास्वातीपुनर्वसुः
अनुराधा मृगो ज्येष्ठा नव वै पार्श्वतोमुखाः । एषु राज्याभिषेकञ्च पट्टवन्धञ्जाश्वयोः
आरामगृहप्रासादं प्राकारं क्षेत्रतोरणम् । ध्वजचिह्नपताकाश्च सर्वानेतांश्च कारयेत् ॥
द्वादशी सूर्य्यदग्धा तु चन्द्रेणैकादशी तथा । भौमेन दशमी दग्धा तृतीया वै बुधेन च
षष्ठी च गुरुणा दग्धा द्वितीया भृगुणा तथा । सप्तमी सूर्य्यपुत्रेण त्रिपुष्करमथो वदे
द्वितीया द्वादशी चैव सप्तमी वै तृतीयया । रविर्भौमस्तथा शौरिःषड़ेतास्तु त्रिपुष्कराः
विशाखा कृत्तिका चैव उत्तरे द्वे पुनर्व्वसुः । पूर्व्वभाद्रपदा चैव षड़ेते तु त्रिपुष्कराः ॥

लाभो हानिर्जयो वृद्धिः पुत्रजन्म तथैव च ।
नष्टं भ्रष्टं विनष्टं वा तत्सर्व्वन्त्रिगुणं भवेत् ॥ २६ ॥

अश्विनी भरणी चैव अश्लेषा पुष्यमेव च । स्वातिश्चैव विशाखा च श्रवणं सप्तमं पुनः
एतानि दृढ़वक्षूंषि पश्यन्ति च दिशो दश । यात्रासु दूरगस्यापि आगमः पुण्यगोचरे ॥
आषाढ़े रैवती चित्रा केवलापि पुनर्व्वसुः । एषु पञ्चसु ऋक्षेषु निर्गतस्यागमो भवेत्

कृत्तिका रोहिणी सौम्यं फल्गुनी च मघा तथा।
मूलं ज्येष्ठानुराधा च धनिष्ठा शततारकाः ॥ ३० ॥
पूर्व्वभाद्रपदा चैव त्रिपिटानि च तानि हि। अध्वानं व्रजमानस्य पुनरेवागमो भवेत् ॥
हस्त उत्तरभाद्रश्च आर्द्राषाढा तथैव च। नष्टार्थाश्चैव दृश्यन्ते सङ्ग्रामो नैव विद्यते॥
पुनर्वक्ष्यामिगण्डान्तमृक्षमध्ये यथास्थितम्। रैवत्यन्ते चतुर्नाडीअश्विन्यादिचतुष्टयम्
उभयोर्याममात्रन्तु वर्जयेत्तत् प्रयत्नतः। अश्लेषान्ते मघादौ तु घटिकानां चतुष्टयम्
द्वितयं गण्डमाख्यातं तृतीयं भैरवि ! शृणु। ज्येष्ठाभमूलयोर्म्मध्ये उग्ररूपन्तु यामकम्
न कुर्य्याच्छुभकर्म्माणि यदीच्छेदात्मजीवितम्।
दारके जातकाले च म्रियेते पितृमातरौ ॥ ३६ ॥
इत्यादि महापुराणे आग्नेये नक्षत्रनिर्णयवर्णनम् नामषड्विंशत्यधिकशततमोऽध्यायः।

---

## सप्तविंशत्यधिकशततमोऽध्यायः

### नानाबलवर्णनम्।

ईश्वर उवाच।

विष्कुम्भे घटिकास्तिस्रः शूले पञ्चविवर्जयेत्।
षट् षट् गण्डेऽतिगण्डे च नव व्याघातवज्रयोः ॥ १ ॥
परिघे च व्यतीपाते उभयोरपि तद्दिनम्। वैधृते तद्दिनश्चैव यात्रायुद्धादिकन्त्यजेत् ॥
ग्रहैःशुभाशुभं वक्ष्ये देवि ! मेषादिराशितः। चन्द्रशुक्रौच जन्मस्थौ वर्जितौ शुभदायकौ
द्वितीयोमङ्गलोऽथार्कः सौरिश्चैव तु सैंहिकः। द्रव्यनाशमलाभञ्च आहवे भङ्गमादिशेत्
सोमो बुधो भृगुर्जीवो द्वितीयस्थाः शुभावहाः।
तृतीयस्थो यदा भानुः शनिर्भौमो भृगुस्तथा ॥ ५ ॥
बुधश्चैवेन्दूराहुश्च सर्वे ते फलदा ग्रहाः। बुधशुक्रौ चतुर्थौ तु शेषाश्चैव भयावहाः ॥६॥

पञ्चमस्थोयदा जीवः शुक्रः सौम्यश्चचन्द्रमाः। ददेतचेप्सितं लाभं षष्ठे स्थाने शुभोरविः

चन्द्रः सौरिर्म्मङ्गलश्च ग्रहा देवि ! स्वराशितः।
बुधश्च शुभदः षष्ठे त्यजेत् षष्ठं गुरुं भृगुम् ॥ ८ ॥
सप्तमोऽर्कः शनिर्भौमो राहुर्हान्यै सुखाय च।
जीवो भृगुश्च सौम्यश्च ज्ञशुक्रौ चाष्टमौ शुभौ ॥ ६ ॥
शेषा ग्रहास्तथा हान्यै ज्ञभृगू नवमौ शुभौ।
शेषा हान्यै च लाभाय दशमौ भृगुभास्करौ ॥ १० ॥

शनिर्भौमश्च राहुश्च चन्द्रः सौम्यः शुभावहः। शुभाश्चैकादशे सर्वे वर्जयेद्दशमे गुरुम् ॥

बुधशुक्रौ द्वादशस्थौ शेषान् द्वादशगांस्त्यजेत्।
अहोरात्रे द्वादश स्यू राशयस्तान् वदाम्यहम् ॥ १२ ॥

मीनो मेषोऽथ मिथुनश्चतस्रो नाड्यो वृषः। षट् कर्कसिंहकन्याश्च तुला पञ्चवृश्चिकः
धनुर्नक्रो घटश्चैव सूर्य्यगो राशिराद्यकः। चरस्थिरद्विःस्वभावा मेषाद्याः स्युर्यथाक्रमम्
कुलीरो मकरश्चैव तुलामेषादयश्चराः। चरकार्य्यं जयं काममाचरेच्च शुभाशुभम् ॥१५॥

स्थिरो वृषो हरिः कुम्भो वृश्चिकः स्थिरकार्य्यके।
शीघ्रः समागमो नास्ति रोगार्त्तो नैव मुच्यते ॥ १६ ॥
मिथुनं कन्यका मीनो धनुश्च द्विःस्वभावकः।
द्विःस्वभावाः शुभाश्चैते सर्वकार्य्येषु नित्यशः ॥ १७ ॥

यात्रावाणिज्यसङ्ग्रामे विवाहे राजदर्शने। वृद्धि जयन्तथा लाभं युद्धे जयमवाप्नुयात्
अश्विनी विंशतारांश्च तुरगस्याकृतिर्यथा। यद्यत्र कुरुते वृष्टिमेकरात्रं प्रवर्षति।

यमभे तु यदा वृष्टिः पक्षमेकन्तु वर्षति ॥ १६ ॥

इत्यादि महापुराणे आग्नेये नानाबलानिकथनं नाम सप्तविंशत्यधिकशततमोऽध्यायः।

---

# अष्टात्रिंशत्यधिकशततमोऽध्यायः

## कोटचक्रम् ।

ईश्वर उवाच ।

कोटचक्रं प्रवक्ष्यामि चतुरस्रं पुरं लिखेत् । चतुरस्रं पुनर्म्मध्ये तन्मध्ये चतुरस्रकम् ॥१॥
नाड़ीत्रितयचिह्नाढ्यं मेषाद्याः पूर्वदिङ्मुखाः । कृत्तिका पूर्वभागे तु अश्लेषाग्नेयगोचरे
भरणी दक्षिणे देया विशाखां नैर्ऋते न्यसेत् । अनुराधां पश्चिमे च श्रवणं वायुगोचरे
धनिष्ठाश्चोत्तरे न्यस्यऐशान्यांरेवतींतथा । वाह्यनाड्यांस्थितान्येवअष्टौह्यृक्षाणियत्नतः

रोहिणीपुष्यफल्गुन्यः स्वाती ज्येष्ठा क्रमेण तु ।
अभिजिच्छततारा तु अश्वनी मध्यनाड़िका ॥ ५ ॥

कोटमध्ये तु या नाड़ी कथयामि प्रयत्नतः । मृगश्चाभ्यन्तरे पूर्वं तस्याग्नेये पुनर्वसुः ॥
उत्तराफल्गुनी याम्ये चित्रा नैर्ऋतसंस्थिता । मूलन्तु पश्चिमेन्यस्योत्तराषाढ़ान्तुवायवे
पूर्वभाद्रपदा सौम्ये रेवती ईशगोचरे । कोटस्याभ्यन्तरे नाड़ी ह्यृक्षाष्टकसमन्विता ॥
आर्द्राहस्तातथाषाढ़ाचतुष्कश्चोत्तरात्रिकम् । मध्ये स्तम्भचतुष्कन्तुदद्यात्कोटस्यकोटरे ,

एवं दुर्गस्य विन्यासं वाह्ये स्थानं दिशाधिपात् ।
आगन्तुको यदा योद्धा ऋक्षवान् स्यात् फलान्वितः ॥ १० ॥
कोटमध्ये ग्रहाः सौम्या यदा ऋक्षान्विताः पुनः ।
जयं मध्यस्थितानान्तु भङ्गमागामिनो विदुः ॥ ११ ॥

प्रवेशभे प्रवेष्टव्यं निर्गमभे च निर्गमेत् । भृगुः सौम्यस्तथा भौम ऋक्षान्तं सकलं यदा
तदा भङ्गं विजानीयाज्जयमागन्तुकस्य च । प्रवेशर्क्षचतुष्के तु सङ्ग्रामश्चारभेद् यदा ॥

तदा सिद्ध्यति तद्दुर्गं न कुर्य्यात्तत्र विस्मयम् ॥ १३ ॥

इत्यादि महापुराणे आग्नेये कोटचक्रकथनं नामाष्टाविंशत्यधिकशततमोऽध्यायः ।

---

# ऊनत्रिंशदधिकशततमोऽध्यायः

## अर्घकाण्डवर्णनम् ।

ईश्वर उवाच ।

अर्घमानं प्रवक्ष्यामि उल्कापातोऽथभूश्चला । निर्घातो ग्रहणं वेशो दिशां दाहो भवेद्यदा लक्षयेन्मासि मास्येवं यद्येते स्युश्चचैत्रके । अलङ्कारादिसङ्गृह्य षड्भिर्मासैश्चतुर्गुणम् वैशाखे चाष्टमे मासि षड्गुणं सर्वसङ्ग्रहम् । ज्यैष्ठे मासितथाषाढेयवगोधूमधान्यकैः श्रावणे घृततैलाद्यैराश्विने वस्त्रधान्यकैः । कार्त्तिकेधान्यकैः क्रीतैर्म्मासेस्यान्मार्गशीर्षके पुष्ये कुङ्कुमगन्धाद्यैर्ल्लाभो धान्यैश्च माघके । गन्धाद्यैः फाल्गुने क्रीतैरर्घकाण्डमुदाहृतम्

इत्यादि महापुराणे आग्नेयेऽर्घकाण्डं नामोनत्रिंशदधिकशततमोऽध्यायः।

---

# त्रिंशदधिकशततमोऽध्यायः

## मण्डलकथनम् ।

ईश्वर उवाच ।

मण्डलानि प्रवक्ष्यामि चतुर्द्धा विजयाय हि ।
कृत्तिका च मघा पुष्पं पूर्वा चैव तु फल्गुनी ॥ १ ॥
विशाखा भरणी चैव पूर्वभाद्रपदा तथा । आग्नेयमण्डलं भद्रे ! तस्य वक्ष्यामिलक्षणम्
यद्यत्र चलते वायुर्वेष्टनं शशिसूर्य्ययोः । भूमिकम्पोऽथ निर्घातो ग्रहणं चन्द्रसूर्य्ययोः ॥
धूमज्वाला दिशां दाहः केतोश्चैव प्रदर्शनम् । रक्तवृष्टिश्चोपतापः पाषाणपतनन्तथा ॥
नेत्ररोगोऽतिसारश्च अग्निश्च प्रबलो भवेत् ।
स्वल्पक्षीरास्तथा गावः स्वल्पपुष्पफला द्रुमाः ॥ ५ ॥

विनाशश्चैव शस्यानां स्वल्पवृष्टिं विनिर्दिशेत् ।
चातुर्व्वर्णाः प्रपीड्यन्ते क्षुधार्त्ता अखिला नराः ॥ ६ ॥
सैन्धवा यामुनाश्चैव गुर्ज्जरा भोजवाह्लिकाः। जालन्धरं च काश्मीरं सप्तमश्चोत्तरापथम्
देशाश्चैते विनश्यन्ति तस्मिन्नुत्पातदर्शने । हस्ता चित्रा मघा स्वातीमृगोचाथपुनर्वसुः
उत्तराफल्गुनी चैव अश्विनी च तथैव च । यदात्र भवते किञ्चिद्वायव्यन्तं विनिर्दिशेत्
नष्टधर्म्माः प्रजाः सर्व्वा हाहाभूता विचेतसः । डाहलःकामरूपश्च कलिङ्गःकोशलस्तथा
अयोध्या च अवन्ती च नश्यन्ते कोङ्कणान्ध्रकाः ।
अश्लेषा चैव मूलन्तु पूर्व्वाषाढ़ा तथैव च ॥ ११ ॥
रेवता वारुणं ह्यक्षन्तथा भाद्रपदोत्तरा । यदात्र चलते किञ्चिद्वारुणं तं विनिर्दिशेत् ॥
बहुक्षीरघृता गावो बहुपुष्पफला द्रुमाः । आरोग्यं तत्र जायेत बहुशस्या च मेदिनी ॥
धान्यानि च समर्घाणि सुभिक्षं पार्थिवं भवेत् ।
परस्परं नरेन्द्राणां सङ्ग्रामो दारुणो भवेत् ॥ १४ ॥
ज्येष्ठाच रोहिणीचैव अनुराधाचवैष्णवम् । धनिष्ठाचोत्तराषाढ़ाअभिजित्सप्तमन्तथा
यदात्र चलते किञ्चिन् माहेन्द्रं तं विनिर्दिशेत् ।
प्रजाः समुदितास्तस्मिन् सर्वरोगविवर्जिताः ॥ १६ ॥
सन्धिं कुर्वन्ति राजानः सुभिक्षं पार्थिवं शुभम् ।
ग्रामस्तु द्विविधो ज्ञेयो मुखपुच्छकरो महान् ॥ १७ ॥
चन्द्रोराहुस्तथादित्य एकराशौ यदिस्थितः । मुखग्रामस्तु विज्ञेयो यामित्रे पुच्छउच्यते
भानोःपञ्चदशेह्यृक्ष्ये यदा चरतिचन्द्रमाः । तिथिच्छेदे तु सम्प्राप्तेसोमग्रामंविनिर्द्दिशेत्
इत्यादि महापुराणे आग्नेये मण्डलकथनं नाम त्रिंशदधिकशततमोऽध्यायः ।

---

# एकत्रिंशदधिकशततमोऽध्यायः

## घातचक्रादिः ।

ईश्वर उवाच ।

प्रदक्षिणमकारादीन् स्वरान् पूर्वादितो लिखेत् ।
चैत्राद्यं भ्रमणाच्चक्रं प्रतिपत् पूर्णिमा तिथिः ॥ १ ॥

त्रयोदशी चतुर्दशी अष्टम्येका च सप्तमी । प्रतिपत् त्रयोदश्यन्तास्तिथयो द्वादशस्मृताः
चैत्रचक्रेतु संस्पर्शाज्जयलाभादिकं विदुः । विषमे तु शुभं ज्ञेयं समे चाशुभमीरितम् ॥
युद्धकाले समुत्पन्ने यस्य नाम ह्युदाहृतम् । मात्रारूढ़न्तु यन्नाम आदित्यो गुरुरेव च
जयस्तस्य सदाकालं सङ्ग्रामे चैव भीषणे । ह्रस्वनाम यदा योधो म्रियते ह्यनिवारितः

प्रथमो दीर्घ आदिस्थो द्वितीयो मध्ये अन्तकः ।
द्वौ मध्येन प्रथमान्तौ जायेते नात्र संशयः ॥ ६ ॥

पुनश्चान्ते यदा चादौ स्वरारूढ़न्तु दृश्यते । ह्रस्वस्य मरणं विद्याद् दीर्घस्यैव जयोभवेत्
नरचक्रं प्रवक्ष्यामि ह्यृक्षपिण्डात्मकंयथा । प्रतिमामालिखेत् पूर्वंपश्चादृक्षाणिविन्यसेत्

शीर्षे त्रीणि मुखे चैकं द्वे ऋक्षे नेत्रयोर्न्यसेत् ।
वेदसङ्ख्यानि हस्ताभ्यां कर्णे ऋक्षद्वयं पुनः ॥ ६ ॥
हृदये भूतसङ्ख्यानि षडृक्षाणि तु पादयोः ।
नाम ह्यृक्षं स्फुटं कृत्वा चक्रमध्ये तु विन्यसेत् ॥ १० ॥

नेत्रे शिरोदक्षकर्णे याम्यहस्ते च पादयोः । हृद्ग्रीववामहस्ते तु पुनर्गुह्ये तु पादयोः ॥

यस्मिन्नृक्षे स्थितः सूर्य्यः सौरिर्भौमस्तु सैंहिकः ।
तस्मिन् स्थाने स्थिते विद्याद् घातमेव न संशयः ॥ १२ ॥
जयचक्रं प्रवक्ष्यामि आदिहान्तांश्च वै लिखेत् ।
रेखास्त्रयोदशालिख्य षड्रेखास्तिर्यगालिखेत् ॥ १३ ॥

दिग् ग्रहा मुनयः सूर्य्या ऋत्विग्रुद्रस्तिथिः क्रमात्।
मूर्च्छनास्मृतिवेदर्क्षजिना अकड़मा ह्यधः ॥ १४ ॥
आदित्याद्याः सप्तहृते नामान्ते बलिनो ग्रहाः।
आदित्यसौरिभौमाख्या जये सौम्याश्च सन्धये ॥ १५ ॥
रेखा द्वादश चोद्धृत्य षट् च याम्यास्तथोत्तराः।
मनुश्चैव तु ऋक्षाणि नेत्रे च रविमण्डलम् ॥ १६ ॥
तिथयश्च रसा वेदा अग्निः सप्तदशाथवा। वसुरन्ध्राः समाख्याता अकटपानधो न्यसेत्
एकैकमक्षरं न्यस्त्वा शेषाण्येवङ्क्रमान् न्यसेत्।
नामाक्षरकृतं पिण्डं वसुभिर्भाजयेत्ततः ॥ १८ ॥
वायसान्मण्डलोऽत्युग्रो मण्डलाद्रासभो वरः। रासभाद्वृषभः श्रेष्ठो वृषभात् कुञ्जरोवरः
कुञ्जराच्च पुनः सिंहः सिंहाच्चैव खरुर्वरः। खरश्चैव बली धूम्रः एवमादि बलाबलम् ॥
इत्यादि महापुराणे आग्नेये घातचक्रादिवर्णनं नामैकत्रिंशदधिकशततमोऽध्यायः।

---

# द्वात्रिंशदधिकशततमोऽध्यायः

## सेवाचक्रम्।

ईश्वर उवाच।

सेवाचक्रं प्रवक्ष्यामि लाभालाभार्थसूचकम्। पिता माता तथा भ्राता दम्पतीचविशेषतः
तस्मिंश्चक्रे तु विज्ञेयं यो यस्माल्लभते फलम्।
षडूर्द्ध्वाः स्थापयेद्रेखा भिन्नाश्चाष्टौ तु तिर्य्यगाः ॥ २ ॥
कोष्ठकाः पञ्चत्रिंशच्च तेषु वर्णान् समालिखेत्।
स्वरान् पञ्च समुद्धृत्य स्पर्शान् पश्चात् समालिखेत् ॥ ३ ॥
ककारादिहकारान्तान् हीनाङ्गांस्त्रीन्विवर्ज्जयेत्।
सिद्धः साध्यः सुसिद्धश्च अरिर्मृत्युश्च नामतः ॥ ४ ॥

अरिर्मृत्युश्च द्वावेतौ वर्जयेत् सर्वकर्म्मसु । एषां मध्ये यदा नाम लक्षयेत्तु प्रयत्नतः ॥
आत्मपक्षे स्थिताः सत्त्वाः सर्वे ते शुभदायकाः । द्वितीयः पोषकश्चैवतृतीयश्चार्थदायकः
आत्मनाशश्चतुर्थस्तु पञ्चमो मृत्युदायकः । स्थानमेवार्थलाभाय मित्रभृत्यादिबान्धवाः ॥

सिद्धः साध्यः सुसिद्धश्च सर्वे ते फलदायकाः ।
अरिर्मृत्युश्च द्वावेतौ वर्जयेत् सर्वकर्म्मसु ॥ ८ ॥
अकारान्तं यथा प्रोक्तं अइउएओ विदुस्तथा ।
पुनश्चैवांशकान् वक्ष्ये वर्गाष्टकसुसंस्कृतान् ॥ ६ ॥

देवा अकारवर्गे तु दैत्याः कवर्गमाश्रिताः । नागाश्चैव चवर्गाः स्युर्गन्धर्वाश्च टवर्गजाः

तवर्गे ऋषयः प्रोक्ताः पवर्गे राक्षसाः स्मृताः ।
पिशाचाश्च यवर्गे च शवर्गे मानुषाः स्मृताः ॥ ११ ॥

देवेभ्यो वलिनो दैत्या दैत्येभ्यः पन्नगास्तथा । पन्नगेभ्यश्च गन्धर्वा गन्धर्वाद्वृषयो वराः

ऋषिभ्यो राक्षसाः शूरा राक्षसेभ्यः पिशाचकाः ।
पिशाचेभ्यो मानुषाः स्युर्दुर्वलं वर्जयेद्बली ॥ १३ ॥

पुनर्मित्रविभागन्तु ताराचक्रं क्रमाच्छृणु । नामाद्यक्षरमृक्षन्तु स्फुटं कृत्वा तु पूर्वतः ॥

ऋक्षे तु संस्थितास्तारा नवत्रिका यथाक्रमात् ।
जन्म सम्पद्विपत् क्षेमं नामार्क्षात्तारका इमाः ॥ १५ ॥

प्रत्यरा धनदा षष्ठी नैधनामैत्रके परे । परमैत्रान्तिमा तारा जन्मतारा त्वशोभना ॥
सम्पत्तारा महाश्रेष्ठा विपत्तारा तु निष्फला । क्षेमतारा सर्वकार्य्ये प्रत्यरा अर्थनाशिनी
धनदा राज्यलाभादि नैधना कार्य्यनाशिनी । मैत्रतारा मित्राय परमित्रा हितावहा ॥

ताराचक्रम् मात्रा वै स्वरसङ्ख्या स्यान्नाममध्ये क्षिपेत् प्रिये !
विंशत्या च हरेद्भागं यच्छेषं तत् फलं भवेत् ॥ १६ ॥

उभयोर्न्नाममध्ये तु लक्षयेच्च धनं ह्यृणम् । हीनमात्रा ह्यृणं ज्ञेयन्धनं मात्राधिकं पुनः :
धनेन मित्रता नृणां ऋणेनैव ह्यदासता । सेवाचक्रमिदं प्रोक्तं लाभालाभादिदर्शकम् ॥
मेषमिथुनयोः प्रीतिर्मैत्री मिथुनसिंहयोः । तुलासिंहौ महामैत्री एवं धनुर्घटे पुनः ॥

मित्रसेवां न कुर्व्वीत मैत्रौ मीनवृषौ मतौ । वृषकर्कटयोर्मैत्री कुलीरघटयोस्तथा ॥
कन्यावृश्चिकयोरेवन्तथा मकरकीटयोः । मीनमकरयोर्मैत्री तृतीयैकादशे स्थिता ॥२४॥
तुलामेषौ महामैत्री विद्विष्टौ वृषवृश्चिकौ । मिथुनधनुषोः प्रीतिः कर्कटमकरयोस्तथा
मृगकुम्भकयोः प्रीतिः कन्यामीनौ तथैव च ।

इत्यादि महापुराणे आग्नेये सेवाचक्रकथनं नाम द्वात्रिंशदधिकशततमोऽध्यायः ।

---

# त्रयस्त्रिंशदधिकशततमोऽध्यायः

## नानाबलानि ।

ईश्वर उवाच ।

गर्भजातस्य वक्ष्यामि क्षेत्राधिपस्वरूपकम् । नातिदीर्घः कृशःस्थूलः समाङ्गोगौरपैतिकः
रक्ताक्षो गुणवान् शूरो गृहे सूर्य्यस्य जायते । सौभाग्यो मृदुसारश्च जातश्चन्द्रगृहोदये
वार्ताधिकोऽतिलुब्धादिर्जातो भूमिभुवो गृहे ।
बुद्धिमान् सुभगो मानी जातः सौम्यगृहोदये ॥ ३ ॥
बृहत्क्रोधश्च शुभगो जातो गुरुगृहे नरः । त्यागी भोगी च सुभगो जातो भृगुगृहोदये
बुद्धिमाङ्च्छुभगो मानी जातश्चार्किगृहे नरः ।
सौम्यलग्ने तु सौम्यः स्यात् क्रूरः स्यात् क्रूरलग्नके ॥ ५ ॥
दशाफलङ्गौरि ! वक्ष्ये नामराशौ तु संस्थितम् ।
गजाश्वधनधान्यानि राज्यश्रीर्विपुला भवेत् ॥ ६ ॥
पुनर्धनागमश्चापि दशायां भास्करस्य तु । दिव्यस्त्रीदा चन्द्रदशा भूमिलाभः सुखं कुजे
भूमिर्धान्यं धनं बौधे गजाश्वादिधनं गुरौ । खाद्यपानधनं शुक्रे शनौ व्याध्यादिसंयुतः
स्थानसेवादिनाध्यानं वाणिज्यं राहुदर्शने । वामनाड़ीप्रवाहे स्यान्नाम चेद्विषमाक्षरम् ॥
तदा जयति सङ्ग्रामे शनिभौमससैंहिकाः । दक्षनाड़ीप्रवाहेऽर्कवाणिज्ये चैव निष्फला

सङ्ग्रामे जयमाप्नोति समनामा नरो ध्रुवम् । अधश्चारे जयं विद्यदूर्द्धचारे रणे मृतिम्
ओं ह्रूं ओं ह्रं ओं स्फें अस्त्रं मोटय ओं चूर्णय २ ओं सर्वशत्रुं मर्द्दय २ ओं
ह्रूं ओं ह्रः फट् ।
सप्तवारन्न्यसेन्मन्त्रं ध्यात्वात्मानन्तु भैरवम् । चतुर्भुजन्दशभुजं विंशद्वाह्वात्मकं शुभम्
शूलखट्वाङ्गहस्तन्तु खड्ग कट्टारिकोद्यतम् । भक्षणं परसैन्यानामात्मसैन्यपराङ्मुखम्
सम्मुखं शत्रुसैन्यस्य शतमष्टोत्तरं जपेत् । जपाड्डमरुकाच्छब्दाच्छस्त्रं त्यक्त्वा पलायते ॥
परसैन्यं शृणु भङ्गं प्रयोगेण पुनर्वदे । श्मशानाङ्गारमादाय विष्टाश्चोलूककाकयोः ॥१५॥
कर्पटे प्रतिमां लिख्य साध्यस्यैवाक्षरं यथा ।
नामाथ नवधा लिख्य रिपोश्चैव यथाक्रमम् ॥ १६ ॥
मूर्ध्नि वक्त्रे ललाटे च हृदये गुह्यपादयोः । पृष्ठे तु बाहुमध्ये तु नाम वै नवधा लिखेत्
मोटयेद्युद्धकाले तु उच्चरित्वा तु विद्यया । तार्क्ष्यचक्रंप्रवक्ष्यामिजयार्थं त्रिमुखाक्षरम्
क्षिप ओं स्वाहा तार्क्ष्यात्मा शत्रुरोगविषादिनुत् ।
दुष्टभूतग्रहार्त्तस्य व्याधितस्यातुरस्य च ॥ १६ ॥
करोति यादृशं कर्म तादृशं सिद्ध्यते खगात् । स्थावरं जङ्गमश्चैव लूताश्च कृत्रिमं विषम्
तत्सर्वं नाशमायाति साधकस्यावलोकनात् । पुनर्ध्यायेन्महातार्क्ष्यं द्विपक्षंमानुषाकृतिम्
द्विभुजं वक्रचञ्चुं च गजकुर्म्मधरं प्रभुम् । असङ्ख्योरगपादस्थमागच्छन्तं खमध्यतः ॥
ग्रसन्तश्चैव खादन्तं तुदन्तं चाहवे रिपून् । चञ्च्वाहताश्च द्रष्टव्याःकेचित्पादैश्च चूर्णिताः
पक्षपातैश्चूर्णिताश्च केचिन्नष्टा दिशो दश ।
तार्क्ष्यध्यानान्वितो यश्च त्रैलोक्ये ह्यजयो भवेत् ॥ २४ ॥
पिच्छिकान्तु प्रवक्ष्यामि मन्त्रसाधनजां क्रियाम् !
ओं ह्रूँ पक्षिन् ! क्षिप ओं ह्रूं सः महाबलपराक्रम !
सर्वसैन्यं भक्षय २ ओं मर्दय २ ओं चूर्णय २ ओं विद्रावय २
ओं ह्रूं खः ओं भैरवो ज्ञापयति स्वाहा ।
अमुश्चन्द्रग्रहणे तु जपङ्कृत्वा तु पिच्छिकाम् ॥ २५ ॥

मन्त्रयेद्भ्रामयेत्सैन्यंसम्मुखं गजसिंहयोः। ध्यानाद्द्रवान् मर्दयेच्च सिंहारूढोमृगाविकान्
शब्दाद्भङ्गं प्रवक्ष्यामि दूरं मन्त्रेण बोधयेत्। मातृणां चरुकं दद्यात् कालरात्र्याविशेषतः
श्मशानभस्मसंयुक्तं मालती चामरी तथा। कार्पासमूलमात्रन्तु तेन दूरन्तु बोधयेत्॥

ओं अहे हे महेन्द्रि! अहे महेन्द्रि! भञ्ज हि ओं जहि
मसानं हि खाहि खाहि लिलि किलि ओं हुं फट्।
अरेर्नाशं दूरशब्दाजप्तया भङ्ग विद्यया।
अपराजिता च धुस्तूरस्ताभ्यान्तु तिलकेन हि॥

ओं किलि किलि विकिलि इच्छाकिलि! भूतहनि शङ्खिनि उमे! दण्डहस्ते! रौद्रि! माहेश्वरि! उल्कामुखि! ज्वालामुखि! शङ्कुकर्णे! शुष्कजङ्घे! अलम्बुषे! हर ओं सर्वदुष्टान् खन ओं यन्मान्निरीक्षयेद्देवि! तांस्तान् मोहय ओं रुद्रस्य हृदये स्थिता रौद्रि! सौम्येन भावेन आत्मरक्षान्ततः कुरु स्वाहा।

वाह्यतो मातृः संलिख्य सकलाकृतिवेष्टिता। नागपत्रे लिखेद्विद्यां सर्वकामार्थसाधनीम्
हस्ताद्यैर्द्धारिता पूर्वं ब्रह्मरुद्रेन्द्रविष्णुभिः। गुरुसङ्ग्रामकाले तु विद्यया रचिताः सुराः
रक्षया नारसिंह्या च भैरव्या शक्तिरूपया। सर्वे त्रैलोक्यमोहिन्या गौर्य्या देवासुरे रणे
वीजसम्पुटितं नाम कर्णिकायां दलेषु च। पूजाक्रमेण चाङ्गानि रक्षायन्त्रं स्मृतं शुभे!

मृत्युञ्जयं प्रवक्ष्यामि नाम संस्कारमध्यगम्।
कलाभिर्वेष्टितं पश्चात् सकारेणनिबोधितम्॥ ३४॥

जकारं विन्दुसंयुक्तम् ओंकारेण समन्वितम्। धकारोदरमध्यस्थं वकारेण निबोधितम्
चन्द्रसम्पुटमध्यस्थं सर्वदुष्टविमर्दकम्। अथवा कर्णिकायाञ्च लिखेन्नाम च कारणम्
पूर्वे दले तथोङ्कारं स्वदक्षे चोत्तरे लिखेत्। आग्नेय्यादौ च हूङ्कारन्दले षोडशकेस्वरान्
चतुस्त्रिंशद्दलेकाद्यान् वाह्येमन्त्रश्चमृत्युजित्। लिखेद्वैभूर्ज्जपत्रे तु रोचनाकुङ्कुमेन च॥
कर्पूरचन्दनाभ्याञ्च श्वेतसूत्रेण वेष्टयेत्। सिक्थकेन परिच्छाद्य कलशोपरि पूजयेत्॥

यन्त्रस्य धारणाद्रोगाः शाम्यन्ति रिपवो मृतिः।
विद्यान्तु भेलखीं वक्ष्ये विप्रयोगमृतेर्हरीम्॥ ४०॥

ओं वातले ! वितले ! विड़ालमुखि ! इन्द्रपुत्रि ! उद्भवो वायुदेवेन खीलि आजी हाजा मयि वाह इत्यादि दुःख नित्यकण्ठोच्चैर्मुहूर्त्तान्वया अह मां यस्मद्दं उपाडि ओं भेलखि ! ओं स्वाहा ।
नवदुर्गासप्तजप्तान्मुखस्तम्भो मुखस्थितात् । ओं चण्डि ! ओं हूं फट् स्वाहा ।
गृहीत्वा सप्तजप्तन्तु खड्गयुद्धे पराजितः ॥ ४१ ॥

इत्यादि महापुराणे आग्नेये युद्धजयार्णवीयनानावलकथनंनाम
त्रयस्त्रिंशदधिकशततमोऽध्यायः ।

---

# चतुस्त्रिंशदधिकशततमोऽध्यायः

## त्रैलोक्यविजयविद्यावर्णनम् ।

ईश्वर उवाच ।

त्रैलोक्यविजयां वक्ष्ये सर्वयन्त्रविमर्दिनीम् ।
ओं हूं क्षूं ह्रूं ओं नमो भगवति ! दंष्ट्रिणि ! भीमवक्त्रे ! महोग्ररूपे ! हिलि हिलि रक्तनेत्रे ! किलि किलि महानिस्वने ! कुलु ओं विद्युज्जिह्वे ! कुलु ओं निर्म्मांसे ! कट कट गोनसाभरणे ! चिलि चिलि शवमालाधारिणि ! द्रावय ओं महारौद्रि ! सार्द्रचर्म्मकृताच्छदे ! विजृम्भ ओं नृत्य असिलताधारिणि ! भृकुटी-कृतापाङ्गे ! विषमनेत्रकृतानने ! वसामेदोविलिप्तगात्रे ! कह २ ओं हस २ क्रुद्ध २ ओं नीलजीमूतवर्णे ! अभ्रमालाकृताभरणे ! विस्फुर ओं घण्टारवावकीर्णदेहे ! ओं सिंसिस्थे ! अरुणवर्णे ! ओं ह्रां ह्रीं ह्रूं रौद्ररूपे ! ह्रूं ह्रीं क्लीं ओं ह्रीं ह्रूं ओं आकर्ष ओं धून २ ओं हे हः खः वज्रिणि ! हूं क्षूं क्षां क्रोधरूपिणि ! प्रज्वल २ ओं भीमभीषणे ! भिन्द ओं महाकाये ! च्छिन्द ओं करालिनि ! किटि २ महाभूतमातः ! सर्वदुष्टनिवारिणि ! जये ओं विजये ! ओं त्रैलोक्यविजये ! हूं फट् स्वाहा ।

नीलवर्णां प्रेतसंस्थां विंशहस्तां यजेज्जये ।
न्यासं कृत्वा तु पञ्चाङ्गं रक्तपुष्पाणि होमयेत् ।
सङ्ग्रामे सैन्यभङ्गः स्यात् त्रैलोक्यविजयापठात् ॥ २ ॥

ओं बहुरूपाय स्तम्भय२ ओं मोहय ओं सर्वशत्रून् द्रावय ओं ब्रह्माणमाकर्षय विष्णुमाकर्षय ओं माहेश्वरमाकर्षय ओं इन्द्रं टालय ओं पर्वतान् चालय ओं सप्तसागरान् शोषय ओं छिन्द छिन्द बहुरूपाय नमः ।

भुजङ्गन्नामसृण्मूर्त्तिसंस्थं विद्यादरिन्ततः ।

इत्यादि महापुराणे आग्नेये त्रैलोक्यविजयविद्यावर्णनं नाम
चतुस्त्रिंशदधिकशततमोऽध्यायः ।

---

## पञ्चत्रिंशदधिकशततमोऽध्यायः

### सङ्ग्रामविजयविद्यावर्णनम् ।

ईश्वर उवाच ।

सङ्ग्रामविजयां विद्यां पदमालां वदाम्यहम् ।

ओं ह्रीं चामुण्डे ! श्मशानवासिनि ! खट्वाङ्गकपालहस्ते ! महाप्रेतसमारूढे ! महाविमानसमाकुले ! कालरात्रि ! महागणपरिवृते ! महामुखे ! बहुभुजे ! घण्टाडमरुकिङ्किणि ! अट्टाट्टहासे ! किलि किलि ओं हूं फट् दंष्ट्राघोरान्धकारिणि ! नादशब्दबहुले ! गजचर्म्मप्रावृतशरीरे ! मांसदिग्धे ! लेलिहानोग्रजिह्वे ! महाराक्षसि ! रौद्रदंष्ट्राकराले ! भीमाट्टाट्टहासे ! स्फुरद्विद्युत्प्रभे ! चल चल ओं चकोरनेत्रे ! चिलि चिलि ओं ललज्जिह्वे ! ओं भीं भ्रुकुटीमुखि ! हुङ्कारभयत्रासनिकपालमालावेष्टितजटामुकुटशशाङ्कधारिणि ! अट्टाट्टहासे ! किलि किलि ओं हूं दंष्ट्राघोरान्धकारिणि ! सर्वविघ्नविनाशिनि ! इदं कर्म्म साधय २ ओं शीघ्रं कुरु २ ओं

फट् ओं अङ्कुशेन शमय प्रवेशय ओं रङ्ग रङ्ग कम्पय२ ओं चालय ओं रुधिरमांसमद्यप्रिये ! हन२ ओं कुट्ट२ ओं छिन्द ओं मारय ओं अनुक्रमय ओं वज्रशरीरम्पातय ओं त्रैलोक्यगतन्दुष्टमदुष्टं वा गृहीतमगृहीतं वा आवेशय ओं नृत्य ओं वन्द ओं कोटराक्षि ! उद्धूर्ध्वकेशि ! उलूकवदने ! करङ्किणि ओं करङ्कमालाधारिणि ! दह ओं पच पच ओं गृह्ण ओं मण्डलम् बध्ये ! प्रवेशय ओं किं विलम्बसि ब्रह्मसत्येन विष्णुसत्येन रुद्रसत्येन ऋषिसत्येन आवेशय ओं किलि किलि ओं खिलि खिलि विलि विलि ओं विकृतरूपधारिणि ! कृष्णभुजङ्गवेष्टितशरीरे ! सर्वग्रहावेशनि ! प्रलम्बौष्टिनि ! भ्रूभङ्गलग्ननासिके ! विकटमुखि ! कपिलजटे ! ब्राह्मि ! भञ्ज ज्वालामुखि ! स्वन् ओं पातय ओं रक्ताक्षि ! घूर्णय भूमिं पातय ओं शिरो गृह्ण चक्षुर्मीलय ओं हस्तपादौ गृह्ण मुद्रां स्फोटय ओं फट् ओं विदारय ओं त्रिशूलेन च्छेदय ओं वज्रेण हन ओं दण्डेन ताड़य२ ओं चक्रेण च्छेदय२ ओं शक्त्या भेदय दंष्ट्रया कीलय ओं कर्णिकया पाटय ओं अङ्कुशेन गृह्ण ओं शिरोऽक्षिज्वरमैकाहिकं द्व्याहिकं त्र्याहिकञ्चातुर्थिकं डाकिनीस्कन्दग्रहान् मुञ्च मुञ्च ओं पच ओं उत्सादय ओं भूमिं पातय ओं गृह्ण ओं ब्रह्माणि ! एहि ओं माहेश्वरि ! एहि ओं कौमारि ! एहि ओं वैष्णवि ! एहि ओं वाराहि ! एहि ओं ऐन्द्रि ! एहि ओं चामुण्डे ! एहि ओं रेवति ! एहि ओं अकाशरेवति ! एहि ओं हिमवच्चारिणि ! एहि ओं रुरुमर्द्दिनि ! असुरक्षयङ्करि ! आकाशगामिनि ! पाशेन बन्ध बन्ध अङ्कुशेन कट२ समयं तिष्ठ ओं मण्डलं प्रवेशय ओं गृह्ण मुखम्बन्ध ओं चक्षुर्बन्ध हस्तपादौ च बन्ध दुष्टग्रहान् सर्वान् बन्ध ओं दिशो बन्ध ओं विदिशो बन्ध अधस्ताद्बन्ध ओं सर्वं बन्ध ओं भस्मना पानीयेन वा मृत्तिकया सर्षपैर्वा सर्वानावेशय ओं पातय ओं चामुण्डे ! किलि किलि ओं विच्चे हुं फट् स्वाहा ।

पदमाला, जयाख्येयं सर्वकर्म्मप्रसाधिका ॥ १ ॥

सर्वदा होमजप्याद्यैः पाठाद्यैश्च रणे जयः। अष्टाविंशभुजा ध्येया असिखेटकवत्करौ ॥
गदादण्डयुतौ चान्यौ शरचापधरौ परौ । मुष्टिमुद्गरयुक्तौ च शङ्खखड्गयुतौ परौ ॥

ध्वजवज्रधरौ चान्यौ सचक्रपरशू परौ । डमरुदर्पणाढ्यौ च शक्तिकुन्तधरौ परौ ॥४॥
हलेन मुषलेनाढ्यौ पाशतोमरसंयुतौ । ढक्कापणवसंयुक्तौ अभयमुष्टिकान्वितौ ॥ ५॥
तर्जयन्ती च महिषं घातनी होमतोऽरिजित् ।
त्रिमध्वाक्ततिलैर्होमो न देया यस्य कस्यचित् ॥ ६ ॥

इत्यादि महापुराणे आग्नेये सङ्ग्रामविजयविद्यावर्णनं नाम
पञ्चत्रिंशदधिकशततमोऽध्यायः ।

---

## षट्त्रिंशदधिकशततमोऽध्यायः

### नक्षत्रचक्रम् ।

ईश्वर उवाच ।

अथ चक्रं प्रवक्ष्यामि यात्रादौ च फलप्रदम् ।
अश्विन्यादौ लिखेच्चक्रं त्रिनाड़ीपरिभूषितम् ॥ १ ॥
अश्विन्यार्द्रादिभिः पूर्वाततश्चोत्तरफल्गुनी । हस्ता ज्येष्ठातथामूलं वारुणंचाप्यजैकपात्
नाड़ीयं प्रथमा चान्या याम्यं मृगशिरस्तथा ।
पुष्यं भाग्यन्तथा चित्रा मैत्रश्चाप्यं च वासवम् ॥ ३ ॥
अहिर्बुध्न्यं तृतीयाथ कृत्तिका रोहिणी ह्यहिः ।
चित्रा स्वाती विशाखा च श्रवणा रैवती च भम् ॥ ४ ॥
नाड़ीत्रितयसञ्जुष्टग्रहाज् ज्ञेयं शुभाशुभम् । चक्रम्फणीश्वरन्तत्तु त्रिनाड़ीपरिभूषितम् ॥
रविभौमार्कराहुस्थमशुभं स्याच्छुभं परम् । देशग्रामयुता भ्रातृभार्य्याद्या एकशः शुभाः

अ, भ, कृ, रो, मृ, आ, पु, पु, अ, म, पू, उ, ह, चि, स्वा, वि, अ, ज्ये, मू, पू, उ, श्र, ध, श, पू, उ, रे, अत्र सप्तविंशतिनक्षत्राणि ज्ञेयानि ।

इत्यादि महापुराणे आग्नेये नक्षत्रचक्रवर्णनं नाम षट्त्रिंशदधिकशततमोऽध्यायः ।

---

# सप्तत्रिंशदधिकशततमोऽध्यायः

## महामारीविद्यावर्णनम् ।

ईश्वर उवाच ।

महामारीं प्रवक्ष्यामि विद्यां शत्रुविमर्दिनीम् ।

ओं ह्रीं महामारि ! रक्ताक्षि ! कृष्णवर्णे ! यमस्याज्ञाकरिणि ! सर्वभूतसंहारकारिणि ! अमुकं हन २ ओं दह २ ओं पच २ छिन्द २ ओं मारय २ ओं उत्सादय २ ओं सर्वसत्त्ववशङ्करि ! सर्वकामिके ! हुं फट् स्वाहेति ।

ओं मारि हृदयाय नमः । ओं महामारि ! शिरसे स्वाहा ।ओं कालरात्रि ! शिखायै वौषट् । ओं कृष्णवर्णे ! स्वः कवचाय हुं । ओं तारकाक्षि ! विद्युज्जिह्वे ! सर्वसत्त्वभयङ्करि ! रक्ष २ सर्वकार्य्येषु ह्रं त्रिनेत्राय वषट् । ओं महामारि ! सर्वभूतदमनि ! महाकालि ! अस्त्राय हुं फट् ।

एष न्यासो महादेवि ! कर्त्तव्यः साधकेन तु ॥ १ ॥

शवादिवस्त्रमादाय चतुरस्रन्त्रिहस्तकम् । कृष्णवर्णां त्रिवक्त्राञ्च चतुर्बाहुं समालिखेत्
पटे विचित्रवर्णैश्च धनुः शूलञ्च कर्तृकाम् । खट्वाङ्गन्धारयन्तीं च कृष्णाभंपूर्वमाननम्
तस्य दृष्टिनिपातेन भक्षयेदग्रतो नरम् । द्वितीयं याम्यभागे तु रक्तजिह्वं भयानकम् ॥
लेलिहानं करालं च दंष्ट्रोत्कटभयानकम् । तस्य दृष्टिनिपातेन भक्ष्यमाणं हयादिकम्

तृतीयं च मुखं देव्याः श्वेतवर्णं गजादिनुत् ।

गन्धपुष्पादिमध्वाज्यैः पश्चिमाभिमुखं यजेत् ॥ ६ ॥

मन्त्रस्मृतेरक्षिरोगशिरोरोगादि नश्यति । वश्याः स्युर्यक्षरक्षाश्च नाशमायान्ति शत्रवः
समिधो निम्बवृक्षस्य ह्यजारक्तविमिश्रिताः । मारयेत् क्रोधसंयुक्तो होमादेव न संशयः
परसैन्यमुखो भूत्वा सप्ताहं जुहुयाद्यदि । व्याधिभिर्गृह्यते सैन्यम्भङ्गो भवति वैरिणः

समिधोऽष्टसहस्रन्तु यस्य नाम्ना तु होमयेत् ।

अचिरान् म्रियते सोऽपि ब्रह्मणा यदि रक्षितः ॥ १० ॥

उन्मत्तसमिधो रक्तविषयुक्तसहस्रकम् । दिनत्रयं ससैन्यश्च नाशमायाति वै रिपुः ॥
राजिकालवणैर्होमाद्भङ्गोऽरेः स्याद् दिनत्रयात् ।
खररक्तसमायुक्तहोमादुच्चाटयेद्रिपुम् ॥ १२ ॥
काकरक्तसमायोगाद्धोमादुत्सादनं ह्यरेः । बधाय कुरुते सर्व्वं यत् किञ्चिन्मनसेप्सितम्
अथ सङ्ग्रामसमये गजारूढ़स्तु साधकः । कुमारीद्वयसंयुक्तो मन्त्रसन्नद्धविग्रहः ॥
दूरशङ्खादिवाद्यानि विद्यया ह्यभिमन्त्रयेत् । महामायापटं गृह्य उच्छेत्तव्यं रणाजिरे ॥
परसैन्यमुखो भूत्वा दर्शयेत्तं महापटम् । कुमारीर्भोजयेत्तत्र पश्चात्पिण्डीश्च भ्रामयेत्
साधकश्चिन्तयेत् सैन्यम्पाषाणमिव निश्चलम् । निरुत्साहंविभग्नञ्च मुह्यमानञ्च भावयेत्
एष स्तम्भो मया प्रोक्तो न देयो यस्य कस्यचित् ।
त्रैलोक्यविजया माया दुर्गेवं भैरवी तथा ॥ १८ ॥
कुब्जिका भैरवी रुद्रो नारसिंहपठादिना ।
इत्यादि महापुराणे आग्नेये महामारीविद्यावर्णनं नाम सप्तत्रिंशदधिकशततमोऽध्यायः।

---

# अष्टत्रिंशदधिकशततमोऽध्यायः

## षट्कर्माणिवर्णनम् ।

ईश्वर उवाच ।

षट्कर्म्माणि प्रवक्ष्यामि सर्व्वमन्त्रेषु तच्छृणु ।
आदौ साध्यं लिखेत् पूर्वं चान्ते मन्त्रसमन्वितम् ॥ १ ॥
पल्लवः स तु विज्ञेयो महोच्चाटकरः परः ।
आदौ मन्त्रः ततः साध्यो मध्ये साध्यः पुनर्म्मनुः ॥ २ ॥
योगाख्यः सम्प्रदायोऽयङ्कुलोत्सादेषु योजयेत् ।
आदौ मन्त्रपदन्दद्यान्मध्ये साध्यं नियोजयेत् ॥ ३ ॥

पुनश्चान्ते छिखेन्मन्त्रं साध्यं मन्त्रपदं पुनः । रोधकः सम्प्रदायस्तु स्तम्भनादिषुयोजयेत्

अधोद्र्ध्वं याम्यवामे तु मध्ये साध्यन्तु योजयेत् ।

सम्पुटः स तु विज्ञेयो वश्याकर्षेषु योजयेत् ॥ ५ ॥

मन्त्राक्षरं यदा साध्यं प्रथितश्चाक्षराक्षरम् । प्रथमः सम्प्रदायः स्यादाकृष्टिवशकारकः ॥

मन्त्राक्षरद्वयं लिख्य एकं साध्याक्षरं पुनः । विदर्भः स तु विज्ञेयो वश्याकर्षेषु योजयेत्

आकर्षणादि यत् कर्म्म वसन्ते चैव कारयेत् ।

तापज्वरे तथा वश्ये स्वाहा चाकर्षणे शुभम् ॥ ८ ॥

नमस्कारपदश्चैव शान्तिवृद्धौ प्रयोजयेत् । पौष्टिकेषु वषट्कारमाकर्षे वशकर्म्मणि ॥६॥

विद्वेषोच्चाटने मृत्यौ फट् स्यात् खण्डीकृतौ शुभे ।

लाभादौ मन्त्रदीक्षादौ वषट्कारस्तु सिद्धिदः ॥ १० ॥

यमोऽसि यमराजोऽसि कालरूपोऽसि धर्म्मराट् । मयादत्तमिमं शत्रुमचिरेण निपातय

निपातयामि यत्नेन निर्वृत्तो भव साधक ! । संहृष्टमनसा ब्रूयाद्देशिकोऽरिप्रसूदनः ॥

पक्षे शुक्ले यमं प्राच्र्य होमादेतत् प्रसिद्ध्यति ।

आत्मानम्भैरवं ध्यात्वा ततो मध्ये कुलेश्वरीम् ॥ १३ ॥

रात्रौ वार्त्तां विजानाति आत्मनश्च परस्य च ।

दुर्गे ! दुर्गे ! रक्षणीति दुर्गां प्राच्यारिहा भवेत् ॥ १४ ॥

जप्त्वा हसक्षमलवरयुम्भैरवीं घातयेदरिम् ।

इत्यादि महापुराणे आग्नेये षट्कर्मकथनं नामाष्टत्रिंशदधिकशततमोऽध्यायः ।

---

# ऊनचत्वारिंशदधिकशततमोऽध्यायः

## षष्टिसंवत्सराः ।

ईश्वर उवाच ।

षष्ट्यब्दानां प्रवक्ष्यामि शुभाशुभमतः शृणु । प्रभवे यज्ञकर्म्माणि विभवे सुखिनो जनाः

शुक्ले च सर्वशस्यानि प्रमोदेन प्रमोदिताः । प्रजापतौ प्रवृद्धिः स्यादङ्गिरा भोगवर्द्धनः
श्रीमुखे वर्द्धते लोको भावे भावः प्रवर्द्धते । पूरणो पूरते शक्रो धाता सर्वौषधीकरः ॥
ईश्वरः क्षेम आरोग्यबहुधान्यसुभिक्षदः । प्रमाथी मध्यवर्षस्तु विक्रमे शस्यसम्पदः ॥४॥

वृषी वृष्यति सर्वांश्च चित्रभानुश्च चित्रताम् ।
स्वर्भानुः क्षेममारोग्यं तारणे जलदाः शुभाः ॥ ५ ॥

पार्थिवे शस्यसम्पत्तिरतिवृष्टिस्तथा जयः । सर्वजित्युत्तमा वृष्टिः सर्वधारी सुभिक्षदः
विरोधी जलदान् हन्ति विकृतश्च भयङ्करः । खरे भवेत् पुमान् वीरो नन्दने नन्दते प्रजाः
विषयः शत्रुहन्ता च शत्रुरोगादि मर्द्दयेत् । ज्वरार्त्तो मन्मथे लोको दुष्करे दुष्कराप्रजाः
दुर्मुखे दुर्मुखो लोको हेमलम्बे न सम्पदः । संवत्सरो महादेवि ! विलम्बस्तु सुभिक्षदः

विकारी शत्रुकोपाय विजये ! सर्वदा क्वचित् ।
प्लवे प्लवन्ति तोयानि शोभने ! शुभकृत् प्रजा ॥ १० ॥
राक्षसे निष्ठुरो लोको विविधन्धान्यमानने ।
सुवृष्टिः पिङ्गले क्वापि काले ह्युक्तो धनक्षयः ॥ ११ ॥
सिद्धार्थे सिद्ध्यते सर्वं रौद्रे रौद्रं प्रवर्त्तते ।
दुर्म्मतौ मध्यमा वृष्टिर्दुन्दुभिः क्षेमधान्यकृत् ॥ १२ ॥

स्रवन्ते रुधिरोद्गारी रक्ताक्षः क्रोधनो जयः । क्षये क्षीणधनोलोकः षष्टिसंवत्सराणितु
इत्यादि महापुराणे आग्नेये षष्टिसंवत्सरवर्णनं नामोनचत्वारिंशदधिकशततमोऽध्यायः।

---

## चत्वारिंशदधिकशततमोऽध्यायः

### वश्यादियोगवर्णनम् ।

ईश्वर उवाच ।

वश्यादियोगान् वक्ष्यामि लिखेद्द्व्यष्टपदे त्विमान् ।
भृङ्गराजः सहदेवी मयूरस्य शिखा तथा ॥ १ ॥

पुत्रजीवकृतञ्जली ह्यधःपुष्पा रुदन्तिका । कुमारी रुद्रजटा स्याद्विष्णुक्रान्ताशितोऽर्ककः
लज्जालुका मोहलता कृष्णधुस्तूरसञ्ज्ञिता । गोरक्षः कर्क्कटी चैव मेषशृङ्गीस्नुही तथा

ऋत्विजो१६ वह्नयो३ नागाः८ पक्षौ२ मुनि३ मनू१४ शिवः ११ ।

वसवो८ दिक् १० रसा६ वेदा४ ग्रह६र्त्तु६ रवि१२ चन्द्रमाः १ ॥ ४ ॥

तिथयश्च १५ क्रमाद्भागा ओषधीनां प्रदक्षिणम् । प्रथमेन चतुष्केण धूपश्चोद्वर्त्तनं परम्

तृतीयेनाञ्जनं कुर्य्यात् स्नानं कुर्य्याच्चतुष्कतः ।

भृङ्गराजानुलोमाच्च चतुर्द्धा लेपनं स्मृतम् ॥ ६ ॥

मुनयो दक्षिणे पार्श्वे युगाद्याश्चोत्तराः स्मृताः ।

भुजगाः पादसंस्थाश्च ईश्वरा मूर्द्धिन संस्थिताः ॥ ७ ॥

मध्येन सार्क्कशशिभिर्धूपः स्यात् सर्वकार्य्यके । एतैर्विलिप्तदेहस्तु त्रिदशैरपि पूज्यते॥

धूपस्तु षोड़शाद्यस्तु गृहाद्युद्वर्त्तने स्मृतः ।

युगाद्याश्चाञ्जने प्रोक्ता वाणाद्याः स्नानकर्म्मणि ॥ ६ ॥

रुद्राद्या भक्षणे प्रोक्ताः पक्षाद्याः पानके स्मृताः ।

ऋत्विग्वेदर्त्तुनयनैस्तिलकं लोकमोहनम् ॥ १० ॥

सूर्य्यत्रिदशपक्षैश्च शैलैः स्त्री लेपतो वशा । चन्द्रेन्द्रफणिरुद्रैश्च योनिलेपाद्वशाः स्त्रियः
तिथिदिग्युगवाणैश्च गुटिका तु वशङ्करी । भक्ष्ये भोज्ये तथा पाने दातव्यागुटिकावशे
ऋत्विग्ग्रहाक्षिशैलैश्च शस्त्रस्तम्भे मुखे धृता । शैलेन्द्रवेदरन्ध्रैश्च अङ्गलेपाज्जले वसेत् ॥
वाणाक्षिमनुरुद्रैश्च गुटिका क्षुत्तृषादिनुत् । त्रिषोड़शदिशावाणैर्ल्लेपात् स्त्रीदुर्भगाशुभा
त्रिदशाक्षिदिशानेत्रैर्ल्लेपात् क्रीडेच्चपन्नगैः । त्रिदशाक्षेशभुजगैर्ल्लेपात् स्त्रीसूयतेसुखम्
सप्तदिङ्मुनिरन्ध्रैश्च द्यूतजिद्वस्त्रलेपतः । त्रिदशाक्षाब्धिमुनिभिर्ध्वजलेपात् रतौ सुतः ॥

ग्रहाब्धिसर्प्यत्रिदशैर्गुटिका स्याद् वशङ्करी ।

ऋत्विक्पदस्थितौषध्याः प्रभावः प्रतिपादितः ॥ १७ ॥

इत्यादि महापुराणे आग्नेये वश्यादियोगकथनं नाम चत्वारिंशदधिकशततमोऽध्यायः ।

# एकचत्वारिंशदधिकशततमोऽध्यायः

## षट्त्रिंशत्पदकज्ञानम् ।

ईश्वर उवाच ।

षट्त्रिंशत्पदसंस्थानामोषधीनां वदे फलम् । अमरीकरणं नृणां ब्रह्मरुद्रेन्द्रसेवितम् ॥

हरीतक्यक्ष्यधात्र्यश्च मरीचं पिप्पलीशिफा ।
वह्निः शुण्ठी पिप्पली च गुडूचीवचनिम्बकाः ॥ २ ॥

वासकः शतमूली च सैन्धवं सिन्धुवारकम् । कण्टकारी गोक्षुरका विल्वपौनर्नवंवला एरण्डमुण्डी रुचको भृङ्गः क्षारोऽथ पर्पटः । धन्याको जीरकश्चैव शतपुष्पी जवानिका विडङ्गः खदिरश्चैव कृतमालो हरिद्रया । वचा सिद्धार्थ एतानि षट्त्रिंशत्पदगानि हि ॥ क्रमादेकादिसङ्ज्ञानि ह्यौषधानि महान्ति हि । सर्वरोगहराणि स्युरमरीकरणानि च॥ वलीपलितभेत्तृणि सर्वकोष्ठगतानि तु । एषां चूर्णश्च वटिका रसेन परिभाविता ॥७॥ अवलेहः कषायो वा मोदको गुड़खण्डकः । मधुतो घृततो वापि घृतन्तैलमथापि वा ॥ सर्वात्मनोपयुक्तं हि मृतसञ्जीवनम्भवेत् । कर्षार्द्धं कर्षमेकं वा पलार्द्धं पलमेककम् ॥६॥ यथेष्टाचारनिरतो जीवेद्वर्षशतत्रयम् । मृतसञ्जीवनीकल्पे योगो नास्मात् परोऽस्ति हि प्रथमान्नवकाद्योगात् सर्वरोगैः प्रमुच्यते । द्वितीयाच्च तृतीयाच्च चतुर्थान्मुच्यते रुजः

एवं षट्काच्च प्रथमाद् द्वितीयाच्च तृतीयतः ।
चतुर्थात्पञ्चमात् षष्ठात्तथा नवचतुष्कतः ॥ १२ ॥

एकद्वित्रिचतुःपञ्चषट्सप्ताष्टमतोऽनिलात् । अग्निभास्करषड्विंशसप्तविंशैश्च पित्ततः ॥

वाणर्त्तुशैलवसुभिस्तिथिभिर्मुच्यते कफात् ।
वेदाग्निभिर्वाणगुणैः षड्गुणैः स्याद्वशो धृते ॥ १४ ॥

ग्रहादिग्रहणान्तैश्च सर्वैरेव विमुच्यते । एकद्वित्रिरसैः शैलैर्वसुग्रहशिवैः क्रमात् ॥१५॥

द्वात्रिंशत्तिथिसूर्य्यैश्च नात्र कार्य्या विचारणा ।
षट्त्रिंशत्पदकज्ञानं न देयं यस्य कस्यचित् ॥ १६ ॥

इत्यादि महापुराणे आग्नेये षट्त्रिंशत्पदकज्ञानं नामैकचत्वारिंशदधिकशततमोऽध्यायः

# द्विचत्वारिंशदधिकशततमोऽध्यायः

## मन्त्रौषधादिवर्णनम् ।

ईश्वर उवाच ।

मन्त्रौषधानि चक्राणि वक्ष्ये सर्वप्रदानि च। चौरनाम्नो वर्णगुणोद्विघ्नोमात्राश्चतुर्गुणाः
नाम्ना हृते भवेच्छेषश्चौरोऽथ जातकं वदे। प्रश्ने ये विषमा वर्णास्ते गर्भे पुत्रजन्मदाः

नामवर्णैः समैः काणो वामेऽक्षिण विषमैः पुनः।
दक्षिणाक्षि भवेत् काणं स्त्रीपुन्नामाक्षरस्य च ॥ ३ ॥
मात्रावर्णाश्चतुर्निघ्ना वर्णपिण्डे गुणे कृते।
समे स्त्री विषमे ना स्याद्विशेषे च मृतिः स्त्रियाः ॥ ४ ॥

प्रथमं रूपशून्येऽथ प्रथमं म्रियते पुमान्। प्रश्नं सूक्ष्माक्षरैर्गृह्य द्रव्यैर्भागेऽखिले मतम् ॥
शनिचक्रं प्रवक्ष्यामि तस्य दृष्टिं परित्यजेत्। राशिस्थः सप्तमे दृष्टिश्चतुर्दशशतेर्द्धिका ॥
एकद्व्यष्टद्वादशमः पाददृष्टिश्च तं त्यजेत्। दिनाधिपः प्रहरभाक् शेषा यामार्द्धभागिनः
शनिभागन्त्यजेद्युद्धे दिनराहुं वदामि ते। रवौ पूर्वेऽनिले मन्दे गुरौ याम्येऽनले भृगौ
अग्नौ कुजे भवेत् सौम्ये स्थिते राहुर्बुधे सदा। फणिराहुस्तु प्रहरमैशे वह्नौ च राक्षसे

वायौ संवेष्टयित्वा च शत्रुं हन्तीशसम्मुखम्।
तिथिराहुं प्रवक्ष्यामि पूर्णिमाग्नेयगोचरे ॥ १० ॥
अमावास्या वायव्ये च राहुः सम्मुखशत्रुहा।
काद्या जान्ताः सम्मुखे स्युः साद्या दान्ताश्च दक्षिणे ॥ ११ ॥
शुक्ले त्यजेत् कुजगुणान् धाद्या मान्ताश्च पूर्वतः।
याद्या हान्ता उत्तरे स्युस्तिथिं दृष्टिं विवर्जयेत् ॥ १२ ॥
पूर्वाश्च दक्षिणास्तिस्रो रेखा वै मूलभेदके।
सर्य्यराश्यादि संलिख्य दृष्टौ हानिर्जयोऽन्यथा ॥ १३ ॥

विष्टिराहुं प्रवक्ष्यामि अष्टौ रेखास्तु पातयेत् ।
शिवाद्यमं यमाद्वायुं वायोरिन्द्रं ततोऽम्बुपम् ॥ १५ ॥
नैर्ऋताच्च नयेच्चन्द्रं चन्द्रादग्निं ततो जले । जलादीशे चरेद्राहुर्विष्ट्या सह महाबलः॥
ऐशान्याश्च तृतीयादौ सप्तम्यादौ च याम्यके ।
एवं कृष्णे सिते पक्षे वायौ राहुश्च हन्त्यरीन् ॥ १६ ॥
इन्द्रादीन् भैरवादींश्च ब्रह्माण्यादीन् ग्रहादिकान् ।
अष्टाष्टकञ्च पूर्वादौ याम्यादौ वातयोगिनीम् ॥ १७ ॥
यान्दिशं वहते वायुस्तत्रस्थो घातयेदरीन् । दृढीकरणमाख्यास्ये कण्ठे बाह्वादिधारिता
पुष्योद्धृता काण्डलक्ष्यं वारयेत् शरपुङ्खिका ।
तथा पराजिता पाठा द्वाभ्यां खड्गं निवारयेत् ॥ १९ ॥

ओं नमो भगवति! वज्रशृङ्खले! हन २ ओं भक्ष भक्ष ओं खाद ओं अरे रक्तं पिब कपालेन रक्ताक्षि! रक्तपटे! भस्माङ्गि! भस्मलिप्तशरीरे! वज्रायुधे! वज्रप्राकार-निचिते! पूर्वां दिशं बन्धर ओं दक्षिणां दिशम्बन्धर ओं पश्चिमां दिशम्बन्धर ओं उत्तरां दिशम्बन्धर नागान् बन्धर नागपत्नीर्बन्धर ओं असुरान् बन्धर ओं यक्षराक्षस-पिशाचान् बन्धर ओं प्रेतभूतगन्धर्वादयो ये केचिदुपद्रवास्तेभ्यो रक्षर ओं ऊर्द्ध्वं रक्षर ओं अधो रक्षर ओं क्षुरिकं बन्धर ओं ज्वल महाबले! घटिर ओं मोटिर सटा-वलिवज्राग्निवज्रप्राकारे! हुं फट् ह्रीं ह्रूं श्रीं फट् ह्रीं हः फूं फें फः सर्वग्रहेभ्यः सर्व-व्याधिभ्यः सर्वदुष्टोपद्रवेभ्यो ह्रीं अशेषेभ्यो रक्षर ।

ग्रहज्वरादिभूतेषु सर्वकर्मसु योजयेत् ।

इत्यादि महापुराणे आग्नेये मन्त्रौषधादिवर्णनं नाम
द्वाचत्वारिंशदधिकशततमोऽध्यायः ।

---

# त्रिचत्वारिंशदधिकशततमोऽध्यायः

## कुब्जिकापूजावर्णनम् ।

ईश्वर उवाच ।

कुब्जिकाक्रमपूजाञ्च वक्ष्ये सर्वार्थसाधनीम् । ययार्जिताःसुरादेवैःशस्त्राद्यैराज्यसंयुतैः ।
मायाबीजञ्चगुह्याङ्गेषट्कमस्त्रं करेन्यसेत् । काली कालीतिहृदयंदुष्टचाण्डालिकाशिरः

ह्रीं स्फें ह स ख क छ ड ओंकारो भैरवः शिखा ।

भेलखी कवचं दूती नेत्राख्या रक्तचण्डिका ॥ ३ ॥

ततोगुह्यकुब्जिकास्त्रं मण्डलेस्थानके यजेत् । अग्नौकूर्चशिरोरुद्रेनैर्ऋत्येऽथशिखानिले

कवचम्मध्यतो नेत्रमस्त्रन्दिक्षु च मण्डले ।

द्वात्रिंशता कर्णिकायां स्रों हसक्षमलनववषड्सचात्ममन्त्रबीजकम् ॥ ५ ॥

ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ।

वाराही चैव माहेन्द्री चामुण्डा चण्डिकेन्द्रकात् ॥ ६ ॥

यजेद्रवलकसहान् शिवेन्द्राग्नियमेऽग्निपे । जले तु कुसुममालामद्रिकाणाञ्च पञ्चकम् ॥
जालन्धरं पूर्णगिरिं कामरूपं क्रमाद्यजेत् । मरुदीशाग्निनैर्ऋत्ये मध्ये वैवज्रकुब्जिकाम्
अनादिविमलः पूज्यः सर्वज्ञविमलस्ततः । प्रसिद्धविमलश्चाथ संयोगविमलस्ततः ॥
समयाख्योऽथ विमल एतद्विमलपञ्चकम् । मरुदीशाननैर्ऋत्ये वह्नौ चोत्तरश्रृङ्गके ॥
कुब्जार्थं खिङ्खिनी षष्ठासोपन्नासुस्थिरातथा । रत्नसुन्दरीचैशानेश्रृङ्गेचाष्टादिनाथकाः

मित्र श्रीडीशषष्ठ्याख्यौ वर्षा अग्न्यम्बुपेऽनिले ।

भवेद् गगनरत्नं स्याच्चाप्ये कवचरत्नकम् ॥ १२ ॥

ब्रुं मर्त्यः पञ्चनामाख्यो मरुदीशानवह्निगः ।

याम्याग्नेये पञ्चरत्नं ज्येष्ठा रौद्री तथाऽन्तिका ॥ १३ ॥

तिस्रो ह्यासां महावृद्धाः पञ्चप्रणवतोऽखिलाः । सप्तविंशत्यष्टविंशभेदात् सम्पूजनंद्विधा

ओं ऐं गूं क्रमगणपतिं प्रणवं वटुकं यजेत् । चतुरस्रे मण्डले च दक्षिणे गणपं यजेत् ॥ वामे च वटुकं कोणे गुरून् षोड़शनाथकान् । वायव्यादौ चाष्ट दशप्रतिषट्कोणके ततः ब्रह्माद्याश्चाष्ट परितस्तन्मध्ये च नवात्मकः। । कुब्जिका कुलटा चैव क्रमपूजा तु सर्वदा इत्यादि महापुराणे आग्नेये कुब्जिकापूजावर्णनं त्रिचत्वारिंशदधिकशततमोऽध्यायः ।

---

# चतुश्चत्वारिंशदधिकशततमोऽध्यायः

## कुब्जिकापूजावर्णनम् ।

### ईश्वर उवाच ।

श्रीमतीं कुब्जिकां वक्ष्ये धर्मार्थादिजयप्रदाम् । पूजयेन्मूलमन्त्रेण परिवारयुतेन वा ॥

ओं ऐं ह्रौं श्रीं खैं ह्रैं हसक्षमलवबयम्भगवति ! अम्बिके ! ह्रां ह्रीं क्ष्रीं क्ष्रौं क्ष्रूं क्रीं कुब्जिके ! ह्रां ओं ङञनणमे अघोरमुखि ! व्रां छ्रां छ्रीं किलि २ क्ष्रौं विच्चे ख्यौं श्रीं क्रों ओं ह्रीं ऐं वज्रकुब्जिनि ! स्त्रीं त्रैलोक्यकर्षिणि ! ह्रीं कामाङ्गद्राविणि ! ह्रीं स्त्रीं महाक्षोभकारिणि ! ऐं ह्रीं क्ष्रौं ऐं ह्रीं श्रीं फें क्षौं नमो भगवति ! क्षौं कुब्जिके ! ह्रों ह्रों क्रैं ङञणनमे अघोरमुखि ! छ्रां छां विच्चे ओं किलि २ ।

कृत्वा कराङ्गन्यासञ्च सन्ध्यावन्दनमाचरेत् ।
वामा ज्येष्ठा तथा रौद्री सन्ध्यात्रयमनुक्रमात् ॥ २ ॥
कुलवागीशि विद्महे महाकालीति धीमहि ।
तन्नः कौली प्रचोदयात् ।
मन्त्राः पञ्च प्रणवाद्याः पादुकां पूजयामि च ।
मध्ये नाम चतुर्थ्यन्तं द्विनवात्मकवीजकाः ॥ ३ ॥
नमोऽन्तावाथ षष्ठ्या तु सर्वे ज्ञेया वदामि तान् ।
कौलीशनाथः सुकला जन्मतः कुब्जिका ततः ॥ ४ ॥

श्रीकण्ठनाथः कौलेशो गगनानन्दनाथकः । चटुला देवी मैत्रीशी कराली तूर्णनाथकः
अतलदेवी श्रीचन्द्रा देवीत्यन्तास्तत स्त्विमे । भगात्मपुङ्गणदेवमोहनीं पादुकां यजेत् ॥
अतीतभुवनानन्दरत्नाढ्यां पादुकां यजेत् । ब्रह्मज्ञानाऽथ कमला परमा विद्या सह ॥७॥
विद्यादेवीगुरुशुद्धिस्त्रिशुद्धिं प्रवदामि ते । गगनश्चटुली चात्मा पद्मानन्दो मणिः कला
कमलो माणिक्यकण्ठो गगनः कुमुदस्ततः । श्रीपद्मो भैरवानन्दो देवः कमल इत्यतः ॥

शिवो भवोऽथ कृष्णश्च नवसिद्धाश्च षोड़श ।
चन्द्रपूरोऽथ गुल्मश्च शुभः कामोऽतिमुक्तकः ॥ १० ॥

कण्ठो वीरः प्रयोगोऽथ कुशलो देवभोगकः । विश्वदेवः खड्गदेवो रुद्रो धाताऽसिरेवच

मुद्रास्फोटो वंशपूरो भोजः षोड़श सिद्धकाः ।
समयान्यस्तु देहस्तु षोढ़ान्यासेन यन्त्रितः ॥ १२ ॥

प्रक्षिप्य मण्डले पुष्पं मण्डलान्यथ पूजयेत् । अनन्तश्च महान्तश्च सर्वदा शिवपादुकाम्
महाव्याप्तिश्च शून्यश्च पञ्चतत्त्वात्ममण्डलम् । श्रीकण्ठनाथपादुकां शङ्करानन्तकौ यजेत्
सदाशिवः पिङ्गलश्च भृगवानन्दश्च नाथकः । लाङ्गूलानन्दसंवर्तौ मण्डलस्थानके यजेत्

नैर्ऋत्ये श्रीमहाकालः पिनाकी च महेन्द्रकः ।
खड्गो भुजङ्गो वाणश्च अघासिः शब्दको वशः ॥ १६ ॥
आज्ञारूपो नन्दरूपो बलिन्दत्वा क्रमं यजेत् ।

ह्रौं खं खं ह्रूं सौं वटुकाय अरु २ अर्घं पुष्पं धूपं दीपंगन्धं बलिःपूजां गृह्ण २ नमस्तुभ्यम् । ओं ह्रां ह्रीं ह्रूं क्षें क्षेत्रपालाय अवतर २ महाकपिलजटाभार ! भास्वरत्रिनेत्रज्वालामुख ! एह्येहि गन्धपुष्पबलिपूजां गृह्ण २ खः खः ओं कः ओं लः ओं महाडामराधिपतये स्वाहा ।

बलिशेषेऽथ यजेत् ह्रीं ह्रूं ह्रां श्रीं वै त्रिकूटकम् ॥ १७ ॥
वामे च दक्षिणे ह्यग्रे याम्ये निशानाथपादुकाः ।
दक्षे तमोऽरिनाथस्य ह्यग्रे कालानलस्य च ॥ १८ ॥

उड्डियाणं जालन्धरं पूर्णं वै कामरूपकम् । गगनानन्ददेवश्च स्वर्गानन्दं सवगकम् ॥

परमानन्ददेवञ्च सत्यानन्दस्य पादुकाम् । नागानन्दञ्च वर्गाख्यमुकान्ते रत्नपञ्चकम् ॥
सौम्ये शिवे यजेत् षट्कं सुरनाथस्य पादुकाम् ।
श्रीमत्समयकोटीशं विद्याकोटीश्वरं यजेत् ॥ २१ ॥
कोटीशं विन्दुकोटीशं सिद्धकोटीश्वरन्तथा । सिद्धचतुष्कमाग्नेय्यां अमरीशेश्वरं यजेत्
चक्रीशनाथं कुरङ्गेशं वृत्रेशश्चन्द्रनाथकम् ।
यजेद् गन्धादिभिश्चैतान् याम्ये विमलपञ्चकम् ॥ २३ ॥
यजेदनादिविमलं सर्व्वज्ञविमलं ततः । यजेद्योगीशविमलं सिद्धाख्यं समयाख्यकम् ॥
नैर्ऋत्ये चतुरो देवान् यजेत् कन्दर्पनाथकम् ।
पूर्वाः शक्तीश्च सर्वाश्च कुब्जिकापादुकां यजेत् ॥ २५ ॥
नवात्मकेन मन्त्रेण पञ्चप्रणवकेन वा । सहस्राक्षमनवद्यं विष्णुं शिवं सदा यजेत् ॥२६॥
पूर्व्वाच्छिवान्तं ब्रह्मादि ब्रह्माणी च महेश्वरी ।
कौमारी वैष्णवी चैव वाराही शक्रशक्तिका ॥ २७ ॥
चामुण्डा च महालक्ष्मीः पूर्व्वादीशान्तमर्च्चयेत् ।
डाकिनी राकिणी पूज्या लाकिनी काकिनी तथा ॥ २८ ॥
शाकिनी याकिनी पूज्या वायव्यादुग्रषट्सु च ।
यजेद् ध्यात्वा ततो देवीं द्वात्रिंशद्वर्णकात्मकाम् ॥ २९ ॥
पञ्चप्रणवकेनापि ह्रीं कारेणाथवा यजेत् । नीलोत्पलदलश्यामा षड्वक्त्राष्प्रकारिका
चिच्छक्तिरष्टादशाख्या बाहुद्वादशसंयुता । सिंहासनसुखासीना प्रेतपद्मोपरिस्थिता ॥
कुलकोटिसहस्राढ्या कर्कोटो मेखलास्थितः । तक्षकेणोपरिष्टाच्च गले हारश्च वासुकिः
कुलिकः कर्णयोर्यस्याः कूर्म्मः कुण्डलमण्डलः ।
भ्रुवोः पद्मो महापद्मो वामे नागः कपालकः ॥ ३३ ॥
अक्षसूत्रञ्च खट्वाङ्गं शङ्खं पुस्तञ्च दक्षिणे । त्रिशूलन्दर्पणं खड्गं रत्नमालाङ्कुशन्धनुः ॥३४॥
श्वेतमूद्र्ध्वमुखन्देव्याऊद्र्ध्वश्वेतः तथापरम् । पूर्व्वास्यं पाण्डरंक्रोधिदक्षिणंकृष्णवर्णकम्
हिमकुन्देन्दुभं सौम्यं ब्रह्मा पादतले स्थितः । विष्णुस्तु जघने रुद्रो हृदि कण्ठे तथेश्वरः

सदाशिवो ललाटे स्याच्छिवस्तस्योर्द्ध्वतः स्थितः।
आघूर्णिता कुब्जिकैवन्ध्येया पूजादिकर्म्मसु ॥ ३७ ॥

इत्यादि महापुराणे आग्नेये कुब्जिकापूजावर्णनं नाम चतुश्चत्वारिंशदधिकशततमोऽध्यायः।

---

# पञ्चचत्वारिंशदधिकशततमोऽध्यायः।

## मालिनीनानामन्त्राः।

ईश्वर उवाच।

नानामन्त्रान् प्रवक्ष्यामि षोढ़ान्यासपुरःसरम्।
न्यासस्त्रिधा तु षोढ़ाः स्युः शाक्तशाम्भवयामलाः ॥ १ ॥
शाम्भवे शब्दराशिः षट्षोड़शग्रन्थिरूपवान्।
त्रिविद्या तद्ग्रहो न्यासस्त्रितत्त्वात्माभिधानकः ॥ २ ॥
चतुर्थो वनमालायाः श्लोकद्वादशरूपवान्। पञ्चमो रत्नपञ्चात्मा नवात्मा षष्ठ ईरितः ॥
शाक्तेपक्षेच मालिन्यास्त्रिविद्यात्माद्वितीयकः। अर्घ्यार्घ्यष्टकरूपोऽन्योद्वादशाङ्गश्चतुर्थकः
पञ्चमस्तु षड़ङ्गः स्याच्छक्तिश्चान्यास्त्रचण्डिका।
क्रीं ह्रौं क्लीं श्रीं क्रूं फट् त्रयं स्यात्तूर्याख्यं सर्व्वसाधकम् ॥ ५ ॥
मालिन्या नादिफान्तं स्यात् नादिनी च शिखा स्मृता।
अग्रसनी शिरसि स्यात् शिरोमालानिवृत्तिः शः ॥ ६ ॥
ट शान्तिश्च शिरो भूयाच् चामुण्डा च त्रिनेत्रगा।
ढ प्रियदृष्टिर्द्विनेत्रे च नासागां गुह्यशक्तिनी ॥ ७ ॥
न नारायणी द्विकर्णे च दक्षकर्णे त मोहनी।
ज प्रज्ञा वामकर्णस्था वक्त्रे च वज्रिणी स्मृता ॥ ८ ॥

क कराली दक्षदंष्ट्रा वामांसा ख कपालिनी ।
ग शिवा उद्ध्र्वदंष्ट्रा स्याद् घ घोरा वामदंष्ट्रिका ॥ ९ ॥
ङ शिखा दन्तविन्यासा ई माया जिह्वया स्मृता ।
अ स्यान्नागेश्वरी वाचि व कण्ठे शिखिवाहिनी ॥ १० ॥
भ भीषणी दक्षस्कन्धे वायुवेगा म वामके ।
ड नामा दक्षबाहौ तु ढ वामे च विनायका ॥ ११ ॥
प पूर्णिमा द्विहस्ते तु ओंकाराद्यङ्गुलीयके ।
अं दर्शनी वामाङ्गुल्य अः स्यात्सञ्जीवनी करे ॥ १२ ॥
ट कपालिनी कपालं शूलदण्डे त दीपनी ।
त्रिशूले च जयन्ती स्याद्वृद्धियः साधनी स्मृता ॥ १३ ॥
जीवे श परमाख्या स्याद् ह प्राणे चाम्बिका स्मृता ।
दक्षस्तने छ शरीरा न वामे पूतना स्तने ॥ १४ ॥
अ स्तनक्षीर आ मोटो लम्बोदर्य्युदरे च थ ।
नाभौ संहारिका क्ष स्यान् महाकाली नितम्बकम् ॥ १५ ॥
गुह्ये न कुसुममाला ष शुक्रे शुक्रदेविका । उरुद्वये त तारा स्याद् ज्ञाना दक्षजानुनि ॥
वामे स्यादौ क्रियाशक्तिरो गायत्री च जङ्घगा ।
ओ सावित्री वामजङ्घादक्षेदो दोहिनी पदे ॥ १७ ॥
फ फेंकारी वामपादे नवात्मा मालिनी मनुः ।
अ श्रीकण्ठः शिखायां स्यादावक्त्रे स्यादनन्तकः ॥ १८ ॥
इ सूक्ष्मो दक्षनेत्रे स्यादी त्रिमूर्तिस्तु वामके । उ दक्षकर्णेऽमरीश ऊ कर्णेर्घांशकोऽपरे
ऋ भावमूर्तिर्नासाग्रे वामनासा तिथीशऋ । लृस्थाणुर्दक्षगण्डे स्याद्वामगण्डे हरश्चलृ
कटीशो दन्तपङ्क्तावे भूतीशश्चोद्‌र्ध्वदन्त ऐ । सद्योजात ओ अधरे ऊर्द्ध्वोष्ठेऽनुग्रहीशश्चौ
अं क्रूरो घाटकायां स्यादः महासेनजिह्वया । कक्रोधीशोदक्षस्कन्धे खश्चण्डीशश्चबाहुषु
पञ्चान्तकः कूर्परे गो घ शिखी दक्षकङ्कणे । ङ एकपादश्चाङ्गुल्यो वामस्कन्धेच कूर्म्मकः

छ एकनेत्रो बाहौ स्याच्चतुर्वक्त्रो ज कर्परे । झ राजसः कङ्कणगः ञ सर्वकामदोऽङ्गुली
ट सोमेशो नितम्बे स्याद्दक्ष ऊरुर्ट लाङ्गली । ड दारको दक्षजानौ जङ्घा ढोऽर्द्धजलेश्वरः

ण उमान्तकोऽङ्गुल्यस्त आषाढो नितम्बके ।
थ दण्डी वाम ऊरौ स्याद्द भिदो वामजानुनि ॥ २६ ॥

ध मीनो वामजङ्घायान्न मेषश्चरणाङ्गुली । प लोहितो दक्षकुक्षौ फ शिखीवामकुक्षिगः

ब गलण्डः पृष्ठवंशे भो नाभौ च हिरण्यकः ।
म महाकाली हृदये य बाणीशस्त्वविस्मृतः ॥ २८ ॥
र रक्ते स्याद्भुजङ्गेशो ल पिनाकी च मांसके ।
व खड्गीशः स्वात्मनि स्याद्बकश्चास्थिनि श स्मृतः ॥ २९ ॥
ष श्वेतश्चैव मज्जायां स भृगुः शुक्रधातुके ।
प्राणे हो नकुलीशः स्यात् क्ष संवर्त्तश्च कोषगः ॥ ३० ॥
रुद्रशक्तीः प्रपूज्य ह्रीं बीजेनाखिलमाप्नुयात् ।

इत्यादि महापुराणे आग्नेये मालिनीनानामन्त्रवर्णनं नाम
पञ्चचत्वारिंशदधिकशततमोऽध्यायः ।

---

## षट्चत्वारिंशदधिकशततमोऽध्यायः

### अष्टाष्टकदेव्यः ।

ईश्वर उवाच ।

त्रिखण्डीं सम्प्रवक्ष्यामि ब्रह्मविष्णुमहेश्वरीम् ।

ओं नमो भगवते ! रुद्राय नमः । नमश्चामुण्डे नमश्चाकाशमातॄणां सर्व्व-
कामार्थसाधनीनामजरामरीणां सर्वत्राप्रतिहतगतीनां स्वरूपपरिवर्त्तिनीनां सर्व्वसत्त्व-

वशीकरणोत्सादनोन्मूलनसमस्तकर्म्मप्रवृत्तानां सर्वमातृगुह्यं हृदयं परमसिद्धं परकर्म्मच्छेदनं परमसिद्धिकरस्मातॄणां वचनं शुभम्।

ब्रह्मखण्डपदे रुद्रैरेकविंशाधिकं शतम् ॥ १ ॥

तद्यथा, ओं नमश्चामुण्डे! ब्रह्माणि! अघोरे! अमोघे! वरदे! विच्चे! स्वाहा। ओं नमश्चामुण्डे! माहेश्वरि! अघोरे! अमोघे! वरदे! विच्चे! स्वाहा। ओं नमश्चामुण्डे कौमारि! अघोरे! अमोघे! वरदे! विच्चे! स्वाहा। ओं नमश्चामुण्डे! वैष्णवि! अघोरे! अमोघे! वरदे! विच्चे! स्वाहा। ओं नमश्चामुण्डे! वाराहि! अघोरे! अमोघे! वरदे! विच्चे! स्वाहा। ओं नमश्चामुण्डे! इन्द्राणि! अघोरे! अमोघे! वरदे! विच्चे! स्वाहा। ओं नमश्चामुण्डे! चण्डि! अघोरे! अमोघे! वरदे! विच्चे! स्वाहा। ओं नमश्चामुण्डे! ईशानि! अघोरे! अमोघे! वरदे! विच्चे! स्वाहा।

यथाक्षरपदानां हि विष्णुखण्डन्द्वितीयकम्।

ओं नमश्चामुण्डे! ऊर्द्ध्वकेशि! ज्वलितशिखरे! विद्युज्जिह्वे! तारकाक्षि! पिङ्गलभ्रुवे! विकृतदंष्ट्रे! क्रुद्धे! ओं मांसशोणितसुरासवप्रिये! हस २ ओं नृत्य २ ओं विजृम्भय २ ओं मायात्रैलोक्यरूपसहस्रपरिवर्त्तिनीनां ओं बन्ध २ ओं कुट्ट २ चिरि २ हिरि २ भिरि २ त्रासनि २ भ्रामणि २ ओं द्रावणि २ क्षोभणि २ मारणि २ संजीवनि २ हेरि २ गेरि २ घेरि २ ओं मुरि २ ओं नमो मातृगणाय नमो नमो विच्चे।

एकत्रिंशत्पदं शम्भोः शतमन्त्रैकसप्ततिः ॥ २ ॥
हे घौं पञ्चप्रणवाद्यन्तां त्रिखण्डीञ्च जपेद् यजेत्।
हेघौं श्रीकुब्जिकाहृदयं पदसन्धौ तु योजयेत् ॥ ३ ॥
अकुलादित्रिमध्यस्थं कुलादेश्च त्रिमध्यगम्।
मध्यमादि त्रिमध्यस्थं पिण्डं पादे त्रिमध्यगम् ॥ ४ ॥
त्रयार्द्धमात्रासंयुक्तं प्रणवाद्यं शिखाशिवाम्।

ओं क्ष्रौं शिखाभैरवाय नमः । स्खीं स्खीं स्खें सवीजत्राक्षरः ।
ह्रां ह्रीं ह्रैं निर्वीजन्त्र्यणं द्वात्रिंशद्वर्णकम्परम् ॥ ५ ॥
क्षादयश्च ककारान्ता अकुलाच कुलक्रमात् । शशिनी भानुनी चैव पावनी शिव इत्यतः
गान्धारी णश्च पिण्डाक्षी चपला गजजिह्विका ।
म मृषा भयसारा स्यान्मध्यमा फोऽजराय च ॥ ७ ॥
कुमारी कालरात्री न सङ्कटा द ध कालिका ।
फ शिवा भवघोरा ण ट वीभत्सा त विद्युता ॥ ८ ॥
ठ विश्वम्भरा शंसिन्या द ज्वालामालया तथा ।
कराली दुर्जया रङ्गी वामा ज्येष्ठा च रौद्र्यपि ॥ ६ ॥
ख काली क कुलालम्बी अनुलोमा द पिण्डिनी ।
आ वेदिनी इ रूपी वै शान्तिर्मूर्त्तिः कलाकुला ॥ १० ॥
ऋ खड्गिनी उ बलिता ऌ कुला ॡ तथा यदि ।
सुभगा वेदनादिन्या कराली अं च मध्यमा ॥ ११ ॥
अः अपेतरया पीठे पूज्याश्च शक्तयः क्रमात् ।
स्खां स्खीं स्खौं महाभैरवाय नमः ।
अक्षोद्या ह्यक्षकर्णी च राक्षसी क्षपणक्षया ॥ १२ ॥
पिङ्गाक्षी चाक्षया क्षेमा ब्रह्माण्यष्टकसंस्थिताः ।
इला लीलावती नीला लङ्का लङ्केश्वरी तथा ॥ १३ ॥
लालसा विमला माला माहेश्वर्य्यऽष्टके स्थिताः ।
हुताशना विशालाक्षी हूङ्कारी वड़वामुखी ॥ १४ ॥
हाहारवा तथा क्रूरा क्रोधा बाला खरानना ।
कौमार्य्यां देहसम्भूताः पूजिताः सर्वसिद्धिदाः ॥ १५ ॥
सर्वज्ञा तरला तारा ऋग्वेदा च हयानना । सारासारस्वयङ्ग्राहा शाश्वती वैष्णवीकुले
तालुजिह्वा च रक्ताक्षी विद्युज्जिह्वा करङ्किणी ।

मेघनादा प्रचण्डोग्रा कालकर्णी कलिप्रिया ॥ १७ ॥

वाराहीकुलसम्भूताः पूजनीया जयार्थिना। चम्पा चम्पावती चैव प्रचम्पा ज्वलितानना

पिशाची पिचुवक्त्रा च लोलुपा ऐन्द्रीसम्भवाः।

पावनी याचनी चैव वामनी दमनी तथा ॥ १६ ॥

विन्दुवेला वृहत्कुक्षी विद्युता विश्वरूपिणी। चामुण्डाकुलसम्भूता मण्डले पूजिताजये

यमजिह्वा जयन्ती च दुर्जया च यमान्तिका।

विड़ाली रेवती चैव जया च विजया तथा।

महालक्ष्मीकुले जाता अष्टाष्टकमुदाहृतम् ॥ २१ ॥

इत्यादिमहापुराणेआग्नेयेऽष्टाष्टकदेवीकथनंनाम षट्चत्वारिंशदधिकशततमोऽध्यायः।

---

## सप्तचत्वारिंशदधिकशततमोऽध्यायः

### त्वरितापूजादिवर्णनम्।

ईश्वर उवाच।

ओं गुह्यकुब्जिके! हुं फट् मम सर्वोपद्रवान् यन्त्रमन्त्रतन्त्रचूर्णप्रयोगादिकं येन कृतं कारितं कुरुते करिष्यति कारयिष्यति तान् सर्वान् हन २ दंष्ट्राकरालिनि! ह्रौं ह्रीं हुं गुह्यकुब्जिकायै स्वाहा। ह्रौं ओं खे वों गुह्यकुब्जिकायै नमः।

ह्रीं सर्वजनक्षोभणी जनानुकर्षिणी ततः।

ओं खें ख्यां सर्वजनवशङ्करी तथा स्याज्जनमोहनी ॥ १ ॥

ओं ख्यौं सर्वजनस्तम्भनी ऐं खं ख्रां क्षोभणी तथा।

ऐं त्रितत्त्वं वीजं श्रेष्ठकुले पञ्चाक्षरी तथा ॥ २ ॥

फं श्रीं क्षीं श्रीं ह्रीं क्षें वच्छे क्षे क्षे हूं फट् ह्रीं नमः। ओं ह्रां क्षे वच्छे क्षे क्षो ह्रीं फट् नवेयं त्वरिता पुनर्ज्ञेयाऽर्च्चिता जये।

ह्रौं सिंहायेत्यासनं स्यात् ह्रीं क्षे हृदयमीरितम् ।
वच्छेऽथ शिरसे स्वाहा त्वरितायाः शिवः स्मृतः ॥ ३ ॥
क्षें ह्रीं शिखायै वौषट् स्याद् भवेत् क्षें कवचाय हुं ।
हूं नेत्रत्रयाय वौषट् ह्रीमन्तश्च फडन्तकम् ॥ ४ ॥
ह्रीं कारी खेचरी चण्डा छेदनी क्षोभणी क्रिया ।
क्षेमकारी च ह्रीं कारी फट्कारी नवशक्तयः ॥ ५ ॥
अथ दूतीः प्रवक्ष्यामि पूज्या इन्द्रादिगाश्च ताः ।
ह्रीं नले ! बहुतुण्डे ! च खगे ! ह्रीं खेचरे ! ज्वालिनि !
ज्वल ख खे छ छे शत्रविभीषणे ! च छे चण्डे ! छेदनि !
करालि ! ख खे छे खे खरहाङ्गी ह्रीं । क्षे वक्ष्ये कपिले !
ह क्षे हूं क्रूं तेजोवति ! रौद्रि मातः ! ह्रीं फे वे फे फे वक्रे
वरी फे ! पुटि पुटि घोरे हूं फट् ब्रह्मवेतालि ! मध्ये ।
गुह्याङ्गानि च तत्त्वानि त्वरितायाः पुनर्वदे ॥ ६ ॥
ह्रौं हूं हः हृदये प्रोक्तं ह्रीं हश्च शिरः स्मृतम् ।
फां ज्वल ज्वलेति च शिखा वर्म इले हं हुँ हुँ ॥ ७ ॥
क्रौं क्षूं श्रौं नेत्रमित्युक्तं क्षौं अस्त्रं वै ततश्च फट् हुं खे वच्छे क्षेः ह्रीं क्षें हुँ फट् वा ।
हुं शिरश्चैव मध्ये स्यात् पूर्वादौ खे सदाशिवे ।
च ईशः छे मनोन्मानी मक्षे तार्क्ष्यो ह्रों च माधवः ॥ ८ ॥
क्षें ब्रह्मा हुं तवादित्यो दारुणं फट् स्मृताः सदा ।

इत्यादि महापुराणे आग्नेये त्वरितापूजादिकथनं नाम
सप्तचत्वारिंशदधिकशततमोऽध्यायः ।

---

# अष्टचत्वारिंशदधिकशततमोऽध्यायः

## सङ्ग्रामविजयपूजावर्णनम् ।

ईश्वर उवाच ।

ओं डे ख ख्यां सूर्याय सङ्ग्रामविजयाय नमः ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ॥
षड्ङ्गानि तु सूर्यस्य सङ्ग्रामे जयदस्य हि ।
ओं हं खं खशोल्काय स्वाहा । स्फूं ह्रूं हुं क्रूं ओं ह्रीं क्रैं ।
प्रभूतं विमलं सारमाराध्यं परमं सुखम् ॥ १ ॥

धर्मज्ञानञ्च वैराग्यमैश्वर्याद्यष्टकं यजेत् । अनन्तासनं सिंहासनं पद्मासनमतः परम् ॥२॥ कर्णिकाकेशराण्येव सूर्यसोमाग्निमण्डलम् । दीप्तासूक्ष्माजयाभद्रा विभूतिर्विमला तथा अमोघा विद्युता पूज्या नवमी सर्वतोमुखी । सत्त्वं रजस्तमश्चैव प्रकृतिं पुरुषं तथा ।४॥ आत्मानञ्चान्तरात्मानं परमात्मानमर्चयेत् । सर्वे विन्दुसमायुक्ता मायानिलसमन्विताः

उषा प्रभा च सन्ध्या च साया माया बलान्विता ।
विन्दुविष्णुसमायुक्ता द्वारपालास्तथाष्टकम् ॥ ६ ॥

सूर्यं चण्डं प्रचण्डञ्च पूजयेद् गन्धकादिभिः । पूजया जपहोमाद्यैर्युद्धादौ विजयो भवेत्

इत्यादि महापुराणे आग्नेये संग्रामविजयपूजावर्णनं नामा-
ष्टचत्वारिंशदधिकशततमोऽध्यायः ।

---

# ऊनपञ्चाशदधिकशततमोऽध्यायः

## लक्षकोटिहोमवर्णनम् ।

ईश्वर उवाच ।

होमाद्रणादौ विजयो राज्याप्तिर्विघ्ननाशनम् । कृच्छ्रेण शुद्धिमुत्पाद्यप्राणायामशतेनच अन्तर्जले च गायत्रीं जप्त्वा षोड़शधाचरेत् । प्राणायामांश्च पूर्वाह्णेजुहुयात्पावके हविः

भैक्ष्ययावकभक्षी च फलमूलाशनोऽपि वा । क्षीरशक्तुघृताहार एकमाहारमाश्रयेत् ॥३॥
यावत्समाप्तिर्भवति लक्षहोमस्य पार्वति । दक्षिणालक्षहोमान्तेगावोवस्त्राणिकाञ्चनम्
सर्वोत्पातसमुत्पत्तौ पञ्चभिर्दशभिर्द्विजैः । नास्तिलोकेसउत्पातो तौ ह्यनेन न शाम्यति
मङ्गल्यं परमं नास्ति यदस्मादतिरिच्यते । कोटिहोमन्तु यो राजा कारयेत् पूर्ववद्द्विजैः

न तस्य शत्रवः सङ्ख्ये जातु तिष्ठन्ति कर्हिचित् ।
न तस्य मारको देशे व्याधिर्वा जायते क्वचित् ॥ ७ ॥

अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । राक्षसाद्याश्च शाम्यन्ति सर्वे च रिपवोर णे
कोटिहोमे तु वरयेद् ब्राह्मणान्विंशतिंतथा । शतञ्चाथ सहस्रं वा यथेष्टाम्भूतिमाप्नुयात्

कोटिहोमन्तु यः कुर्याद् द्विजो भूपोऽथवा च विट् ।
यदिच्छेत् प्राप्नुयात्तत्तत् सशरीरो दिवं व्रजेत् ॥ १० ॥

गायत्र्या ग्रहमन्त्रैर्वा कुष्माण्डीजातवेदसैः । ऐन्द्रवारुणवायव्ययाम्याग्नेयैश्च वैष्णवैः

शाक्तेयैः शाम्भवैः सौरैर्मन्त्रैर्होमार्चनात्ततः ।
अयुतेनाल्पसिद्धिः स्याल्लक्षहोमोऽखिलार्त्तिनुत् ॥ १२ ॥

सर्वपीड़ादिनाशाय कोटिहोमोऽखिलार्थदः । यवव्रीहितिलक्षीरघृतकुशप्रसातिकाः ।१३।
पङ्कजोशीरविल्वाम्रदला होमे प्रकीर्त्तिताः । अष्टहस्तप्रमाणेन कोटिहोमेषु खातकम् ॥
तस्मादर्द्धप्रमाणेन लक्षहोमे विधीयते । होमोऽयुतेन लक्षेण कोद्याज्वाद्यैः प्रकीर्त्तितः ॥
इत्यादि महापुराणे आग्नेये लक्षकोटिहोमवर्णनंनामोनपञ्चाशदधिकशततमोऽध्यायः ॥

****००****

# पञ्चाशदधिकशततमोऽध्यायः

## मन्वन्तराणि ।

अग्निरुवाच ।

मन्वन्तराणि वक्ष्यामि आद्यः स्वायम्भुवो मनुः ।
अग्नीध्राद्यास्तस्य सुता यमो नाम तदा सुराः ॥ १ ॥

और्वाद्याश्च सप्तर्षय इन्द्रश्चैव शतक्रतुः । पारावताः सतुषिता देवाः स्वारोचिषेऽन्तरे ॥
विपश्चित्तत्र देवेन्द्र ऊर्जस्तम्भादयो द्विजाः । चैत्रकिम्पुरुषाः पुत्रास्तृतीयश्चोत्तमो मनुः
सुशान्तिरिन्द्रो देवाश्च सुधामाद्या वशिष्ठजाः । सप्तर्षयोऽजाद्याःपुत्राश्चतुर्थस्तामसोमनुः
स्वरूपाद्याःसुरगणाःशिखिरिन्द्रःसुरेश्वरः । ज्योतिर्द्धामादयोविप्रानवख्यातिमुखाःसुताः
रैवते वितथश्चेन्द्रो अमिताभास्तथा सुराः । हिरण्यरोमाद्यामुनयो बलबन्धादयः सुताः
मनोजवश्चाक्षुषेऽथ इन्द्रः स्वात्यादयः सुराः । सुमेधाद्या महर्षयः पुरुप्रभृतयः सुताः ॥
विवस्वतः सुतो विप्रः श्राद्धदेवो मनुस्ततः । आदित्यवसुरुद्राद्या देवा इन्द्रः पुरन्दरः ॥
वशिष्ठः काश्यपोऽथात्रिर्जमदग्निः सगोतमः । विश्वामित्रभरद्वाजौमुनयःसप्त साम्प्रतम्
इक्ष्वाकुप्रमुखाः पुत्रा अंशेन हरिराभवत् । स्वायम्भुवे मानसोऽभूदजितस्तदनन्तरे ॥१०

सत्यो हरिर्देववरो वैकुण्ठो वामनः क्रमात् ।
छायाजः सूर्य्यपुत्रस्तु भविता चाष्टमो मनुः ॥ ११ ॥

पूर्वस्य च सवर्णोऽसौ सावर्णिर्भविताष्टमः । सुतपाश्च देवगणा दीप्तिमद्द्रौणिकादयः
मुनयो बलिरिन्द्रश्च विरजप्रमुखाः सुताः । नवमो दक्षसावर्णिः पाराद्याश्च तदा सुराः
इन्द्रश्चैवाद्भुतस्तेषां सवनाद्या द्विजोत्तमाः । धृतकेत्वादयः पुत्रा ब्रह्मसावर्णिरित्यतः
सुखादयो देवगणास्तेषां शान्तिःशतक्रतुः । हविष्याद्याश्च मुनयःसुक्षेत्राद्याश्च तत्सुताः
धर्म्मसावर्णिकश्चाथ विहङ्गाद्यास्तदा सुराः । गणश्चेन्द्रो निश्चराद्यामुनयःपुत्रकामनोः
सर्वत्रगाद्या रुद्राख्यः सावर्णिर्भविता मनुः । ऋताक्षमा सुरेन्द्रश्च हरिताद्याश्च देवताः
तपस्याद्याः सप्तर्षयः सुतावै देववन्मुखाः । मनुस्त्रयोदशो रौच्यः सूत्रामाणादयः सुराः
इन्द्रो दिवस्पतिस्तेषां दानवादिविमर्दनः । निर्मोहाद्याः सप्तर्षयश्चित्रसेनादयः सुताः

मनुश्चतुर्दशो भौत्यः शुचिरिन्द्रो भविष्यति ।
चाक्षुषाद्याः सुरगणा अग्निबाह्वादयो द्विजाः ॥ २० ॥

चतुर्दशस्य भौत्यस्य पुत्राऊरुमुखा मनोः । प्रवर्त्तयन्ति वेदांश्च भुवि सप्तर्षयो दिवः ॥
देवा यज्ञभुजस्ते तु भूः पुत्रैः परिपाल्यते । ब्रह्मणो दिवसे ब्रह्मन् ! मनवस्तु चतुर्दश ॥
मन्वाद्याश्च हरिर्वेदं द्वापरान्ते विभेद सः । आद्यो वेदश्चतुष्पादः शतसाहस्रसम्मितः ॥

एकश्चासीद् यजुर्वेदस्तं चतुर्द्धा व्यकल्पयत् ।
आध्वर्य्यवं यजुर्भिस्तु ऋग्भिर्होत्रं तथा मुनिः ॥ २४ ॥
औद्गात्रं सामभिश्चक्रे ब्रह्मत्वञ्चाप्यथर्वभिः । प्रथमं व्यासशिष्यस्तु पैलो ह्यृग्वेदपारगः
इन्द्रः प्रमतये प्रादाद्वास्कलाय च संहिताम् ।
बौध्यादिभ्यो ददौसोऽपि चतुर्द्धा निजसंहिताम् ॥ २६ ॥
यजुर्वेदतरोः शाखाः सप्तविंशन्महामतिः । वैशम्पायननामासौ व्यासशिष्यश्चकार वै ॥
काण्वा वाजसनेयाद्या याज्ञवल्क्यादिभिः स्मृताः ।
सामवेदतरोः साखा व्यासशिष्यः सजैमिनिः ॥ २८ ॥
सुमन्तुश्च सुकर्मा च एकैकां सहितां ततः । गृह्णते च सुकर्माख्यः सहस्रं संहितां गुरुः
सुमन्तुश्चाथर्वतरुं व्यासशिष्यो विभेद तम् । शिष्यानध्यापयामासपैप्पलादान्सहस्रशः
पुराणसंहितां चक्रे सूतोव्यासप्रसादतः ।
इत्यादि महापुराणे आग्नेये मन्वन्तरकथनं नाम पञ्चाशदधिकशततमोऽध्यायः ।

---

# एकपञ्चाशदधिकशततमोऽध्यायः

## वर्णेतरधर्मवर्णनम् ।

अग्निरुवाच ।

मन्वादयो भुक्तिमुक्तिधर्म्मांश्चीर्त्त्वाप्नुवन्तियान् । प्रोचे परशुरामाय वरुणोक्तन्तुपुष्करः

पुष्कर उवाच ।

वर्णाश्रमेतराणान्ते धर्मान्वक्ष्यामि सर्वदान् ।
मन्वादिभिर्न्निगदितान् वासुदेवादितुष्टिदान् ॥ २ ॥
अहिंसा सत्यवचनन्दया भूतेष्वनुग्रहः । तीर्थानुसरणं दानं ब्रह्मचर्य्यममत्सरः ॥ ३ ॥
देवद्विजातिशुश्रूषा गुरूणाञ्च भृगूत्तम! । श्रवणं सर्वधर्म्माणां पितॄणां पूजनं तथा ॥

भक्तिश्च नृपतौ नित्यं तथा सच्छास्त्रनेत्रता ।
आनृशंस्यन्तितिक्षा च तथा चास्तिक्यमेव च ॥ ५ ॥

वर्णाश्रमाणां सामान्यं धर्म्माधर्मं समीरितम् । यजनं याजनं दानं वेदाद्यध्यापनक्रिया
प्रतिग्रहश्चाध्ययनं विप्रकर्माणि निर्दिशेत् । दानमध्ययनश्चैव यजनञ्च यथाविधि ॥७॥
क्षत्रियस्य सवैश्यस्य कर्मेदं परिकीर्त्तितम् । क्षत्रियस्य विशेषेण पालनं दुष्टनिग्रहः
कृषिगोरक्ष्यवाणिज्यं वैश्यस्य परिकीर्त्तितम् । शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानिवाप्यथ

मौञ्जीवन्धनतो जन्म विप्रादेश्च द्वितीयकम् ।
आनुलोम्येन वर्णानां जातिर्म्मातृसमा स्मृता ॥ १० ॥
चण्डालो ब्राह्मणीपुत्रः शूद्राच्च प्रतिलोमतः ।
सूतस्तु क्षत्रियाज्जातो वैश्याद्वै देवलस्तथा ॥ ११ ॥
पुक्कसः क्षत्रियापुत्रः शूद्रात् स्यात् प्रतिलोमजः ।
मागधः स्यात्तथा वैश्याच्छूद्रादायोगवो भवेत् ॥ १२ ॥

वैश्यायां प्रतिलोमेभ्यः प्रतिलोमाः सहस्रशः । विवाहः सदृशैस्तेषां नोत्तमैर्नाधमैस्तथा
चण्डालकर्म निर्द्दिष्टं बध्यानां घातनं तथा । स्त्रीजीवन्तु तद्रक्षाप्रोक्तं वैदेहकस्य च ॥
सूतानामश्वसारथ्यं पुक्कसानाञ्च व्याधता । स्तुतिक्रिया मागधानां तथा चायोगवस्य च
रङ्गावतरणं प्रोक्तं तथा शिल्पैश्च जीवनम् । वहिर्ग्रामनिवासश्च मृतचैलस्य धारणम् ॥

न संस्पर्शस्तथैवान्यैश्चण्डालस्य विधीयते ।
ब्राह्मणार्थे गवार्थे वा देहत्यागोऽत्र यः कृतः ॥ १७ ॥
स्त्रीबालाद्युपपत्तौ वा वाह्यानां सिद्धिकारणम् ।
सङ्करे जातयो ज्ञेयाः पितुर्मातुश्च कर्मतः ॥ १८ ॥

इत्यादि महापुराणे आग्नेये वर्णेतरधर्मवर्णनं नामैकपञ्चाशदधिकशततमोऽध्यायः ।

---

## द्विपञ्चाशदधिकशततमोऽध्यायः ।

### गृहस्थवृत्तिवर्णनम् ।

पुष्कर उवाच ।

आजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा ।
क्षत्रविट्शूद्रधर्मेण जीवेन्नैव तु शूद्रजात् ॥ १ ॥
कृषिवाणिज्यगोरक्ष्यं कुशीदञ्च द्विजश्चरेत् । गोरसं गुड़लवणलाक्षामांसानि वर्जयेत्
भूमिं भित्वौषधीश्छित्वा हत्वा कीटपिपीलिकान् ।
पुनन्ति खलु यज्ञेन कर्षका देवपूजनात् ॥ ३ ॥
हलमष्टगवं धर्म्यं षड् गवं जीवितार्थिनाम् । चतुर्गवं नृशंसानां द्विगवं धर्मघातिनाम् ॥
ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा । सत्यानृताभ्यामपिवानश्ववृत्त्या कदाचन
इत्यादि महापुराणे आग्नेये गृहस्थधर्मवर्णनं नाम द्विपञ्चाशदधिकशततमोऽध्यायः ।

---

## त्रिपञ्चाशदधिकशततमोऽध्यायः

### ब्रह्मचर्य्याश्रमधर्मः ।

पुष्कर उवाच ।

धर्ममाश्रमिणां वक्ष्ये भुक्तिमुक्तिप्रदं शृणु ।
षोड़शर्त्तुनिशा स्त्रीणामाद्यास्तिस्रस्तु गर्हिताः ॥ १ ॥
व्रजेद्युग्मासु पुत्रार्थी कर्माधानिकमिष्यते । गर्भस्य स्पष्टताज्ञाने सवनं स्पन्दनात् पुरा ॥
षष्ठेऽष्टमे वा सीमन्तं पुत्रीयं नामभं शुभम् ।
अच्छिन्ननाड्यां कर्त्तव्यं जातकर्म विचक्षणैः ॥ ३ ॥

अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते ॥ ४ ॥

शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु । गुप्तदासात्मकं नामप्रशस्तं वैश्यशूद्रयोः

वालं निवेदयेद्भर्त्रे तव पुत्रोऽयमित्युत ॥ ६ ॥

यथाकुलन्तु चूड़ाकृद् ब्राह्मणस्योपनायनम् । गर्भाष्टमेऽष्टमे वाब्दे गर्भादेकादशे नृपे ॥

गर्भात्तु द्वादशे वैश्ये षोड़शाब्दादितो न हि ।

मुञ्जानां वल्कलानान्तु क्रमान्मौञ्ज्यः प्रकीर्त्तिताः ॥ ८ ॥

मार्गवैयाघ्रवास्तानि चर्माणि व्रतचारिणाम् ।

पर्णपिप्पलविल्वानां क्रमाद्दण्डा प्रकीर्त्तिताः ॥ ९ ॥

केशदेशललाटास्य तुल्याः प्रोक्ताः क्रमेण तु ।

अवक्राः सत्वचः सर्वे नाविप्लुष्टास्तु दण्डका ॥ १० ॥

वासोपवीते कार्पासक्षौमीर्णानां यथाक्रमम् ।

आदिमध्यावसानेषु भवच्छब्दोपलक्षितम् ॥ ११ ॥

प्रथमं तत्र भिक्षेत यत्र भिक्षा ध्रुवं भवेत् । स्त्रीणाममन्त्रतस्तानि विवाहस्तुसमन्त्रकः

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः । आचारमग्निकार्य्यं च सन्ध्योपासनमेव च

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।

श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ॥ १४ ॥

सायं प्रातश्च जुहुयान् नामेध्यं व्यस्तहस्तकम् ।

मधु मांसं जनैः सार्द्धं गीतं नृत्यञ्च वै त्यजेत् ॥ १५ ॥

हिंसाम्परापवादं वै अश्लीलं च विशेषतः । दण्डादिधारयेन्नष्टमप्सुक्षिप्त्वान्यधारणम्

वेदस्वीकरणं कृत्वा स्नायाद्वै दत्तदक्षिणः। नैष्टिको ब्रह्मचारी वा देहान्तं निवसेद्गुरौ

इत्यादि महापुराणे आग्नेयेब्रह्मचर्याश्रमधर्मवर्णनंनामत्रिपञ्चाशदधिकशततमोऽध्यायः।

---

# चतुःपञ्चाशदधिकशततमोऽध्यायः

## विवाहः ।

पुष्कर उवाच ।

विप्रश्चतस्रो विन्देत भार्य्यास्तिस्रस्तु भूमिपः ।
द्वे च वैश्यो यथाकामं भार्य्यैकामपि चान्त्यजः ॥ १ ॥
धर्म्मकार्य्याणि सर्वाणि न कार्य्याण्यसवर्णया ।
पाणिर्ग्राह्यः सवर्णासु गृह्णीयात् क्षत्रिया शरम् ॥ २ ॥
वैश्या प्रतोदमादद्याद्दशां वै चान्त्यजा तथा ।
सकृत् कन्या प्रदातव्या हरंस्तां चौरदण्डभाक् ॥ ३ ॥

अपत्यविक्रयाशक्तो निष्कृतिर्न्न विधीयते। कन्यादानं शचीयागो विवाहोऽथ चतुर्थिका
विवाहमेतत् कथितं नामकर्म्मचतुष्टयम्। नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ ॥५॥
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते। मृते तु देवरे देयात् तदभावे यथेच्छया
पूर्व्वात्रितयमाग्नेयं वायव्यं चोत्तरात्रयम्। रोहिणीचेति चरणे भगणः शस्यते सदा
नैवागोत्रान्तु वरयेन्नैकार्षेयाञ्चभार्गव ! । पितृतः सप्तमादूर्द्धं मातृतः पञ्चमात्तथा ॥
आहूय दानं ब्राह्मः स्यात् कुलशीलयुताय तु। पुरुषांस्तारयेत्तज्जो नित्यं कन्याप्रदानतः

तथा गोमिथुनादानाद्विवाहस्त्वार्ष उच्यते ।
प्रार्थिता दीयते यस्य प्राजापत्यः स धर्म्मकृत् ॥ १० ॥
शुक्लेन चासुरो मन्दो गान्धर्वो वरणान्मिथः ।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥ ११ ॥
वैवाहिकेऽह्नि कुर्वीत कुम्भकारमृदा शचीम् ।
जलाशये तु तां पूज्य वाद्याद्यैः स्त्रीं गृहन्नयेत् ॥ १२ ॥

प्रसुप्ते केशवे नैव विवाहः कार्य्य एव हि। पौषे चैत्रे कुजदिने रिक्ताविष्टितिथौ न च

न शुक्रजीवेऽस्तमिते न शशाङ्के ग्रहार्द्दिते। अर्क्कार्क्किभौमयुक्ते भे व्यतीपातहते न हि॥
सौम्यं पित्र्यञ्च वायव्यं सावित्रं रोहिणी तथा। उत्तरात्रितयं मूलंमैत्रंपौष्णंविवाहभम्
मानुषाख्यस्तथा लग्नो मानुषाख्यांशकः शुभः। तृतीये च तथा षष्ठे दशमैकादशेऽष्टमे
अर्क्कार्क्किचन्द्रतनयाः प्रशस्ता न कुजोऽष्टमः। सप्तान्त्याष्टमवर्गेषु शेषाःशस्ताग्रहोत्तमाः
तेषामपि तथा मध्यात् षष्ठः शुक्रो न शस्यते। वैवाहिके भे कर्त्तव्या तथैव च चतुर्थिका

न दातव्या ग्रहास्तत्र चतुराद्यास्तथैकगाः।
पर्ववर्जं स्त्रियं गच्छेत् सत्या दत्ता सदा रतिः॥ १६॥

इत्यादि महापुराणे आग्नेये विवाहप्रकरणं नाम चतुःपञ्चाशदधिकशततमोऽध्यायः।

---

# पञ्चपञ्चाशदधिकशततमोऽध्यायः

## आचारः।

पुष्कर उवाच।

ब्राह्मे मुहूर्त्ते चोत्थाय विष्ण्वादीन् दैवतान् स्मरेत्।
उभे मूत्रपुरीषे तु दिवा कुर्य्यादुदङ्मुखः॥ १॥
रात्रौ च दक्षिणे कुर्य्यादुभे सन्ध्ये यथा दिवा।
न मार्गादौ जले वीथ्यां सतृणायां सदाचरेत्॥ २॥

शौचं कृत्वा मृदाचम्य भक्षयेद्दन्तधावनम्। नित्यंनैमित्तिकंकाम्यं क्रियाङ्गं मलकर्षणम्
क्रियास्नानं तथा षष्ठं षोढास्नानं प्रकीर्त्तितम्। अस्नातस्याफलं कर्म्म प्रातःस्नानं चरेत्ततः
भूमिष्ठमुद्धृतात् पुण्यं ततःप्रस्रवणोदकम्। ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते
तीर्थतोयं ततः पुण्यं गाङ्गं पुण्यन्तु सर्व्वतः। संशोधितमलः पूर्वं निमग्नश्च जलाशये
उपस्पृश्य ततः कुर्य्यादम्भसः परिमार्जनम्। हिरण्यवर्णास्तिसृभिःशन्नोदेवीतिचाप्यथ
आपोहिष्ठेति तिसृभिरिदमापस्तथैव च। ततो जलाशयेमग्नः कुर्य्यादन्तर्जलं जपम्॥

तत्राघमर्षणं सूक्तं द्रुपदां वा तथा जपेत् । युञ्जते मन इत्येवं सूक्तं वाप्यथ पौरुषम् ॥ ९ ॥
गायत्रीं तु विशेषेण अघमर्षणसूक्तके । देवता भाववृत्तस्तु ऋषिश्चैवाघमर्षणः ॥ १० ॥
छन्दश्चानुष्टुभं तस्य भाववृतोहरिः स्मृतः । आपीड़मानः शाटीं तु देवतापितृतर्पणम् ॥
पौरुषेण तु सूक्तेन ददेच्चैवोदकाञ्जलिम् ।
ततोऽग्निहवनं कुर्य्याद्दानं दत्त्वा तु शक्तितः ॥ १२ ॥
ततः समभिगच्छेत योगक्षेमार्थमीश्वरम् । आसनं शयनं यानं जायाऽपत्यङ्कमण्डलुः
आत्मनः सुचिरैतानि परेषां न शुचिर्भवेत् ।
भाराक्रान्तस्य गुर्विण्याः पन्था देयो गुरुष्वपि ॥ १४ ॥
न पश्येच्चार्कमुद्यन्तन्नास्तं यान्तं नचाम्भसि । नेक्षेन्नग्नांस्त्रियंकूपंशूनास्थानमघौधिनम्
कार्पासास्थि तथा भस्म नाक्रामेद्व थच्च कुत्सितम् ।
अन्तःपुरं वित्तगृहं परदौत्यं व्रजेन्न हि ॥ १६ ॥
नारोहेद्विषमान्नावन्न वृक्षं न च पर्वतम् । अर्थायतनशास्त्रेषु तथैवस्यात् कुतूहली ॥
लोष्टमर्द्दी तृणच्छेदी नखखादी विनश्यति ।
मुखादिवादनं नेहेद्व विना दीपं न रात्रिगः ॥ १८ ॥
नद्वारेणविशेद्वेश्म न च वक्त्रं विरागयेत् । कथाभङ्गं न कुर्वीत न च वासोविपर्य्ययम्
भद्रं भद्रमिति ब्रूयान्नानिष्टं कीर्तयेत् कचित् ।
पालाशमासनं वर्ज्यं देवादिच्छायया व्रजेत् ॥ २० ॥
न मध्ये पूज्ययोर्यायात् नोच्छिष्टस्तारकादिदृक् ।
नद्यान्नान्यां नदीं ब्रूयान्न कण्डूयेद्व द्विहस्तकम् ॥ २१ ॥
असन्तर्प्य पितृन्देवान्नदीपारञ्च न व्रजेत् । मलादि प्रक्षिपेन्नाप्सु न नग्नःस्नानमाचरेत्
ततः समभिगच्छेत योगक्षेमार्थमीश्वरम् । स्रजन्नात्मनापनयेत् खरादिक रजस्त्यजेत्
हीनान्नावहसेत् गच्छेन्नादेशे निवसेच्च तैः । वैद्यराजनदीहीने म्लेच्छस्त्रीबहुनायके ॥
रजस्वलादिपतितैर्न भाषेत् केशवं स्मरेत् ।
नासंवृतमुखः कुर्य्याद्व हासं जृम्भा तथा क्षुतम् ॥ २५ ॥

प्रभोरप्यवमानंस्वङ्गोपयेद्वचनं बुधः । इन्द्रियाणां नानुकूली वेगरोधं न कारयत् ॥२६॥

नोपेक्षितव्यो व्याधिः स्याद्रिपुरल्पोऽपि भार्गव ! ।
रथ्यातिगः सदाचामेत् बिभृयान्नाग्निवारिणी ॥ २७ ॥
न हुङ्कुर्य्याच्छिवं पूज्यं पादं पादेन नाक्रमेत् ।
प्रत्यक्षं वा परोक्षं वा कस्य चिन्नाप्रियं वदेत् ॥ २८ ॥

वेदशास्त्रनरेन्द्रर्षिदेवनिन्दां विवर्जयेत् । स्त्रीणामीर्षा नकर्त्तव्या विश्वासन्तासु वर्जयेत्
धर्मश्रुतिं देवरतिं कुर्य्याद्धर्मादि नित्यशः । सोमस्य पूजां जन्मर्क्षे विप्रदेवादिपूजनम् ॥
षष्ठिचतुर्दश्यष्टम्यामभ्यङ्गं वर्जयेत्तथा । दूराद्गृहान् मूत्रविष्ठे नोत्तमैर्वैरमाचरेत् ॥३१॥
इत्यादि महापुराणे आग्नेये आचारवर्णनं नाम पञ्चपञ्चाशदधिकशततमोऽध्यायः ।

---

## षट्पञ्चाशदधिकशततमोऽध्यायः ।

### द्रव्यशुद्धिः ।

पुष्कर उवाच ।

द्रव्यशुद्धिं प्रवक्ष्यामि पुनः पाकेन मृण्मयम् ।
शुद्धयेन् मूत्रपुरीषाद्यैः स्पृष्टन्ताम्रं सुवर्णकम् ॥ १ ॥
आवर्त्तितञ्चान्यथा तु वारिणाम्लेन ताम्रकम् ।
क्षारेण कांस्यलोहानां मुक्तादेः क्षालनेन तु ॥ २ ॥

अब्जानां चैव भाण्डानां सर्वस्याश्ममयस्य च । शाकरज्जुमूलफलवैदलानां तथैव च

मार्जनाद्यज्ञपात्राणां पाणिना यज्ञकर्मणि ।
उष्णाम्बुना सस्नेहानां शुद्धिः सम्मार्जनाद्गृहे ॥ ४ ॥
शोधनान्म्रक्षणाद्वस्त्रे मृत्तिकाद्भिर्विशोधनम् ।
बहुवस्त्रे प्रोक्षणाच्च दारवाणाञ्च तत्क्षणात् ॥ ५ ॥

प्रोक्षणात् संहतानान्तु द्रवाणाञ्च तथोत्प्लवात् । शयनासनयानानां शूर्पस्यशकटस्य च
शुद्धिः सम्प्रोक्षणाज्ज्ञेया पलालेन्धनयोस्तथा । सिद्धार्थकानाङ्कल्केन शृङ्गदन्तमयस्य च

गोबालैः पलपात्राणांमस्थ्नां स्याच्छृङ्गवत्तथा ।
निर्यासानां गुड़ानाञ्च लवणानां च शोषणात् ॥ ८ ॥
कुशुम्भकुसुमानाञ्च ऊर्णाकार्मासयोस्तथा ।
शुद्धन्नदीगतंतोयं पुण्यन्तद्वत् प्रसारितम् ॥ ९ ॥
मुखवर्जञ्च गौः शुद्धाशुद्धमश्वाजयोर्मुखम् ।
नारीणाञ्चैव वत्सानां शकुनीनां शुनोमुखम् ॥ १० ॥
मुखैः प्रस्रवणे वृते मृगयायां सदाशुचि ।
भुक्त्वा क्षुत्त्वा तथा सुप्त्वा पीत्वा चाम्भो विगाह्य च ॥ ११ ॥

रथ्यामाक्रम्य चाचामेद्वासोविपरिधाय च । मार्जारश्चङ्क्रमाच्छुद्धश्चतुर्थेऽह्निरजस्वला

स्नाता स्त्री पञ्चमे योग्या दैवे पित्रे च कर्म्मणि ।
पञ्चापाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः ॥१३ ॥
एकां लिङ्गे मृदं दद्यात् करयोस्त्रिद्विमृत्तिकाः ।
ब्रह्मचारिबनस्थानां यतीनाञ्च चतुर्गुणम् ॥ १४ ॥

श्रीफलैरंशुपट्टानां क्षौमाणांङ्गौरसर्षपैः । शुद्धिः पर्युक्ष्यतोयेन मृगलोम्नां प्रकीर्त्तिता ॥

पुष्पाणाञ्च फलानाञ्च प्रोक्षणाज्जलतोऽखिलम् ।

इत्यादि महापुराणे आग्नेये द्रव्यशुद्धिवर्णनं नाम षट्पञ्चाशदधिकशततमोऽध्यायः ।

---

## सप्तपञ्चाशदधिकशततमोऽध्यायः

### शावाशौचादिः ।

पुष्कर उवाच ।

प्रेतशुद्धिं प्रवक्ष्यामि सूतिकाशुद्धिमेव च ।

दशाहं शावमाशौचं सपिण्डेषु विधीयते ॥ १ ॥
जनने च तथा शुद्धिर्ब्राह्मणानां भृगूत्तम !
द्वादशाहेन राजन्यः पक्षाद्वैश्योऽथ मासतः ॥ २ ॥
शूद्रोऽनुलोमतोदासे स्वामितुल्यन्त्वशौचकम् । षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु
ब्राह्मणः शुद्धिमाप्नोति क्षत्रियस्तु तथैव च ।
विट्शूद्रयोनेः शुद्धिः स्यात् क्रमात् परशुरामक ! ॥ ४ ॥
षड्रात्रेण त्रिरात्रेण षड्भिः शूद्रे तथा विशः ।
आदन्तजननात् सद्य आचूडान्नैशिकी श्रुतिः ॥ ५ ॥
त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् । ऊनत्रैवार्षिके शूद्रे पञ्चाहाच्छुद्धिरिष्यते ॥
द्वादशाहेन शुद्धिः स्यादतीते वत्सरत्रये । गतैः संवत्सरैः षड्भिः शुद्धिर्मासेन कीर्त्तिता
स्त्रीणामकृतचूडानां विशुद्धिर्नैशिकी स्मृता ।
तथा च कृतचूडानां त्र्यहाच्छुद्ध्यन्ति बान्धवाः ॥ ८ ॥
विवाहितासु नाशौचं पितृपक्षे विधीयते । पितुर्गृहे प्रसूतानां विशुद्धिर्नैशिकी स्मृता
सूतिका दशरात्रेण शुद्धिमाप्नोति नान्यथा ।
विवाहिता हि चेत्कन्या म्रियते पितृवेश्मनि ॥ १० ॥
तस्यास्त्रिरात्राच्छुद्ध्यन्ति बान्धवा नात्रसंशयः । समानंलध्वशौचन्तुप्रथमेनसमापयेत्
असमानं द्वितीयेन धर्म्मराजवचो यथा । देशान्तरस्थः श्रुत्वा तु कुल्यानांमरणोद्भवौ
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् । अतीते दशरात्रे तु त्रिरात्रमशुचिर्भवेत् ॥
तथा संवत्सरेऽतीते स्नात एव विशुद्ध्यति ।
मातामहे तथाऽतीते आचार्य्ये च तथा मृते ॥ १४ ॥
रात्रिभिर्म्मासतुल्याभिर्गर्भस्रावे विशोधनम् । सपिण्डे ब्राह्मणेवर्णाःसर्व्वएवाविशेषतः
दशरात्रेण शुद्ध्यन्ति द्वादशाहेन भूमिपः । वैश्याः पञ्चदशाहेन शूद्रा मासेन भार्गव ॥
उच्छिष्टसन्निधावेवं तथापिण्डं निवेदयेत् ।
कीर्त्तयेच्च तथा तस्य नामगोत्रे समाहितः ॥ १७ ॥

भुक्तवत्सु द्विजेन्द्रेषु पूजितेषु धनेन च। विसृष्टाक्षततोयेषुगो त्रनामानुकीर्त्तनैः॥
चतुरङ्गुलविस्तारं तत्खातन्तावदन्तरम्।
वितस्तिदीर्घं कर्त्तव्यं विकर्षूणां तथा त्रयम्॥ १६॥
विकर्षूणां समीपे च ज्वालयेज् ज्वलनत्रयम्।
सोमाय वह्नये राम! यमाय च समासतः॥ २०॥
जुहुयादाहुतीः सम्यक् सर्वत्रैवचतुस्त्रयः। पिण्डनिर्वपणं कुर्य्यात् प्राग्देवपृथक्पृथक्
अन्नेन दध्ना मधुना तथा मांसेन पूरयेत्।
मध्ये चेदधिमासः स्यात् कुर्य्यादभ्यधिकन्तु तत्॥ २२॥
अथवा द्वादशाहेन सर्वमेतत् समापयेत्। संवत्सरस्य मध्ये च यदि स्यादधिमासकः
तदा द्वादशके श्राद्धे कार्य्यं तदधिकं भवेत्। संवत्सरे समाप्ते तु श्राद्धं श्राद्धवदाचरेत्
प्रेताय तत ऊर्द्ध्वं च तस्यैव पुरुषत्रये। पिण्डान् विनिर्वपेत्तद्वच्चतुरस्तु समाहितः॥
सम्पूज्य दत्त्वा पृथिवी समाना इति चाप्यथ।
योजयेत् प्रेतपिण्डं तु पिण्डेष्वन्येषु भार्गव!॥ २६॥
प्रेतपात्रं च पात्रेषु तथैव विनियोजयेत्। पृथक् पृथक् प्रकर्त्तव्यं कर्मैतत् कर्मपात्रके॥
मन्त्रवर्जमिदं कर्म्म शूद्रस्य तु विधीयते। सपिण्डीकरणं स्त्रीणां कार्य्यमेवंतदाभवेत्
श्राद्धं कुर्य्याच्च प्रत्यब्दं प्रेते कुम्भान्नमब्दकम्।
गङ्गायाः सिकता धारा यथा वर्षति वासवे॥ २६॥
शक्या गणयितुं लोके नत्वतीता पितामहा।
काले सततगे स्थैर्यं नास्ति तस्मात् क्रियां चरेत्॥ ३०॥
देवत्वे यातनास्थाने प्रेतः श्राद्धं कृतं लभेत्। नोपकुर्य्यान्नरःशोचन् प्रेतस्यात्मनएववा
भृग्वग्निपाशकाम्भोभिर्म्मृतानामात्मघातिनाम्।
पतितानां च नाशौचंविद्युच्छस्त्रहताश्च ये॥ ३२॥
यतिव्रतिब्रह्मचारिनृपकारुकदीक्षिताः। राजाज्ञाकारिणो ये च स्नायाद्वै प्रेतगास्यपि
मैथुने कटधूमे च सद्यः स्नानं विधीयते। द्विजं न निर्हरेत् प्रेतं शूद्रेण तु कथञ्चनः॥

न च शूद्रं द्विजेनापि तयोर्दोषो हि जायते ।
अनाथविप्रप्रेतस्य वहनात् स्वर्गलोकभाक् ॥ ३५ ॥

सङ्ग्रामे जयमाप्नोति प्रेतेऽनाथे च काष्ठदः । सङ्कल्प्यबान्धवं प्रेतमपसव्येनतांचितिम्
परिक्रम्य ततः स्नानं कुर्य्युः सर्व्वे सवाससः। प्रेतायचतथादद्युस्त्रींस्त्रींश्चैवोदकाञ्जलीन्
द्वार्य्यश्मनि पदं दत्त्वा प्रविशेयुस्तथा गृहम् । अक्षतान्निक्षिपेद्वह्नौ निम्बपत्रंविदश्यच

पृथक् शयीरन् भूमौ च क्रीतलब्धासनोभवेत् ।
एकः पिण्डो दशाहे तु श्मश्रुकर्म्मकरः शुचिः ॥ ३६ ॥

सिद्धार्थकैस्तिलैर्विद्वान् मज्जेद्वासोऽपरं दधत् । अजातदन्ते तनये शिशौगर्भस्रुतेतथा

कार्य्यो नैवाग्निसंस्कारो नैव चास्योदकक्रिया ।
चतुर्थे च दिने कार्य्यस्तथास्थ्नां चैव सञ्चयः ॥ ४१ ॥
अस्थिसञ्चयनादूर्द्ध्वमङ्गस्पर्शो विधीयते ।

इत्यादि महापुराणेआग्नेये शावाशौचादिवर्णनंनाम सप्तपञ्चाशदधिकशततमोऽध्यायः

---

## अष्टपञ्चाशदधिकशततमोऽध्यायः

### स्रावाद्यशौचम् ।

पुष्कर उवाच ।

स्रावाशौचंप्रवक्ष्यामि मन्वादिमुनिसम्मतम् । रात्राभिर्म्मासतुल्याभिर्गर्भस्रावेत्र्यहेणवा
चातुर्म्मासिकपातान्ते दशाहं पञ्चमासतः । राजन्ये चतूरात्रं वैश्येपञ्चाहमेव च ॥
अष्टाहेन तु शूद्रस्य द्वादशाहादतः परम् । स्त्रीणां विशुद्धिरुदिता स्नानमात्रेण वैपितुः

न स्नानं हि सपिण्डेस्यात् त्रिरात्रं सप्तमाष्टयोः ।
सद्यः शौचंसपिण्डानांमादन्तजननात्तथा ॥ ४ ॥

आचूड़ादेकरात्रं स्यादाव्रताच्चत्रिरात्रकम् । दशरात्रंभवेदस्मान्मातापित्रोस्त्रिरात्रकम्

अजातदन्ते तु मृते कृतचूड़े ऽर्भके तथा। प्रेतेन्यूने त्रिभिर्व्वर्षैर्म्मृते शुद्धिस्तु नैशिकी

द्व्यहेन क्षत्रिये शुद्धिस्त्रिभिर्व्वैश्ये मृते तथा।

शुद्धिः शूद्रे पञ्चभिस्यात् प्राग्विवाहाद् द्विषट्त्वहः ॥ ७ ॥

यत्रत्रिरात्रं विप्राणामशौचं सम्प्रदृश्यते। तत्रशूद्रे द्वादशाहः षणव क्षत्रवैश्ययोः ॥

द्व्यब्दे नैवाग्निसंस्कारो मृतेतन्निखनेद्भुवि। नचोदकक्रियातस्यनाम्निचापिकृतेसति

जातदन्तस्य वा कार्य्यास्यादुपनयनाद्दश। एकाहाच्छुद्ध्यतेविप्रो योऽग्निवेदसमन्वितः

हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा। पञ्चाहेनाग्निहीनस्तु दशाहाद्ब्राह्मणब्रुवः ॥११॥

क्षत्रियो नवसप्ताहाच्छुद्ध्येद्विप्रो गुणैर्युतः।

दशाहात् सगुणो वैश्यो विंशाहाच्छूद्र एव च ॥ १२ ॥

दशाहाच्छुद्ध्यते विप्रो द्वादशाहेन भूमिपः। वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति

गुणोत्कर्षे दशाहाप्तौ त्र्यहमेकाहकं त्र्यहे। एकाहाप्तौ सद्यः शौचं सर्वत्रैवं समूहयेत् ॥

दासान्ते वासिभृतकाः शिष्याश्चैकत्रवासिनः।

स्वामितुल्यमशौचं स्यान्मृते पृथक् पृथग्भवेत् ॥ १५ ॥

मरणादेव कर्त्तव्यं संयोगो यस्य नाग्निभिः।

दाहादूर्ध्वमशौचं स्याद्यस्य वैतानिको विधिः ॥ १६ ॥

सर्वेषामेव वर्णानान्त्रिभागात् स्पर्शनम्भवेत्। त्रिचतुःपञ्चदशभिः स्पृश्यवर्णाः क्रमेणतु

चतुर्थे पञ्चमे चैव सप्तमे नवमे तथा। अस्थिसञ्चयनं कार्य्यं वर्णानामनुपूर्वशः ॥ १८ ॥

अहस्त्वदत्तकन्यासु प्रदत्तासु त्र्यहं भवेत्। पक्षिणी संस्कृतास्वेव स्वस्रादिषुविधीयते

पितृगोत्रं कुमारीणां व्यूढानां भर्त्तृगोत्रता।

जलप्रदानं पित्रे च उद्वाहे चोभयत्र तु ॥ २० ॥

दशाहोपरि पित्रोश्च दुहितुर्मरणे त्र्यहम्। सद्यः शौचं सपिण्डानां पूर्वं चूड़ाकृतेर्द्विज !

एकाहतो ह्याविवाहादूर्ध्वं हस्तोदकात् त्र्यहम्।

पक्षिणी भ्रातृपुत्रस्य सपिण्डानाञ्च सद्यतः ॥ २२ ॥

दशाहाच्छुद्ध्यते विप्रो जन्महानौ स्वयोनिषु। षड्भिस्त्रिभिरहैकेन क्षत्रविट्शूद्रयोनिषु

एतज्ज्ञेयं सपिण्डानां वक्ष्ये चानौरसादिषु ।
अनौरसेषु पुत्रेषु भार्य्यास्वन्यगतासु च ॥ २४ ॥
परपूर्वासू च स्त्रीषु त्रिरात्राच्छुद्धिरिष्यते । वृथासङ्करजातानां प्रव्रज्यासु च तिष्ठताम्
आत्मनस्त्यागिनाश्चैव निवर्त्ततोदकक्रिया । मात्रैकया द्विपितरौ भ्रातरावन्यगामिनौ
एकाहः सूतके तत्र मृतके तु द्व्यहो भवेत् । सपिण्डानामशौचं हि समानोदकतां वदे
बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते ।
सवासा जलमाप्लुत्य सद्य एव विशुद्ध्यति ॥ २८ ॥
दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके ।
त्रिरात्रेण सकुल्यास्तु स्नानात् शुद्ध्यन्ति गोत्रिणः ॥ २६ ॥
सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते । समानोदकभावस्तु निवर्त्तताचतुर्दशात् ॥३०॥
जन्मनामस्मृते वै तत् तत्परं गोत्रमुच्यते । विगतन्तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम्
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् । अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् ॥
संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुद्ध्यति ।
मातुले पक्षिणी रात्रिः शिष्यर्त्विग्वान्धवेषु च ॥ ३३ ॥
मृते जामातरि प्रेते दौहित्रे भगिनीसुते । श्यालके तत्सुते चैव स्नानमात्रं विधीयते ॥
मातामह्यां तथाचार्य्ये मृते मातामहे त्र्यहम् ।
दुर्भिक्षे राष्ट्रसम्प्राते आगतायां तथापदि ॥ ३५ ॥
उपसर्गमृतानाञ्च दाहे ब्रह्मविदान्तथा । सत्रिव्रति ब्रह्मचारिसङ्ग्रामे देशविप्लवे ॥
दाने यज्ञे विवाहे च सद्यः शौचं विधीयते ।
विप्रगोनृपहन्तॄणामनुक्तं चात्मघातिनाम् ॥ ३७ ॥
असाध्यव्याधियुक्तस्य स्वाध्याये चाक्षमस्य च । प्रायश्चित्तमनुज्ञातमग्नितोयप्रवेशनम्
अपमानात्तथा क्रोधात् स्नेहात्परिभवाद्भयात् ।
उद्वध्य म्रियते नारी पुरुषो वा कथञ्चन ॥ ३६ ॥
आत्मघाती चैकलक्षं वसेत्स नरके शुचौ । वृद्धः श्रौतस्मृतेर्लुप्तः परित्यजतियस्त्वसून्

त्रिरात्रंतत्र चाशौचं द्वितीये चास्थिसञ्चयम् । तृतीयेतूदकं कार्य्यं चतुर्थे श्राद्धमाचरेत्

विद्युदग्निहतानाञ्च त्र्यहं शुद्धिः सपिण्डके ।

पाषण्डाश्रिता भर्तृघ्न्यो नाशौचोदकगाः स्त्रियः ॥ ४२ ॥

पितृमात्रादिपाते तु आर्द्रवासा ह्युपोषितः । अतीतेऽब्दे प्रकुर्वीत प्रेतकार्य्यं यथाविधि

यः कश्चित्तु हरेत् प्रेतमसपिण्डं कथञ्चन ।

स्नात्वा सचेलः स्पृष्ट्वाग्निं घृतप्राश्य विशुद्ध्यति ॥ ४४ ॥

यद्यन्नमत्ति तेषान्तु दशाहेनैव शुद्ध्यति । अनदन्नन्नमह्येव न वै तस्मिन् गृहे वसेत् ॥

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः । पदे पदे यज्ञफलं शुद्धिः स्यात् स्नानमात्रतः

प्रेतीभूतं द्विजः शूद्रमनुगच्छंस्त्र्यहाच्छुचिः ।

मृतस्य बान्धवैः सार्द्धं कृत्वा च परिदेवनम् ॥ ४७ ॥

वर्जयेत्तदहोरात्रं दानश्राद्धादि कामतः । शूद्रायाः प्रसवो गेहे शूद्रस्य मरणं तथा ॥४८॥

भाण्डानि तु परित्यज्य त्र्यहाद्भूलेपतः शुचिः ।

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत् ॥ ४९ ॥

नयेत् प्रेतं स्नापितञ्च पूजितं कुसुमैर्दहेत् । नग्नदेहं दहेन्नैव किञ्चिद्देहं परित्यजेत्

गोत्रजस्तु गृहीत्वा तु चितां चारोपयेत् तदा ।

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ॥ ५१ ॥

अनाहिताग्निरेकेन लौकिकेनापरस्तथा । अस्मात्त्वमभिजातोऽसि त्वदयं जायतांपुनः

असौस्वर्गायलोकाय मुखाग्निप्रददेत्सुतः । सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण बान्धवाः

एवं मातामहाचार्य्यप्रेतानाञ्चोदकक्रिया । काम्योदकं सखिप्रेतस्वस्रीयश्वशुरर्त्विजाम्

अपो नः शोशुचदयं दशाहञ्च सुतोऽर्पयेत् ।

ब्राह्मणे दशपिण्डाः स्युः क्षत्रिये द्वादश स्मृताः ॥ ५५ ॥

वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत् प्रकीर्त्तिताः ।

पुत्रो वा पुत्रिकान्यो वा पिण्डं दद्याच्च पुत्रवत् ॥

विदश्य निम्बपत्राणि नियतो द्वारि वेश्मनः । आचम्य चाग्निमुदकं गोमयंगौरसर्षपान्

प्रविशेषु समालभ्य कृत्वाश्मनि पदं शनैः। अक्षारलवणान्नाःस्युर्निर्मांसा भूमिशायिनः
क्रीतलब्धाशनाः स्नाता आदिकर्त्ता दशाहकृत्।
अभावे ब्रह्मचारी तु कुर्य्यात्पिण्डोदकादिकम् ॥ ५९ ॥
यथेदं शावमाशौचं सपिण्डेषु विधीयते। जननेऽप्येवमेवं स्यान्निपुणां शुद्धिमिच्छताम्
सर्वेषां शावमाशौचं माता पित्रोश्च सूतकम्। सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः
पुत्रजन्म दिने श्राद्धं कर्त्तव्यमितिनिश्चितम्। तदहस्तत्प्रदानार्थं गोहिरण्यादिवाससाम्
मरणं मरणेनैव सूतकं सूतकेन तु। उभयोरपि यत्पूर्वं तेनाशौचेन शुद्ध्यति ॥ ६३ ॥
सूतके मृतकं चेत्स्यान् मृतके त्वथसूतकम्।
तत्राधिकृत्य मृतकंशौचं कुर्य्यान्न सूतकम् ॥ ६४ ॥
समानं लघ्वशौचन्तु प्रथमेन समापयेत्। असमानं द्वितीयेन धर्मराजवचो यथा ॥६५॥
शावान्तः शाव आयाते पूर्वा शौचेन शुद्ध्यति।
गुरुणालघु वाध्येत लघुना नैव तद्गुरु ॥ ६६ ॥
मृतके सूतके वापि रात्रिमध्येऽन्यदापतेत्। तच्छेषेणैव शुद्ध्येरन् रात्रिशेषेद्व्यहाधिकात्
प्रभाते यद्यशौचं स्याच्छेरंश्च त्रिभिर्दिनैः। उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ॥
दानादि विनिवर्त्तेत भोजने कृत्यमाचरेत्।
अज्ञाते पातकं नाद्ये भोक्तुरेकमहोऽन्यथा ॥ ६९ ॥
इत्यादि महापुराणे आग्नेये स्नावाद्यशौचवर्णनंनामाष्टपञ्चाशदधिकशततमोऽध्यायः।

---

## ऊनषष्ट्यधिकशततमोऽध्यायः

### असंस्कृतादिशौचम्।

पुष्कर उवाच।

संस्कृतस्यासंस्कृतस्य स्वर्गो मोक्षो हरिस्मृतेः।

अस्थ्नाङ्गङ्गाम्भसि क्षेपात् प्रेतस्याभ्युदयो भवेत् ॥ १ ॥
गङ्गातोये नरस्यास्थि यावत्तावद्दिविस्थितः ।
आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ॥ २ ॥
तेषामपि तथा गङ्गे तोयेऽस्थ्नां पतनं हितम् । तेषां दत्तं जलं चान्नं गगने तत्प्रलीयते
अनुग्रहेणमहता प्रेतस्य पतितस्य च । नारायणबलिः कार्य्यस्तेनानुग्रहमश्नुते ॥ ४ ॥
अक्षयः पुण्डरीकाक्षस्तत्र दत्तं न नश्यति । पतनात्त्रायते यस्मात् तस्मात्पात्रं जनार्दनः
पततां भुक्तिमुक्त्यादिप्रद एको हरिर्ध्रुवम् ।
दृष्ट्वा लोकान् म्रियमाणान् सहायं धर्ममाचरेत् ॥ ६ ॥
मृतोऽपि बान्धवः शक्तो नानुगन्तुं नरं मृतम् ।
जायावर्जं हि सर्वस्य याम्यः पन्था विभिद्यते ॥ ७ ॥
धर्म एको व्रजत्येन यत्र क्वचन गामिनम् । श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्
न हि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतम् । क्षेत्रापणगृहासक्तमन्यत्रगतमानसम् ॥
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ।
न कालस्य प्रियः कश्चिद् द्वेष्यश्चास्य न विद्यते ॥ १० ॥
आयुष्ये कर्मणि क्षीणे प्रसह्यहरते जनम् । नाप्राप्तकालो म्रियते विद्धःशरशतैरपि ॥
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ।
औषधानि न मन्त्राद्यास्त्रायन्ते मृत्युनान्वितम् ॥ १२ ॥
वत्सवत् प्राक्तनं कर्म कर्त्तारं विन्दति ध्रुवम् । अव्यक्तादि व्यक्तमध्यमव्यक्तनिधनंजगत्
कौमारादि यथादेहे तथा देहान्तरागमः । नवमन्यद्यथा वस्त्रं गृह्णात्येवंशरीरकम् ।
देही नित्यमवध्योऽयं यतः शोकं ततस्त्यजेत् ॥ १५ ॥
इत्यादि महापुराणे आग्नेये असंस्कृतादिशौचवर्णनंनामोनषष्ट्यधिकशततमोऽध्यायः ।

---

## षष्ट्यधिकशततमोऽध्यायः

### वानप्रस्थाश्रमः

पुष्कर उवाच ।

वानप्रस्थयतीनाञ्च धर्मं वक्ष्येऽधुना शृणु । जटित्वमग्निहोत्रित्वं भूशय्याजिनधारणम्
वने वासः पयोमूलनिवारफलवृत्तिता । प्रतिग्रहनिवृत्तिश्च त्रिःस्नानं ब्रह्मचारिता ॥

देवातिथीनां पूजा च धर्मोऽयं वनवासिनः ।
गृही ह्यपत्यापत्यञ्च दृष्ट्वारण्यं समाश्रयेत् ॥ ३ ॥

तृतीयमायुषो भागमेकाकी वा सभार्य्यकः । ग्रीष्मेपञ्चतपानित्यंवर्षास्वभ्रावकाशिकः
आर्द्रवासाश्च हेमन्ते तपश्चोग्रश्चरेद्बली । अपरावृत्तिमास्थाय व्रजेद्दिशमजिह्मगः ॥
इत्यादि महापुराणे आग्नेये वानप्रस्थाश्रमधर्मवर्णनं नाम षष्ठ्यधिकशततमोऽध्यायः ।

---

## एकषष्ट्यधिकशततमोऽध्यायः

### यतिधर्मः ।

पुष्कर उवाच ।

यतिधर्मं प्रवक्ष्यामि ज्ञानमोक्षादिदर्शकम् । चतुर्थमायुषो भागं प्राप्यः सङ्गात्परिव्रजेत्
यदहिविरजेद्धीरस्तदहि च परिव्रजेत् । प्राजापत्यां निरूपेष्टिं सर्वदेवसदक्षिणाम् ॥

आत्मन्यग्नीन् समारोप्य प्रव्रजेद् ब्राह्मणो गृहात् ।
एक एव चरेन्नित्यं ग्रामसन्नाथमाश्रयेत् ॥ ३ ॥

उपेक्षकोऽसञ्चयिको मुनिर्ज्ञानसमन्वितः । कपालं वृक्षमूलञ्च कुचेलमसहायता ॥
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् । नाभिनन्देत मरणं नाभिनन्देत जीवनम् ॥

कालमेवप्रतिक्षेत निदेशं भृत्तको यथा। दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ॥
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत्। अलाबुदारुपात्राणि मृण्मयं वैणवं यतेः ॥
विधूमे न्यस्तमुषले व्यङ्गारे भुक्तवज्जने।
वृत्ते शरावसम्प्राप्ते भिक्षां नित्यं यतिश्चरेत् ॥ ८ ॥
माधूकरमसङ्क्लिप्तंप्राक्प्रणीतमयाचितम्। तात्कालिकश्चोपपन्नंभैक्षंपञ्चविधंस्मृतम्
पाणिपात्री भवेद्वापि पात्रे पात्रात् समाचरेत्।
अवेक्षेत गतिं नृणां कर्मदोषसमुद्भवाम् ॥ १० ॥
शुद्धभावश्चरेद्धर्मं यत्रतत्राश्रमे रतः। समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ॥
फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम्। न नामग्रहणादेव तस्यवारि प्रसीदति ॥
आजिह्मः पण्डकः पङ्गुरन्धो बधिर एव च।
सद्भिश्च मुच्यते सद्भिरज्ञानात् संसृतो द्विजः ॥ १३ ॥
अह्निरात्र्याश्च यान् जन्तून् हिनस्त्यज्ञानतो यतिः।
तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडाचरेत् ॥ १४ ॥
अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्। चर्मावनद्धं दुर्गन्धं पूर्णं मूत्रपुरीषयोः ॥
जराशोकसमाविष्टं रोगायतनमातुरम्। रजस्वलमनित्यञ्च भूतावासमिमन्त्यजेत् ॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
ह्रीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम् ॥ १७ ॥
चतुर्विधं भैक्षवस्तु कुटीरक बहूदके। हंसः परमहंसश्च यो यः पश्चात् स उत्तमः ॥
एकदण्डी त्रिदण्डी वा योगी मुच्येत बन्धनात्।
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्याऽपरिग्रहौ ॥ १९ ॥
यमाः पञ्चाथ नियमाः शौचं सन्तोषण्तपः। स्वाध्यायेश्वरपूजा च पद्मकाद्यासनंयतेः
प्राणायामस्तु द्विविधः स गर्भोऽगर्भ एव च। जपध्यानयुतो गर्भोविपरीतस्त्वगर्भकः
प्रत्येकं त्रिविधः सोपिपूरकुम्भकरेचकैः। पूरणात् पूरकोवायोर्न्निश्चलत्वाच्चकुम्भकः
रेचनाद्रेचकः प्रोक्तो मात्राभेदेन च त्रिधा।

द्वादशात्तु चतुर्विंशः षट्त्रिंशन्मात्रिकोऽपरः ॥ २३ ॥
कालो लघ्वक्षरो मात्रा प्रणवादि चरेच्छनैः। प्रत्याहारोजापकानांध्यानमीश्वरचिन्तनम्
मनोधृतिर्धारणा स्यात् समाधिर्ब्रह्मणि स्थितिः।
अयमात्मा परं ब्रह्म सत्यं ज्ञानमनन्तकम् ॥ २५ ॥
विज्ञानमानन्दं ब्रह्मतत्त्वमस्यहमस्मि तत्। परंब्रह्म ज्योतिरात्मा वासुदेवो विमुक्त ओं
देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितम् । जाग्रत्स्वप्नसुषुप्त्यादिमुक्तं ब्रह्मतुरीयकम् ॥
नित्यशुद्धबुद्धयुक्तसत्यमानन्दमद्वयम्। अहं ब्रह्म परंज्योतिरक्षरं सर्वगं हरिः ॥ २८॥
योऽसावादित्यपुरुषः सोऽसावहमखण्ड ओं। सर्वारम्भपरित्यागीसमदुःखसुःखक्षमी
भावशुद्धश्च ब्रह्माण्डं भित्त्वा ब्रह्म भवेन्नरः।
आषाढ्यां पौर्णमास्याञ्च चातुर्मास्यं व्रतञ्चरेत् ॥ ३० ॥
ततो व्रजेत् नवम्यादौ ह्यृतुसन्धिषु वापयेत्। प्रायश्चितं यतीनाञ्चध्यानंवायुयमस्तथा
इत्यादि महापुराणे आग्नेये यतिधर्मवर्णनं नामैकषष्ट्यधिकशततमोऽध्यायः।

---

# द्विषष्ट्यधिकशततमोऽध्यायः

## धर्मशास्त्रकथनम्।

पुष्कर उवाच।

मनुर्विष्णुर्याज्ञवल्क्यो हारीतोऽत्रिर्यमोऽङ्गिरा।
वसिष्ठदक्षसंवर्त्तशातातपपराशराः ॥ १ ॥
आपस्तम्बोशनोव्यासाःकात्यायनबृहस्पती। गोतमः शङ्खलिखितौ धर्ममेतेयथाऽब्रुवन्
तथा वक्ष्ये समासेन भुक्तिमुक्तिप्रदं शृणु। प्रवृत्तञ्च निवृत्तञ्च द्विविधङ्कर्म्म वैदिकम् ॥
काम्यं कर्म्म प्रवृत्तं स्यान्निवृत्तं ज्ञानपूर्वकम्।
वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणाञ्च संयमः ॥ ४ ॥

अहिंसा गुरुसेवा च निःश्रेयसकरं परम्। सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम्॥
तच्चाग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः। सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि
समम्पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति।
आत्मज्ञाने समे च स्याद्वेदाभ्यासे च यत्नवान्॥ ७॥
एतद्द्विजन्मसामर्थ्यं ब्राह्मणस्य विशेषतः। वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन्॥
इहैव लोके तिष्ठन् हि ब्रह्मभूयाय कल्पते।
स्वाध्यायानामुपाकर्म श्रावण्यां श्रवणेन तु॥ ६॥
हस्तेचौषधिवारे च पञ्चम्यां श्रावणस्य वा। पौषमासस्यरोहिण्यामष्टकायामथापि वा
जलान्ते छन्दसाङ्कुर्य्याद्रुत्सर्गं विधिवद्वहिः। त्र्यहं प्रेतेष्वनध्यायःशिष्यर्त्विग्गुरुबन्धुषु
उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा।
सन्ध्यागर्जितनिर्घाते भूकम्पोल्कानिपातने॥ १२॥
समाप्य वेदं ह्यनिशमारण्यकमधीत्य च। पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके॥१३॥
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च। पशुमण्डूकनकुलश्वाहिमार्जारशूकरैः॥
कृतेन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये।
श्वक्रोष्टुगर्दभोलूकमासवाणर्त्तुनिस्वने॥ १५॥
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके। अशुभासु च तारासु विद्युत्स्तनितसम्प्लवे॥
भुक्त्वार्द्रपाणिरम्भोऽन्तरर्द्धरात्रेऽतिमारुते। पांशुवर्षे दिशान्दाहे सन्ध्यानीहारभीतिषु
धावतः प्राणिबाधे च विशिष्टे गृहमागते। खरोष्ट्रयानहस्त्यश्वनौकावृक्षादिरोहणे।
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः॥ १८॥
इत्यादि महापुराणे आग्नेये धर्मशास्त्रकथनं नाम द्विषष्ट्यधिकशततमोऽध्यायः।

# त्रिषष्ट्यधिकशततमोऽध्यायः

## श्राद्धकल्पकथनम् ।

पुष्कर उवाच ।

श्राद्धकल्पं प्रवक्ष्यामि भुक्तिमुक्तिप्रदं शृणु । निमन्त्र्य विप्रान् पूर्वेद्युः स्वागतेनापराह्णतः
प्राच्योंपवेशयेत् पीठे युग्मान्दैवेऽथ पित्रके ।
आयुग्मात् प्राङ्मुखान्दैवे त्रीन् पैत्रे चैकमेव वा ॥ २ ॥
मातामहानामप्येवन्तन्त्रं वा वैश्वदेविकम् । पाणिप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि
आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा । यवैरन्ववकीर्य्याथ भाजने सपवित्रके ॥ ४ ॥
शन्नोदेव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा ।
या दिव्या इतिमन्त्रेण हस्ते ह्यर्घं विनिक्षिपेत् ॥ ५ ॥
दत्त्वोदकं गन्धमाल्यं धूपदानं प्रदीपकम् । अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ॥
द्विगुणांस्तु कुशान् कृत्वा ह्युशन्तस्त्वेत्यृचा पितॄन् ।
आवाह्य तदनुज्ञातो जपेदायान्तु नस्ततः ॥ ७ ॥
यवार्थास्तु तिलैः कार्य्याः कुर्यादर्घ्यादि पूर्ववत् ।
दत्त्वार्घ्यं संश्रवान् शेषान् पात्रे कृत्वा विधानतः ॥ ८ ॥
पितृभ्यःस्थानमसीतिन्युब्जंपात्रंकरोत्यधः । अग्नीकरिष्य आदायपृच्छत्यन्नंघृतप्लुतम्
कुरुष्वेति ह्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत् । हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ॥
यथालाभोपपन्नेषु रौप्येषु तु विशेषतः । दत्वान्नं पृथिवीपात्रमीति पात्राभिमन्त्रणम्
कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ।
सव्याहृतिकां गायत्रीं मधुवाता इति त्यृचम् ॥ १२ ॥
जप्त्वायथासुखं वाच्यंभुञ्जीरंस्तेऽपिवाग्यताः । अन्नमिष्टंहविष्यञ्चदद्याजप्त्वापवित्रकम्
अन्नमादाय तृप्ताःस्थ शेषं चैवान्नमस्य च ।

तदन्नं विकिरेद् भूमौ दद्याच्चापः सकृत् सकृत् ॥ १४ ॥
सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।
उच्छिष्टसन्निधौ पिण्डान् प्रदद्यात् पितृयज्ञवत् ॥ १५ ॥
मातामहानाप्येवं दद्यादाचमनं ततः । स्वस्तिवाच्यं ततः कुर्य्यादक्षय्योदकमेव च ॥
दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ।
वाच्यतामित्यनुज्ञातः स्वपितृभ्यः स्वधोच्यताम् ॥ १७ ॥
कुर्य्युरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम् ।
प्रीयन्तामिति वा दैवं विश्वे देवा जलं ददेत् ॥ १८ ॥
दातारोनोऽभिवर्द्धन्तांवेदाःसन्ततिरेवच । श्रद्धाच नो माव्यगमद्वहुदेयंच नोऽस्त्विति
इत्युक्त्वा तु प्रिया वाचः प्रणिपत्य विसर्जयेत् । वाजेवाज इति प्रीतपितृपूर्वंविसर्जनम्
यस्मिंस्तु संश्रवाः पूर्वमर्घपात्रे निपातिताः ।
पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्जयेत् ॥ २१ ॥
प्रदक्षिणमनुव्रज्य भुक्त्वा तु पितृसेवितम् । ब्रह्मचारी भवेत्तान्तु रजनीं ब्राह्मणैः सह ॥
एवं प्रदक्षिणं कृत्वा वृद्धौ नान्दीमुखान् पितॄन् ।
यजेत दधिकर्कन्धुमिश्रान् पिण्डान् यवैः क्रिया ॥ २३ ॥
एकोद्दिष्टं दैवहीनमेकार्घैकपवित्रकम् । आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥ २४ ॥
उपतिष्ठतामित्यक्षयस्थानेपितृविसर्जने । अभिरम्यतामितिवदेद् ब्रू युस्तेऽभिरताःस्म ह
गन्धोदकतिलैर्युक्तं कुर्य्यात् पात्रचतुष्टयम् । अर्घार्थपितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् । एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रियासह
अर्वाक्सपिण्डीकरण यस्य संवत्सराद् भवेत् ।
तस्याप्यन्नं सोदकुम्भं दद्यात् संवत्सरं द्विजे ॥ २८ ॥
मृतहानि च कर्त्तव्यं प्रतिमासन्तुवत्सरम् । प्रतिसंवत्सरं कार्य्यं श्राद्धंवैमासिकान्नवत्
हविष्यान्नेन वै मासं पायसेन तु वत्सरान् । मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् । मासवृद्ध्याऽभितृप्यन्ति दत्तैरेव पितामहाः ॥

खड्गामिषं महाशल्कं मधुयुक्तान्नमेव च ।
लोहामिषं कालशाकं मांसं वार्द्धीनसस्य च ॥ ३२ ॥
यद्ददाति गयास्थश्च सर्वमानन्त्यमुच्यते । तथा वर्षात्रयोदश्यां मघासु च न संशयः ॥
कन्यां प्रजां वन्दिनश्च पशून् मुख्यान् सुतानपि ।
घृतं कृषिञ्च वाणिज्यं द्विशफैकशफं तथा ॥३४ ॥
ब्रह्मवर्च्चस्विनःपुत्रान्स्वर्णरूप्येसकुप्यते । ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदःसदा॥
प्रतिपत्प्रभृतिष्वेतान् वर्जयित्वा चतुर्दशीम् । शस्त्रेण तु हता ये वै तेषां तत्र प्रदीयते
स्वर्गं ह्यपत्यमोजश्च शौर्य्यं क्षेत्रं बलं तथा ।
पुत्रश्रैष्ठ्यं ससौभाग्यमपत्यं मुख्यतां सुतान् ॥ ३७ ॥
प्रवृत्तचक्रतां पुत्रान् वाणिज्यं प्रभुतां तथा । अरोगित्वं यशो वीतशोकतां परमाङ्गतिम्
धनं विद्यां भिषक्सिद्धिं रूप्यं गाश्चाप्यजाविकम् ।
अश्वानयुश्च विधिवत् यः श्राद्धं सम्प्रयच्छति ॥ ३९ ॥
कृत्तिकादभरण्यन्ते स कामानाप्नुयादिमान् । वसुरुद्रा दितिसुताः पितरःश्राद्धदेवताः
प्रीणयन्ति मनुष्याणां पितृन् श्राद्धेन तर्पिताः ।
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ॥ ४१ ॥
इत्यादि महापुराणे आग्नेये श्राद्धकल्पकथनं नाम त्रिषष्ट्यधिकशततमोऽध्यायः ।

---

# चतुःषष्ट्यधिकशततमोऽध्यायः ।

## नवग्रहहोमः ।

पुष्कर उवाच ।

श्रीकामः शान्तिकामोवा ग्रहयज्ञंसमारभेत् । वृष्ट्यायुःपुष्टिकामोवातथैवाभिचरन् पुनः

सूर्य्यः सोमो मङ्गलश्च बुधश्चाथ बृहस्पतिः। शुक्रः शनैश्चरो राहुः केतुश्चेतिग्रहा स्मृताः॥

ताम्रकात् स्फाटिकाद्रक्तचन्दनात् स्वर्णकादुभौ।
रजतादयसः सीसात् ग्रहाः कार्य्याः क्रमादिमे॥ ३॥

सुवर्णैर्वा यजेल्लिख्य गन्धमण्डलकेषु वा। यथावर्णं प्रदेयानि वासांसि कुसुमानि च॥

गन्धाश्च वलयश्चैव धूपो देयस्तु गुग्गुलः। कर्त्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतन्॥

आकृष्णेन इमं देवा अग्निर्मूर्द्धा दिवः ककुत्।
उद्बुध्यस्वेति च ऋचो यथासङ्ख्यं प्रकीर्त्तिताः॥ ६॥
बृहस्पते अतियदर्य्यस्तथैवान्नात् परिश्रुतः।
शन्नो देवीस्तथा काण्डात् केतुं कृण्वन्निमास्तथा॥ ७॥

अर्कः पलाशः खदिरोह्यपामार्गोऽथपिप्पलः। उदुम्बरः शमी दूर्वाकुशाश्चसमिधः क्रमात्॥
एकैकस्यात्राष्टशतमष्टाविंशतिरेव वा। होतव्या मधुसर्पिर्भ्यां दध्ना चैव समन्विताः॥ ९॥
गुड़ौदनं पायसञ्च हविष्यं क्षीरयष्टिकम्। दध्योदनं हविः पूपान् मांसं चित्रान्नमेव च

दद्यात् ग्रहक्रमादेतद् द्विजेभ्यो भोजनं बुधः।
शक्तितो वा यथालाभं सत्कृत्ये विधिपूर्वकम्॥ ११॥
धेनुः शङ्खस्तथानड्वान् हेमवासो हयस्तथा।
कृष्णा गौरायसश्छाग एता वै दक्षिणाः क्रमात्॥ १२॥

यश्च यस्य यदा दूष्यः स तं यत्नेन पूजयेत्। ब्रह्मणैषां वरो दत्तः पूजिताः पूजितस्यच
ग्रहाधीना नरेन्द्राणामुच्छयाःपतनानि च। भावाभावौ च जगतस्तस्मात् पूज्यतमाग्रहाः

इत्यादि महापुराणे आग्नेये नवग्रहहोमविधिवर्णनं नाम
चतुःषष्ट्यधिकशततमोऽध्यायः।

---

## पञ्चषष्ट्यधिकशततमोऽध्यायः

### नानाधर्म्माः ।

अग्निरुवाच ।

ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत् प्रभु ।
अनन्याविषयं कृत्वा मनो बुद्धिस्मृतीन्द्रियम् ॥ १ ॥

श्राद्धन्तु ध्यायिने देयं गव्यं दधि घृतं पयः। प्रियङ्गवो मसूराश्च वार्त्ताकुः कोद्रवो नहि
सैंहिकेयी यदा सूर्य्यं ग्रसते पर्वसन्धिषु। हस्तिच्छाया तु सा ज्ञेयाश्राद्धदानादिकेऽक्षया
पित्रे चैव यदा सोमो हंसे चैंव करे स्थिते। तिथिर्वैवस्वती नाम साछाया कुञ्जरस्यतु

अग्नौकरणशेषन्तु न दद्याद्वैश्वदेविके ।
अग्न्यभावे तु विप्रस्य हस्ते दद्यात्तु दक्षिणे ॥ ५ ॥

न स्त्री दुष्यति जारेण न विप्रो वेदकर्म्मणा। बलात्कारोपभुक्ता चेद्वैरिहस्तगतापिवा
सन्त्यजेद् दूषितान्नारीमृतुकाले न शुद्ध्यति। य आत्मव्यतिरेकेण द्वितीयं नात्रपश्यति

ब्रह्मभूतः स एवेह योगी चात्मरतोऽमलः ।
विषयेन्द्रिसंयोगात् केचिद् योगं वदन्ति वै ॥ ८ ॥

अधर्मो धर्मबुद्ध्या तु गृहीतस्तैरपण्डितैः! आत्मनो मनसश्चैव संयोगश्च तथा परे॥९॥
वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि। एकीकृत्वा विमुच्येतबन्धाद्योगोऽयमुत्तमः

कुटुम्बैः पञ्चभिर्ग्रामः षष्ठस्तत्र महत्तरः ।
देवासुरमनुष्यैर्वा स जेतुं नैव शक्यते ॥ ११ ॥
बहिर्मुखानि सर्वाणि कृत्वा चाभिमुखानि वै ।
मनस्येवेन्द्रियग्रामं मनश्चात्मनि योजयेत् ॥ १२ ॥

सर्वभावनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत्। एतज् ज्ञानञ्च ध्यानञ्च शेषोऽन्योग्रन्थविस्तरः
यन्नास्ति सर्वलोकस्य तदस्तीति विरुध्यते। कथ्यमानं तथाऽन्यस्य हृदये नावतिष्ठते

असंवेद्यं हि तद् ब्रह्म कुमारी स्त्रीसुखं यथा।
अयोगी नैव जानाति जात्यन्धो हि घटं यथा ॥ १५ ॥
सन्न्यसन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः।
एष मे मण्डलं भित्त्वा परं ब्रह्माऽधिगच्छति ॥ १६ ॥
उपवासव्रतश्चैव स्नानन्तीर्थं फलन्तपः।
द्विजसम्पादनञ्चैव सम्पन्नन्तस्य तत्फलम् ॥ १७ ॥

एकाक्षरं परं ब्रह्म प्राणायामः परन्तपः। सावित्र्यास्तु परं नास्ति पावनं परमं स्मृतम्

पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः।
भुञ्जते मानुषाः पश्चान् नैता दुष्यन्ति केनचित् ॥ १९ ॥
असवर्णेन यो गर्भः स्त्रीणां योनौ निषिच्यते।
अशुद्धा तु भवेन्नारी यावच्छल्यं न मुञ्चति ॥ २० ॥

निःसृते तु ततः शल्ये रजसा शुद्ध्यते ततः। ध्यानेनसदृशंनास्ति शोधनं पापकर्मणाम्

श्वपाकेष्वपि भुञ्जानो ध्यानेन हि विशुद्ध्यति।
आत्मा ध्याता मनो ध्यानं ध्येयो विष्णुः फलं हरिः ॥ २२ ॥

अक्षयाय यतिः श्राद्धे पङ्क्तिपावन पावनः। अरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः

प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा।
ये च प्रव्रजिताः पत्न्यां या चैषां वीजसन्ततिः ॥ २४ ॥

विदुरा नाम चण्डाला जायन्तेनात्रसंशय। शतिकोम्रियतेगृध्रःश्वासौ द्वादशिकस्तथा
भासोविंशतिवर्षाणि शूकरोदशभिस्तथा। आपुष्पोविफलो वृक्षो जायते कण्टकावृतः
ततो दावाग्निदग्धस्तु स्थाणुर्भवति सानुगः। ततो वर्षशतान्यष्टौ द्वे च तिष्ठत्यचेतनः
पूर्णे वर्षसहस्रे तु जायते ब्रह्मराक्षसः। प्लवेन लभते मोक्षं कुलस्योत्सादनेन वा।

योगमेव निषेवेत नान्यं मन्त्रमघापहम् ॥ २८ ॥

इत्यादि महापुराणे आग्नेये नानाधर्मकथनं नाम पञ्चषष्ट्यधिकशततमोऽध्यायः।

---

# षट्षष्ट्यधिकशततमोऽध्यायः

## वर्णधर्मादिकथनम् ।

पुष्कर उवाच ।

वेदस्मार्त्तं प्रवक्ष्यामि धर्मं वै पञ्चधा स्मृतम् । वर्णत्वमेकमाश्रित्य योऽधिकारःप्रवर्त्तते
वर्णधर्मः स विज्ञेयो यथोपनयनन्त्रिषु । यस्त्वाश्रमं समाश्रित्य पदार्थः सविधीयते॥
उक्त आश्रमधर्मस्तु भिन्नपिण्डादिको यथा । उभयेन निमित्तेन यो विधिः सम्प्रवर्त्तते

नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ।
ब्रह्मचारी गृही चापि वानप्रस्थो यतिर्नृप ! ॥ ४ ॥
उक्त आश्रमधर्म्मस्तु धर्म्मः स्यात् पञ्चधा परः ।
षाड्गुणस्याभिधाने यो दृष्टार्थः स उदाहृतः ॥ ५ ॥

स त्रेधा मन्त्रयागाद्यदृष्टार्थ इति मानवाः । उभयार्थो व्यवहारस्तु दण्डधारणमेव च ॥

तुल्यार्थानां विकल्पः स्याद् यागमूलः प्रकीर्त्तितः ।
वेदे तु विहितो धर्म्मः स्मृतौ तादृश एव च ॥ ७ ॥

अनुवादंस्मृतिः सूते कार्य्यार्थमितिमानवाः । गुणार्थःपरिसंख्यार्थो वानुवादोविशेषतः
विशेषदृष्ट एवासौ फलार्थ इति मानवाः । स्यादष्टचत्वारिंशभिः संस्कारैर्ब्रह्मलोकगः
गर्भाधानं पुंसवनं सीमन्तोन्नयनं ततः । जातकर्म्म नामकृतिरन्नप्राशनचूड़कम् ॥ १० ॥

संस्कारश्चोपनयनं वेदव्रतचतुष्टयम् ।
स्नानं स्वधर्म्मचारिण्या योगः स्याद्यज्ञपञ्चकम् ॥ ११ ॥

देवयज्ञः पितृयज्ञो मनुष्यभूतयज्ञकौ । ब्रह्मयज्ञः सप्तपाकयज्ञसंस्थाः पुरोऽष्टकाः ॥
पार्वणश्राद्धं श्रावण्याग्रहायणी च चैत्र्यपि । आश्वयुजीसप्तहविर्यज्ञसंस्थास्ततःस्मृताः
अग्न्याधेयमग्निहोत्रंदर्शःस्यात् पौर्णमासकः । चातुर्मास्याग्रहायणेष्टिर्निरूढःपशुबन्धकः
सौत्रामणिसप्तसोमसंस्थाग्निष्टोम आदितः । अत्यग्निष्टोम उक्थश्चषोडशीवाजपेयकः

अतिरात्रास्तथा स्तोमा अष्टौ चात्मगुणास्ततः ।
दया क्षमाऽनसूया च अनायासोऽथ मङ्गलम् ॥ १६ ॥
अकार्पण्यास्पृहाशौचं यस्यैते स परं व्रजेत् । प्रचारे मैथुने चैव प्रस्रावेदन्तधावने ॥
स्नानभोजनकाले च षट्सु मौनं समाचरेत् । पुनर्दानं पृथक्पानमाज्येन पयसा निशि
दन्तच्छेदनमुष्णञ्च शप्त शक्तुषु वर्जयेत् ।
स्नात्वा पुष्पं न गृह्णीयात् देवायोग्यन्तदीरितम् ॥ १९ ॥
अन्यगोत्रोऽप्यसम्बद्धः प्रेतस्याग्निन्ददाति यः । पिण्डञ्चोदकदानञ्च स दशाहंसमापयेत्
उदकञ्चतृणं भस्म द्वारम्पन्थास्तथैव च । एभिरन्तरितं कृत्वा पङ्क्तिदोषोन विद्यते
पञ्चप्राणाहुतीर्दद्यादनामाङ्गुष्ठयोगतः ॥ २१ ॥
इत्यादि महापुराणे आग्नेये वर्णधर्मादिकथनं नाम षट्षष्ट्यधिकशततमोऽध्यायः ।

---

## सप्तषष्ट्यधिकशततमोऽध्यायः

### अयुतलक्षकोटिहोमाः ।

अग्निरुवाच ।

श्रीशान्तिविजयाद्यर्थं ग्रहयज्ञं पुनर्वदे । ग्रहयज्ञोऽयुतहोमलक्ष्यकोट्यात्मकस्त्रिधा ॥
वेदेरैशेह्यग्निकुण्डाद् ग्रहानावाह्यमण्डले । सौम्ये गुरुर्बुधश्चैशे शुक्रः पूर्वदले शशी ॥
आग्नेये दक्षिणे भौमो मध्ये स्याद्भास्करस्तथा ।
शनिराप्येऽथ नैरृत्ये राहुः केतुश्च वायवे ॥ ३ ॥
ईशश्चोमा गुहो विष्णुर्ब्रह्मेन्द्रौ यमकालकौ । चित्रगुप्तश्चाधिदेवा अग्निरापः क्षितिर्हरि
इन्द्र ऐन्द्री देवता च प्रजेशोऽहिर्विधिः क्रमात् ।
एते प्रत्यधिदेवाश्च गणेशो दुर्गयानिलः ॥ ५ ॥
खमश्विनी च सम्पूज्य यजेद्बीजैश्च वेदजैः । अर्कः पलाशः खदिरो ह्यपामार्गश्चपिप्पलः

उदुम्बरः शमी दुर्वा कुशाश्च समिधः क्रमात् ।
मध्वाज्यदधिसंमिश्रा होतव्याश्चाष्टधाशतम् ॥ ७ ॥
एकाष्टचतुरः कुम्भान् पूर्य्य पूर्णाहुतिन्तथा । वसोर्धारान्ततो दद्याद्दक्षिणाश्चततोददेत्
यजमानं चतुर्भिस्तैरभिषिञ्चेत् समन्त्रकैः । सूरास्त्वामभिषिञ्चन्तु ब्रह्माविष्णुमहेश्वरः
वासुदेवो जगन्नाथस्तथा सङ्कर्षणः प्रभुः । प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयायते ॥
आखण्डलोऽग्निर्भगवान् यमो वै नैर्ऋतस्तथा ।
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥ ११ ॥
ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु वः सदा ।
कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ १२ ॥
बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः ।
एतास्त्वामभिषिञ्चन्तु धर्म्मपत्न्यः समागताः ॥ १३ ॥
आदित्यश्चन्द्रमाभौमोबुधजीवशिताऽर्कजाः । ग्रहास्त्वामभिषिञ्चन्तुराहुःकेतुश्चतर्पिताः
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः । ऋषयो मनवो गावो देवमातर एव च ॥ १५ ॥
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसाङ्गणाः ।
अस्त्राणि सर्वशास्त्राणि राजानो वाहनानि च ॥ १६ ॥
औषधानि च रत्नानि कालस्यावयवाश्च ये । सरितःसागराःशैलास्तीर्थानिजलदानदाः
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धय । अलङ्कृतस्ततो दद्याद्धेमगोऽन्नभुवादिकम्
कपिले ! सर्वदेवानां पूजनियासि रोहिणि ! ।
तीर्थदेवमयी यस्मादतःशान्ति प्रयच्छ मे ॥ १६ ॥
पुण्यस्त्वंशङ्ख ! पुण्यानांमङ्गलानाञ्चमङ्गलम् । विष्णुनाविधृतोनित्यमतःशान्तिंप्रयच्छमे
धर्म्म ! त्वं वृषरूपेण जगदानन्दकारकः । अष्टमूर्तेरधिष्ठानमतः शान्तिंप्रयच्छमे ॥२१॥
हिरण्यगर्भगर्भस्थं हेमवीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ २२ ॥
पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् । प्रदानात्तस्य वै विष्णुरतः शान्तिं प्रयच्छ मे

विष्णुस्त्वं मत्स्यरूपेण यस्मादमृतसम्भवः। चन्द्रार्कवाहनो नित्यमतःशान्तिप्रयच्छमे
यस्मात्त्वं पृथिवी सर्वा धेनुः केशवसन्निभा।
सर्वपापहरा नित्यमतः शान्ति प्रयच्छ मे ॥ २५ ॥
यस्मादायसकर्माणि तवाधीनानि सर्वदा। लाङ्गलाद्यायुधादीनि अतःशान्ति प्रयच्छमे
यस्मात्त्वं सर्वयज्ञानामङ्गत्वेन व्यवस्थितः। योनिर्विभावसोर्नित्यमतः शान्तिप्रयच्छमे
गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश।
यस्मात्तस्माच्छिवं मे स्यादिहलोके परत्र च ॥ २८ ॥
यस्मादशून्यं शयनं केशवस्यशिवस्य च। शय्या ममाप्यशून्याऽस्तु दत्ताजन्मनिजन्मनि
यथा रत्नेषु सर्वेषु सर्वे देवाः प्रतिष्ठिताः। तथाशान्ति प्रयच्छन्तु रत्नदानेन मे सुराः ॥
यथा भूमिप्रदानस्य कलां नार्हन्ति षोड़शीम्।
दानान्यन्यानि मे शान्तिर्भूमिदानाद्भवत्विह ॥ ३१ ॥
ग्रहयज्ञोऽयुतहोमो दक्षिणाभी रणे जितिः। विवाहोत्सव यज्ञेषु प्रतिष्ठादिषु कर्मसु ॥
सर्वकामाप्तये लक्षकोटिहोमद्वयं मतम्। गृहदेशे मण्डपेऽथ अयुते हस्तमात्रकम् ॥ ३३॥
मेखलायोनिसंयुक्तं कुण्डश्चत्वार ऋत्विजः।
स्वयमेकोऽपि वा लक्षे सर्वं दशगुणं हि तत् ॥ ३४ ॥
चतुर्हस्त द्विहस्तं वा तार्क्ष्यश्चात्राधिकं यजेत्।
सामध्वनिशरीरत्वं वाहनं परमेष्ठिनः ॥ ३५ ॥
विषयापहरो नित्यमतः शान्ति प्रयच्छ मे। पूर्ववत् कुण्डमामन्त्र्यलक्षहोमं समाचरेत्
वसोर्धारां ततोदद्याच्छय्याभूषादिकं ददेत्। तत्रापि दशचाष्टौ च लक्षहोमे तथर्त्विजः
पुत्रान्नराज्यविजयभुक्तिमुक्त्यादि चाप्नुयात्।
दक्षिणाभिः फलेनास्माच्छत्रुघ्नः कोटिहोमकः ॥ ३८ ॥
चतुर्हस्तं चाष्टहस्तं कुण्डन्द्वादश च द्विजाः। पञ्चविंशं षोड़शं वा पटे द्वारेचतुष्टयम् ॥
कोटिहोमी सर्वकामी विष्णुलोकं स गच्छति।
होमस्तु ग्रहमन्त्रैर्वा गायत्र्या वैष्णवैरपि ॥ ४० ॥

जातवेदोमुखैः शैवैः वैदिकैः प्रथितैरपि । तिलैर्यवैर्घृतैर्धान्यैरश्वमेधफलादिभाक् ॥
विद्वेषणाभिचारेषुत्रिकोणं कुण्डमिष्यते । समिधो वामहस्तेन श्येनास्थ्यनलसंयुताः
रक्तभूषैर्मुक्तकुशैर्ध्यायद्भिरशिवं रिपोः ।
दुर्मित्रियास्तस्मै सन्तु यो द्वेष्टि हुं फड़िति च ॥ ४३ ॥
छिन्द्यात् क्षुरेण प्रतिमां पिष्टरूपं रिपुं हनेत् ।
यजेदेकं पीड़कं वा यः स कृत्वा दिवं व्रजेत् ॥ ४४ ॥
इत्यादि महापुराणे आग्नेये अयुतलक्षकोटिहोमवर्णनं नाम
सप्तषष्ट्यधिकशततमोऽध्यायः ।

---

## अष्टषष्ट्यधिकशततमोऽध्यायः

### महापातकादिकथनम् ।

पुष्कर उवाच ।

दण्डं कुर्य्यान्नृपो नृणांप्राश्चित्तमकुर्वताम् । कामतोऽकामतोवापि प्रायश्चित्तं कृतंचरेत्
मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन । महापातकिना स्पृष्टं यच्च स्पृष्टमुदक्यया ॥
गणान्नं गणिकान्नं च वाद्धुंषेर्गायनस्य च ।
अभिशस्तस्य षण्डस्य यस्याश्चोपपतिर्गृहे ॥ ३ ॥
रजकस्य नृशंसस्य वन्दिनः कितवस्य च । मिथ्यातपस्विनश्चैव चौरदण्डिकयोस्तथा
कुण्डगोलस्त्रीजितानां वेदविक्रयिणस्तथा । शैलूषतन्त्रवायान्नं कृतघ्नस्यान्नमेव च
कर्मारस्य निषादस्य चेलनिर्णेजकस्यच । मिथ्याप्रव्रजितस्यान्नम्पुंश्चल्यास्तैलिकस्य च
आरूढ़पतितस्यान्नं विद्विष्टान्नश्च वर्ज्जयेत् । तथैव ब्राह्मणस्यान्नं ब्राह्मणेनानिमन्त्रितः
ब्राह्मणान्नश्चशूद्रेण नाद्याच्चैव निमन्त्रितः । एषामन्यतमस्यान्नममत्या वा ऽयहंक्षपेत्
मत्या भुक्त्वा चरेत् कृच्छ्रं रैतोविण्मूत्रमेव च ।

चण्डालश्वपचान्नन्तु भुक्त्वा चान्द्रायणं चरेत् ॥ ६ ॥
अनिर्दशाश्च प्रेतान्नं गवाघ्रातं तथैव च। शूद्रोच्छिष्टं शुनोच्छिष्टं पतितान्नं तथैव च ॥
तप्तकृच्छ्रं प्रकुर्वीत अशौचे कृच्छ्रमाचरेत्।
अशौचे यस्य यो भुङ्क्ते सोऽप्यशुद्धस्तथा भवेत् ॥ ११ ॥
मृतपञ्चनखात् कूपादमेध्येन सकृद्युतात्। अपःपीत्वा त्र्यहं तिष्ठेत् सोपवासोद्विजोत्तमः
सर्वत्र शूद्रे पादः स्याद्द्वित्रयंवैश्यभूपयोः। विड्वराहखरोष्ट्राणांगोमायोःकपिकाकयोः
प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत्।
शुष्काणि जग्ध्वा मांसानि प्रेतान्नं करकाणि च ॥ १४ ॥
क्रव्यादशूकरोष्ट्राणां गोमायोः कपिकाकयोः। गोनराश्वखरोष्ट्राणां छत्राकंग्रामकुक्कुटम्
मांसं जग्ध्वा कुञ्जरस्य तप्तकृच्छ्रेणशुद्ध्यति। आमश्राद्धे तथाभुक्त्वाव्रह्मचारीमधुत्वदन्
लशुनं गृञ्जनं चाद्यात् प्राजापत्यादिनाशुचिः।
भुक्त्वा चान्द्रायणं कुर्य्यान् मांसञ्चात्मकृतन्तथा ॥ १७ ॥
पेलुगव्यञ्चपेयूषं तथाश्लेष्मातकं मृदम्। वृथाकृशरसंयाव पायसापूपशष्कुलीः ॥
अनुपाकृतमांसानि देवान्नानि हवींषि च।
गवाञ्च महिषीणाञ्च वर्जयित्वा तथाप्यजाम् ॥ १६ ॥
सर्वक्षीराणि वर्ज्याणि तासाञ्चैवाप्यनिर्दशम्।
शशकःशल्यकी गोधा खड्गःकूर्म्मस्तथैव च ॥ २० ॥
भक्ष्याः पञ्चनखाः प्रोक्ताः परिशेषाश्च वर्ज्जिताः।
पाठीनरोहितान्मत्स्यान् सिंहतुण्डांश्च भक्षयेत् ॥ २१ ॥
यवगोधूमजं सर्वं पयसश्चैव विक्रियाः। वागषाड्गवचक्रादीन् सस्नेहमुषितं तथा ॥
अग्निहोत्रपरोद्धाग्निर्व्राह्मणः कामचारतः। चान्द्रायणं चरेन्मासं वीरवध्वासनं हितम्
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुः संयोगश्चैव तैः सह ॥
अनृते च समुत्कर्षो राजगामि च पैशुनम्। गुरोश्चालीकनिर्बन्धः समानं ब्रह्महत्यया
ब्रह्मोज्झ्यवेदनिन्दा च कौटसाक्ष्यं सुहृद्वधः।

गर्हितान्नाज्ययोर्जग्धिः सुरापानसमानिषट् । ॥ २६ ॥
निक्षेपस्यापहरणं नराश्वरजतस्य च । भूमिवज्रमणीनाञ्च रुक्मस्तेयसमं स्मृतम् ॥
रेतसेकःस्वयोनीषुकुमारीष्वन्त्यजासु च । सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमंविदुः
गोवधोऽथाज्यसंयाज्यं पारदार्य्यात्मविक्रयः ।
गुरुमातृपितृत्यागः स्वाध्ययाग्न्योः सुतस्य च ॥ २९ ॥
परिवित्तितानुजेन परिवेदनमेव च । तयोर्द्दानञ्चकन्यास्तयोरेव च याजनम् ॥ ३० ॥
कन्याया दूषणञ्चैव वार्द्धुष्यं व्रतलोपनम् । तड़ागारामदाराणामपत्यस्य च विक्रयः
व्रात्यताबान्धवत्यागो भृताध्यापनमेव च । भृताच्चाध्ययनादानमविक्रेयस्य विक्रयः ॥
सर्वाकारेष्वधीकारो महायन्त्रप्रवर्त्तनम् ।
हिंसौषधीनां स्त्र्याजीवः क्रियालङ्घनमेव च ॥ ३३ ॥
इन्धनार्थमशुष्काणां द्रुमाणाञ्चैव पातनम् । योषितां ग्रहणञ्चैव स्त्रीनिन्दकसमागमः
आत्मार्थञ्च क्रियारम्भोनिन्दितान्नादनन्तथा । अनाहिताग्नितास्तेयमृणानाञ्चानपक्रिया
असच्छास्त्राधिगमनं दौःशील्यं व्यसनक्रिया । धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणम्
स्त्रीशूद्रविट्क्षत्रवधोनास्तिक्यञ्चोपपातकम् । ब्राह्मणस्यरुजःकृत्यं घ्रातिरघ्रेयमद्ययोः
जैम्भं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम् ।
श्वखरोष्ट्र मृगेन्द्राणामजाव्योश्चैव मारणम् ॥ ३८ ॥
सङ्कीर्णकरणं ज्ञेयं मीनाहिनकुलस्य च । निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम्
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् । कृमिकीटवयोहत्या मद्यानुगतभोजनम् ॥
फलैधःकुसुमस्तेयमधैर्य्यञ्च मलावहम् ॥ ४० ॥

इत्यादि महापुराणे आग्नेये महापातकादिकथनं नामाष्टषष्ट्यधिकशततमोऽध्यायः ।

———

# एकोनसप्तत्यधिकशततमोऽध्यायः

## प्रायश्चित्तानि ।

पुष्कर उवाच ।

एतत्प्रभृतिपापानां प्रायश्चित्तं वदामि ते । ब्रह्महा द्वादशाब्दानि कुटीं कृत्वावने वसेत्
भिक्षेतात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम् ।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥ २ ॥
यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा । जपन्वान्यत्रमंवेदं योजनानां शतं व्रजेत् ॥
सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् । व्रतैरेतैर्व्यपोहन्ति महापातकिनोमलम् ॥
उपपातकसंयुक्तो गोघ्नो मासं यवान् पिवेत् ।
कृतवापो वसेद्गोष्ठे चर्मणा तेन संवृतः ॥ ५ ॥
चतुर्थकालमश्नीयादक्षारलवणं मितम् । गोमूत्रेण चरेत् स्नानं द्वौ मासौ नियतेन्द्रियः
दिवानुगच्छेद्गाश्चैव तिष्ठन्नूर्द्धं रजः पिवेत् । वृषभैकादशा गास्तु दद्याद्विचरितव्रतः
अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत् ।
पादमेकश्चरेद्रोधे द्वौ पादौ बन्धने चरेत् ॥ ८ ॥
योजने पादहीनस्याच्चरेत् सर्वं निपातने । कान्तारेष्वथ दुर्गेषु विषमेषु भयेषु च ॥
यदि तत्र विपत्तिः स्यादेकपादो विधीयते ।
घण्टाभरणदोषेण तथैवार्द्धं विनिर्दिशेत् ॥ १० ॥
दमने दामने रोधे शकटस्य नियोजने । स्तम्भश्रृङ्खलपाशेषु मृते पादोनमाचरेत् ॥
श्रृङ्गभङ्गेऽस्थिभङ्गे च लाङ्गूलच्छेदने तथा । यावकन्तुपिवेत्तावद्यावत्सुस्थातुगौर्भवेत्
गोमतीञ्च जपेद्विद्यां गोस्तुतिं गोमतीं स्मरेत् ।
एका चेद्बहुभिर्दैवाद् यत्र व्यापादिता भवेत् ॥ १३ ॥
पादं पादन्तु हत्यायाश्चरेयुस्ते पृथक् पृथक् ।

उपकारे क्रियमाणे विपत्तौ नास्ति पातकम् ॥ १४ ॥

एतदेव व्रतं कुर्य्युरुपपातकिनस्तथा । अवकीर्णिवर्जं शुद्ध्यर्थश्चान्द्रायणमथापि वा ॥

अवकीर्णि तु कालेन गर्द्धवेन चतुष्पथे । पाकयज्ञविधानेन यजेत निर्ऋतिं निशि ॥

कृत्वाग्निं विधिवद्धीमानन्ततस्तु समित्तृचा ।

चन्द्रेन्द्रगुरुवह्नीनां जुहुयात् सर्पिषाहुतिम् ॥ १७ ॥

अथवा गार्द्धभञ्चर्म्म वसित्वाब्दश्चरेन्महीम् । हत्वा गर्भमविज्ञातं ब्रह्महत्याव्रतं चरेत् ॥

सुरां पीत्वा द्विजोमोहादग्निवर्णां सुरां पिवेत् ।

गोमूत्रमग्निवर्णं वा पिवेदुदकमेव वा ॥ १९ ॥

सुवर्णस्तेयकृद्विप्रोराजानमभिगम्य तु । स्वकर्म्मख्यापयन् ब्रूयान्मां भवाननुशास्त्विति

गृहीत्वा मुशलं राजा सकृद्धन्यात् स्वयङ्गतम् । बधेनशुद्ध्यतेस्तेयो ब्राह्मणस्तपसैववा

गुरुतल्पो निकृत्यैव शिश्नञ्च वृषणं स्वयम् ।

निधाय चाञ्जलौ गच्छेदानिपाताच्च नैर्ऋतिम् ॥ २२ ॥

चान्द्रायणान् वा त्रीन्मासानभ्यसेन्नियतेन्द्रियः ।

जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया ॥ २३ ॥

चरेच्छान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया । सङ्करीपात्रकृत्यासु मासंशोधनमैन्दवम् ॥

मलिनीकरणीयेषु तप्तं स्याद्यावकं त्र्यहम् । तुरीयो ब्रह्महत्यायाः क्षत्रियस्यवधेस्मृतः

वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोड़शः । मार्जारनकुलौ हत्वा चासंमण्डूकमेव च ॥

श्वगाधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ।

चतुर्णामपि वर्णानां नारीं हत्वानवस्थिताम् ॥ २७ ॥

अमत्यैव प्रमाप्य स्त्रीं शूद्रहत्याव्रतं चरेत् । सर्वादीनां बधेनक्तमनस्थ्नां वायुसंयमः ॥

द्रव्याणामल्पसाराणां स्तेयं कृत्वान्यवेश्मतः । चरेच्छान्तपनंकृच्छ्रंव्रतंनिर्वाप्यशुद्ध्यति

भक्षभोज्यापहरणे यानशय्यासनस्य च । पुष्पमूलफलानाञ्च पञ्चगव्यं विशोधनम् ॥

तृणकाष्ठद्रुमाणान्तु शुष्कान्नस्य गुड़स्य च ।

चेलचर्मामिषाणान्तु त्रिरात्रं स्यादभोजनम् ॥ ३१ ॥

मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च । अयः कांस्योपलानाञ्च द्वादशाहं कणान्नभुक् कार्पासकीटजीर्णानां द्विशफैकशफस्य च । पक्षिगन्धौषधीनान्तु रज्वा चैवत्र्यहम्पयः

गुरुतल्पव्रतं कुर्य्याद्रेतः सिक्त्वा स्वयोनिषु ।

सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च ॥ ३४ ॥

पितृस्वश्रेयीं भगिनीं स्वस्त्रीयां मातुरेव च । मातुश्चभ्रातुराप्तस्यगत्वाचान्द्रायणञ्चरेत् अमानुषीषु पुरुष उदक्यायामयोनिषु । रेतः सिक्त्वा जले चैव कृच्छ्रं शान्तपनञ्चरेत्

मैथुनन्तु समासेव्य पुंसि योषिति वा द्विजः ।

गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत् ॥ ३७ ॥

चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।

पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति ॥ ३८ ॥

विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्यादेकवेश्मनि । यत् पुंसः परदारेषुतदेनाञ्चारयेद्व्रतम् ॥ साचेत् पुनः प्रदुष्येत सहशेनोपमन्त्रिता । कृच्छ्रश्चान्द्रायणञ्चैव तदस्याः पावनं स्मृतम् यत् करोत्येकरात्रेण वृषलीसेवनं द्विजः । तद्भैक्ष्यभुक् जपेन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥

इत्यादि महापुराणे आग्नेये प्रायश्चितवर्णनं नामोनसप्तत्यधिकशततमोऽध्यायः ।

---

## सप्तत्यधिकशततमोऽध्यायः

### प्रायश्चित्तानि ।

पुष्कर उवाच ।

महापापानुयुक्तानां प्रायश्चित्तानि वच्मि ते ।

संवत्सरेण पतति पतितेन सहाचरन् ॥ १ ॥

याजनाध्यापनाद्यौनान्न तु यानाशनासनात् । यो येन पतितेनैषां संसर्गं यातिमानवः स तस्यैव व्रतं कुर्य्यात्तत्संसर्गस्य शुद्धये । पतितस्योदकं कार्य्यं सपिण्डैर्बान्धवैः सह

निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ।
दासो घटमपां पूर्णं पर्य्यस्येत् प्रेतवत्पदा ॥ ४ ॥
अहोरात्रमुपासीरन्नशौचं बान्धवैः सह । निवर्त्तयेरंस्तस्मात्तु ज्येष्ठांशम्भाषणादिके ॥
ज्येष्ठांशम्प्राप्नुयाच्चास्य यवीयान् गुणतोऽधिकः ।
प्रायश्चित्ते तु चरिते पूर्णं कुम्भमपां नवम् ॥ ६ ॥
तेनैव सार्द्धं प्राश्येयुः स्नात्वा पुण्यजलाशये । एवमेव विधिं कुर्य्युर्योषित्सुपतितास्वपि
वस्त्रान्नपानन्देयन्तु वसेयुश्च गृहान्तिके । तेषां द्विजानां सावित्री नानूच्येतयथाविधि
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत् ।
विकर्मस्थाः परित्यक्तास्तेषामप्येतदादिशेत् ॥ ६ ॥
जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः ।
मासङ्गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥ १० ॥
व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च । अभिचारमहीनानान्त्रिभिः कृच्छ्रैर्व्यपोहति
शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः । संवत्सरं यताहारस्तत्पापमपसेधति ॥
श्वशृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च ।
नरोष्ट्राश्ववैर्वराहैश्च प्राणायामेन शुद्ध्यति ॥ १३ ॥
स्नातकव्रतलोपे च कर्मत्यागे ह्यभोजनम् । हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारञ्चगरीयसः
स्नात्वानश्नन्नहःशेषमभिवाद्य प्रसादयेत् । अवगूर्य्य चरेत् कृच्छ्रमतिकृच्छ्रन्निपातने ॥
कृच्छ्रातिकृच्छ्रं कुर्वीत विप्रस्योत्पाद्य शोणितम् ।
चाण्डालादिरविज्ञातो यस्य तिष्ठेत वेश्मनि ॥ १६ ॥
सम्यग् ज्ञातस्तु कालेन तस्य कुर्वीत शोधनम् ।
चान्द्रायणं पराकं वा द्विजानान्तु विशोधनम् ॥ १७ ॥
प्राजापत्यन्तु शूद्राणां शेषन्तदनुसारतः । गुडङ्कुसुम्भं लवणं तथा धान्यानि यानि च॥
कृत्वा गृहे ततो द्वारि तेषान्दद्याद्धुताशनम् ।
मृण्मयानान्तु भाण्डानां त्याग एव विधीयते ॥ १६ ॥

द्रव्याणां परिशेषाणां द्रव्यशुद्धिर्विधीयते। कूपैकपानसक्ता ये स्पर्शात्सङ्कल्पदूषिताः ॥
शुद्ध्येयुरुपवासेन पञ्चगव्येनवाप्यथ। यस्तु संस्पृश्य चण्डालमश्नीयाच्चस्वकामतः

द्विजश्चान्द्रायणं कुर्य्यात्तप्तकृच्छमथापि वा।
भाण्डसङ्कुलसङ्कीर्णश्चाण्डालादिजुगुप्सितैः ॥ २२ ॥

भुक्त्वापीत्वातथा तेषांषड्रात्रेणविशुद्ध्यति। अन्त्यानांभुक्तशेषन्तु भक्षयित्वाद्विजातयः

व्रत चान्द्रायणं कुर्य्युस्त्रिरात्रं शूद्र एव तु।
चण्डालकूपभाण्डेषु अज्ञानात् पिवते जलम् ॥ २४ ॥

द्विजः शान्तपनंकुर्य्याच्छूद्रश्चोपवसेद्दिनम्। चण्डालेन तु संस्पृष्टोयस्त्वपःपिवतेद्विजः

त्रिरात्रन्तेन कर्त्तव्यं शूद्रश्चोपवसेद्दिनम्।
उच्छिष्टेन यदि स्पृष्टः शुना शूद्रेण वा द्विजः ॥ २६ ॥

उपोष्य रजनीमेकां पञ्चगव्येन शुद्ध्यति। वैश्येन क्षत्रियेणैव स्नानं नक्तं समाचरेत् ॥
अध्वानं प्रस्थितो विप्रः कान्तारे यद्यनूदके। पक्वान्नेन गृहीतेन मूत्रोच्चारङ्करोति वै

अनिधायैव तद्द्रव्यं अङ्गे कृत्वा तु संस्थितम्।
शौचं कृत्वान्नमभ्युक्ष्य अर्कस्याग्नेश्च दर्शयेत् ॥ २६ ॥
म्लेच्छैर्गतानां चौरैर्वा कान्तारे वा प्रवासिनाम्।
भक्ष्याभक्ष्यविशुद्ध्यर्थं तेषां वक्ष्यामि निष्कृतिम् ॥ ३०

पुनः प्राप्य स्वदेशञ्च वर्णानामनुपूर्वशः। कृच्छस्यान्ते ब्राह्मणस्तु पुनः संस्कारमर्हति
पादोनान्ते क्षत्रियश्च अर्द्धान्ते वैश्य एव च। पादं कृत्वातथाशूद्रो दानंदत्त्वाविशुद्ध्यति

उदक्या तु सवर्णा या स्पृष्टा चेत् स्यादुदक्यया।
तस्मिन्नेवाहनि स्नाता शुद्धिमाप्नोत्य संशयम् ॥ ३३ ॥

रजस्वला तु नाश्नीयात् संस्पृष्टाहीनवर्णया। यावन्नशुद्धिमाप्नोति शुद्धस्नानेनशुद्ध्यति

मूत्रं कृत्वा व्रजन्वर्त्मे स्मृतिभ्रंशाज्जलं पिवेत्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥ ३५ ॥
मूत्रोच्चारं द्विजः कृत्वा अकृत्वा शौचमात्मनः।

मोहाद्भुक्त्वा त्रिरात्रन्तु यवान् पीत्वा विशुद्ध्यति ॥ ३६ ॥

ये प्रत्यवसिता विप्राः प्रव्रज्यादिवलात्तथा। अनाशकनिवृत्ताश्च तेषां शुद्धिः प्रचक्ष्यते
चारयेत्त्रीणिकृच्छ्राणिचान्द्रायणमथापि वा। जातकर्मादिसंस्कारैःसंस्कुर्य्यात्तंतथापुनः
उपानहममेध्यं च यस्य संस्पृशते मुखम्। मृत्तिकागोमयौ तत्र पञ्चगव्यञ्च शोधनम् ॥
वापनंविक्रयश्चैव नीलवस्त्रादिधारणम्। तपनीयं हि विप्रस्य त्रिभिः कृच्छ्रैर्विशुद्ध्यति
अन्त्यजातिस्वपाकेनसंस्पृष्टा स्त्रीरजस्वला। चतुर्थेऽहनि शुद्धा सा त्रिरात्रंतत्रआचरेत्

चाण्डालश्वपचौ स्पृष्ट्वा तथा पूयञ्चसूतिकाम्।
शवं तत्स्पर्शिनं स्पृष्ट्वा सद्यः स्नानेन शुद्ध्यति ॥ ४२ ।

नारंस्पृष्ट्वास्थिसस्नेहं स्नात्वाविप्रोविशुद्ध्यति। रथ्याकर्दमतोयेनअधोनाभेर्मृदोदकैः

वान्तो विरिक्तः स्नात्वा तु घृतं प्राश्य विशुद्ध्यति।
स्नानात् क्षुरकर्मकर्त्ता कृच्छ्रकृद्ग्रहणेऽन्नभुक् ॥ ४४ ॥

अपाङ्क्तेयाशी गव्याशीदष्टस्तथा! शुचिः। कृमिदष्टश्चात्मघातीकृच्छ्राज्जप्याच्चहोमतः

होमाद्यैश्चानुतापेन पूयन्ते पापिनोऽखिलाः ॥ ४५ ॥

इत्यादि महापुराणे आग्नेये प्रायश्चित्तवर्णनं नाम सप्तत्यधिकशततमोऽध्यायः।

---

## एकसप्तत्यधिकशततमोऽध्यायः

### प्रायश्चित्तानि।

पुष्कर उवाच।

प्रायश्चित्तं रहस्यादि वक्ष्ये शुद्धिकरं परम्। पौरुषेण तु सूक्तेन मासं जप्यादिनाघहा ॥
मुच्यते पातकैः सर्वैर्जप्त्वा त्रिरघमर्षणम्। वेदजप्याद्वायुयमाद् गायत्र्याव्रततोऽघहा
मुण्डनं सर्वकृच्छ्रेषु स्नानं होमो हरेर्यजिः। उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि
एतद्वीरासनं प्रोक्तं कृच्छ्रकृत्तेन पापहा। अष्टभिः प्रत्यहं ग्रासैर्यतिचान्द्रायणं स्मृतम् ॥

प्रातश्चतुर्भिः सायञ्च शिशुचान्द्रायणं स्मृतम् ।
यथाकथञ्चित् पिण्डानां चत्वारिंशच्छतद्वयम् ॥ ५ ॥
मासेन भक्षयेदेतत् सुरचान्द्रायणं चरेत् । त्र्यहमुष्णं पिबेदापस्त्यहमुष्णं पयः पिबेत्
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षी भवेत त्र्यहम् ।
तप्तकृच्छ्रमिदं प्रोक्तं शीतैः शीतं प्रकीर्त्तितम् ॥ ७ ॥
कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिम् । गोमूत्रं गोमयं क्षीरं दधि सर्पिःकुशोदकम्
एकरात्रोपवासश्च कृच्छ्रं शान्तपनं स्मृतम् । एतच्च प्रत्यहाभ्यस्तं महाशान्तपनं स्मृतम्
त्र्यहाभ्यस्तमथैकैकमतिशान्तपनं स्मृतम् । कृच्छ्रं पराकसञ्ज्ञं स्याद्द्वादशाहमभोजनम्
एकभक्तं त्र्यहाभ्यस्तं क्रमान्नक्तमयाचितम् ।
प्राजापत्यमुपोष्यान्ते पादः स्यात् कृच्छ्रपादकः ॥ ११ ॥
फलैर्मासं फलं कृच्छ्रं विल्वैः श्रीकृच्छ्र ईरितः ।
पद्माक्षैः स्यादामलकैः पुष्पकृच्छ्रन्तु पुष्पकैः ॥ १२ ॥
पत्रकृच्छ्रन्तथा पत्रैस्तोयकृच्छ्रं जलेन तु । मूलकृच्छ्रन्तथा मूलैर्दध्ना क्षीरेण तक्रतः ॥
मासं वायव्यकृच्छ्रं स्यात्पाणिपूरान्नभोजनात् ।
तिलैर्द्वादशरात्रेण कृच्छ्रमाग्नेयमार्त्तिनुत् ॥ १४ ॥
पाक्षं प्रसृत्या लाजानां ब्रह्मकूर्चं तथा भवेत् । उपोषितश्चतुर्दश्यां पञ्चदश्यामनन्तरम्
पञ्चगव्यं समश्नीयाद्धविष्याशीत्यनन्तरम् ।
मासेन द्विर्न्नरः कृत्वा सर्वपापैः प्रमुच्यते ॥ १६ ॥
श्रीकामः पुष्टिकामश्च स्वर्गकामोऽघनष्टये । देवताराधनपरः कृच्छ्रकारी स सर्वभाक् ॥
इत्यादि महापुराणे आग्नेये प्रायश्चितकथनं नामैकसप्तत्यधिकशततमोऽध्यायः ।

---

# द्विसप्तत्यधिकशततमोऽध्यायः

## सर्वपापप्रायश्चित्तानि ।

पुष्कर उवाच ।

परदारपरद्रव्यजीवहिंसादिके यदा । प्रवर्त्तते नृणां चित्तं प्रायश्चित्तं स्तुतिस्तदा ॥ १ ॥

विष्णवे विष्णवे नित्यं विष्णवे विष्णवे नमः ॥

नमामि विष्णुं चित्तस्थमहङ्कारगतिं हरिम् ॥ २ ॥

चित्तस्थमीशमव्यक्तमनन्तमपराजितम् । विष्णुमीड्यमशेषेण अनादिनिधनं विभुम् ॥३॥

विष्णुश्चित्तगतो यन्मे विष्णुर्बुद्धिगतश्च यत् । यच्चाहङ्कारगो विष्णुर्यद्विष्णुर्मयि संस्थितः

करोति कर्मभूतोऽसौ स्थावरस्य चरस्य च ।

तत् पापन्नाशमायातु तस्मिन्नेव हि चिन्तिते ॥ ५ ॥

ध्यातो हरति यत् पापं स्वप्ने दृष्टस्तु भावनात् । तमुपेन्द्रमहं विष्णुं प्रणतार्त्तिहरं हरिम्

जगत्यस्मिन्निराधारे मज्जमाने तमस्यधः । हस्तावलम्बनं विष्णुं प्रणमामि परात् परम्

सर्वेश्वरेश्वर ! विभो ! परमात्मन्नधोक्षज ! ।

हृषीकेश ! हृषीकेश ! हृषीकेश ! नमोऽस्तु ते ॥ ८ ॥

नृसिंहानन्त ! गोविन्द ! भूतभावन ! केशव ! ।

दुरुक्तं दुष्कृतं ध्यातं शमयाघन्नमोऽस्तु ते ॥ ६ ॥

यन्मया चिन्तितं दुष्टं स्वचित्तवशवर्त्तिना । अकार्य्यमहदत्युग्रन्तच्छमन्नय केशव !

ब्रह्मण्यदेव ! गोविन्द ! परमार्थपरायण ।

जगन्नाथ ! जगद्धातः पापं प्रशमयाच्युत ! ॥ ११ ॥

यथापराह्णे सायाह्ने मध्याह्ने च तथा निशि ।

कायेन मनसा वाचा कृतं पापमजानता ॥ १२ ॥

जानता च हृषीकेश ! पुण्डरीकाक्ष ! माधव ! ।

नामत्रयोच्चारणतः स्वप्ने यातु मम क्षयम् ॥ १३॥

शरीरं मे हृषीकेश ! पुण्डरीकाक्ष ! माधव ! । पापं प्रशमयाद्यत्वं बाक्कृतं मम माधव

यद्भुञ्जन्यत्स्वपंस्तिष्ठन् गच्छन् जाग्रद् यदास्थितः ।

कृतवान् पापमद्याहं कायेन मनसागिरा ॥ १५ ॥

यत् स्वल्पमपि यत् स्थूलं कुयोनिनरकावहम् । तद्यातु प्रशमंसवं वासुदेवानुकीर्त्तनात्

परं ब्रह्म परं धाम पवित्रं परमञ्च यत् ।

तस्मिन् प्रकीर्त्तिते विष्णौ यत् पापं तत् प्रणश्यतु ॥ १७ ॥

यत् प्राप्य न निवर्त्तन्ते गन्धस्पर्शादि वर्जितम् ।

सूरयस्तत् पदं विष्णोस्तत् सर्वं शमयत्वघम् ॥ १८ ॥

पापप्रणाशनं स्तोत्रं यःपठेच्छ्रृणुयादपि । शारीरैर्म्मानसैर्वाग्जैः कृतैः पापैःप्रमुच्यते ॥

सर्वपापग्रहादिभ्यो यातिविष्णोः परं पदम् । तस्मात्पापे कृते जप्यंस्तोत्रंसर्वाघमर्द्दनम्

प्रायश्चित्तमघौघानां स्तोत्रं व्रतकृते वरम् । प्रायश्चित्तैःस्तोत्रजपैर्व्रतैर्नश्यतिपातकम् ॥

ततः कार्य्याणि संसिद्ध्यै तानि वै भक्तिमुक्तये ॥ २१ ॥

इत्यादि महापुराणे आग्नेये सर्वपापप्रायश्चित वर्णनं नाम

द्विसप्तत्यधिकशततमोऽध्यायः ।

---

## त्रिसप्तत्यधिकशततमोऽध्यायः

### प्रायश्चित्तम् ।

अग्निरुवाच ।

प्रायश्चितंब्रह्मणोक्तंवक्ष्येपापोपशान्तिदम् । स्यात्प्राणवियोगफलोव्यापारोहननंस्मृतम्

रागाद् द्वेषात् प्रमादाच्च स्वतः परत एव वा ।

ब्राह्मणं घातयेद्यस्तु स भवेद् ब्रह्मघातकः ॥ २ ॥

बहूनामेककार्य्याणां सर्वेषां शस्त्रधारिणाम् । यद्येको घातकस्तत्रसर्वेतेघातकाःस्मृताः
अक्रोशितस्ताड़ितो वा धनैर्व्वा परिपीडितः
यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्व्रह्मघातकम् ॥ ४ ॥
औषधाद्युपकारे तु न पापंस्यात्कृते मृते । पुत्रं शिष्यं तथाभार्य्यां शासते न मृतेह्यघम्
देशं कालञ्चयः शक्तिपापञ्चावेक्ष्ययत्नतः । प्रायश्चित्तं प्रकल्प्यंस्याद्यत्रचोक्ता न निष्कृतिः
गवार्थे ब्राह्मणार्थे वा सद्यः प्राणान् परित्यजेत् ।
प्रास्येदात्मानमग्नौ वा मुच्यते ब्रह्महत्यया ॥ ७ ॥
शिरःकपालीध्वजवान्भैक्षाशीकर्म्मवेदयन् । ब्रह्महाद्वादशाब्दानिमितभुक्शुद्धिमाप्नुयात्
षड्भिर्वर्षैः शुद्धचारी ब्रह्महा पूयते नरः । विहितं यदकामानां कामात्तु द्विगुणं स्मृतम्
प्रायश्चितं प्रवृत्तस्य वधे स्यात्तु त्रिवार्षिकम् ।
ब्रह्मघ्नि क्षत्रे द्विगुणं विट्च्छूद्रे द्विगुणं त्रिधा ॥ १० ॥
अन्यत्र विप्रे सकलं पादोनं क्षत्रिये मतम् । वैश्येऽर्द्धंपादं क्षत्रे स्याद्वृद्धस्त्रीवालरोगिषु
तुरीयो ब्रह्महत्यायाः क्षत्रियस्यवधेस्मृतम् । वैश्यऽष्टमांशोवृत्तस्थे शूद्रे ज्ञेयस्तुषोड़शः
अप्रदुष्टां स्त्रियं हत्वाशूद्रहत्याव्रतंचरेत् । पञ्चगव्वं पिवेद्गोघ्नोमासमासीत संयतः ॥
गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुद्ध्यति ।
कृच्छ्रञ्चैवातिकृच्छ्रं वा पादह्रासो नृपादिषु ॥ १४ ॥
अतिवृद्धामतिकृशामतिबालाञ्च रोगिणीम् । हत्वा पूर्वविधानेन चरेदर्द्धव्रतं द्विजः॥१५॥
ब्राह्मणान्भोजयेच्छक्त्या दद्याद्धेमतिलादिकम् ।
मुष्टिचपेटकीलेन तथा श्रृङ्गादिमोटने ॥ १६ ॥
लगुड़ादिप्रहारेण गोवधं तत्र निर्दिशेत । दमने दामनेचैव शकटादौ च योजने ॥ १७ ॥
स्तम्भश्रृङ्खलपाशैर्वा मृते पादोनमाचरेत् । काष्ठे शान्तपनं कुर्य्यात् प्राजापत्यन्तु लोष्ठके
तप्तकृच्छ्रन्तु पाषाणे शस्त्रे चाप्यतिकृच्छ्रकम् ।
मार्ज्जारगोधानकुलमण्डूकश्वपतत्रिणः ॥ १९ ॥
हत्वा त्र्यहं पिवेत् क्षीरं कृच्छ्रं चान्द्रायणं चरेत् ।

व्रतं रहस्ये रहसि प्रकाशेऽपि प्रकाशकम् ॥ २० ॥
प्राणायामशतं कार्य्यं सर्वपापापनुत्तये । पानकं द्राक्षमधुकं खार्ज्जुरन्तालमैक्षवम्॥२१॥
माध्वीकं टङ्कमाध्वीकं मैरेयं नारिकेलजम् । न मद्यान्यपिमद्यानि पैष्टीमुख्यासुरास्मृता
त्रैवर्णस्य निषिद्धानि पीत्वा तप्त्वाप्यपःशुचिः ।
कणान् वा भक्षयेदब्दं पिण्याकं वा सक्तून्निशि ॥ २३ ॥
सुरापानापनुत्यर्थं बालवासा जटी ध्वजी । अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः । मद्यभाण्डस्थिता आपःपीत्वासप्तदिनंव्रती
चाण्डालस्य तु पानीय पीत्वा स्यात् षड्दिनं व्रती ।
चण्डालकूपभाण्डेषु पीत्वा शान्तपनं चरेत् ॥ २६ ॥
पञ्चगव्यं त्रिरात्र्यन्तेपीत्वाचान्त्यजलंद्विजः । मत्स्यकण्टकशम्बूकशङ्खशुक्तिकपर्दकान्
पीत्वा नवोदकं चैव पञ्चगव्येन शुद्ध्यति ।
शवकूपोदकं पीत्वा त्रिरात्रेण विशुद्ध्यति ॥ २८ ॥
अन्त्यावसायिनामन्नं भुक्त्वाचान्द्रायणं चरेत् । आपत्काले शूद्रगृहेमनस्त्रापेनशुद्ध्यति
शूद्रभाजनभुक् विप्रः पञ्चगव्यादुपोषितः । कन्दुपक्वं स्नेहपक्वं स्नेहं च दधिशक्तवः॥३०
शूद्रादनिन्द्यान्येतानि गुड़क्षीररसादिकम् ॥
अस्नातभुक् चोपवासी दिनान्ते तु जपाच्छुचिः ॥ ३१ ॥
मूत्रोच्चार्य्यशुचिर्भुक्त्वा त्रिरात्रेण विशुद्ध्यति । केशकीटावपन्नंच पादस्पृष्टञ्चकामतः
भ्रूणघ्नावेक्षितं चैव सस्पृष्टं वाप्युदक्यया । काकाद्यैरवलीढं च शुनासंस्पृष्टमेव च ॥
गवाद्यैरन्नमाघ्रातं भुक्त्वा त्र्यहमुपावसेत् ।
रेतोविण्मूत्रभक्षी तु प्राजापत्यं समाचरेत् ॥ ३४ ॥
चान्द्रायणंनवश्राद्धेपराको मासिके मतः । पक्षत्रयेऽतिकृच्छ्रं स्यात् षण्मासेकृच्छ्रमेवच
आब्दिके पादकृच्छ्रं स्यादेकाहः पुनराब्दिके ।
पूर्वेद्युर्वार्षिकं श्राद्धं परेद्युः पुनराब्दिकम् ॥ ३६ ॥
निषिद्धभक्षणे भुक्ते प्रायश्चित्तमुपोषणम् । भूस्तृणं लशुनं भुक्त्वा शिशुकंकृच्छ्रमाचरेत्

अभोज्यानान्तु भुक्त्वान्नं स्त्रीशूद्रोच्छिष्टमेव च ।
जग्ध्वा मांसमभक्ष्यञ्च सप्तरात्रं पयः पिबेत् ॥ ३८ ॥

मधुमांसञ्चयोऽश्नीयाच्छावं सूतकमेव वा । प्राजापत्यं चरेत् कृच्छ्रं ब्रह्मचारी यतिर्व्रती
अन्यायेन परस्वापहरणं स्तेयमुच्यते । मुसलेन हतो राजा स्वर्णस्तेयी विशुद्ध्यति ॥
अधःशायी जटाधारी पर्णमूलफलाशनः । एककालं समश्नानो द्वादशाब्देविशुद्ध्यति
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः । स्तेयं कृत्वा सुरां पीत्वा कृच्छ्राब्दं चरेन्नरः
मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च । अयस्कांस्योपलानाञ्चद्वादशाहंकणान्नभुक्
मनुष्याणान्तु हरणे स्त्रीणां क्षेत्रगृहस्यच । वापीकूपतड़ागानांशुद्धिश्चान्द्रायणंस्मृतम्
भक्ष्यभोज्यापहरणे यानशय्यासनस्य च । पुष्पमूलफलानाञ्च पञ्चगव्यं विशोधनम् ॥
तृणकाष्ठद्रुमाणाञ्चशुष्कान्नस्य गुड़स्य च । चेलचर्मामिषाणाञ्चत्रिरात्रं स्यादभोजनम्
पितुः पत्नीञ्चभगिनीमाचार्य्यतनयान्तथा । आचार्य्याणींसुतांस्वाञ्चगच्छंश्चगुरुतल्पगः

गुरुतल्पेऽभिभाष्यैनस्तप्ते प्रच्याद्योमये ।
शूर्मीं ज्वलन्तीञ्चाश्लिष्य मृत्युना स विशुद्ध्यति ॥ ४८ ॥
चान्द्रायणान् वा त्रीन्मासानभ्यस्य गुरुतल्पगः ।
एवमेव विधिं कुर्य्याद्‌ योषित्सु पतितास्वपि ॥ ४६ ॥

यत् पुंसःपरदारेषुतच्चैनांकारयेद्व्रतम् । रेतः सिक्त्वा कुमारीषु चाण्डालीषुसुतासु च
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते । यत् करोत्येकरात्रेण वृषलीसेवनं द्विजः
तद्भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति । पितृव्यदारगमने भ्रातृभार्य्यागमे तथा ॥

चाण्डलीं पुक्कसीं वापि स्नुषाञ्च भगिनीं सखीम् ।
मातुः पितुः स्वसारञ्च निक्षिप्तां शरणागताम् ॥ ५३ ॥
मातुलानीं स्वसारञ्च सगोत्रामन्यमिच्छतीम् ।
शिष्यभार्य्यां गुरोर्भार्यां गत्वा चान्द्रायणञ्चरेत् ॥ ५४ ॥

इत्यादि महापुराणे आग्नेये प्रायश्चित्तवर्णनं नाम त्रिसप्तत्यधिकशततमोऽध्यायः ।

---

# चतुःसप्तत्यधिकशततमोऽध्यायः

## प्रायश्चित्तानि ।

अग्निरुवाच ।

देवाश्रमार्च्चनादीनां प्रायश्चित्तन्तु लोपतः । पूजालोपे चाष्टशतं जपेद् द्विगुणपूजनम् ॥
पञ्चोपनिषदैर्म्मन्त्रैर्हुत्वा ब्राह्मणभोजनम् । सूतिकान्त्यजकोदक्यास्पृष्टेदेवेशतं जपेत्
पञ्चोपनिषदैः पूजां द्विगुणं स्नानमेव च । विप्रभोज्यं होमलोपे होमस्नानं तथार्च्चनम्
होमद्रव्ये मूषिकाद्यैर्भक्षिते कीटसंयुते ।
तावन्मात्रं परित्यज्य प्रोक्ष्य देवादि पूजयेत् ॥ ४ ॥
अङ्कुरार्पणमात्रन्तु छिन्नं भिन्नं परित्यजेत् । अस्पृश्यैश्चैव संस्पृष्टे अन्यपात्रे तदर्पणम्
देवमानुषविघ्नघ्नं पूजाकाले तथैव च । मन्त्रद्रव्यादिव्यत्यासे मूलंजप्त्वा पुनर्जपेत् ॥
कुम्भेनाष्टशतजपो देवे तु पतिते करात् ।
भिन्ने नष्टे चोपवासः शतहोमाच्छुभं भवेत् ॥ ७
कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते । प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परम् ॥
चान्द्रायणं पराको वा प्राजापत्यमघौघनुत् । । सूर्येशशक्तिश्रीशादिमन्त्रजप्यमघौघनुत्
गायत्रीप्रणवस्तोत्र मन्त्रजप्यमघान्तकम् । काद्यैरावीजसंयुक्तैराद्यैराद्यैस्तदन्तकैः॥१०॥
सूर्येशशक्ति श्रीशादि मन्त्राः कट्यधिकाः पृथक् ।
ओं ह्रीमाद्याश्चतुर्थ्यन्ता नमोऽन्ताः सर्वकामदाः ॥ ११ ॥
नृसिंहद्वादशाष्टार्णमालामन्त्राद्यघौघनुत् । आग्नेयस्य पुराणस्य पठनं श्रवणादिकम् ॥
द्विविद्यारूपको विष्णुरग्निरूपस्तु गीयते । परमात्मा देवमुखं सर्ववेदेषु गीयते ॥१३॥
प्रवृत्तौ तु निवृत्तौ तु इज्यते भुक्तिमुक्तिदः ।
अग्निरूपस्य विष्णोर्हि हवनं ध्यानमर्च्चनम् ॥ १४ ॥
जप्यं स्तुतिश्च प्रणतिः शारीराशेषाघौघनुत् । दशस्वर्णानि दानानि धान्यद्वादशमेवच

तुलापुरुषमुख्यानि महादानानि षोड़श। अन्नदानानि मुख्यानि सर्वाण्यघहराणि हि
तिथिवारर्क्षसङ्क्रान्तियोगमन्वादिकालके। व्रतादि सूर्य्येशशक्तिश्रीशादेरघघातनम्॥
गङ्गा गया प्रयागश्च काश्ययोध्या ह्यवन्तिका।
कुरुक्षेत्रं पुष्करश्च नैमिषं पुरुषोत्तमः॥ १८॥
शालग्रामप्रभासाद्यं तीर्थश्चाघौघघातकम्। अहं ब्रह्म परं ज्योतिरितिध्यानमघौघनुत्॥
पुराणं ब्रह्म चाग्नेयं ब्रह्मा विष्णुर्म्महेश्वरः।
अवताराः सर्वपूजाः प्रतिष्ठाप्रतिमादिकम्॥ २०॥
ज्योतिःशास्त्रपुराणानिस्मृतयस्तुतपोव्रतम्। अर्थशास्त्रञ्चसर्गाद्या आयुर्वेदोधनुर्म्मतिः
शिक्षा छन्दो व्याकरणो निरुक्तञ्चाभिधानकम्।
कल्पो न्यायश्च मीमांसा ह्यन्यत् सर्वं हरिः प्रभुः॥ २२॥
एके द्वयोर्यतो यस्मिन् यः सर्वमितिवेदयः। तंदृष्ट्वान्यस्यपापानिविनश्यन्तिहरिश्चसः
विद्याष्टादशरूपश्च सूक्ष्मः स्थूलोऽपरो हरिः।
ज्योतिः सदक्षरं ब्रह्म परं विष्णुश्च निर्म्मलः॥ २४॥
इत्यादिमहापुराणे आग्नेयेप्रायश्चित्तवर्णनंनाम चतुःसप्तत्यधिकशततमोऽध्ययः।

---

## पञ्चसप्तत्यधिकशततमोऽध्यायः

### व्रतपरिभाषा।

अग्निरुवाच।

तिथिवारर्क्षदिवस मासर्त्त्वब्दार्क्कसङ्क्रमे।
नृ स्त्रीव्रतादि वक्ष्यामि वसिष्ठ! शृणु तत् क्रमात्॥ १
शास्त्रोदितो हि नियमो व्रतं तच्च तपो मतम्।
नियमास्तु विशेषास्तु व्रतस्यैव दमादयः॥ २॥

व्रतं हि कर्तृसन्तापात्तप इत्यभिधीयते । इन्द्रियग्रामनियमान्नियमश्चाभिधीयते ॥
अनग्न्यस्तु ये विप्रास्तेषां श्रेयोऽभिधीयते । व्रतोपवासनियमैर्नानादानैस्तथा द्विजः ॥
ते स्युर्देवादयः प्रीता भुक्तिमुक्तिप्रदायकाः ।
उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह ॥ ५ ॥
उपवासः स विज्ञेयः सर्वभोगविवर्जितः । कांस्यं मांसं मसूरञ्च चणकंकोरदूषकम् ॥
शाकं मधुपरान्नञ्चत्यजेदुपवसन् स्त्रियम् । पुष्पालङ्कारवस्त्राणि धूपगन्धानुलेपनम् ॥
उपवासे न शस्यन्ति दन्तधावनमञ्जनम् । दन्तकाष्ठं पञ्चगव्यं कृत्वाप्रातर्व्रतञ्चरेत् ॥
असकृज्जलपानाच्च ताम्बूलस्य च भक्षणात् ।
उपवासः प्रदुष्येत दिवास्वप्नाच्च मैथुनात् ॥ ६ ॥
क्षमा सत्यन्दया दानं शौचमिन्द्रियनिग्रहः । देवपूजाग्निहरणं सन्तोषोऽस्तेयमेव च ॥
सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्मृतः । पवित्राणि जपेच्चैव जुहुयाच्चैवशक्तितः
नित्यस्नायी मिताहारी गुरुदेव द्विजार्च्चकः ।
क्षारं क्षौद्रञ्च लवणं मधु मांसानि वर्जयेत् ॥ १२ ॥
तिलमुद्गादृते शस्यं शस्ये गोधूमकोद्रवौ । चीनकं देवधान्यञ्च शमीधान्यं तथैक्षवम् ॥
शितधान्यं तथा पण्यं मूलं क्षारगणः स्मृतः ।
व्रीहिषष्टिकमुद्गाश्च कलायाः सतिला यवाः ॥ १४ ॥
श्यामाकाश्चैव नीवारा गोधूमाद्या व्रते हिताः ।
कुष्माण्डालाबुवार्त्ताकून् पालङ्कीम्पूतिकान्त्यजेत् ॥ १५ ॥
चरुभैक्ष्यं शक्तुकणाः शाकन्दधि घृतं पयः । श्यामाकशालिनीवारा यवकंमूलतण्डुलम्
हविष्यं व्रतनक्तादावग्निकार्य्यादिके हितम् । मधुमांसंविहायान्यद् व्रतेवाहितमीरितम्
त्र्यहं प्रातस्त्र्यहम् सायं त्र्यहमद्यादयाचितम् ।
त्र्यहन्परञ्च नाश्नीयात् प्राजापत्यञ्चरन् द्विजः ॥ १८ ॥
एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणिपूर्ववत् । त्र्यहञ्चोपवसेदन्त्यमतिकृच्छ्रंचरन्द्विजः
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।

एकरात्रोपवासश्च कृच्छ्रं शान्तपनं स्मृतम् ॥ २० ॥
पृथक् शान्तपनद्रव्यैः षडहः सोपवासकः । सप्ताहेन तु कृच्छ्रोऽयं महाशान्तपनोऽघहा
द्वादशाहोपवासेन पराकः सर्वपापहा । महापराकस्त्रिगुणस्त्वयमेव प्रकीर्त्तितः ॥२३॥
पौर्णमास्यां पञ्चदशग्रास्यमावास्यभोजनः । एकापाये ततो वृद्धौ चान्द्रायणमतोऽन्यथा
कपिलागोः पलं मूत्रमर्द्धाङ्गुष्ठश्च गोमयम् । क्षीरं सप्तपलं दद्याद् दध्नश्चैव पलद्वयम् ॥
घृतमेकपलं दद्यात् पलमेकं कुशोदकम् ।
गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम् ॥ २५ ॥
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।
तेजोऽसीति तथा चाज्यं देवस्येति कुशोदकम् ॥ २६ ॥
ब्रह्मकूर्चो भवत्येवम् आपोहिष्ठेत्यृचं जपेत् । अघमर्षणसूक्तेन संयोज्य प्रणवेन वा ॥
पीत्वा सर्वाघनिर्मुक्तो विष्णुलोकी ह्युपोषितः ।
उपवासी सायम्भोजी यतिः षष्ठात्मकालवान् ॥ २८ ॥
मांसवर्जी चाश्वमेधी सत्यवादी दिवं व्रजेत् । अग्न्याधेयं प्रतिष्ठाञ्च यज्ञदानव्रतानि च॥
देवव्रतवृषोत्सर्गचूड़ाकरणमेखलाः । माङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत् ॥ ३०॥
दर्शाद्दर्शस्तु चान्द्रः स्यात् त्रिंशाहश्चैव सावनः ।
मासः सौरस्तु सङ्क्रान्तेर्नाक्षत्रो भविवर्त्तनात् ॥ ३१ ॥
सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥ ३२ ॥
आषाढ़ीमवधिं कृत्वा यः स्यात् पक्षस्तु पञ्चमः ।
कुर्य्याच्छ्राद्धन्तत्र रविः कन्यां गच्छतु वा न वा ॥ ३३ ॥
मासि संवत्सरे चैव तिथिद्वैधं यदा भवेत् ।
तत्रोत्तरोत्तमा ज्ञेया पूर्वा तु स्यान् मलिम्लुचा ॥ ३४ ॥
उपोषितव्यं नक्षत्रं येनास्तं यातिभास्करः । दिवापुण्यास्तु तिथयो रात्रौ नक्तव्रतेशुभा
युग्माग्निकृतभूताति षण्मुन्योर्वसुरन्ध्रयोः । रुद्रेण द्वादशीयुक्ता चतुर्दश्याथ पूर्णिमा

प्रतिपद्दा त्वमावास्या तिथ्यार्युग्मं महाफलम् ।
एतद् व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम् ॥ ३७ ॥

नरेन्द्रमन्त्रिव्रतिनां विवाहोपद्रवादिषु । सद्यः शौचं समाख्यातं कान्तारापदि संसदि
आरब्धदीर्घतपसां न राजा व्रतहास्त्रियाः । गर्भिणीसूतिका नक्तं कुमारी च रजस्वला
यदाऽशुद्धातदान्येनकारयेत् क्रियाःसदा । क्रोधात्प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद्युदि

दिनत्रयं न भुञ्जीत मुण्डनं शिरसोऽथवा ।
असामर्थ्ये व्रतकृतौ पत्नीं वा कारयेत् सुतम् ॥ ४१ ॥

सूतके मृतके कार्य्यं प्रारब्धं पूजनोज्झितम् । व्रतस्थं मूर्च्छितं दुग्धपानाद्यैरुद्धरेद् गुरुः
अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्
कीर्त्तिसन्ततिविद्यादिसौभाग्यारोग्यवृद्धये । नैर्मल्यमुक्तिमुक्त्यर्थं कुर्वे व्रतपते ! व्रतम्
इदं व्रतं मया श्रेष्ठं गृहीतं पुरतस्तव । निर्विघ्ना सिद्धिमायातु त्वत्प्रसादात् जगत्पते ॥
गृहीतेऽस्मिन् व्रतवरे यद्यपूर्णे म्रिये ह्यहम् । तत्सर्वं पूर्णमेवास्तु प्रसन्ने त्वयि सत्पतौ
व्रतमूर्त्ति जगद्भूतिं मण्डले सर्वसिद्धये । आवाहये नमस्तुभ्यं सन्निधीभव केशव ! ॥

मनसा कल्पितैर्भक्त्या पञ्चगव्यैर्जलै शुभैः ।
पञ्चामृतैः स्नापयामि त्वं मे च भव पापहा ॥ ४८ ॥

गन्धपुष्पोदकैर्युक्तमर्घ्यमर्घ्यपते ! शुभम् । गृहाण पाद्यमाचाममर्घ्यार्हङ्कुरु मां सदा ॥
वस्त्रं वस्त्रपते ! पुण्यं गृहाण कुरु मां सदा । भूषणाद्यैः सुवस्त्राद्यैश्छादितं व्रतसत्पते

सुगन्धिगन्धं विमलं गन्धमूर्त्ते ! गृहाण वै ।
पापगन्धविहीनं मां कुरु त्वं हि सुगन्धिकम् ॥ ५१ ॥

पुष्पं गृहाण पुष्पादिपूर्णं मां कुरु सर्वदा । पुष्पगन्धं सुविमलं आयुरारोग्यवृद्धये ॥
दशाङ्गं गुग्गुलुघृतयुक्तं धूपं गृहाण वै । सधूप धूपितं मां त्वं कुरु धूपितसत्पते ! ॥

दीपमूर्ध्वशिखं दीप्तं गृहाणाखिलभासकम् ।
दीपमूर्त्ते ! प्रकाशाढ्यं सर्वदोदूर्ध्वगतिं कुरु ॥ ५४ ॥

अन्नादिकञ्च नैवेद्यं गृहाणान्नादि सत्पते ! । अन्नादिपूर्णं कुरु मामन्नदं सर्वदायकम्

मन्त्रहीनं क्रियाहीनं भक्तिहीनं मया प्रभो ! । यत् पूजितं व्रतपते ! परिपूर्णन्तदस्तु मे
धर्मंदेहि धनं देहि सौभाग्यं गुणसन्ततिम् । कीर्त्तिविद्यां देहि चायुःस्वर्गं मोक्षञ्चदेहिमे
इमां पूजां व्रतपते ! गृहीत्वा व्रज साम्प्रतम् । पुनरागमनायैव वरदानाय वै प्रभो ! ॥
स्नात्वा व्रतवता सर्वव्रतेषुव्रतमूर्त्तयः । पूज्याःसुवर्णजास्ता वै शक्त्या वै भूमिशायिना
जपो होमश्च सामान्यव्रतान्ते दानमेव च । चतुर्विंशा द्वादश वा पञ्च वा त्रय एककः ॥

विप्राः प्रपूज्याः गुरवो भोज्याः शक्त्या तु दक्षिणा ।
देया गावः सुवर्णाद्याः पादुकोपानहौ पृथक् ॥ ६१ ॥

जलपात्रञ्चान्नपात्रमृत्तिकाच्छत्रमासनम् । शय्या वस्त्रयुगं कुम्भाः परिभाषेयमीरिता
इत्यादिमहापुराणे आग्नेये व्रतपरिभाषावर्णनंनाम पञ्चसप्तत्यधिकशततमोऽध्यायः ।

————

# षट्सप्तत्यधिकशततमोऽध्यायः

## प्रतिपद्व्रतानि ।

### अग्निरुवाच ।

वक्ष्येप्रतिपदादीनि व्रतान्यखिलदानि ते । कार्त्तिकाश्वयुजे चैत्रे प्रतिपद् ब्रह्मणस्तिथिः
पञ्चदश्यान्निराहारः प्रतिपद्यर्च्चयेदजम् । ओं तत्सद्ब्रह्मणेनमो गायत्र्यावाब्दमेककम्
अक्षमालाश्रुवं दक्षे वामे शुचकमण्डलु । लम्बकूर्चञ्च जटिलं हैमं ब्रह्माणमर्च्चयेत् ॥
शक्त्याक्षीरंप्रदद्यात्तुब्रह्मा मे प्रीयतामिति । निर्मलोभोगभुक् स्वर्गेभूमौ विप्रोधनीभवेत्
धन्यं व्रतं प्रवक्ष्यामि अधन्यो धन्यतांव्रजेत् । मार्गशीर्षेप्रतिपदि नक्तं हुत्वाप्युपोषितः
अग्नये नम इत्यग्निं प्राच्यार्ब्दंसर्वभाग् भवेत् । प्रतिपद्येकभक्ताशी समाप्तेकपिलाप्रदः

वैश्वानरपदं याति शिखिव्रतमिदं स्मृतम् ।

इत्यादिमहापुराणेआग्नेये प्रतिपद्व्रतकथनंनाम षट्सप्तत्यधिकशततमोऽध्यायः ।

————

# सप्तसप्तत्यधिकशततमोऽध्यायः

## द्वितीयाव्रतानि ।

अग्निरुवाच ।

द्वितीया व्रतकं वक्ष्ये भुक्तिमुक्त्यादिदायकम् ।
पुष्पाहारी द्वितीयायामश्विनौ पूजयेत् सुरौ ॥ १ ॥
अब्दं स्वरूपसौभाग्यं स्वर्गभाग् जायते व्रती ।
कार्त्तिके शुक्लपक्षस्य द्वितीयायां यमं यजेत् ॥ २ ॥
अब्दमुपोषितः स्वर्गं गच्छेन्न नरकं व्रती । अशून्यशयनं वक्ष्ये अवैधव्यादिदायकम् ॥
कृष्णपक्षे द्वितीयायां श्रावणस्य चरेदिदम् ।
श्रीवत्सधारिन् ! श्रीकान्त ! श्रीधामन् ! श्रीपतेऽव्यय ! ॥ ४ ॥
गार्हस्थ्यं मा प्रणाशं मे यातुधर्म्मार्थकामदम् ।
अग्नयो मा प्रणश्यन्तु मा प्रणश्यन्तु देवताः ॥ ५ ॥
पितरो मा प्रणश्यन्तु मत्तो दाम्पत्यभेदतः ।
लक्ष्म्या वियुज्यते देवो न कदाचिद् यथा भवान् ॥ ६ ॥
तथा कलत्रसम्बन्धो देव ! मा मे विभिद्यताम् ।
लक्ष्म्या न शून्यं वरद ! यथा ते शयनं विभो ! ॥ ७ ॥
शय्या ममाप्यशून्यास्तु तथैवमधुसूदन ! । लक्ष्मीं विष्णुं यजेदब्दंदद्याच्छय्यांफलानिच
प्रतिमासं च सोमाय दद्यादर्घ्यं समन्त्रकम् । गगनाङ्गणसन्दीप ! दुग्धाब्धिमथनोद्भव
भाभासितादिगाभोग ! रामानुज ! नमोऽस्तु ते ।
ओं श्रीं श्रीधराय नमः सोमात्मानं हरिं यजेत् ॥ १० ॥
घं ढं भं हं श्रियै नमो दशरूपमहात्मने । घृतेन होमो नक्तञ्च शय्यां दद्याद् द्विजातये ॥
दीपान्नभाजनैर्युक्तं छत्रोपानहमासनम् । सोदकुम्भञ्च प्रतिमां विप्रायाथ च पात्रकम् ॥

पत्न्या य एवं कुरुते भुक्तिमुक्तिमवाप्नुयात् ।
कान्तिव्रतं प्रवक्ष्यामि कार्त्तिकस्य सिते चरेत् ॥ १३ ॥
नक्तभोजी द्वितीयायां पूजयेद्बलकेशवौ । वर्षं प्राप्नोति वै कान्तिमायुरारोग्यकादिकम्
अथ विष्णु व्रतं वक्ष्ये मनोवाञ्छितदायकम् । पौषशुक्लद्वितीयादि कृत्वा दिनचतुष्टयम्
पूर्वं सिद्धार्थकैःस्नानं ततःकृष्णतिलैःस्मृतम् । वचया च तृतीयेऽन्हिसर्वौषध्याचतुर्थके
मुरामांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।
सटी सम्पकमुस्तञ्च सर्वौषधिगणः स्मृतः ॥ १७ ॥
नाम्ना कृष्णाच्युतानन्त ! हृषीकेशेति पूजयेत् ।
पादे नाभ्यां चक्षुषि च क्रमाच्छिरसि पुष्पकैः ॥ १८ ॥
शशिचन्द्रशशाङ्केन्दु सञ्ज्ञाभिश्चार्घ्यं इन्दवे । नक्तं भुञ्जीत च नरो यावत्तिष्ठति चन्द्रमाः
षण्मासं पावनं चाब्दं प्राप्नुयात्सकलंव्रती । एतद्व्रतंनृपैः स्त्रीभिःकृतं पूर्वंसुरादिभिः
इत्यादि महापुराणे आग्नेये द्वितीयाव्रतकथनंनाम सप्तसप्तत्यधिकशततमोऽध्यायः ।

---

## अष्टसप्तत्यधिकशततमोऽध्यायः ।

### तृतीयाव्रतानि ।

अग्निरुवाच ।

तृतीयाव्रतान्याख्यास्ये भुक्तिमुक्तिप्रदानि ते । ललितायां तृतीयायां मूलगौरीव्रतं शृणु
तृतीयायां चैत्रशुक्ले ऊढ़ा गौरी हरेण हि ।
तिलस्नातोऽर्च्चयेच्छम्भुं गौर्य्या हैमफलादिभिः ॥ २ ॥
नमोऽस्तु पाटलायैवपादौदेव्याःशिवस्य च । शिवायेति चसङ्कीर्त्यजयायैगुल्फयोर्यजेत्
त्रिपुरघ्नाय रुद्राय भवान्यै जङ्घयोर्द्वयोः । शिवं रुद्रायेश्वराय विजयायैव जानुनी॥
ईशायेति कटिं देव्याः शङ्करायेति शङ्करम् । कुक्षिद्वयञ्च कोटव्यै शूलिनं शूलपाणये ॥

मङ्गलायै नमस्तुभ्यमुदरञ्चाभिपूजयेत्। सर्व्वात्मने नमो रुद्रमैशान्यै च कुचद्वयम्॥
शिवं देवात्मने तद्वत् ह्लादिन्यै कण्ठमर्च्चयेत्।
महादेवाय च शिवमनन्तायै करद्वयम्॥ ७॥
त्रिलोचनायेति हरं बाहुं कालानलप्रिये। सौभाग्यायै महेशाय भूषणानि प्रपूजयेत्॥
अशोकमधुवासिन्यै ईश्वरायेति चौष्ठकौ। चतुर्मुखप्रिया चास्यं हराय स्थाणवे नमः॥
नमोऽर्द्धनारीशहरममिताङ्ग्यै च नासिकाम्। नम उग्राय लोकेशं ललितेति पुनर्भ्रुवौ
सर्वाय पुरहन्तारं वासन्त्यै चैव तालुकम्।
नमः श्रीकण्ठनाथायै शितिकण्ठाय केशकम्॥ ११॥
भीमोग्राय सुरूपिण्यै शिरः सर्व्वात्मने नमः। मल्लिकाशोककमलकुन्दन्तगरमालती॥
कदम्बकरवीरञ्च बाणम्लानकुङ्कुमम्। सिन्धुवारञ्च मासेषु सर्वेषु क्रमशः स्मृतम्॥
उमामहेश्वरौ पूज्य सौभाग्याष्टकमग्रतः। स्थापयेद् घृतनिष्पावकुसुम्भक्षीरजीवकम्॥
तरुराजेक्षुलवणं कुस्तुम्बुरुमथाष्टमम्।
चैत्रे शृङ्गोदकं प्राश्य देवदेव्यग्रतः स्वपेत्॥ १५॥
प्रातः स्नात्वा समभ्यर्च्य विप्रदाम्पत्यमर्च्चयेत्। तदष्टकं द्विजे दद्याल्ललिता प्रीयतांमम
शृङ्गोदकं गोमयं च मन्दारं विल्वपत्रकम्। कुशोदकं दधि क्षीरं कार्त्तिके पृषदाज्यकम्
गोमूत्राज्यं कृष्णतिलं पञ्चगव्यं क्रमाशनम्।
ललिता विजया भद्रा भवानी कुमुदा शिवा॥ १८॥
वासुदेवी तथा गौरी मङ्गला कमला सती।
चैत्रादौ दानकाले च प्रीतयामिति वाचयेत्॥ १९॥
फलमेकं पवित्राज्यं व्रतान्ते शयनं ददेत्। उमामहेश्वरं हैमं वृषभञ्च गवा सह॥
गुरुञ्च मिथुनान्यर्च्य वस्त्राद्यैर्भुक्तिमुक्तिभाक्।
सौभाग्यारोग्यरूपायुः सौभाग्यशयनव्रतात्॥ २१॥
नभस्ये वाथ वैशाखे कुर्य्यान्मार्गशिरस्यथ। शुक्लपक्षे तृतीयायां ललितायैनमो यजेत्
प्रतिपक्षं ततः प्राचर्य व्रतान्ते मिथुनानि च। चतुर्विंशतिमभ्यर्च्यवस्त्राद्यैर्भुक्तिमुक्तिभाक्

उक्तो मार्गो द्वितीयोऽयं सौभाग्यव्रत मावदे ।
फाल्गुनादि तृतीयायां लवणं यस्तु वर्जयेत् ॥ २४ ॥
समाप्ते शयनं दद्याद् गृहञ्चोपस्करान्वितम् । सम्पूज्य विप्रमिथुनं भवानीप्रीयतामिति
सौभाग्यार्थं तृतीयोक्ता गौरीलोकादिदायिनी ।
माघे भाद्रे च वैशाखे तृतीयाव्रतकृत्तया ॥ २६ ॥
दमनकतृतीयाकृत् चैत्रे दमनकैर्यजेत् । आत्मतृतीया मार्गस्य प्राच्यैच्छाभोजनादिना
गौरी काली उमाभद्रा दुर्गा कान्तिः सरस्वती ।
वैष्णवी लक्ष्मीः प्रकृतिः शिवा नारायणी क्रमात् ।
मार्गतृतीयामारभ्य सौभाग्यं स्वर्णमाप्नुयात् ॥ २८ ॥
इत्यादि महापुराणे आग्नेये तृतीयाव्रतकथनंनामाष्टसप्तत्यधिकशततमोऽध्यायः ।

---

## एकोनाशीत्यधिकशततमोऽध्यायः

### चतुर्थीव्रतानि ।

अग्निरुवाच ।

चतुर्थीव्रतानाख्यास्ये भुक्तिमुक्तिप्रदानि ते । माघे शुक्लचतुर्थ्यान्तु उपवासीयजेद्गणम्
पञ्चम्याञ्च तिलान्नादोवर्षान्निर्विघ्नतः सुखी । गंस्वाहामूलमन्त्रोऽयंगामाद्यंहृदयादिकम्
आगच्छोल्काय चावाह्य गच्छोल्काय विसर्जनम् ।
उल्कान्तैर्गादिगन्धाद्यैः पूजयेन्मोदकादिभिः ॥ ३ ॥
ओं महोल्काय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात् ।
मास भाद्रपदेचापि चतुर्थीकृच्छिः व्रजेत् ।
चतुर्थ्यङ्गारकेऽभ्यर्च्य गणंसर्वमवाप्नुयात् ॥ ४ ॥
चतुर्थ्यां फाल्गुने नक्तमविघ्नाख्या चतुर्थ्यपि ।

चतुर्थ्यां दमनैः पूज्य चैत्रे प्राच्यं गणं सुखी ॥ ५ ॥

इत्यादि महापुराणे आग्नेये चतुर्थीव्रतवर्णनंनामैकोनाशीत्यधिकशततमोऽध्यायः ।

---

# अशीत्यधिकशततमोऽध्यायः

## पञ्चमीव्रतानि ।

अग्निरुवाच ।

पञ्चमीव्रतकं वक्ष्ये आरोग्यस्वर्गमोक्षदम् । नभोनभस्याश्विने च कार्तिके शुक्लपक्षके

वासुकिस्तक्षकः पूज्यः कालीयो मणिभद्रकः । ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ

एते प्रयच्छन्त्यभयमायुर्विद्यायशः श्रियम् ।

इत्यादि महापुराणे आग्नेये पञ्चमीव्रतवर्णनंनामाशीत्यधिकशततमोऽध्यायः ।

---

# एकाशीत्यधिकशततमोऽध्यायः

## षष्ठीव्रतानि ।

अग्निरुवाच ।

षष्ठीव्रतानि वक्ष्यामि कार्तिकादौ समाचरेत् ।

षष्ठ्यां फलाशनोऽर्घ्याद्यैर्भुक्तिमुक्तिमवाप्नुयात् ॥ १ ॥

स्कन्दषष्ठीव्रतं प्रोक्तं भाद्रे षष्ठ्यामथाक्षयम् । कृष्णषष्ठीव्रतं वक्ष्ये मार्गशीर्षे चरेच्चतत्

अनाहारो वर्षमेकं भुक्तिमुक्तिमवाप्नुयात् ॥ २ ॥

इत्यादि महापुराणे आग्नेये षष्ठीव्रतवर्णनंनामैकाशीत्यधिकशततमोऽध्यायः ।

---

## द्व्याशीत्यधिकशततमोऽध्यायः

### सप्तमीव्रतानि ।

अग्निरुवाच ।

सप्तमीव्रतकं वक्ष्येसर्वेषांभुक्तिमुक्तिदम् । माघमासेऽब्जकेशुक्लेसूर्य्यंप्राच्र्यविशोकभाक्

सर्वावाप्तिस्तु सप्तम्यां मासिभाद्रेऽर्कं पूजनात् ।
पौषेमासि सितेऽनश्नन् प्राच्यार्कं पापनाशनम् ॥ २ ॥

कृष्णपक्षे तु माघस्य सर्वावाप्तिस्तु सप्तमी । फाल्गुने तु सितेनन्दासप्तमीचार्कपूजनात्
मार्गशीर्षे सिते प्राच्र्यसप्तमी चापराजिता । मार्गशीर्षे सितेचाब्दं पुत्रीयासप्तमीस्त्रियाः
इत्यादिमहापुराणे आग्नेयेसप्तमीव्रतवर्णनंनामद्व्यशीत्यधिकशततमोऽध्यायः ।

---

## त्र्यशीत्यधिकशततमोऽध्यायः

### अष्टमीव्रतानि ।

अग्निरुवाच ।

वक्ष्येव्रतानिचाष्टम्यां रोहिण्यांप्रथमंव्रतम् । मासि भाद्रप्रदेऽष्टम्यां रोहिण्यामर्द्धरात्रके

कृष्णो जातो यतस्तस्यां जयन्ती स्यात्ततोऽष्टमी ।
सप्तजन्मकृतात् पापात् मुच्यते चोपवासतः ॥ २ ॥

कृष्णपक्षे भाद्रपदे अष्टम्यां रोहिणीयुते । उपोषितोऽर्च्चयेत् कृष्णंभुक्तिमुक्तिप्रदायकम्
आवाहयाम्यहं कृष्णं बलभद्रञ्च देवकीम् । वसुदेवं यशोदाङ्गाः पूजयामि नमोऽस्तुते॥
योगाय योगपतये योगेशाय नमोनमः । योगादिसम्भवायैव गोविन्दाय नमोनमः ॥

स्नानं कृष्णाय दद्यात्तु अर्घ्यं चानेन दापयेत् ।

यज्ञाय यज्ञेश्वराय यज्ञानां पतये नमः ॥ ६ ॥

यज्ञादिसम्भवायैव गोविन्दाय नमोनमः । गृहाण देव ! पुष्पाणि सुगन्धीनिप्रयाणिते
सर्वकामप्रदो देव ! भव मे देववन्दित ! । धूपधूपित! धूप त्वं धूपितैस्त्वंगृहाण मे ॥
सुगन्ध ! धूपगन्धाढ्यं कुरु मां सर्वदा हरे । दीपदीप्त ! महादीपं दीपदीप्तिद ! सर्वदा

मया दत्तं गृहाण त्वं कुरुचोर्ध्वगतिं च माम् ।

विश्वाय विश्वपतये विश्वेशाय नमो नमः ॥ १० ॥

विश्वादिसम्भवायैव गोविन्दाय निवेदितम् । धर्माय धर्मपतये धर्मेशाय नमोनमः ॥
धर्मादिसम्भवायैव गोविन्द ! शयनं कुरु । सर्वाय सर्वपतये सर्वेशाय नमो नमः ॥१२॥
सर्वादिसम्भवायैव गोविन्दाय च पावनम् । क्षीरोदार्णवसम्भूत ! अतिनेत्रसमुद्भव ॥

गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम ।

स्थण्डिले स्थापयेद्देवं सचन्द्रां रोहिणीं यजेत् ॥ १४ ॥

देवकीं वसुदेवञ्च यशोदां नन्दकं बलम् । अर्द्धरात्रे पयोधाराः पातयेद् गुड़सर्पिषा ॥

वस्त्रहेमादिकं दद्याद् ब्राह्मणान् भोजयेद् व्रती ।

जन्माष्टमीव्रतकरः पुत्रवान् विष्णुलोकभाक् ॥ १६ ॥

वर्षेवर्षे तु यः कुर्य्यात् पुत्रार्थीवेत्तिनोभयम् । पुत्रान्देहिधनंदेहि आयुरारोग्यसन्ततिम्

धर्मं कामं च सौभाग्यं स्वर्गं मोक्षं च देहि मे ॥ १७ ॥

इत्यादिमहापुराणे आग्नेये अष्टमीव्रतवर्णनंनाम त्र्यशीत्यधिकशततमोऽध्यायः ।

---

## चतुरशीत्यधिकशततमोऽध्यायः

### अष्टमीव्रतानि ।

अग्निरुवाच ।

ब्रह्मादिमातृयजनाज्जपेन् मातृगणाष्टमीम् ।
कृष्णाष्टम्यां चैत्रमासे पूज्याब्दं कृष्णमर्थभाक् ॥ १ ॥

कृष्णाष्टमीव्रतं वक्ष्ये मासे मार्गशिरेचरेत् । नक्तंकृत्वाशुचिर्भूत्वा गोमूत्रं प्राशयेन्निशि
भूमिशायी निशायाञ्च शङ्करं पूजयेद्व्रती । पौषे शम्भुं घृतं प्राश्य माघे क्षीरंमहेश्वरम्

महादेवं फाल्गुने च तिलाशी समुपोषितः ।
चैत्रे स्थाणुं यवाशी च वैशाखेऽथ शिवं यजेत् ॥ ४ ॥
कुशोदाशी पशुपतिं ज्यैष्ठे श्रृङ्गोदकाशनः ।
आषाढ़े गोमयाश्युग्रं श्रावणे सर्वमर्कभुक् ॥ ५ ॥

त्र्यम्बकं च भाद्रपदे विल्वपत्राशनो निशि । तण्डुलाशी चाश्वयुजे ईशं रुद्रन्तु कार्त्तिके
दध्याशी होमकारी स्याद्वर्षान्ते मण्डले यजेत् । गोवस्त्रहेम गुरवे दद्योद्विप्रेभ्य ईदृशम्

प्रार्थयित्वा द्विजान् भोज्य भुक्तिमुक्तिमवाप्नुयात् ।
नक्ताशी त्वष्टमीषु स्याद् वत्सरान्ते च धेनुदः ॥ ८ ॥

पौरन्दरं पदं याति स्वर्गतिव्रतमुच्यते । अष्टमी बुधवारेण पक्षयोरुभयोर्यदा ॥ ६ ॥

तदा व्रतं प्रकुर्वीत अथवा सगुड़ाशिता ।
तस्यां नियमकर्त्तारो न स्युः खण्डितसम्पदः ॥१०॥

तण्डुलस्याष्टमुष्टीनांवर्जयित्वाङ्गुलीद्वयम् । भक्तंकृत्वाचाम्रपुटेसकुशेसकुलाम्बिकाम्

सात्विकं पूजयित्वाङ्गं भुञ्जीत च कथाश्रवात् ।
शक्तितो दक्षिणान्दद्यात् कर्कटीन्तण्डुलान्विताम् ॥ १२ ॥
धीरो द्विजोऽस्य भार्य्यास्ति रम्भा पुत्रस्तु कौशिकः ।
दुहिता विजया तस्य धीरस्य धनदो वृषः ॥ १३ ॥
कौशिकस्तं गृहीत्वा तु गोपालैश्चारयन् वृषम् ।
गङ्गायां स्नानकृत्येऽथ नीतश्चौरैर्वृषस्तदा ॥ १४ ॥

स्नात्वा वृषमपश्यन् स वृषं मार्गितुमागतः । विजयाभगिनीयुक्तो ददर्श स सरोवरे ॥
दिव्यस्त्रीयोषितां वृन्दमब्रवीद्देहिभोजनम् । स्त्रीवृन्दमूचेव्रतकृद् भुङ्क्ष्वत्वमतिथिर्यतः
व्रतं कृत्वा सबुभुजे प्राप्तवान् वनपालकम् । गतो धीरः सवृषभो विजयासहितस्तदा ॥

धीरेण विजया दत्ता यमायान्तरितः पिता ।

व्रतभावात् कौशिकोऽपि ह्ययोध्यायां नृपोऽभवत् ॥ १८ ॥
पित्रोस्तु नरके दृष्ट्वा विजयार्तिं यमे गता । मृगयामागतं प्रोचे मुच्यते नरकात्कथम्
व्रतद्वयाद्द यमः प्रोचे प्राप्य तत् कौशिकी ददौ ।
बुधाष्टमीद्वयफलं स्वर्गतौ पितरौ ततः ॥ २० ॥
विजया हर्षिता चक्रे व्रतं भुक्त्यादिसिद्धये । अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ
चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः । त्वामशोकहराभीष्ट! मधुमाससमुद्भव
पिबामि शोकसन्तप्तो मामशोकं सदा कुरु । चैत्रादौ मातृपूजाकृदष्टम्यां जयते रिपून्
इत्यादिमहापुराणे आग्नेये अष्टमीव्रतवर्णनं नाम चतुरशीत्यधिकशततमोऽध्यायः ।

---

# पञ्चाशीत्यधिकशततमोऽध्यायः

## नवमीवृतानि ।

अग्निरुवाच ।

नवमीव्रतकंवक्ष्ये भुक्तिमुक्त्यादिसिद्धिदम् । देवीपूज्याश्विनेशुक्लेगौर्य्याख्यानवमीव्रतम्
पिष्टकाख्यातु नवमी पिष्टाशी देविपूजनात् ।
अष्टम्यामाश्विने शुक्ले कन्यार्कमूलभे यदा ।
अघार्दना सर्वदा वै महती नवमी स्मृता । दुर्गा तु नवगेहस्था एकागारस्थिताऽऽथवा
पूजिताष्टादशभुजा शेषाः षोड़शसत्कराः । शेषाः षोड़शहस्ताः स्युरञ्जनं डमरुन्तथा ॥
रुद्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ।
चण्डा चण्डवती पूज्या चण्डरूपातिचण्डिका ॥ ५ ॥
क्रमान्मध्ये चोग्रचण्डा दुर्गा महिषमर्द्दिनी ।
ओं दुर्गे ! दुर्गे ! रक्षणि ! स्वाहा दशाक्षरो मन्त्रः ॥ ६ ॥
दीर्घाकारादिमन्त्रादिर्नवनेत्रो नमोऽन्तक । षड्भिः पदैर्नमःस्वधावषट्कारहृदादिकम् ॥

अङ्गुष्टादिकनिष्ठान्तं न्यस्याङ्गानि जपेच्छिवाम् ।
एवं जपति यो गुह्यं नासौ केनापि बाध्यते ॥ ८ ॥
कपालं खेटकं घण्टां दर्पणन्तर्ज्जनीन्धनुः । ध्वजण्डमरुकं पाशं वामहस्तेषु बिभ्रतीम्
शक्तिमुद्गरशूलानि वज्रं खड्गञ्च कुन्तकम् । शङ्खंचक्रं शलाकांच आयुधानि च पूजयेत्
पशुञ्च काली कालीति जप्त्वा खड्गेन घातयेत् ।
कालि ! कालि ! वज्रेश्वरि ! लौहदण्डायै नमः ॥ ११ ॥
तदुत्थं रुधिरं मांसं पूतनायै च नैर्ऋते । वायव्यां पापराक्षस्यै चरक्यै नम ईश्वरे ॥
विदारिकायै चाग्नेय्यां महाकौशिकमग्नये । तस्याग्रतो नृपः स्नायाच्छत्रुं पिष्टमयंहरेत्
दद्यात् स्कन्दविशाखाभ्यां ब्राह्मयाद्या निशि ता यजेत् ।
जयन्ती मङ्गला काली भद्रकाली कपालिनी ॥ १४ ॥
दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते ।
देवीं पञ्चामृतैः स्नाप्य पूजयेच्चार्हणादिना ।
ध्वजादि रथयात्रादि बलिदानं वरादिकृत् ॥ १५ ॥
इत्यादि महापुराणे आग्नेये नवमीव्रतवर्णनं नाम पञ्चाशीत्यधिकशततमोऽध्यायः ।

---

## षडशीत्यधिकशततमोऽध्यायः

### दशमीव्रतम् ।

अग्निरुवाच ।

दशमीव्रतकं वक्ष्ये धर्म्मकामादिदायकम् । दशम्यामेकभक्ताशी समाप्ते दशधेनुदः ॥
दिशश्च काञ्चनीर्दद्याद् ब्राह्मणाधिपतिर्भवेत् ॥ १ ॥
इत्यादि महापुराणे आग्नेये दशमीव्रतवर्णनंनाम षडशीत्यधिकशततमोऽध्यायः ।

---

# सप्ताशीत्यधिकशततमोऽध्यायः

## एकादशीव्रतम् ।

अग्निरुवाच ।

एकादशीव्रतं वक्ष्ये भुक्तिमुक्ति प्रदायकम् । दशम्यान्नियताहारो मांसमैथुनवर्जितः ॥
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । द्वादश्येकादशी यत्र तत्र सन्निहितो हरिः ॥
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणे । एकादशी कला यत्र परतो द्वादशी गता ॥
तत्र क्रतुशतं पुण्यन्त्रयोदश्यान्तु पारणे । दशम्येकादशीमिश्रा नोपोष्या नरकप्रदा ॥
एकादश्यान्निराहारो भुक्त्वा चैवापरेऽहनि ।
भोक्ष्येऽहं पुण्डरीकाक्ष ! शरणं मे भवाच्युत ! ॥ ५ ॥
एकादश्यांसितेपक्षे पुष्यर्क्षन्तुयदाभवेत् । सोपोष्याक्षय्यफलदाप्रोक्ता सा पापनाशिनी
एकादशी द्वादशीया श्रवणेन च संयुता । विजया सा तिथिः प्रोक्ताभक्तानांविजयप्रदा
एषैव फाल्गुनेमासि पुष्यर्क्षेणचसंयुता । विजयाप्रोच्यते सद्भिःकोटिकोटिगुणोत्तरा
एकादश्यां विष्णुपूजा कार्य्या सर्व्वोपकारिणी ।
धनवान् पुत्रवान् लोके विष्णुलोके महीयते ! ॥ ६ ॥

इत्यादिमहापुराणे आग्नेयैकादशीव्रतवर्णनंनामसप्ताशीत्यधिकशततमोऽध्यायः ।

---

# अष्टाशीत्यधिकशततमोऽध्यायः

## द्वादशीव्रतानि ।

अग्निरुवाच ।

द्वादशीव्रतकं वक्ष्ये भुक्तिमुक्तिप्रदायकम् । एकभक्तेन भक्तेन तथैवायाचितेन च ॥

उपवासेन भैक्ष्येण चैवं द्वादशीकव्रती ।

चैत्रेमासि सिते पक्षे द्वादश्यां मदनं हरिम् ॥ २ ॥

पूजयेद् भुक्तिमुक्त्यर्थी मदनद्वादशीकव्रती । माघशुक्ले तु द्वादश्यां भीमद्वादशीव्रती ॥

नमो नारायणायेति यजेद् विष्णुं स सर्वभाक् ।

फाल्गुने च सिते पक्षे गोवीन्दद्वादशीव्रती ॥ ४ ॥

विशोकद्वादशीकारी यजेदाश्वयुजे हरिम् । लवणं मार्गशीर्षे तु कृष्णमभ्यर्च्य यो नरः

ददाति शुक्लद्वादश्यां स सर्वरसदायकः । गोवत्सं पूजयेद् भाद्रे गोवत्सद्वादशीव्रती

माघ्यान्तु समतीतायां श्रवणेन तु संयुता ।

द्वादशी या भवेत् कृष्णा प्रोक्ता स तिलद्वादशी ॥ ७ ॥

तिलैः स्नानन्तिलैर्होमो नैवेद्यन्तिलमोदकम् । दीपश्च तिलतैलेन तथा देयं तिलोदकम्

तिलाश्च देया विप्रेभ्यः फलं होमोपवासतः ।

ओं नमो भगवतेऽथो वासुदेवाय वै यजेत् ॥ ६ ॥

सकुलः स्वर्गमाप्नोतिषट्तिलद्वादशीव्रती । मनोरथद्वादशीकृत् फाल्गुनेतुसितेऽर्च्चयेत

नामद्वादशीव्रतकृत् केशवाद्यैश्च नामभिः । वर्षं यजेद्धरिं स्वर्गी न भवेन् नारकी नरः ॥

फाल्गुनस्य सितेऽभ्यर्च्चय सुमतिद्वादशीव्रती ।

मासि भाद्रपदेशुक्ले अनन्तद्वादशीव्रती ॥ १२ ॥

अश्लेषर्क्षे तु मूले वा माघे कृष्णाय वै नमः । यजेत्तिलांश्च जुहुयात्तिलद्वादशीकृन्नरः ॥

सुगतिद्वादशीकारी फाल्गुने तु सिते यजेत् ।

जयकृष्ण ! नमस्तुभ्यं वर्षंस्याद् भुक्तिमुक्तिगः ।

पौषशुक्ले तु द्वादश्यां सम्प्राप्तिद्वादशीव्रती ॥ १४ ॥

इत्यादि महापुराणे आग्नेये द्वादशीव्रतवर्णनं नामाष्टाशीत्यधिकशततमोऽध्यायः ।

———

# एकोननवत्यधिकशततमोऽध्यायः

## श्रवणद्वादशीव्रतम् ।

अग्निरुवाच ।

श्रवणद्वादशीं वक्ष्ये मासिभाद्रपदे सिते । श्रवणेनयुता श्रेष्ठा महती सा ह्युपोषिता ॥
सङ्गमे सरितां स्नानाच्छ्रवणद्वादशीफलम् । बुधश्रवणसंयुक्ता दानादौ सुमहाफला ॥
निषिद्धमपि कर्त्तव्यन्त्रयोदश्यान्तु पारणम् ।
द्वादश्याञ्च निराहारो वामनं पूजयाम्यहम् ॥ ३ ॥
उदकुम्भे स्वर्णमयन्त्रयोदश्यान्तु पारणम् । आवाहयाम्यहं विष्णुं वामनं शङ्खचक्रिणम्
सितवस्त्रयुगच्छन्ने घटे सच्छत्रपादुके । स्नापयामि जलैः शुद्धैर्विष्णुंपञ्चामृतादिभिः
छत्रदण्डधरं विष्णुं वामनाय नमो नमः ।
अर्घ्यं ददामि देवेश ! अर्घ्यार्हाद्यै सदार्चितः ॥ ६ ॥
भुक्तिमुक्तिप्रजाकीर्तिसर्वैश्वर्य्ययुतं कुरु । वामनाय नमो गन्धं होमोनेनाष्टकं शतम् ॥
ओं नमो वासुदेवाय शिरः सम्पूजयेद्धरेः ।
श्रीधराय मुखंतद्वत् कण्ठे कृष्णाय वै नमः ॥ ८ ॥
नमः श्रीपतये वक्षो भुजौ सर्वास्त्रधारिणे । व्यापकाय नमो नाभिं वामनायनमःकटिम्
त्रैलोक्यजननायेति मेढ्रं जङ्घे यजेद्धरेः । सर्वाधिपतये पादौ विष्णोः सर्वात्मने नमः
घृतपक्वञ्च नैवेद्यं दद्याद् दध्योदनैर्घटान् ।
रात्रौ च जागरं कृत्वा प्रातः स्नात्वा च सङ्गमे ॥ ११ ॥
गन्धपुष्पादिभिः पूज्य वदेत् पुष्पाञ्जलिस्त्विदम् ।
नमो नमस्ते गोविन्द ! बुधश्रवणसञ्ज्ञित ! ॥ १२ ॥
अघौघसङ्क्षयं कृत्वा सर्वसौख्यप्रदो भव । प्रीयतां देव ! देवेश ! मम नित्यंजनार्दन॥
वामनो बुद्धिदो दाता द्रव्यस्थो वामनः स्वयम् ।

वामनः प्रतिगृह्णाति वामनो मे ददाति च ॥ १४ ॥
द्रव्यस्थो वामनो नित्यं वामनाय नमोनमः ।
प्रदत्तदक्षिणो विप्रान् सम्भोज्यान्नं स्वयञ्चरेत् ॥ १५ ॥
इत्यादिमहापुराणेआग्नेये श्रवणद्वादशीव्रतवर्णनंनामैकोननवत्यधिकशततमोऽध्यायः ।

---

# नवत्यधिकशततमोऽध्यायः

## अखण्डद्वादशीव्रतानि ।

### अग्निरुवाच ।

अखण्डद्वादशीं वक्ष्ये व्रतसम्पूर्णताकृतम् । मार्गशीर्षे सितेविष्णुं द्वादश्यांसमुपोषितः
पञ्चगव्यजले स्नातो यजेत् तत्प्राशनो व्रती ।
यवव्रीहियुतम्पात्रन्द्वादश्यां हि द्विजेऽर्पयेत् ॥ २ ॥
सप्तजन्मनि यत् किञ्चिन्मया खण्डं व्रतं कृतम् ।
भगवन् ! त्वत्प्रसादेन तदखण्डमिहास्तु मे ॥ ३ ॥
यथाऽखण्डं जगत् सर्वं त्वमेव पुरुषोत्तम ! ।
तथाखिलान्यखण्डनानि व्रतानि मम सन्तु वै ॥ ४ ॥
एवमेवानुमासञ्च चातुर्मास्यो विधिः स्मृतः ।
अन्यच्चैत्रादिमासेषु शक्तु पात्राणि चार्पयेत् ॥ ५ ॥
श्रावणादिषु चारभ्य कार्त्तिकान्तेषु पारणम् । सप्तजन्मसु वैकल्यं व्रतानां सफलं कृते
आयुरारोग्यसौभाग्य राज्यभोगादिमाप्नुयात् ॥ ६ ॥
इत्यादि महापुराणे आग्नेये अखण्डद्वादशीव्रतवर्णनं नाम नवत्यधिकशततमोऽध्यायः ।

---

# एकनवत्यधिकशततमोऽध्यायः

## त्रयोदशीव्रतानि ।

अग्निरुवाच ।

त्रयोदशीव्रतानीह सर्वदानि वदामि ते। अनङ्गेन कृतामादौ वक्ष्येऽनङ्ग त्रयोदशीम् ॥
त्रयोदश्यां मार्गशीर्षे शुक्लेऽनङ्गं हरं यजेत् । मधु सम्प्राशयेद्रात्रौ घृतहोमस्तिलाक्षतैः
पौषे योगेश्वरंप्राच्यं चन्दनाशीकृताहुतिः ।
महेश्वरं मौक्तिकाशी माघेऽभ्यर्च्य दिवंव्रजेत् ॥ ३ ॥
काकोलं प्राश्य नीरन्तु फाल्गुने पूजयेद् व्रती ।
कर्पूराशी स्वरूपञ्च चैत्रे सौभाग्यवान् भवेत् ॥ ४ ॥
महारूपन्तु वैशाखे यजेज्जातीफलाश्यपि । लवङ्गाशी ज्यैष्ठदिने प्रद्युम्नं पूजयेद् व्रती ॥
तिलोदाशी तथाषाढ़े उमाभर्त्तारमर्च्चयेत् । श्रावणे गन्धतोयाशी पूजयेच्छूलपाणिनम्
सद्योजातं भाद्रपदे प्राशितागुरुमर्च्चयेत् ।
सुवर्णवारि सम्प्राश्य आश्विने त्रिदशाधिपम् ॥ ७ ॥
विश्वेश्वरं कार्त्तिके तु मदनाशी यजेद् व्रती ।
शिवं हैमन्तु वर्षान्ते सञ्छाद्याम्रदलेन तु ॥ ८ ॥
वस्त्रेण पूजयित्वा तु दद्याद्विप्राय गान्तथा । शयनञ्छत्रकलशान् पादुकारसभाजनम्
त्रयोदश्यां सिते चैत्रे रतिप्रीतियुतं स्मरन् । अशोकाख्यं नगं लिख्यसिन्दूररजनीमुखैः
अब्दं यजेत्तु कामार्थी कामत्रयोदशीव्रतम् ॥ १० ॥

इत्यादि महापुराणे आग्नेये त्रयोदशीव्रतवर्णनं नामैकनवत्यधिकशततमोऽध्यायः ।

---

# द्विनवत्यधिकशततमोऽध्यायः

## चतुर्दशीव्रतानि ।

अग्निरुवाच ।

व्रतं वक्ष्ये चतुर्दश्यांभुक्तिमुक्तिप्रदायकम् । कार्त्तिकेतुचतुर्दश्यां निराहारो यजेच्छिवम्

वर्षम्भोगंधनायुष्मान् कुर्वन् शिवचतुर्दशीम् ।

मार्गशिर्षे सितेऽष्टम्यां तृतीयायां मुनिव्रतः ॥ २ ॥

द्वादश्यां वा चतुर्दश्यां फलाहारो यजेत् सुरम् ।

त्यक्त्वा फलानि दद्यात्तु कुर्वन् फलचतुर्दशीम् ॥ ३ ॥

चतुर्दश्यामथाष्टम्यां पक्षयोःशुक्लकृष्णयोः । अनश्नन् पूजयेच्छम्भुं स्वर्ग्युभयचतुर्दशीम्

कृष्णाष्टम्यान्तु नक्तेन तथा कृष्णचतुर्दशीम् । इह भोगानवाप्नोति परत्रच शुभाङ्गतिम्

आकार्त्तिके च चतुर्दश्यां कृष्णायां स्नानकृत् सुखी ।

अराधिते महेन्द्रे तु ध्वजाकारासु यष्टिषु ॥ ६ ॥

ततः शुक्लचतुर्दश्यामनन्तं पूजयेद्धरिम् । कृत्वा दर्भमयञ्चैव वारिधानीसमन्वितम् ॥

शालिप्रस्थस्य पिष्टस्य पूपनाम्नः कृतस्य च । अर्द्धं विप्राय दातव्यमर्द्धमात्मनियोजयेत्

कर्त्तव्यं सरितां चान्ते कथां कृत्वा हरेरिति ।

अनन्तसंसारमहासमुद्रे मग्नान् समभ्युद्धर वासुदेव ! ॥ ६ ॥

अनन्तरूपे विनियोजयस्व अनन्तरूपाय नमो नमस्ते ।

अनेन पूजयित्वाथ सूत्रंवद्धातु मन्त्रितम् । स्वके करे वा कण्ठे वा त्वनन्तव्रतकृतसुखी

इत्यादि महापुराणे आग्नेयेचतुर्दशीव्रतवर्णनं नामद्विनवत्यधिकशततमोऽध्यायः ।

---

# त्रिनवत्यधिकशततमोऽध्यायः

## शिवरात्रिव्रतम् ।

### अग्निरुवाच ।

शिवरात्रिव्रतं वक्ष्ये भुक्तिमुक्तिप्रदं शृणु । माघफाल्गुनयोर्मध्ये कृष्णा या तु चतुर्दशी
कामयुक्ता तु सोपोष्या कुर्वन् जागरणं व्रती । शिवरात्रिव्रतं कुर्वे चतुर्दश्यामभोजनम्
रात्रिजागरणेनैव पूजयामि शिवं व्रति । आवाहयाम्यहं शम्भु भुक्तिमुक्तिप्रदायकम् ॥

नरकार्णवकोत्तारनावं शिव ! नमोऽस्तु ते ।
नमः शिवाय शान्ताय प्रजाराज्यादिदायिने ॥ ४ ॥

सौभाग्यारोग्यविद्यार्थं स्वर्गमार्गप्रदायिने । धर्म्मन्देहि धनन्देहि कामभोगादि देहि मे

गुणकीर्त्तिसुखं देहि स्वर्गं मोक्षञ्च देहि मे ।
लुब्धकः प्राप्तवान् पुण्यं पापी सुन्दरसेनकः ॥ ६ ॥

इत्यादि महापुराणे आग्नेये शिवरात्रिव्रतवर्णनं नाम त्रिनवत्यधिकशततमोऽध्यायः ।

---

# चतुर्नवत्यधिकशततमोऽध्यायः

## अशोकपूर्णिमादिव्रतम् ।

### अग्निरुवाच ।

अशोकपूर्णिमां वक्ष्ये भूधरञ्च भुवं यजेत् ।
फाल्गुन्यां सितपक्षायां वर्षं स्याद् भुक्तिमुक्तिभाक् ॥ १ ॥

कार्त्तिक्यान्तु वृषोत्सर्गं कृत्वा नक्तं समाचरेत् । शैवं पदमवाप्नोति वृषव्रतमिदं परम्

पित्र्या यामावसी तस्यां पितृणां दत्तमक्षयम् ।

उपोश्याब्दं पितॄनिष्ट्वा निष्पापः स्वर्गमाप्नुयात् ॥ ३ ॥

पञ्चदश्यां च माघस्य पूज्याजं सर्वमाप्नुयात् ।

वक्ष्ये सावित्र्यमावास्याम्भुक्तिमुक्तिकरीं शुभाम् ॥ ४ ॥

पञ्चदश्यां व्रती ज्यैष्ठे वटमूले महासतीम् । त्रिरात्रोपोषिता नारी सप्तधान्यैःप्रपूजयेत्

प्ररूढैः कण्ठसूत्रैश्च रजन्यां कुङ्कुमादिभिः ।

वटावलम्बनं कृत्वा नृत्यगीतैः प्रभातके । नमः सावित्र्यै सत्यवते नैवेद्यं चार्पयेद्द्विजे

वेश्म गत्वा द्विजान् भोज्य स्वयं भुक्त्वा विसर्ज्जयेत् ।

सावित्री प्रीयतां देवी सौभाग्यादिकमाप्नुयात् ॥ ७ ॥

इत्यादि महापुराणे आग्नेये अशोकपूर्णिमाव्रतवर्णनंनामचतुर्नवत्यधिकशततमोऽध्यायः

---

## पञ्चनवत्यधिकशततमोऽध्यायः

### वारव्रतानि ।

अग्निरुवाच ।

वारव्रतानि वक्ष्यामि भुक्तिमुक्तिप्रदानि हि । करं पुनर्वसुः सूर्य्ये स्नाने सर्वौषधीशुभा

श्राद्धी चादित्यवारे तु सप्तजन्मस्वरोगभाक् ।

सङ्क्रान्तौ सूर्य्यवारो यः सोऽर्कस्य हृदयः शुभः ॥ २ ॥

कृत्वाहस्तेसूर्य्यवारंनक्तेनाब्दं स सर्वभाक् । चित्राभसोमवाराणि सप्तकृत्वासुखीभवेत्

स्वात्यां गृहीत्वा चाङ्गारंसप्तनक्त्यार्तिवर्जितः । विशाखायां बुधंगृह्यसप्तनक्तीग्रहार्त्तिनुत्

अनुराधे देवगुरुं सप्तनक्ती ग्रहार्तिनुत् । शुक्रंज्येष्ठासु सङ्गृह्य सप्तनक्तीग्रहार्तिनुत् ॥

मूले शनैश्चरंगृह्य सप्तनक्ती ग्रहार्त्तिनुत् ॥ ५ ॥

इत्यादिमहापुराणेआग्नेयेवारव्रतवर्णनंनामपञ्चनवत्यधिकशततमोऽध्यायः ।

---

# षण्णवत्यधिकशततमोऽध्यायः

## नक्षत्रव्रतानि ।

अग्निरुवाच ।

नक्षत्रव्रतकं वक्ष्ये भे हरिः पूजितोऽर्थदः । नक्षत्रपुरुषं चादौ चैत्रमासे हरिं यजेत् ॥
मूले पादौ यजेज्जङ्घे रोहिणीस्वर्च्चयेद्धरिम् । जानुनीचाश्विनीयोगेआषाढ़ांसूरुसञ्ज्ञके
मेढ्रं पूर्वोत्तरास्वेव कटिंवै कृत्तिकासु च । पार्श्वे भाद्रपदाभ्यान्तु कुक्षिं वै रेवतीषु च
स्तनौ चैवानुराधासु धनिष्ठासु च पृष्ठकम् । भुजौ पूज्यौविशाखासुपुनर्वस्वङ्गुलीर्यजेत

अश्लेषासु नखान् पूज्य कण्ठं ज्येष्ठासु पूजयेत् ।
श्रोत्रे विष्णोश्च श्रवणे मुखं पुष्ये हरेर्यजेत् ॥ ५ ॥

यजेत् स्वातिषु दन्ताग्रमास्यं वारुणोऽर्चयेत् । मघासु नासां नयने मृगशीर्षेललाटकम्

चित्रासु चार्द्रासु कचानब्दान्ते स्वर्णकं हरिम् ।
गुड़पूर्णे घटेऽभ्यर्च्य शय्यागोऽर्थादि दक्षिणा ॥ ७ ॥

नक्षत्रपुरुषो विष्णुः पूजनीयः शिवात्मकः । शाम्भवायनीयव्रतकृन्मासभे पूजयेद्धरिम्

कार्त्तिके कृत्तिकायां च मृगशीर्षे मृगास्यके ।
नामभिः केशवाद्यैस्तु अच्युताय नमोऽपि वा ॥ ६ ॥

कार्त्तिके कृत्तिकाभेऽह्नि मासाक्षत्रगंहरिम् । शम्भवायनीयव्रतकं करिष्येभुक्तिमुक्तिदम्
केशवादि महामूर्त्तिमच्युतं सर्वदायकम् । आवाहयाम्यहं देवमायुरारोग्यवृद्धिदम्॥११॥
कार्त्तिकादौ सकासारमन्नं मासचतुष्टयम् । फाल्गुनादौ च कृशरमासाढ़ादौचपायसम्
देवाय ब्राह्मणेभ्यश्च नक्तन्नैवेद्यमाशयेत् । पञ्चगव्यजलेस्नातस्तस्यैव प्राशनाच्छुचिः ॥
अर्वाग्विसर्जनाद् द्रव्यं नैवेद्यं सर्वमुच्यते । विसर्जिते जगन्नाथे निर्माल्यम्भवतिक्षणात्

नमो नमस्तेऽच्युत ! मे क्षयोस्तु पापस्यवृद्धिं समुपैतु पुण्यम् ।
ऐश्वर्य्यवित्तादि सदाऽक्षयंमे क्षयञ्चमासन्ततिरभ्युपैतु ॥ १५ ॥

यथाच्युतस्त्वम्परतः परस्तात् स ब्रह्मभूतः परतः परात्मन् ! ।
तथाच्युतं त्वं कुरुवाञ्छितं मे मयाकृतम्पापहराप्रमेय ! ॥ १६ ॥
अच्युतानन्द ! गोविन्द ! प्रसीद यदभीप्सितम् ।
अक्षयं माममेयात्मन् ! कुरुष्व पुरुषोत्तम ! ॥ १७ ॥
सप्तवर्षाणि सम्पूज्य भुक्तिमुक्तिमवाप्नुयात् । अनन्तव्रतमाख्यास्ये नक्षत्रव्रतकेऽर्थदम्
मार्गशीर्षे मृगशिरे गोमूत्राशी यजेद्धरिम् ।
अनन्तं सर्वकामानामनन्तो भगवान् फलम् ॥ १९ ॥
ददात्यनन्तञ्च पुनस्तदेवान्यत्र जन्मनि । अनन्तपुण्योपचयङ्करोत्येतन्महाव्रतम् ॥
यथाभिलषितप्राप्तिं करोत्यक्षयमेव च । पादादि पूज्य नक्तेतु भुञ्जीयात् तैलवर्जितम् ॥
घृतेनानन्तमुद्दिश्य होमो मासचतुष्टयम् । चैत्रादौ शालिना होमः पयसा श्रावणादिषु
मान्धाताभूद् युवनाश्वादनन्तव्रतकात् सुतः ॥ २२ ॥
इत्यादि महापुराणे आग्नेये नक्षत्रव्रतवर्णनं नाम षणवत्यधिकशततमोऽध्यायः ।

---

## सप्तनवत्यधिकशततमोऽध्यायः

### दिवसव्रतानि ।

अग्निरुवाच ।

दिवसव्रतकं वक्ष्ये ह्यादौ धेनुव्रतं वदे । यश्चोभयमुखीं दद्यात् प्रभूतकनकान्विताम् ॥
दिनं पयोव्रततिष्ठेत् सयाति परमं पदम् । त्र्यहं पयोव्रतं कृत्वा काञ्चनं कल्पपादपम्
दत्वा ब्रह्मपदं याति कल्पवृक्षव्रतं स्मृतम् ।
दद्यात् विंशत् पलादूर्ध्वं महीङ्कृत्वा तु काञ्चनीम् ॥ ३ ॥
दिनं पयोव्रतस्तिष्ठेद्रुद्रगः स्याद् दिवाव्रती । पक्षे पक्षे त्रिरात्रन्तु भक्तेनैकेन यःक्षपेत् ॥
विपुलं धनमाप्नोति त्रिरात्रव्रतकृद् दिनम् । मासे मासे त्रिरात्राशीएकभक्तीगणेशताम्

यस्त्रिरात्रव्रतं कुर्य्यात् समुद्दिश्य जनार्दनम् । कुलानां शतमादाय सयाति भवनं हरेः
नवम्याञ्च सिते पक्षे नरोमार्गशिरस्यथ । प्रारभेत् त्रिरात्राणां व्रतन्तु विधिवद् व्रती

ओं नमो वासुदेवाय सहस्रं वा शतं जपेत् ।
अष्टम्यामेकभक्ताशी दिनत्रयमुपावसेत् ॥ ८ ॥
द्वादश्यां पूजयेद् विष्णुं कार्त्तिके कारयेद् व्रतम् ।
विप्रान् सम्भोज्य वस्त्राणि शयनान्यासनानि च ॥ ९ ॥

छत्रोपवीतपात्राणिददेत् सम्प्रार्थयेद् द्विजान् । व्रतेऽस्मिनदुष्करेचापिविकलंयदभून्मम
भवद्भिस्तदनुज्ञातं परिपूर्णं भवत्विति । भुक्तभोगो व्रजेद् विष्णुं त्रिरात्रव्रतकव्रती ॥
कर्त्तिकव्रतकं वक्ष्ये भुक्तिमुक्तिप्रदायकम् । दशम्यां पञ्चगव्याशी एकादश्यामुपोषितः॥

कार्त्तिकस्य सितेऽभ्यर्च्य विष्णुं देवविमानगः ।
चैत्रे त्रिरात्रं नक्ताशी अजापञ्चप्रदः सुखी ॥ १३ ॥

त्रिरात्रं पयसः पानमुपवासपरस्त्र्यहम् । षष्ठ्यादि कार्तिके शुक्लेकृच्छ्रो माहेन्द्रउच्यते

पञ्चरात्रं पयः पीत्वा दध्याहारो ह्युपोषितः ।
एकादश्यां कार्त्तिके तु कृच्छ्रोऽयं भास्करोऽर्थदः ॥ १५ ॥

यवागूं यावकं शाकं दधि क्षीरं घृतंजलम् । पञ्चम्यादि सितेपक्षे कृच्छ्रः शान्तपनःस्मृतः
इत्यादि महापुराणे आग्नेये दिवसव्रतवर्णनं नाम सप्तनवत्यधिकशततमोऽध्यायः ।

---

# अष्टनवत्यधिकशततमोऽध्यायः

## मासव्रतानि ।

### अग्निरुवाच ।

मासव्रतकमाख्यास्ये भुक्तिमुक्तिप्रदायकम् । आषाढादिचतुर्मासमभ्यङ्गं वर्जयेत् सुधीः

वैशाखे पुष्पलवणन्त्यक्त्वा गोदो नृपो भवेत् ।

गोदो मासउपवासी च भीमव्रतकरो हरिः ॥ २ ॥

आषाढ़ादिचतुर्मासं प्रातःस्नायीच विष्णुगः । माघेमास्यथ चैत्रे वा गुड़धेनुप्रदो भवेत्

गुड़व्रतस्तृतीयायां गौरीशः स्यान्महाव्रती ।

मार्गशिर्षादिमासेषु नक्तकृद् विष्णुलोकभाक् ॥ ४ ॥

एकभक्तव्रती तद्वद् द्वादशीव्रतकं पृथक् । फलव्रती चतुर्मासं फलं त्यक्त्वा प्रदापयेत् ॥

श्रावणादिचतुर्मासं व्रतैः सर्वं लभेद् व्रती । आषाढ़स्य सिते पक्षे एकादश्यामुपोषितः

चातुर्मास्यव्रतानान्तु कुर्वीत परिकल्पनम् ।

आषाढ्याञ्चाथ सङ्क्रान्तौ कर्कटस्य हरिं यजेत् ॥ ७ ॥

इदं व्रतं मया देव ! गृहीतं पुरतस्तव । निर्विघ्नां सिद्धिमायातु प्रसन्ने त्वयि केशव ! ॥

गृहितेऽस्मिन् व्रते देव ! यद्यपूर्णे म्रिये ह्यहम् । तन्मेभवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन

मांसादि त्यक्त्वा विप्रः स्यात् तैलत्यागी हरिं यजेत् ।

एकान्तरोपवासी च त्रिरात्रं विष्णुलोकभाक् ॥ १० ॥

चान्द्रायणी विष्णुलोकी मौनी स्यान् मुक्तिभाजनम् ।

प्राजापत्यव्रती स्वर्गी शक्तुयावकभक्षकः ॥ ११ ॥

दुग्धाद्याहारवान् स्वर्गीपञ्चगव्याम्बुभुक् तथा । शाकमूलफलाहारी नरोविष्णुपुरींव्रजेत्

मांसवर्जी यवाहारो रसवर्जी हरिं व्रजेत् । कौमुदव्रतमाख्यास्ये आश्विने समुपोषितः

द्वादश्यां पूजयेद् विष्णुं प्रलिप्याब्जोत्पलादिभिः । घृतेन तिलतैलेन दीपनैवेद्यमर्पयेत्

ओं नमो वासुदेवाय मालत्या मालया यजेत् ॥ १४ ॥

धर्मकामार्थमोक्षांश्च प्राप्नुयात् कौमुदव्रती । सर्वं लभेद्धरिं प्राच्यं मासोपवासकव्रती॥

इत्यादि महापुराणे आग्नेये मासव्रतवर्णनं नामाष्टनवत्यधिकशततमोऽध्यायः ।

---

## एकोनशताधिकशततमोऽध्यायः

### नानावृतानि ।

अग्निरुवाच ।

ऋतुव्रतान्यहं वक्ष्ये भुक्तिमुक्तिप्रदानि ते । इन्धनानि तु योदद्याद् वर्षादिचतुरोह्यृतून्
घृतधेनुप्रदश्चान्तेब्राह्मणोऽग्निव्रतीभवेत् । कृत्वा मौनन्तु सन्ध्यायां मासान्तेघृतकुम्भदः
तिलघण्टावस्त्रदाता सुखी सारस्वतव्रती । पञ्चामृतेनस्नपनं कृत्वाब्दं धेनुदो नृपः ॥३॥
एकादश्यान्तुनक्ताशीचैत्रे भक्तंनिवेदयेत् । हैमंविष्णोःपदं याति मासान्तेविष्णुसद्व्रती
पायसाशी गोयुगदः श्रीभाग्देवीव्रती भवेत् । निवेद्यपितृदेवेभ्योयो भुङ्क्तेसभवेन्नृपः
वर्षव्रतानिचोक्तानिसङ्क्रान्तिव्रतकं वदे । सङ्क्रान्तौस्वर्गलोकीस्याद्रात्रिजागरणान्नरः
अमावस्यां तु सङ्क्रान्तौ शिवार्क्कयजनात् तथा । उत्तरेत्वयने चाज्यप्रस्थस्नानेनकेशवे
द्वात्रिंशत्पलमानेन सर्वपापैः प्रमुच्यते । घृतक्षीरादिना स्नाप्य प्राप्नोति विषुवादिषु ॥
स्त्रीणामुमाव्रतंश्रीदंतृतीयास्वष्टमीषुच । गौरींमहेश्वरंचापि यजेत् सौभाग्यमाप्नुयात्
उमामहेश्वरो प्राच्यं अवियोगादिचाप्नुयात् ।
मूलव्रतकरी स्त्री च उमेशव्रतकारिणी । सूर्य्यभक्ता तु या नारी ध्रुवं सा पुरुषो भवेत्

इत्यादि महापुराणे आग्नेये नानाव्रतवर्णनं नामोनशताधिकशततमोऽध्यायः ।

---

## द्विशततमोऽध्यायः

### दीपदानवृतम् ।

अग्निरुवाच ।

दीपदानव्रतं वक्ष्ये भुक्तिमुक्तिप्रदायकम् । देवद्विजातिकगृहे दीपदोऽब्दं स सर्वभा ॥

चतुर्मासं विष्णुलोकी कार्त्तिके स्वर्गलोक्यपि ।
दीपदानात् परं नास्ति न भूतं न भविष्यति ॥ २ ॥
दीपेनायुष्यचक्षुष्मान् दीपाल्लक्ष्मीसुतादिकम् । सौभाग्यंदीपदःप्राप्य स्वर्गलोकेमहीयते
विदर्भराजदुहितो ललिता दीपदात्मभाक् । चारुधर्मक्ष्मापपत्नी शतभार्य्याधिकाऽभवत्
ददौ दीपसहस्रं स विष्णोरायतने सती ।
पृष्टा सा दीपमाहात्म्यं सपत्नीभ्य उवाच ह ॥ ५ ॥

ललितोवाच ।

सौवीरराजस्य पुरा मैत्रेयोऽभूत् पुरोहितः । तेन चायतनं विष्णोः कारितं देविकातटे
कार्त्तिके दीपकस्तेन दत्तः सम्प्रेरितो मया ।
वक्त्रप्रान्तेन नश्यन्त्या मार्ज्जारस्य तदा भयात् ॥ ७ ॥
निर्वाणवान् प्रदीप्तोऽभूद्‌ वर्त्त्या मूषिकया तदा ।
मृता राजात्मजा जाता राजपत्नी शताधिका ॥ ८ ॥
असङ्कल्पितमप्यस्यप्रेरणं यत् कृतं मया । विष्णवायतनदीपस्य तस्येदं भुज्यतेफलम् ॥
जातिस्मरा ह्यतो दीपान् प्रयच्छामि त्वहर्निशम् ।
एकादश्यां दीपदो वै विमाने दिवि मोदते ॥ १० ॥
जायते दीपहर्ता तु मूको वा जड़ एव च ।
अन्धे तमसि दुष्पारे नरके पतते किल ॥ ११ ॥
विक्रोशमानांश्च नरान् यमकिङ्कर आहतान् । विलापैरलमत्रापि किं वाविलपते फलम्
यदा प्रमादिभिः पूर्वमत्यन्तसमुपेक्षितः ।
जन्तुर्जन्मसहस्रेभ्यो ह्येकस्मिन् मानुषो यदि ॥ १३ ॥
तत्राप्यतिविमूढात्मा किं भोगानभिधावति । स्वहितं विषयास्वादैःक्रन्दनं तदिहागतम्
भुज्यते च कृतं पूर्वमेतत् किं वो न चिन्तितम् ।
परस्त्रीषु कुचाभ्यङ्गं प्रीतये दुःखदं हि वः ॥ १५ ॥
मुहूर्त्तविषयास्वादोऽनेककोट्यब्द दुःखदः ।

परस्त्रीहारि यद् गीतं हा मातः! किं विलप्यते ॥ १६ ॥
कोऽतिभारो हरेर्नाम्नि जिह्वया परिकीर्त्तने। वर्त्तितैलेऽल्पमूल्येऽपि यदग्निर्लभते सदा
दानाशक्तैर्हरेर्दीपो हृतस्तद् घोस्ति दुःखदम्। इदानीं किं विलापेन सहध्वं यदुपागतम्

अग्निरुवाच।

ललितोक्तञ्च ताः श्रुत्वा दीपदानाद्दिवं ययुः। तस्माद्दीपप्रदानेन व्रतानामधिकं फलम्

इत्यादिमहापुराणे आग्नेये दीपदानव्रतवर्णनं नाम द्विशततमोऽध्यायः।

---

# एकाधिकद्विशततमोऽध्यायः

## नवव्यूहार्चनम्।

अग्निरुवाच।

नवव्यूहार्च्चनं वक्ष्ये नारदाय हरीरितम्। मण्डलेऽब्जेऽर्चयेन्मध्ये अबीजं वासुदेवकम्
आबीजञ्च सङ्कर्षणम् प्रद्युम्नञ्च दक्षिणे। अः अनिरुद्धं नैर्ऋते ओं नारायणमप्सु च

तत्सद्ब्रह्माणमनिले हुं विष्णुं क्ष्रौं नृसिंहकम्।
उत्तरे भूर्वराहञ्च ईशे द्वारि च पश्चिमे ॥ ३ ॥
कं टं तं शं गरुत्मन्तं पूर्ववक्त्रञ्च दक्षिणे।
खं छं वं हुं फडिति च खं ठं फं शं गदां विधौ ॥ ४ ॥
बं णं मं क्षं कोणेशञ्च धं दं भं हं श्रियं यजेत्।
दक्षिणे चोत्तरे पुष्टिं गं डं वं शं स्वबीजकम् ॥ ५ ॥

पीठस्य पश्चिमे धं वं वनमालाञ्च पश्चिमे। श्रीवत्सं चैव सं हं लं छं तं यं कौस्तुभं जले

दशमाङ्गक्रमाद् विष्णोर्नमोऽनन्तमधोऽर्चयेत्।
दशाङ्गादि महेन्द्रादीन् पूर्वादौ चतुरो घटान् ॥ ७ ॥
तोरणानि वितानं च अग्न्यनिलेन्दुबीजकैः।

मण्डलानि क्रमाद् ध्यात्वा तनुं वन्द्य ततः प्लवेत् ॥ ८ ॥

अम्बरस्थंततो ध्यात्वा सूक्ष्मरूपमथात्मनः । सितामृतेनिमग्नञ्च चन्द्रविम्बात् स्रुतेनच
तदेव चात्मनो वीजममृतं प्लवसंस्कृतम् । उत्पद्यमानं पुरुषमात्मनमुपकल्पयेत् ॥१०॥

उत्पन्नोऽस्मि स्वयं विष्णुर्वीजं द्वादशकं न्यसेत् ।

हृच्छिरस्तु शिखा चैव कवचं चास्त्रमेव च ॥ ११ ॥

वक्षोमूर्द्धशिखापृष्ठलोचनेषु न्यसेत् पुनः । अस्त्रं करद्वये न्यस्य ततो दिव्यतनुभवेत् ॥
यथात्मनि तथादेवे शिष्यदेहे न्यसेत् तथा । अनिर्माल्या स्मृता पूजा यद्धरैः पूजनंहृदि
सनिर्माल्यामण्डलादौ वद्धनेत्राश्चशिष्यकाः । पुष्पं क्षिपेयुर्यन्मूर्त्तौ तस्यतन्नामकारयेत्
निवेश्य वामतः शिष्यांस्तिलव्रीहिघृतं हुनेत् । शतमष्टोत्तरं हुत्वा सहस्रं कायशुद्धये ॥

नवव्यूहस्य मूर्त्तीनामङ्गानां च शताधिकम् ।

पूर्णान् दत्त्वा दीक्षयेत् तान् गुरुः पूज्यश्च तैर्धनैः ॥ १६ ॥

इत्यादि महापुराणे आग्नेये नवव्यूहार्चनवर्णनं नामैकाधिकद्विशततमोऽध्यायः ।

---

## द्व्यधिकद्विशततमोऽध्यायः

### पुष्पाध्यायकथनम् ।

अग्निरुवाच ।

पुष्पगन्धधूपदीपनैवेद्यैस्तुष्यते हरिः । पुष्पाणि देवयोग्यानि ह्ययोग्यानिं वदामि ते ॥

पुष्पं श्रेष्ठं मालती च तमालो भुक्तिमुक्तिमान् ।

मल्लिका सर्वपापघ्नी यूथिका विष्णुलोकदा ॥ २ ॥

अतिमुक्तमयं तद्वत् पाटला विष्णुलोकदा । करवीरैर्विष्णुलोकी जवापुष्पैश्च पुण्यवान्
पावन्तीकुब्जकाद्यैश्चतगरैर्विष्णुलोकभाक् । कर्णिकारैर्विष्णुलोकःकुरुण्टैः पापनाशनम्
पद्मैश्च केतकीभिश्च कुन्दपुष्पैः परा गतिः । वाणपुष्पैर्वर्वराभिः कृष्णाभिर्हरिलोकभाक्

अशोकैस्तिलकैस्तद्वद्दटरूषभवैस्तथा। मुक्तिभागे विल्वपत्रैः शमीपत्रैः परा गतिः॥
विष्णुलोकी भृङ्गराजैस्तमालस्य दलैस्तथा।
तुलसी कृष्णगौराख्या कह्लारोत्पलकानि च॥ ७॥
पद्मं कोकनदं पुण्यं शताब्जमालया हरिः। नीपार्जुनकदम्बैश्च वकुलैश्च सुगन्धिभिः॥
किंशुकैर्मुनिपुष्पैस्तु गोकर्णैर्नागकर्णकैः। सन्ध्यापुष्पैर्विल्वतकै रञ्जनीकेतकीभवैः॥
कुष्माण्डतिमिरोत्थैश्च कुशकाशशरोद्भवैः। द्यूतादिभिर्मरुवकैः पत्रैरन्यैः सुगन्धकैः॥
भुक्तिर्मुक्तिः पापहानि भक्त्या सर्वैस्तु तुष्यति।
स्वर्णलक्षाधिकं पुष्पं माला कोटिगुणाधिका॥ ११॥
स्ववनेऽन्यवने पुष्पैस्त्रिगुणं वनजैःफलम्।
विशिर्णैर्नार्चयेद्विष्णुन्नाधिकाङ्गैर्न मोटितैः॥ १२॥
काञ्चनारैस्तथोम्मत्तैर्गिरिकर्णिकया तथा।
कुटजैः शाल्मलीयैश्च शिरीशैर्नरकादिकम्॥ १३॥
सुगन्धैर्ब्रह्मपद्मैश्च पुष्पैर्नीलोत्पलैर्हरिः। अर्कमन्दारधूस्तूर कुसुमैरर्च्यते हरः॥ १४॥
कुटजैः कर्कटीपुष्पैः केतकीन्न शिवे ददेत्। कुष्माण्डनिम्बसम्भूतं पैशाचंगन्धवर्जितम्
अहिंसा इन्द्रियजयः क्षान्तिर्ज्ञानं दया श्रुतम्।
भावाष्टपुष्पैः सम्पूज्य देवान् स्याद् भुक्तिमुक्तिभाक्॥ १६॥
अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः। सर्वपुष्पं दया भूते पुष्पं शान्तिर्विशिष्यते॥
शमः पुष्पं तपः पुष्पं ध्यानं पुष्पं च सत्तमम्। सत्यञ्चैवाष्टमं पुष्पमेतैस्तुष्यति केशवः
एतैरेवाष्टभिः पुष्पैस्तुष्यत्येवार्चितो हरिः।
पुष्पान्तराणि सन्त्यत्र वाह्यानि मनुजोत्तम!॥ १९॥
भक्त्या दयान्वितैर्विष्णुः पूजितः परितुष्यति। वारुणंसलिलं पुष्पं सौम्यं घृतपयोदधि
प्राजापत्यं तथान्नादि आग्नेयं धूपदीपकम्। फलपुष्पादिकञ्चैव वानस्पत्यन्तु पञ्चमम्
पार्थिवं कुशमूलाद्यं वायव्यं गन्धचन्दनम्। श्रद्धाख्यंविष्णुपुष्पञ्च सर्वदा चाष्टपुष्पिकाः
आसनं मूर्त्तिपञ्चाङ्गं विष्णुर्वा चाष्टपुष्पिकाः।

विष्णोस्तु वासुदेवाद्यैरीशानाद्यैः शिवस्य वा ॥ २३ ॥

इत्यादि महापुराणे आग्नेये पुष्पाध्यायकथनं नाम द्व्यधिकद्विशततमोऽध्यायः ।

---

# त्र्यधिकद्विशततमोऽध्यायः

## नरकस्वरूपम् ।

अग्निरुवाच ।

पुष्पाद्यैः पूजनाद् विष्णोर्न याति नरकान् वदे ।
आयुषोऽन्ते नरः प्राणैरनिच्छन्नपि मुच्यते ॥ १ ॥

जलमग्निर्विषं शस्त्रं क्षुद्व्याधिःपतनंगिरेः । निमित्तं किञ्चिदासाद्यदेही प्राणैर्विमुच्यते
अन्यच्छरीरमादत्ते यातनीयं स्वकर्मभिः । भुङ्क्तेऽथ पापकृत् दुःखं सुखं धर्मायसङ्गतः
नीयते यमदूतैस्तु यमं प्राणिभयङ्करैः । कुपथे दक्षिणद्वारि धार्मिकः पश्चिमादिभिः ॥
यमाज्ञप्तैः किङ्करैस्तु पात्यते नरकेषु च । स्वर्गे तु नीयते धर्माद् वसिष्ठाद्युक्तिसंश्रयात्

गोघाती तु महावीच्यां वर्षलक्षन्तु पीड्यते ।
आमकुम्भे महादीप्ते ब्रह्महा भूमिहारकः ॥ ६ ॥

महाप्रलयकं यावद्रौरवे पीड्यते शनैः । स्त्रीबालवृद्धहन्ता तु यावदिन्द्राश्चतुर्दश ॥
महारौरवके रौद्रे गृहक्षेत्रादि दीपकः । दह्यते कल्पमेकं स चौरस्तामिस्रके पतेत् ॥
नैककल्पन्तु शूलाद्यैर्भिद्यते यमकिङ्करैः । महातामिस्रके सर्पजलौकाद्यैश्च पीड्यते ॥

यावद् भूमिर्मातृहाद्या असिपत्रवनेऽसिभिः ।
नैककल्पन्तु नरके करम्भवालुकासु च ॥ १० ॥
येन दग्धो जनस्तत्र दह्यते वालुकादिभिः ।
काकोले कृमिविष्ठाशी एकाकी मिष्टभोजनः ॥ ११ ॥

कुट्टले मूत्ररक्ताशी पञ्चयज्ञक्रियोज्झितः । सुदुर्गन्धे रक्तभोजी भवेच्चाभक्ष्यभक्षकः ॥

तैलपाके तु तिलवत् पीड्यते परपीड़कः । तैलपाके तु पच्येत शरणागतघातकः ॥
निरुच्छ्वासे दाननाशी रसविक्रयकोऽध्वरे । नाम्ना वज्रकवाटेन महापाते तदानृती ॥
महाज्वाले पापबुद्धिः क्रकचेऽगम्यगामिनः । सङ्करी गुड़पाके च प्रतुदेत् परमर्मनुत् ॥

क्षारहृदे प्राणिहन्ता क्षुरधारे च भूमिहृत् ।
अम्बरीषे गोस्वर्णहृद् द्रुमच्छिद् वज्रशस्त्रके ॥ १६ ॥

मधुहर्त्ता परीतापे कालसूत्रे परार्थहृत् । कश्मलेऽत्यन्तमांसाशी उग्रगन्धेह्यपिण्डदः ॥
दुर्द्धरे तु काचभक्षी वन्दिग्राहरताश्च ये । मञ्जुषे नरके लोहेऽप्रतिष्ठे श्रुतिनिन्दकः ॥
पूतिवक्त्रे कूटसाक्षी परिलुण्ठे धनापहा । बालस्त्रीवृद्धघाती च कराले ब्राह्मणार्त्तिकृत्

विलेपे मद्यपो विप्रो महाताम्रे तु भेदिनः ॥ २० ॥
तथाक्रस्य पारदारान् ज्वलन्तीमायसीं शिलाम् ।
शाल्मलाख्ये तमालिङ्गेन् नारी बहुनरङ्गमा ॥ २१ ॥

आस्फोटजिह्वाद्धरणंस्त्रीक्षणान् नेत्रभेदनम् । अङ्गारराशीक्षिप्यन्तेमातृपुत्र्यादिगामिनः

चौराः क्षुरैश्च भिद्यन्ते स्वमांसाशी च मांसभुक् ।

मासोपवासकर्त्ता वै न याति नरकं नरः । एकादशीव्रतकरो भीष्मपञ्चकसद्व्रती ॥

इत्यादिमहापुराणेआग्नेयेनरकस्वरूपवर्णनंनामत्र्यधिकद्विशततमोऽध्यायः ।

---

## चतुरधिकद्विशततमोऽध्यायः

### मासोपवासव्रतम् ।

अग्निरुवाच ।

व्रतं मासोपवासञ्च सर्वोत्कृष्टं वदामि ते । कृत्वा तु वैष्णवं यज्ञं गुरोराज्ञामवाप्य च

कृच्छ्राद्यैः स्वबलं बुद्ध्वा कुर्य्यान् मासोपवासकम् ।
वानप्रस्थो यतिर्वाथ नारी वा विधवा मुने ! ॥ २ ॥

अश्विनश्यामले पक्षे एकादश्यामुपोषितः। व्रतमेतत् तु गृह्णीयाद् यावत् त्रिंशद्दिनानितु

अद्यप्रभृत्यहं विष्णो ! यावदुत्थानकं तव।

अर्चये त्वामनश्नन् हि यावत् त्रिंशद्दिनानि तु ॥ ४ ॥

कार्त्तिकाश्विनयोर्विष्णोर्यावदुत्थानकं तव। म्रियेयद्यन्तरालेऽहं व्रतभङ्गो न मे भवेत्

त्रिकालं पूजयेद् विष्णुं त्रिस्नातो गन्धपुष्पकैः।

विष्णोर्गीतादिकं जप्यन्ध्यानं कुर्य्याद् व्रती नरः ॥ ६ ॥

वृथावादं परिहरेदर्थाकाङ्क्षां विवर्जयेत्।

नाव्रतस्थं स्पृशेत् कश्चिद् विकर्मस्थान्न चालपेत् ॥ ७ ॥

देवतायतने तिष्ठेद् यावत् त्रिंशद्दिनानि तु ॥

द्वादश्यां पूजयित्वा तु भोजयित्वा द्विजान् व्रती ॥ ८ ॥

समाप्य दक्षिणां दत्त्वा पारणन्तु समाचरेत्। भुक्तिमुक्तिमवाप्नोति कल्पांश्चैवत्रयोदश

कारयेद् वैष्णवं यज्ञं यजेद्विप्रांस्त्रयोदश। तावन्ति वस्त्रयुग्मानि भाजनान्यासनानिच

छत्राणि सपवित्राणि तथोपानद्युगानि च। योगपट्टोपवीतानि दद्याद् विप्रायतैर्मतः

अन्यविप्राय शय्यायां हैमंविष्णुं प्रपूज्य च। आत्मनश्च तथामूर्त्तिं वस्त्राद्यैश्च प्रपूजयेत्

सर्वपापविनिर्मुक्तो विप्रोविष्णुप्रसादतः। विष्णुलोकं गमिष्यामि विष्णुरेवभवाम्यहम्

व्रज व्रज देवबुद्धे ! विष्णोः स्थानमनामयम्।

विमानेनामलस्तत्र तिष्ठेद् विष्णुस्वरूपधृक् ॥ १४ ॥

द्विजानुक्त्वाथ तां शय्यांगुरवेऽथनिवेदयेत्। कुलानां शतमुद्धृत्यविष्णुलोकन्नयेद्व्रती

मासोपवासी यद्देशे स देशो निर्मलो भवेत्। किं पुनस्तत् कुलंसर्वंयत्रमासोपवासकृत्

व्रतस्थं मूर्च्छितं दृष्ट्वा क्षीराज्यञ्चैव पाययेत्। नैतेव्रतं विनिघ्नन्तिहविर्विप्रानुमोदितम्

क्षीरं गुरोर्हितौषध्य आपो मूलफलानि च।

विष्णुर्महौषधं कर्त्ता व्रतमस्मात् समुद्धरेत् ॥ १८ ॥

इत्यादिमहापुराणेआग्नेयेमासोपवासव्रतवर्णनंनामचतुरधिकद्विशततमोऽध्यायः

---

# पञ्चाधिकद्विशततमोऽध्यायः

## भीष्मपञ्चकव्रतम् ।

अग्निरुवाच ।

भीष्मपञ्चकमाख्यास्ये व्रतराजन्तु सर्वदम् । कार्त्तिकस्यामले पक्षे एकादश्यांसमाचरेत्
दिनानि पञ्च त्रिःस्नायी पञ्चव्रीहितिलैस्तथा ।
तर्पयेद् देवपित्रादीन् मौनी सम्पूजयेद्धरिन् ॥ २ ॥
पञ्चगव्येन संस्नाप्य देवपञ्चामृतेन च। चन्दनाद्यैः समालिप्य गुग्गुलं सघृतं दहेत् ॥
दीपं दद्याद् दिवारात्रौ नैवेद्यं परमान्नकम् ।
ओं नमो वासुदेवाय जपेदष्टोत्तरं शतम् ॥ ४ ॥
जुहुयाच्च घृताभ्यक्तां स्तिलव्रीहिंस्ततो व्रती ।
षड़क्षरेण मन्त्रेण स्वाहाकारान्वितेन च ॥ ५ ॥
कमलैः पूजयेत् पादौ द्वितीये बिल्वपत्रकैः । जानु सक्थितृतीयेऽथ नाभिं भृङ्गरजेन तु
वाणविल्वजवाभिस्तु चतुर्थे पञ्चमेऽहनि ।
मालत्या भूमिशायी स्यादेकादश्यान्तु गोमयम् ॥ ७ ॥
गोमूत्रं दधि दुग्धञ्च पञ्चमे पञ्चगव्यकम् ।
पौर्णमास्यांञ्चरेन्नक्तं भुक्तिमुक्ति लभेद् व्रती ॥ ८ ॥
भीष्मः कृत्वा हरिं प्राप्तस्तेनैव भीष्मपञ्चकम् । ब्रह्मणः पूजनाद्यैश्च उपवासादिकंव्रतम्

इत्यादिमहापुराणेआग्नेयेभीष्मपञ्चकव्रतवर्णनंनामपञ्चाधिकद्विशततमोऽध्यायः ।

---

# षडधिकद्विशततमोऽध्यायः

## अगस्त्यार्घ्यदानकथनम्

अग्निरुवाच ।

अगस्त्यो भगवान् विष्णुस्तमभ्यर्च्याप्नुयाद्धरिम् ।
अप्राप्ते भास्करे कन्यां सत्रिभागैस्त्रिभिर्दिनैः ॥ १ ॥
अर्घ्यं दद्यादगस्त्याय पूजयित्वा ह्युपोषितः । काशपुष्पमयीं मूर्त्ति प्रदोषे विन्यसेद्घटे
मुनेर्यजेत् तां कुम्भस्थां रात्रौ कुर्य्यात् प्रजागरम् ।
अगस्त्य ! मुनिशार्दूल ! तेजोराशे ! महामते ! ॥ ३ ॥
इमां मम कृतां पूजां गृह्णीष्व प्रियया सह ।
आवाह्यार्घ्यं च साम्मुख्यं प्रार्च्चयेच्चन्दनादिना ॥ ४ ॥
जलाशयसमीपे तु प्रातर्नीत्वार्घ्यमर्पयेत् । काशपुष्पप्रतीकाश ! अग्निमारुतसम्भव ॥
मित्रावरुणयोः पुत्र! कुम्भयोने! नमोऽस्तु ते । आतापिर्भक्षितोयेन वातापिश्च महासुरः
समुद्रः शोषितो येन सोऽगस्त्यः सम्मुखोऽस्तु मे ।
अगस्ति प्रार्थयिष्यामि कर्मणा मनसा गिरा ॥ ७ ॥
अर्चयिस्याम्यहं मैत्रं परलोकाभिकाङ्क्षया । द्वीपान्तर समुत्पन्नं देवानां परमंप्रियम्॥
राजानं सर्ववृक्षाणां चन्दनं प्रतिगृह्यताम् । धर्मार्थकाममोक्षाणां भाजनी पापनाशनी
सौभाग्यारोग्यलक्ष्मीदा पुष्पमालाप्रगृह्यताम् । धूपोऽयं गृह्यतांदेव! भक्तिं मे ह्यचलाङ्कुरु
इप्सितं मे वरं देहि परत्र च शुभां गतिम् । सुरासुरैर्मुनिश्रेष्ठ ! सर्वकामफलप्रदम् !
वस्त्रव्रीहिफलैर्हेम्ना दत्तस्त्वर्घ्यो ह्ययम् मया !
अगस्त्यं बोधयिष्यामि यन्मया मनसोद्धृतम् ॥ १२ ॥
फलैरर्घ्यं प्रदास्यामि गृहाणार्घ्यं महामुने ! ।
अगस्त्य एवं खनमानः खनित्रैः प्रजामपत्यं बलमीहमानः ।

उभौ कर्णावृषिरुग्रतेजाः पुपोष सत्या देवेष्वाशिषो जगाम ॥ १३ ॥
राजपुत्रि ! नमस्तुभ्यं मुनिपत्नि ! महाव्रते ।
अर्घ्यं गृह्णीष्व देवेशि ! लोपामुद्रे ! यशस्विनी ! ॥ १४ ॥
पञ्चरत्नसमायुक्तं हेमरूप्यसमन्वितम् । सप्तधान्यवृतं पात्रं दधिचन्दनसंयुतम् ॥१५॥
अर्घ्यं दद्यादगस्त्याय स्त्रीशूद्राणामवैदिकम् ।
अगस्त्य ! मुनिशार्दूल ! तेजोराशे ! च सर्वद ! ॥ १६ ॥
इमां मम कृतां पूजां गृहीत्वा व्रज शान्तये । त्यजेदगस्त्यमुद्दिश्य धान्यमेकं फलंरसम्
ततोऽन्नं भोजयेद् विप्रान् घृतपायसमोदकान् ।
गां वासांसि सुवर्णञ्च तेभ्यो दद्याच्च दक्षिणाम् ॥ १८ ॥
घृतपायसयुक्तेन पात्रेणाच्छादिताननम् । सहिरण्यञ्च तं कुम्भं ब्राह्मणायोपकल्पयेत्
सप्तवर्षाणि दत्त्वार्घ्यं सर्वेसर्वमवाप्नुयुः । नारी पुत्रांश्च सौभाग्यं पतिं कन्यानृपोद्भवम्
इत्यादिमहापुराणेआग्नेयेअगस्त्यार्घ्यदानकथनंनामषडधिकद्विशततमोऽध्याय ः।

---

# सप्ताधिकद्विशततमोऽध्यायः

## कौमुदव्रतम्

### अग्निरुवाच ।

कौमुदाख्यं मयोक्तञ्च चरेदाश्वयुजे सिते । हरिं यजेन् मासमेकमेकादश्यामुपोषितः ॥
आश्विने शुक्लपक्षेऽहमेकाहारो हरिं जपन् । मासमेकं भुक्तिमुक्त्यै करिष्येकौमुदंव्रतम्
उपोष्य विष्णुं द्वादश्यां यजेद् देवं विलिप्य च ।
चन्दनागुरुकाश्मीरैः कमलोत्पलपुष्पकैः ॥ ३ ॥
कह्लारैर्वाथ मालत्या दीपं तैलेन वाग्यतः । अहोरात्रञ्च नैवेद्यं पायसापूपमोदकैः ॥४॥
ओं नमो वासुदेवाय विज्ञाप्याथ समापयेत् । भोजनादि द्विजेदद्याद्यावद्देवःप्रबुद्धयते

तावन्मासोपवासः स्यादधिकं फलमप्यतः ॥ ५ ॥
इत्यादिमहापुराणेआग्नेयेकौमुदव्रतवर्णनंनामसप्ताधिकद्विशततमोऽध्यायः ।

———

# अष्टाधिकद्विशततमोऽध्यायः

## व्रतदानादिसमुच्चयः ।

अग्निरुवाच ।

व्रतदानानि सामान्यं प्रवदामि समासतः । तिथौ प्रतिपदादौ च सूर्य्यादौकृत्तिकासु च
विषकुम्भादौ च मेषादौ काले च ग्रहणादिके ।
यत् काले यद्व्रतं दानं यद्द्रव्यं नियमादि यत् ॥ २ ॥
तद्द्रव्याख्यञ्चकालाख्यंसर्वंवैविष्णुदैवतम् । रवीशब्रह्मलक्ष्म्याद्याःसर्वेविष्णोर्विभूतयः
तमुद्दिश्य व्रतंदानं पूजादिस्यात् तु सर्वदम् । जगत्पते! समागच्छ आसनंपाद्यमर्घ्यकम्
मधुपर्कं तथाचामं स्नानं वस्त्रञ्च गन्धकम् । पुष्पं धूपश्च दीपश्च नैवेद्यादि नमोऽस्तुते
इति पूजाव्रते दाने दानवाक्यं समं शृणु । अद्यामुक सगोत्राय विप्रायामुकशर्मणे ॥
एतद् द्रव्यं विष्णु दैवं सर्वपापोपशान्तये । आयुरारोग्यवृद्ध्यर्थं सौभाग्यादिविवृद्धये
गोत्रसन्ततिवृद्ध्यर्थं विजयाय धनाय च । धर्मायैश्वर्य्यकामाय तत्पापशमनाय च ॥
संसारमुक्तये दानन्तुभ्यं सम्प्रददे ह्यहम् । एतद्दानप्रतिष्ठार्थं तुभ्यमेव ददाम्यहम् ॥ ६ ॥
एतेन प्रीयतां नित्यं सर्वलोकपतिः प्रभुः । यज्ञदानव्रतपते ! विद्याकीर्त्त्यादि देहि मे
धर्मकामार्थमोक्षांश्च देहि मे मनसेप्सितम् । यः पठेच्छृणुयान्नित्यं व्रतदानसमुच्चयम्
सम्प्राप्तकामोविमलोभुक्तिमुक्तिमवाप्नुयात् । तिथिवारर्क्षसङ्क्रान्तियोगमन्वादिकंव्रतम्
नैकधा वासुदेवादेर्नियमात् पूजनाद् भवेत् ॥ १२ ॥
इत्यादिमहापुराणे आग्नेयेव्रतदानादिसमुच्चयवर्णनंनामाष्टाधिकद्विशततमोऽध्यायः ।

———

# नवाधिकद्विशततमोऽध्यायः

## दानपरिभाषाकथनम् ।

अग्निरुवाच ।

दानधर्मान् प्रवक्ष्यामि भुक्तिमुक्तिप्रदान् शृणु ।
दानामिष्टं तथा पूर्त्तं धर्मं कुर्वन् हि सर्वभाक् ॥ १ ॥
वापीकूपतडागानि देवतायतनानि च । अन्नप्रदानमारामाः पूर्त्तं धर्मं च मुक्तिदम् ॥
अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम् । आतिथ्यं वैश्वदेवञ्च प्राहुरिष्टञ्चनाकदम्
ग्रहोपरागे यद्दानं सूर्य्यसङ्क्रमणेषु च । द्वादश्यादौ च यद्दानं पूर्त्तं तदपि नाकदम् ॥
देशे काले च पात्रे च दानं कोटिगुणं भवेत् ।
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ॥ ५ ॥
युगादिषु च सङ्क्रान्तौ चतुर्दश्यष्टमीषु च । सितपञ्चदशीसर्वं द्वादशीष्वष्टकासु च
यज्ञोत्सवविवाहेषु तथा मन्वन्तरादिषु । वैधृते दृष्टदुःस्वप्ने द्रव्यब्राह्मणलाभतः ॥ ७ ॥
श्रद्धा वा यद्दिने तत्र सदा वा दानमिष्यते । अयने द्वे विषुवे द्वे चतस्रः षड़शीतयः ॥
चतस्रो विष्णुपद्यश्च सङ्क्रान्त्यो द्वादशोत्तमाः । कन्यायांमिथुनेमीनेधनुष्यपिरवेर्गतिः
षड़शीतिमुखाः प्रोक्ताः षड़शीतिगुणाः फलैः । अतीतानागते पुण्ये द्वे उदग्दक्षिणायने
त्रिंशत् कर्कटके नाड्यो मकरेविंशतिः स्मृताः ।
वर्त्तमाने तुलामेषे नाड्यास्तूभयतो दश ॥ ११ ॥
षड़शीत्यां व्यतीतायां षष्टिरुक्तास्तु नाड़िकाः ।
पुण्याख्या विष्णुपद्याञ्च प्राक्पश्चादपि षोड़श ॥ १२ ॥
श्रवणाश्विधनिष्ठासु नागदैवतमस्तके ।
यदा स्याद्रविवारेण व्यतीपातः स उच्यते ॥ १३ ॥
नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात् कृतम् । त्रेता सिततृतीयायां वैशाखे द्वापरंयुगम्

दर्शे वै माघमासस्य त्रयोदश्यां नभस्यके। कृष्णेकलिं विजानीयाज् ज्ञेया मन्वन्तरादयः
अश्वयुकच्छुक्लनवमी द्वादशी कार्त्तिकेतथा। तृतीयाचैव माघस्य तथा भाद्रपदस्यच

फाल्गुनस्याप्यमावास्या पौषस्यैकादशी तथा।
आषाढ़स्यापि दशमी माघमासस्य सप्तमी॥ १७॥
श्रावणे चाष्टमी कृष्णा तथाषाढ़े च पूर्णिमा।
कार्त्तिके फाल्गुने तद्वज् ज्यैष्ठे पञ्चदशी तथा॥ १८॥
ऊर्ध्वे चैवाग्रहायण्या अष्टकास्तिस्र ईरिताः।
अष्टकाख्या चाष्टमी स्यादासुदानानि चाक्षयम्॥ १६॥

गयागङ्गाप्रयागादि तीर्थे देवालयादिषु। अप्रार्थितानि दानानि विद्यार्थं कन्यका न हि
दद्यात् पूर्वमुखो दानं गृह्नियादुत्तरामुखः। आयुर्विवर्द्धते दातुर्ग्रहीतुः क्षीयते न ततः॥

नाम गोत्रं समुच्चार्य्य सम्प्रदानस्य चात्मनः॥
सम्प्रदेयं प्रयच्छन्ति कन्यादाने पुनस्त्रयम्॥ २२॥
स्नात्वाभ्यर्च्च्य व्याहृतिभिर्दद्याद् दानन्तु सोदकम्।
कनकाश्वतिला नागा दासीरथमहीगृहाः॥ २३॥

कन्या च कपिला धेनुर्महादानानि वै दश। श्रुतशौर्य्यतपः कन्यायाज्यशिष्यादुपागतम्
शुल्कं धनं हि सकलं शुल्कं शिल्पानुवृत्तितः। कुशीदकृषिवाणिज्यप्राप्तं यदुपकारतः

पाशकद्यूतचौर्य्यादि प्रतिरूपकसाहसैः।
व्याजेनोपार्जितं कृत्स्नं त्रिविधं त्रिविधं फलम्॥ २६॥

अध्यग्न्यध्यावाहनिकं दत्तञ्चप्रीतिकर्मणी। भ्रातृमातृपितृप्राप्तं षड्विधंस्त्रीधनंस्मृतम्
ब्रह्मक्षत्रविशां द्रव्यं शूद्रस्यैषामनुग्रहात्। बहुभ्यो न प्रदेयानि गौर्गृहं शयनंस्त्रियः
कुलानान्तु शतं हन्यादप्रयच्छन् प्रतिश्रुतम्। देवानाञ्च गुरूणाञ्च मातापित्रोस्तथैव च
पुण्यं देयं प्रयत्नेन यत् पुण्यञ्चार्जितं क्वचित्। प्रतिलाभेच्छयादत्तं यद्धनं तदपार्थकम्
श्रद्धया साध्यते धर्मो दत्तं वार्य्यपि चाक्षयम्। ज्ञानशीलगुणोपेतः परपीड़ाबहिष्कृतः

अज्ञानां पालनात् त्राणात् तत् पात्रं परमं स्मृतम्।

मातुः शतगुणं दानं सहस्रं पितुरुच्यते ॥ ३२ ॥

अनन्तं दुहितुर्दानं सोदर्य्ये दत्तमक्षयम् । अमनुष्ये समं दानं पापे ज्ञेय महोफलम् ॥

वर्णशङ्करे द्विगुणं शूद्रे दानं चतुर्गुणम् । वैश्ये चाष्टगुणं क्षत्रे षोड़शत्वं द्विजब्रुवे॥३४॥

वेदाध्याये शतगुणमनन्तं वेदबोधके । पुरोहिते याजकादौ दानमक्षयमुच्यते ॥ ३५ ॥

श्रीविहीनेषु यद् दत्तं तदनन्तं च यज्वनि । अतपस्व्यनधीयानः प्रतिग्रहरुचिर्द्विजः ॥

अम्भस्यश्मप्लवेनैव सह तेनैव मज्जति ॥

स्नातः सम्यगुपस्पृश्य गृह्णीयात् प्रयतः शुचिः ॥ ३७ ॥

प्रतिग्रहीता सावित्रीं सर्वदैव प्रकीर्त्तयेत् । ततस्तु कीर्त्तयेत् सार्द्धं द्रव्येण सह दैवतम्

प्रतिग्राहीपठेदुच्चैः प्रतिगृह्यद्विजोत्तमात् । मन्दंपठेत् क्षत्रियात् तु उपांशुच तथाविशः

मनसा च तथा शूद्रात् स्वस्तिवाचनकं तथा । अभयं सर्वदैवत्यं भूमिर्वै विष्णुः देवता

कन्या दासस्तथा दासी प्राजापत्याः प्रकीर्त्तिताः ।

प्राजापत्यो गजः प्रोक्तस्तुरगो यमदैवतः ॥ ४१ ॥

तथा चैकशफं सर्वं याम्यश्च महिषस्तथा ॥

उष्ट्रश्च नैर्ऋतो धेनू रौद्री छागोऽनलस्तथा ॥ ४२ ॥

आप्यो मेषो हरिः क्रीड़ आरण्याः पशवोऽनिलाः ।

जलाशयं वारुणं स्याद् वारिधानी घटादयः ॥ ४३ ॥

समुद्रजानि रत्नानि हेमलौहानि चानलः । प्राजापत्यानि शस्यानि पक्वान्नमपि सत्तमम्

गान्धर्वं गन्धमित्याहुर्वस्त्रं वार्हस्पतं स्मृतम् ।

वायव्याः पक्षिणःसर्वे विद्या ब्राह्मी तथाङ्गकाम् ॥ ४५ ॥

सारस्वतं पुस्तकादि विश्वकर्मा तु शिल्पके । वनस्पतिर्द्रुमादीनां द्रव्यदेवा हरेस्तनुः

छत्रं कृष्णाजिनं शय्या रथ आसनमेव च ॥

उपनाहौ तथा यानमुत्तानाङ्गिर ईरितम् ॥ ४७ ॥

रणोपकरणं शस्त्रं ध्वजाद्यं सर्वदैवतम् । गृहश्च सर्वदैवत्यं सर्वेषां विष्णुदेवता ॥४८॥

शिवो वा न ततो द्रव्यं व्यतिरिक्तं यतोऽस्ति हि ।

द्रव्यस्य नाम गृह्णीयाद् ददानीति तथा वदेत् ॥ ४९ ॥
तोयं दद्यात् ततो हस्ते दाने विधिरयं स्मृतः ।
विष्णुर्दाता विष्णुर्द्रव्यं प्रतिगृह्णामि वै वदेत् ॥ ५० ॥
स्वस्ति प्रतिग्रहं धर्मं भुक्तिमुक्ति फलद्वयम् ।
गुरून् भृत्यान् न जिहीर्षुरर्चिष्यन् देवताः पितॄन् ॥ ५१ ॥
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयं ततः । शूद्रीयं न तु यज्ञार्थं धनंशूद्रस्य तत्फलम्
गुड़तक्ररसाद्याश्च शूद्राद् ग्राह्या निवर्त्तिना ।
सर्वतः प्रतिगृह्णीयादवृत्त्याकर्षितो द्विजः ॥ ५३ ॥
नाध्यापनाद् याजनाद् वा गर्हिताद् वा प्रतिग्रहात् ।
दोषो भवति विप्राणां ज्वलनार्कसमाहिते ॥ ५४ ॥
कृते तु दीयते गत्वा त्रेतास्वानीय दीयते । द्वापरे याचमानाय कलौ त्वनुगमान्विते
मनसा पात्रमुद्दिश्य जलंभूमौ विनिक्षिपेत् । विद्यतेसागरस्यान्तो नान्तोदानस्यविद्यते
अद्य सोमार्कग्रहण सङ्क्रान्त्यादौ च कालके ।
गङ्गागयाप्रयागादौ तीर्थदेशे महागुणे ॥ ५७ ॥
तथा चामुकगोत्राय तथा चामुकशर्मणे । वेदवेदाङ्गयुक्ताय पात्राय सुमहात्मने ॥ ५८॥
यथानाम महाद्रव्यं विष्णुरुद्रादिदैवतम् । पुत्रपोत्रगृहैश्वर्य्यं पत्नीधर्मार्थसद्गुणा ॥
कीर्त्तिविद्यामहाकाम सौभाग्यारोग्यवृद्धये ।
सर्वपापोपशान्त्यर्थं स्वर्गार्थं भुक्तिमुक्तये ॥ ६० ॥
एतत् तुभ्यं सम्प्रददे प्रीयतां मे हरिः शिवः ।
दिव्यान्तरीक्षभौमादि समुत्पातौघ घातकृत् ॥ ६१ ॥
धर्मार्थकाममोक्षाप्त्यै ब्रह्मलोकप्रदोऽस्तु मे । यथानामसगोत्राय विप्रायामुकशर्मणे ॥
एतद्दानप्रतिष्ठार्थं सुवर्णं दक्षिणां ददे । अनेन दानवाक्येन सर्वदानानि वै ददेत् ॥६२॥
इत्यादिमहापुराणे आग्नेये दानपरिभाषाकथनं नाम नवाधिकद्विशततमोऽध्यायः ।

———

# दशाधिकद्विशततमोऽध्यायः

## महादानानि ।

अग्निरुवाच ।

सर्वदानानि वक्ष्यामि महादानानि षोड़श । तुलापुरुष आद्यन्तु हिरण्यगर्भदानकम् ॥
ब्रह्माण्डं कल्पवृक्षश्च गोसहस्रञ्च पञ्चमम् । हिरण्यकामधेनुश्च हिरण्याश्वश्च सप्तमम् ॥
हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा । पञ्चलाङ्गलकन्तद्वद्धरादानं तथैव च ॥ ३ ॥
विश्वचक्रं कल्पलता सप्तसागरकं परम् । रत्नधेनुर्महाभूत घटः शुभदिनेऽर्पयेत् ॥ ४ ॥

मण्डपे मण्डले दानं देवान् प्राच्यार्पयेद् द्विजे ।
मेरुदानानि पुण्यानि मेरवो दश तान् शृणु ॥ ५ ॥

धान्यद्रोणसहस्रेण उत्तमोऽर्द्धार्द्धतः परौ । उत्तमः षोड़शद्रोणः कर्त्तव्यो लवणाचलः

दशभारैर्गुड़ाद्रिः स्यादुत्तमोऽर्द्धार्द्धतः परौ ।
उत्तमः पलसाहस्रैः स्वर्णमेरुस्तथा परौ ॥ ७ ॥
दशद्रोणैस्तिलाद्रिः स्याद् पञ्चभिश्च त्रिभिः क्रमात ।
कार्पासपर्वतो विंशभारैश्च दशपञ्चभिः ॥ ८ ॥

विंशत्या घृतकुम्भानामुत्तमः स्याद् घृताचलः । दशभिः पलसाहस्रैरुत्तमो रजताचलः

अष्टभारैः शर्कराद्रिर्मध्यो मन्दोऽर्द्धतोऽर्द्धतः ।
दश धेनूः प्रवक्ष्यामि या दत्त्वा भुक्तिमुक्तिभाक् ॥ १० ॥

प्रथमा गुड़धेनुः स्याद् घृतधेनुस्तथाऽपरा । तिलधेनुस्तृतीया च चतुर्थी जलधेनुका
क्षीरधेनुर्मधुधेनुः शर्करादधिधेनुके । रसधेनुः स्वरूपेण दशमी विधिरुच्यते ॥ १२ ॥

कुम्भाः स्युर्द्रवधेनूनामितरासान्तु राशयः ।
कृष्णाजिनञ्चतुर्हस्तं प्राग्ग्रीवं विन्यसेद् भुवि ॥ १३ ॥

गोमयेनानुलिप्तायां दर्भानास्तीर्य्य सर्वतः । लघ्वैणकाजिनं तद्वद् वत्सस्यपरिकल्पयेत्

प्राङ्मुखीं कल्पयेद्धेनुमुदक्पादांसवत्सकाम् । उत्तमागुडधेनुःस्यात्सदाभारचतुष्टयात्

वत्सं भारेण कुर्वीत भाराभ्यां मध्यमा स्मृता ।

अर्द्धभारेण वत्सः स्यात् कनिष्ठा भारकेण तु ॥ १६ ॥

चतुर्थांशेन वत्सः स्याद्गुडवित्तानुसारतः । पञ्च कृष्णलकामाषस्ते सुवर्णस्तु षोड़श

पलं सुवर्णाश्चत्वारस्तुला पलशतं स्मृतम् ।

स्याद् भारो विंशतितुला द्रोणस्तु चतुराढ़कः ॥ १८ ॥

धेनुवत्सौगुड़स्योभौ सितसूक्ष्माम्बरावृतौ । शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ

सितसूत्रशिरालौ च सितकम्बलकम्बलौ । ताम्रगड्डुकपृष्ठौ तौ सितचामररोमकौ

विद्रुमभ्रू युगावेतो नवनीतस्तनान्वितौ ।

क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ ॥ २१ ॥

सुवर्णशृङ्गाभरणौ रजतक्षुरसंयुतौ । नानाफलमया दन्तौ गन्धघ्राण प्रकल्पितौ ॥२२॥

रचयित्वा यजेद्धेनुमिमैर्मन्त्रैर्द्विजोत्तम ! । या लक्ष्मीः सर्वभूतानां याच देवेष्ववस्थिता

धेनुरूपेण सा देवी मम शान्ति प्रयच्छतु । देहस्था या च रुद्राणी शङ्करस्य सदा प्रिया

धेनुरूपेण सा देवी मम पापं व्यपोहतु ।

विष्णुवक्षसि या लक्ष्मीः स्वाहा या च विभावसोः ॥ २५ ॥

चन्द्रार्कऋक्षशक्तिर्या धेनुरूपास्तु सा श्रिये । चतुर्मुखस्यया लक्ष्मीर्यालक्ष्मीर्धनदस्य च

लक्ष्मीर्या लोकपालानांसाधेनुर्वरदास्तु मे । स्वधात्वं पितृमुख्यानांस्वाहायज्ञभुजांयतः

सर्वपापहरा धेनुस्तस्माच्छान्ति प्रयच्छ मे । एवमामन्त्रितां धेनुं ब्राह्मणाय निवेदयेत्

समानं सर्वधेनूनां विधानं चैतदेव हि । सर्वयज्ञफलं प्राप्य निर्मलो भुक्तिमुक्तिभाक्

स्वर्णशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुक्ता ।

कांस्योपदोहादातव्या क्षीरिणी गौः सदक्षिणा ॥ ३० ॥

दातास्याः स्वर्गमाप्नोति वत्सरान् रोमसम्मितान् ।

कपिला चेत्तारयति भूयश्चासप्तमं कुलम् ॥ ३१ ॥

स्वर्णशृङ्गी रौप्यखुरां कांस्यदोहनकान्विताम् ।

शक्तितो दक्षिणायुक्तां दत्त्वा स्याद् भुक्तिमुक्तिभाक् ॥ ३२ ॥
सवत्सरोमतुल्यानि युगान्युभयतोमुखीम् । दत्त्वा स्वर्गमवाप्नोति पूर्वेणविधिनाददेत्
आसन्नमृत्युना देया सवत्सा गौस्तु पूर्ववत् । यमद्वारे महाघोरे तप्ता वैतरणी नदी ॥
तां तर्त्तुञ्च ददाम्येनां कृष्णां वैतरणीञ्च गाम् ॥ ३४ ॥
इत्यादिमहापुराणेआग्नेये महादानवर्णनंनामदशाधिकद्विशततमोऽध्यायः ।

---

# एकादशाधिकद्विशततमोऽध्यायः

## नानादानानि ।

अग्निरुवाच ।

एकाङ्गां दशगुर्दद्याद् दश दद्याच्च गोशती । शतं सहस्रगुर्दद्यात् सर्वे तुल्यफला हि ते
प्रासादा यत्र सौवर्णा वसोर्धारा च यत्र सा । गन्धर्वाप्सरसोयत्र तत्रयान्ति सहस्रदाः
गवां शतप्रदानेन मुच्यते नरकार्णवात् । दत्त्वा वत्सतरीं चैव स्वर्गलोके महीयते ॥
गोदानादायुरारोग्यसौभाग्यस्वर्गमाप्नुयात् । इन्द्रादिलोकपालानां या राजमहिषीशुभा
महिषीदानमाहात्म्यादस्तु मे सर्वकामदा। धर्मराजस्य साहाय्ये यस्याः पुत्रः प्रतिष्ठितः
महिषासुरस्य जननी या सास्तु वरदा मम ।
महिषीदानाच्च सौभाग्यं वृषदानाद् दिवं व्रजेत् ॥ ६ ॥
संयुक्तहलपङ्क्त्याख्यं दानं सर्वफलप्रदम् । पङ्क्तिर्दशहला प्रोक्ता दारुजा वृषसंयुता ॥
सौवर्णपट्टसन्नधान् दत्त्वा स्वर्गे महीयते । दशानां कपिलानान्तु दत्तानां ज्येष्ठपुष्करे
तत् फलञ्चाक्षयं प्रोक्तं वृषभस्य तु मोक्षणे । धर्मोसित्वञ्चतुष्पादश्चतस्रस्तेप्रियाइमाः
नमो ब्रह्मण्यदेवेश ! पितृभूतर्षिपोषक ! ।
त्वयि मुक्तेऽक्षया लोका मम सन्तु निरामयाः ॥ १० ॥
मा मे ऋणोऽस्तु दैवत्यो भौतः पैत्रोऽथ मानुषः ।

धमस्त्वं त्वत्प्रपन्नस्य या गतिः साऽस्तु मे ध्रुवा ॥ ११ ॥

अङ्कयेच्चक्रशूलाभ्यां मन्त्रेणानेन चोत्सृजेत् । एकादशाहे प्रेतस्य यस्य चोत्सृज्यतेवृषः
मुच्यतेप्रेतलोकात् तु षण्मासेचाब्दिकादिषु । दशहस्तेनकुण्डेनत्रिंशत्कुण्डान्निवर्त्तनम्

तान्येव दशविस्ताराद् गोचर्मो तत्प्रदोऽघभित् ।

गोभूहिरण्यसंयुक्तं कृष्णाजिनन्तु योऽर्पयेत् ॥ १४ ॥

सर्वदुष्कृतकर्मापि सायुज्यं ब्रह्मणोव्रजेत् । भाजनन्तिलसम्पूर्णं मधुना पूर्णमेव च ॥

दद्यात् कृष्णतिलानाञ्च प्रस्थमेकञ्च मागधम् ।

शय्यां दत्त्वा तु सगुणां भुक्तिमुक्तिमवाप्नुयात् ॥ १६ ॥

हैमीं प्रतिकृतिं कृत्वा दत्त्वा स्वर्गस्तथात्मनः ।

विपुलन्तु गृहं कृत्वा दत्त्वा स्याद् भुक्तिमुक्तिभाक् ॥ १७ ॥

गृहं मठं सभां स्वर्गी दत्त्वा स्याच्च प्रतिश्रयम् ।

दत्त्वा कृत्वा गोगृहञ्च निष्पापः स्वर्गमाप्नुयात् ॥ १८ ॥

यममाहिषदानात् तु निष्पापः स्वर्गमाप्नुयात् । ब्रह्मा हरो हरिर्देवैर्मध्ये च यमदूतकः

पाशी तस्य शिरश्छित्वा तं दद्यात् स्वर्गभाग् भवेत् ।

त्रिमुखाख्यमिदं दानं गृहीत्वा तु द्विजोऽघभाक् ॥ २० ॥

चक्रं रूपमयं कृत्वा के धृत्वा तत् प्रदापयेत् । हेमयुक्तं द्विजायैतत् कालचक्रमिदं महत्
आत्मतुल्यन्तु यो लौहं ददेन्न नरकं व्रजेत् । पञ्चापत्पलसंयुक्तं लौहदण्डन्तु योर्पयेत्
वस्त्रेणाच्छाद्य विप्राय यमदण्डो न विद्यते । मूलं फलादि वाद्रव्यं संहतंवाथ चैकशः

मृत्युञ्जयं समुद्दिश्य दद्यादायुर्विवर्द्धये ।

पुनाम् कृष्णतिलैः कार्य्यो रौप्यदन्तः सुवर्णदृक् ॥ २४ ॥

खड्गोद्यतकरो दीर्घो जवाकुसुममण्डलः । रक्ताम्बरधरः स्रग्वी शङ्खमालाविभूषितः ॥
उपानद्युगयुक्ताङ्घ्रिः कृष्णकम्बलपार्श्वकः । गृहीतमांसपिण्डश्च वामे वै कालपूरुषः॥
सम्पूज्य तञ्च गन्धाद्यैः ब्रह्मणायोपपादयेत् । मरणव्याधिहीनः स्याद्राजराजेश्वरो भवेत

गोवृषौ तु द्विजे दत्त्वा भुक्तिमुक्तिमवाप्नुयात् ।

रैवन्ताधिष्ठितश्चाश्वं हेमं दत्त्वा न मृत्यु भाक् ॥ २८ ॥
घण्टादिपूर्णमप्येकं दत्त्वा स्याद् भुक्तिमुक्तिभाक् ।
सर्वान् कामनवाप्नोति यः प्रयच्छति काञ्चनम् ॥ २९ ॥
सुवर्णे दीयमाने तु रजतं दक्षिणेष्यते । अन्येषामपि दानानं सुवर्णं दक्षिणा स्मृता ॥
सुवर्णं रजतं ताम्रं तण्डुलं धान्यमेव च । नित्यश्राद्धं देवपूजा सर्वमेतदद्‌दक्षिणम्॥३१॥
रजतं दक्षिणा पित्रे धर्मकामार्थसाधनम् ।
सुवर्णं रजतं ताम्रं मणिमुक्तावसूनि च ॥ ३२ ॥
सर्वमेतन्महाप्राज्ञो ददाति वसुधां ददत् । पितॄंश्च पितृलोकस्थान् देवस्थाने च देवताः
सन्तर्पयति शान्तात्मा यो ददाति वसुन्धराम् ।
खर्वटं खेटकं वापि ग्रामं वा शस्यशालिनम् ॥ ३४ ॥
निवर्त्तनशतं वापि तदर्द्धं वा गृहादिकम् ।
अपि गोचर्ममात्रांवा दत्त्वोर्वीं सर्वभाक् भवेत् ॥ ३५ ॥
तैलविन्दुर्यथा चाप्सु प्रसर्पेद् भूगतं तथा । सर्वेषामेवदानानामेकजन्मानुगं फलम् ॥
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् । त्रिसप्तकुलमुद्धृत्य कन्यादो ब्रह्मलोकभाक्
गजं सदक्षिणं दत्त्वा निर्मलः स्वर्गभाग् भवेत् ।
अश्वं दत्त्वायुरारोग्य सौभाग्य स्वर्गमाप्नुयात् ॥ ३८ ॥
दासीं दत्त्वा द्विजेन्द्राय अप्सरोलोकमाप्नुयात् ।
दत्त्वा ताम्रमयीं स्थालीं पलानां पञ्चभिः शतैः ॥ ३९ ॥
अर्द्धैस्तदर्द्धैरर्द्धैर्वा भुक्तिमुक्तिमवाप्नुयात् । शकटं वृषसंयुक्तं दत्त्वा यानेन नाकभाक्
वस्त्रदानाल्लभेदायुरारोग्यं स्वर्गमक्षयम् । धान्यगोधूमकलमयवादीन् स्वर्गभाग् ददत्
आसनं तैजसं पात्रं लवणं गन्धचन्दनम् । धूपं दीपञ्च ताम्बूलं लोहं रूप्यञ्च रत्नकम् ॥
दिव्यानि नानाद्रव्याणि दत्त्वा स्याद् भुक्तिमुक्तिभाक् ।
तिलांश्च तिलपात्रञ्च दत्त्वा स्वर्गमवाप्नुयात् ॥ ४३ ॥
अन्नदानात् परं नास्ति न भूतं न भविष्यति । हस्त्यश्वरथदानानि दासीदासगृहाणिच

अन्नदानस्य सर्वाणि कलां नार्हन्ति षोड़शीम् ।
कृत्वापि सुमहत् पापं यः पश्चादन्नदो भवेत् ॥ ४५ ॥
सर्वपापविनिर्मुक्तो लोकानाप्नोति चाक्षयान् ।
पानीयञ्च प्रपां दत्त्वा भुक्तिमुक्तिमवाप्नुयात् ॥ ४६ ॥
अग्निं काष्ठञ्च मार्गादौ दत्त्वा दीप्त्यादिमाप्नुयात् ।
देवगन्धर्वनारीभिर्विमाने सेव्यते दिवि ॥ ४७ ॥
घृतं तैलञ्च लवणं दत्त्वा सर्वमवाप्नुयात् । छत्रोपानहकाष्ठादि दत्त्वा स्वर्गे सुखीवसेत्
प्रतिपत् तिथिमुख्येषु विष्कुम्भादिकयोगके ।
चैत्रादौ वत्सरादौ च अश्विन्यादौ हरिं हरम् ॥ ४९ ॥
ब्रह्माणं लोकपालादीन् प्राच्र्च्य दानं महाफलम् ।
वृक्षारामान भोजनादीन् मार्गसंवाहनादिकान् । ॥ ५० ॥
पादाभ्यङ्गादिकं दत्त्वा भुक्तिमुक्तिमवाप्नुयात् ।
त्रीणि तुल्यफलानीह गावः पृथ्वी सरस्वती ॥ ५१ ॥
ब्राह्मीं सरस्वतीं दत्त्वा निर्मलो ब्रह्मलोकभाक् । सप्तद्वीपमहीदः स ब्रह्मज्ञानं ददाति यः
अभयं सर्वभूतेभ्यो यो दद्यात् सर्वभाङ् नरः । पुराणं भारतं वापि रामायणमथापि वा
लिखित्वा पुस्तकं दत्वा भुक्तिमुक्तिमवाप्नुयात् ।
वेदशास्त्रं नृत्यगीतं योऽध्यापयति नाकभाक् ॥ ५४ ॥
वित्तं दद्यादुपाध्याये छात्राणां भोजनादिकम् ।
किमदत्तं भवेत् तेन धर्मकामादिदर्शिना ॥ ५५ ॥
वाजपेयसहस्रस्य सम्यग्दत्तस्य यत्फलम् । तत्फलं सर्वमाप्नोति विद्यादानान्न संशयः
शिवालये विष्णुगृहे सूर्य्यस्य भवनेतथा । सर्वदानप्रदः स स्यात् पुस्तकंवाचयेत् तु यः
त्रैलोक्ये चतुरो वर्णाश्चत्वारश्चाश्रमाः पृथक् ।
ब्रह्माद्या देवताः सर्वा विद्यादाने प्रतिष्ठिताः ॥ ५८ ॥
विद्या कामदुधा धेनुर्विद्या चक्षुरनुत्तमम् । उपवेदप्रदानेन गन्धर्वैः सह मोदते ॥ ५९ ॥

वेदाङ्गानाञ्च दानेन स्वर्गलोकमवाप्नुयात्। धर्मशास्त्रप्रदानेन धर्मेण सह मोदते॥
सिद्धान्तानां प्रदानेन मोक्षमाप्नोत्यसंशयम्।
विद्यादानमवाप्नोति प्रदानात् पुस्तकस्य तु॥ ६१॥
शास्त्राणि च पुराणानि दत्त्वा सर्वमवाप्नुयात्।
शिष्यांश्च शिक्षयेद् यस्तु पुण्डरीकफलं लभेत्॥ ६२॥
येन जीवति तद्दत्त्वा फलस्यान्तोन विद्यते। लोके श्रेष्ठतमंसर्वमात्मनश्चापि यत्प्रियम्
सर्वं पितॄणां दातव्यं तेषामेवाक्षयार्थिना। विष्णुं रुद्रं पद्मयोनिं देवीविघ्नेश्वरादिकान्
पूजयित्वा प्रदद्याद् यः पूजाद्रव्यं स सर्वभाक्।
देवालयं च प्रतिमां कारयन् सर्वमाप्नुयात्॥ ६५॥
सम्मार्जनं चोपलेपंकुर्वन् स्यान्निर्मलःपुमान्। नानामण्डलकार्य्यग्रे मण्डलाधिपतिर्भवेत्
गन्धं पुष्पं धूपदीपं नैवेद्यञ्च प्रदक्षिणम्। घण्टाध्वजवितानञ्च प्रेक्षणं वाद्यगीतकम्॥
वस्त्रादि दत्त्वा देवाय भुक्तिमुक्तिमवाप्नुयात्।
कस्तूरिकां शिह्लकञ्च श्रीखण्डमगुरून्तथा॥ ६८॥
कर्पूरञ्चतथामुस्तं गुग्गुलुंविजयंददेत्। घृतप्रस्थेन संस्थाप्य सङ्क्रान्त्यादौ ससर्वभाक्
स्नानं पलशतं ज्ञेयमभ्यङ्गं पञ्चविंशतिः। पलानान्तु सहस्रेण महास्नानं प्रकीर्त्तितम्॥
दशापराधास्तोयेन क्षीरेण स्नापनाच्छतम्। सहस्रं पयसा दध्ना घृतेनायुतमिष्यते॥
दासीदासमलङ्कारं गोभूम्यश्वगजादिकम्।
देवाय दत्त्वा सौभाग्यं धनायुष्मान् व्रजेद् दिवम्॥ ७२॥

इत्यादि महापुराणे आग्नेये नानादानकथनं नामैकादशाधिकद्विशततमोऽध्यायः।

---

## द्वादशाधिकद्विशततमोऽध्यायः

### मेरुदानानि ।

अग्निरुवाच ।

काम्यदानानि वक्ष्यामि सर्वकामप्रदानि ते ।
नित्यपूजां मासिमासि कृत्वाथो काम्यपूजम् ॥ १ ॥

व्रतार्हणं गुरोः पूजा वत्सरान्ते महार्चनम् । अश्वं वै मार्गशिर्षे तु कमलं पिष्टसम्भवम्
शिवाय पूज्य यो दद्यात् सूर्य्यलोके चिरं वसेत् । गजं पौषेपिष्टमयं त्रिसप्तकुलमुद्धरेत्
माघे चाश्वरथं पैष्टं दत्त्वा न नरकं व्रजेत् । फाल्गुने तु वृषं पैष्टंस्वर्गभुक् स्यान्महीपतिः

चैत्रे चेक्षुमयीं गावं दासदासीसमन्विताम् ।
दत्त्वा स्वर्गे चिरं स्थित्वा तदन्ते स्यान्महीपतिः ॥ ५ ॥

सप्तव्रीहींश्च वैशाखे दत्त्वा शिवमयोभवेत् । बलिमण्डलकज्ञानैःकृत्वाषाढ़े शिवोभवेत्
विमानं श्रावणे पौष्पं दत्त्वास्वर्गी ततो नृपः । शतद्वयं फलानान्तुदत्त्वोद्धृत्य कुलंनृपः

गुग्गुलादि दहेद् भाद्रे स्वर्गी स स्यात् ततो नृपः ।
क्षीरसर्पिर्भृतं पात्रमाश्विने स्वर्गदं भवेत् ॥ ८ ॥
कार्त्तिके गुड़खण्डाज्यं दत्त्वा स्वर्गी ततो नृपः ।
मेरुदानं द्वादशकं वक्ष्यऽहं भुक्तिमुक्तिदम् ॥ ६ ॥

मेरुव्रते तु कार्त्तिक्यां रत्नमेरुं ददेद् द्विजे । सर्वेषाञ्चैव मेरूणां प्रमाणं क्रमशः शृणु ॥
वज्रपद्ममहानीलनीलस्फटिकसंज्ञितः । पुष्पं मरकतं मुक्ता प्रस्थमात्रेण चोत्तमः ॥

मध्योऽर्द्धः स्यात् तदर्द्धोऽधो वित्तशाठ्यं विवर्जयेत् ।
कर्णिकायां न्यसेन् मेरुं ब्रह्मविष्णीशतैवतम् ॥ १२ ॥

माल्यवान् पूर्वतः पूज्यस्तत्पूर्वे भद्रसञ्ज्ञितः । अश्वरक्षस्ततः प्रोक्तो निषधो मेरुदक्षिणे
हेमकूटोऽथ हिमवान् त्रयं सौम्ये तथा त्रयम् । नीलःश्वेतश्च शृङ्गी च पश्चिमेगन्धमादनः

वैकङ्कः केतुमालः स्यान् मेरुर्द्वादशसंयुतः ।
सोपवासोऽर्चयेद् विष्णुं शिवं वा स्नानपूर्वकम् ॥ १५ ॥
देवाग्रे चार्च्य मेरुञ्च मन्त्रैर्विप्राय वै ददेत् । विप्रायामुकगोत्राय मेरुन्द्रव्यमयं परम् ॥
भुक्त्यै मुक्त्यै निर्मलत्वे विष्णुदैवं ददामि ते । इन्द्रलोके ब्रह्मलोके शिवलोके हरेः पुरे ॥
कुलमुद्धृत्य क्रीड़ेत विमाने देवपूजितः ।
अन्येष्वपि च कालेषु सङ्क्रान्त्यादौ प्रदापयेत् ॥ १८ ॥
पलानान्तु सहस्रेण हेममेरुं प्रकल्पयेत् । श्रृङ्गत्रयसमायुक्तं ब्रह्मविष्णुहरान्वितम् ॥
एकैकं पर्वतं तस्य शतैकैकेन कारयेत् । मेरुणा सह शैलास्तु ख्यातास्तत्र त्रयोदश ॥
अयने ग्रहणादौ च विष्ण्वग्रेहरिमर्च्य च । स्वर्णमेरुंद्विजायार्प्य विष्णुलोके चिरंवसेत्
परमाणवो यावन्त इह राजा भवेच्चिरम् ।
रौप्यमेरुं द्वादशाद्रियुतं सङ्कल्पतो ददेत् ॥ २२ ॥
प्रागुक्तं च फलं तस्य विष्णुविप्रं प्रपूज्य च । भूमिमेरुञ्च विषयं मण्डलं ग्राममेव च ॥
परिकल्प्यष्टमांशेन शेषांशाः पूर्ववत् फलम् । द्वादशाद्रिसमायुक्तं हस्तिमेरुस्वरूपिणम्
ददेत् त्रिपुरुषैर्युक्तं दत्त्वानन्तं फलं लभेत् । त्रिपञ्चाश्वैरश्वमेरुं हयद्वादशसंयुतम् ॥२५॥
विष्ण्वादीन् पूज्य तं दत्त्वा भुक्तभोगो नृपो भवेत् ।
अश्वसङ्ख्याप्रमाणेन गोमेरुं पूर्ववद् ददेत् ॥ २६ ॥
पट्टवस्त्रैर्भारमात्रैवस्त्रमेरुञ्च मध्यतः । शैलैर्द्वादशवस्त्रैश्च दत्त्वा तञ्चाक्षयं फलम् ॥
घृतपञ्चसहस्रैश्च पलानामाज्यपर्वतः । शतैः पञ्चभिरेकैकः पर्वतेऽस्मिन् हरिं यजेत् ॥
विष्ण्वग्रे ब्राह्मणायार्प्य सर्वं प्राप्य हरिं व्रजेत् ।
एवं च खण्डमेरुञ्च कृत्वा दत्त्वाप्नुयात् फलम् ॥ २६ ॥
धान्यमेरु पञ्चखारोऽपर एकैकखारकाः । स्वर्णत्रिश्रृङ्गकाः सर्वे ब्रह्मविष्णु महेश्वरान् ॥
सर्वेषु पूज्य विष्णुं वा विशेषादक्षयं फलम् । एवं दशांशमानेन तिलमेरुं प्रकल्पयेत् ॥
श्रृङ्गाणि पूर्ववत् तस्य तथैवान्यनगेषु च । तिलमेरुं प्रदायाथ बन्धुभिर्विष्णुलोकभाक्
नमो विष्णुस्वरूपाय धराधराय वै नमः । ब्रह्मविष्ण्वीशश्रृङ्गाय धरानाभिस्थिताय च

नगद्वादशनाथाय सर्वपापापहारिणे । विष्णुभक्ताय शान्ताय त्राणं मे कुरु सर्वथा ॥३४॥

निष्पापः पितृभिः सार्द्धं विष्णुं गच्छामि ओं नमः ।

त्वं हरिस्तु हरेरग्रे अहं विष्णुश्च विष्णवे ।

निवेदयामि भक्त्या तु भुक्तिमुक्त्यर्थहेतवे ॥ ३५ ॥

इत्यादिमहापुराणेआग्नेये मेरुदानकथनंनाम द्वादशाधिकद्विशततमोऽध्यायः ।

---

# त्रयोदशाधिकद्विशततमोऽध्यायः

## पृथ्वीदानानि ।

### अग्निरुवाच ।

पृथ्वीदानं प्रवक्ष्यामि पृथिवी त्रिविधा मता । शतकोटिर्योजनानां सप्तद्विपा ससागरा

जम्बुद्वीपावधिः सा च उत्तमा मेदिनीरिता ।

उत्तमां पञ्चभिर्भारैः काञ्चनैश्च प्रकल्पयेत् ॥ २ ॥

तदर्द्धान्तरजं कूर्मं तथा पद्मं समादिशेत् । उत्तमा कथिता पृथ्वी द्वयंशेनैव तु मध्यमा॥

कन्यसा च त्रिभागेन त्रिहान्या कूर्मपङ्कजे ।

पलानान्तु सहस्रेण कल्पयेत् कल्पपादपम् ॥ ४ ॥

मूलदण्डं सपत्रञ्च फलपुष्पसमन्वितम् । पञ्चस्कन्धन्तु सङ्कल्प्य पञ्चानां दापयेत् सुधी

एतद्दाता ब्रह्मलोके पितृभिर्मोदते चिरम् ।

विष्णवग्रे कामधेनुन्तु पलानां पञ्चभिः शतैः ॥ ६ ॥

ब्रह्मविष्णुमहेशाद्या देवा धेनौ व्यवस्थिताः । धेनुदानं सर्वदानं सर्वदम् ब्रह्मलोकदम्॥

विष्ण्वग्रे कपिलां दत्त्वा तारयेत् सकलं कुलम् ।

अलङ्कृत्य स्त्रियं दद्यादश्वमेधफलं लभेत् ॥ ८ ॥

भूमिं दत्त्वा सर्वभाक् स्यात् सर्वशस्यप्ररोहिणीम् ।

ग्रामं वाथ परं वापि खेटकञ्च ददत् सुखी ।
कार्त्तिक्यादौ वृषोत्सर्गं कुर्वंस्तारयते कुलम् ॥ ६ ॥

इत्यादिमहापुराणे आग्नेयेपृथ्वीदानवर्णनंनामत्रयोदशाधिकद्विशततमोऽध्यायः ।

---

# चतुर्दशाधिकद्विशततमोऽध्यायः

## मन्त्रमाहात्म्यकथनम् ।

अग्निरुवाच

नाड़ीचक्रं प्रवक्ष्यामि यज्ज्ञानाज् ज्ञायते हरिः ।
नाभेरधस्ताद् यत् कन्दमङ्कुरास्तत्र निर्गताः ॥ १ ॥

द्वासप्ततिसहस्राणि नाभिमध्ये व्यवस्थितः। तिर्य्यगूर्ध्वमधश्चैव व्याप्तन्ताभिः समन्ततः

चक्रवत् संस्थिता ह्येताः प्रधाना दशनाड्यः ।
इड़ा च पिङ्गला चैव सुसुम्णा च तथैव च ॥ ३ ॥
गान्धारी हस्तिजिह्वा च पृथा चैव यशा तथा ।
अलम्वुषा हुहुश्चैव शङ्खिनी दशमी स्मृता ॥ ४ ॥

दशप्राणवहाह्येता नाड़्यःपरिकीर्त्तिताः । प्राणोऽपानःसमानश्च उदानोव्यानएव च ॥
नागःकूर्मोऽथ कृकरोदेवदत्तो धनञ्जयः । प्राणस्तु प्रथमोवायुर्दशानामपि स प्रभुः॥६॥
प्राणःप्राणयते प्राणं विसर्गात् पूरणंप्रति । नित्यमापूरयत्येष प्राणिनामुरसिस्थितः ॥

निः वासोच्छ्वासकासैस्तु प्राणोजीवसमाश्रितः ।
प्रयाणं कुरुते यस्मात् तस्मात् प्राणः प्रकीर्त्तितः ॥ ८ ॥

अधोनयत्वपानस्तु आहारञ्च नृणामधः । मूत्रशुक्रवहो-वायुरपानस्तेन कीर्त्तितः॥ ६ ॥
पीतभक्षितमाघ्रातं रक्तपित्तकफानिलम् । समन्नयति गात्रेषु समानोनाम मारुतः॥१०॥
स्पन्दयत्यधरं वक्त्रं नेत्ररागप्रकोपनम् । उद्वेजयति मर्माणि उदानोनाम मारुतः॥११॥

व्यानो विनामयत्यङ्गं व्यानो व्याधिप्रकोपनः ।
प्रतिदानं तथा कण्ठाद् व्यापनाद् व्यान उच्यते ॥ १२ ॥
उद्गारे नागइत्युक्तःकूर्मश्चोन्मीलनेस्थितः । कृकरोभक्षणेचैव देवदत्तो विजृम्भिते ॥१३॥
धनञ्जयः स्थितोघोषे मृतस्यापि न मुञ्चति । जीवःप्रयाति दशधानाड़ीचक्रं हि तेनतत्
सङ्क्रान्ति विषुवश्चैव अहोरात्रायनानि च । अधिमास ऋणश्चैव ऊनरात्रधनं तथा ॥
ऊनरात्रं भवेद्धिक्का अधिमासो विजृम्भिका ।
ऋणश्चात्र भवेत् कासोनिश्वासो धनमुच्यते ॥ १६ ॥
उत्तरंदक्षिणंज्ञेयं वामंदक्षिणसञ्ज्ञितम् । मध्येतु विषुवंप्रोक्तं पुटद्वयविनिःसृतम् ॥
सङ्क्रान्ति पुनरस्यैव स्वस्थानात् स्थानयोगतः ।
सुसुम्णा मध्यमे ह्यङ्गे इड़ा वामे प्रतिष्ठिता ॥ १८ ॥
पिङ्गला दक्षिणे विप्र ! उर्ध्वं प्राणो ह्यहः स्मृतम् ।
अपानो रात्रिरेवं स्यादेको वायुर्दशात्मकः ॥ १६ ॥
आयामो देहमध्यस्थःसोमग्रहणमिष्यते । देहातितत्वमायामम् आदित्यग्रहणंविदुः ॥
उदरं पूरयेत् तावद् वायुनायावदीप्सितम् । प्राणायामोभवेदेष पूरकोदेहपूरकः ॥२१॥
पिधाय सर्वद्वाराणि निश्वासोच्छ्वासवर्जितः ।
सम्पूर्ण कुम्भवत् तिष्ठेत् प्राणायामः स कुम्भकः ॥ २२ ॥
मुञ्चेद् वायुं ततस्तूर्ध्वं श्वासेनैकेन मन्त्रवित् । उच्छ्वासयोगयुक्तश्च वायुमूर्ध्वं विरेचयेत्
उच्चरतिस्वयं यस्मात् स्वदेहावस्थितःशिवः । तस्मात् तत्त्वविदाश्चैव स एवजप उच्यते
अयुतेद्वे सहस्रैकं षट्शतानि तथैवच । अहोरात्रेण योगीन्द्रो जपसङ्ख्यां करोतिसः ॥
अजपानामगायत्री ब्रह्मविष्णुमहेश्वरी । अजपां जपते यस्तां पुनर्जन्म न विद्यते॥२६॥
चन्द्राग्निरविसंयुक्ता आद्याकुण्डलीनीमता । हृत्प्रदेशे तु साज्ञेया अङ्कुराकारसंस्थिता
सृष्टिन्यासो भवेत् तत्र स वै सर्गावलम्बनात् ।
स्रवन्तं चिन्तयेत् तस्मिन्नमृतं सात्त्विकोत्तमः ॥ २८ ॥
देहस्थः सकलो ज्ञेयो निष्फलो देहवर्जितः ।

हंसहंसेति यो ब्रूयाद्धंसो देवः सदाशिवः ॥ २६ ॥

तिलेषु च यथा तैलं पुष्पेगन्धःसमाश्रितः । पुरुषस्य तथा देहे स वाह्याभ्यन्तरंस्थितः

ब्रह्मणो हृदयेस्थानं कण्ठे विष्णुः समाश्रितः ।

तालुमध्ये स्थितो रुद्रो ललाटे तु महेश्वरः ॥ ३१ ॥

प्राणाग्रन्तु शिवं विद्यात् तस्यान्ते तु परापरम् ।

पञ्चधा सकलः प्रोक्तो विपरीतस्तु निष्फलः ॥ ३२ ॥

प्रासादं नादमुत्थाप्य शततन्तु जपेद्‌ यदि ।

षण्माषात् सिद्धिमाप्नोति योगयुक्तो न संशयः ॥ ३३ ॥

गमागमस्य ज्ञानेनसर्वपापक्षयोभवेत् । अणिमादिगुणैश्वर्य्यं षड्भिर्मासैरवाप्नुयात् ॥

स्थूलः सूक्ष्मः परश्चेति प्रासादः कथितो मया ।

ह्रस्वो दीर्घः प्लुतश्चेति प्रासादं लक्षयेत् त्रिधा ॥ ३५ ॥

ह्रस्वो दहति पापानि दीर्घो मोक्षप्रदो भवेत् ।

आप्यायने प्लुतश्चेति मूर्ध्नि विन्दुविभूषितः ॥ ३६ ॥

आदावन्ते च ह्रस्वस्य फट्कारो मारणे हितः ।

आदावन्ते च हृदयमाकृष्टौ सम्प्रकीर्त्तितम् ॥ ३७ ॥

देवस्य दक्षिणां मूर्त्ति पञ्चलक्षं स्थितो जपेत् ।

जपान्ते घृतहोमस्तु दशसाहस्रिको भवेत् ॥ ३८ ॥

एवमाप्यायितो मन्त्रो वश्योच्चाटादि कारयेत् ।

ऊर्ध्वे शून्यमधः शून्यं मध्ये शुन्यं निरामयम् ॥ ३९ ॥

त्रिशून्यं यो विजानाति मुच्यतेऽसौ ध्रुवं द्विजः ।

प्रासादं यो न जानाति पञ्चमन्त्रमहातनुम् ॥ ४० ॥

अष्टत्रिंशत्कलायुक्तं न स आचार्य्य उच्यते । तथोङ्कारञ्च गायत्रींरुद्रादीन् वेत्त्यसौगुरुः

इत्यादिमहापुराणे आग्नेयेमन्त्रमाहात्म्यकथनंनामचतुर्दशाधिकद्विशततमोऽध्यायः ।

———

# पञ्चदशाधिकद्विशततमोऽध्यायः

## सन्ध्याविधिः ।

अग्निरुवाच ।

ओंकारं यो विजानाति स योगी स हरिः पुमान् ।
ओङ्कारमभ्यसेत् तस्मान्मन्त्रसारन्तु सर्वदम् ॥ १ ॥
सर्वमन्त्रप्रयोगेषु प्रणवः प्रथमःस्मृतः । तेन सम्परिपूर्ण्णं यत् तत् पूर्णं कर्म नेतरत् ॥
ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥ ३ ॥
योऽधीतेऽहन्यहन्येतास्त्रीणिवर्षाण्यतन्द्रितः । सब्रह्म परमभ्येति वायुभूतःखमूर्त्तिमान् ॥
एकाक्षरं परंब्रह्म प्राणायामपरन्तपः ।
सावित्र्यास्तु परन्नास्ति मौनात् सत्यं विशिष्यते ॥ ५ ॥
सप्तावर्त्ता पापहरा दशभिःप्रापयेद् दिवम् । विंशावर्त्ता तु सा देवी नयते हीश्वरालयम्
अष्टोत्तरशतं जप्त्वा तीर्णः संसारसागरात् ।
रुद्रकुष्माण्डजप्येभ्यो गायत्री तु विशिष्यते ॥ ७ ॥
न गायत्र्याः परञ्जप्यं न व्याहृतिसमं हुतम् । गायत्र्याः पादमप्यर्द्धमृगर्द्धमृचमेव वा ॥
ब्रह्महत्या सुरापानं सुवर्णस्तेयमेव च । गुरुदारागमश्चैव जप्येनैव पुनाति सा ॥ ६ ॥
पापे कृते तिलैर्होमो गायत्रीजप ईरितः । जप्त्वा सहस्रं गायत्र्या उपवासी स पापहा
गोघ्नः पितृघ्नो मातृघ्नो ब्रह्महा गुरुतल्पगः । ब्रह्मघ्नः स्वर्णहारी च सुरापो लक्षजप्यतः
शुध्यते वाऽथ वा स्नात्वा शतमन्तर्जले जपेत् ।
अपः शतेन पीत्वा तु गायत्र्याः पापहा भवेत् ॥ १२ ॥
शतं जप्ता तु गायत्री पापोपशमनी स्मृता । सहस्रं जप्ता सा देवी उपपातकनाशिनी ॥
अभीष्टदा कोटिजप्ता देवत्वं राजतामियात् । ओङ्कारं पूर्वमुच्चार्य्य भूर्भुवः स्वस्तथैव च

गायत्री प्रणवश्चान्ते जपे चैवमुदाहृतम् । विश्वामित्र ऋषीच्छन्दो गायत्रं सविता तथा
देवतोपनये जप्ये विनियोगो हुते तथा । अग्निर्वायू रविर्विद्युत् यमो जलपतिर्गुरुः ॥
पर्जन्य इन्द्रो गन्धर्वः पूषा च तदनन्तरम् । मित्रोऽथ वरुणस्त्वष्टा वसवो मरुतः शशी
अङ्गिरा विश्वनासत्यौ कस्तथा सर्वदेवताः । रुद्रो ब्रह्मा च विष्णुश्च क्रमशोऽक्षरदेवताः

गायत्र्याः जपकाले तु कथिताः पापनाशनाः ।
पादाङ्गुष्ठौ च गुल्फौ च नलकौ जानुनी तथा ॥ १६ ॥

जङ्घे शिश्नश्च वृषणौ कटिर्नाभिस्तथोदरम् । स्तनौच हृदयं ग्रीवा मुखंतालु च नासिके
चक्षुषी च भ्रुवोर्मध्यं ललाटं पूर्वमाननम् । दक्षिणोत्तरपार्श्वे द्वे शिर आस्यमनुक्रमात्
पीतः श्यामश्च कपिलो मरकतोऽग्निसन्निभः । रुक्मविद्युद्धूम्रकृष्णरक्तगौरेन्द्रनीलभाः
स्फाटिकस्वर्णपाण्ड्वाभाः पद्मरागोऽखिलद्युतिः । हेमधूम्ररक्तनीलरक्तकृष्णसुवर्णभाः

शुक्लकृष्णपालाशाभा गायत्र्या वर्णकाः क्रमात् ।
ध्यानकाले पापहरा हुतैषा सर्वकामदा ॥ २४ ॥

गायत्र्या तु तिलैर्होमः सर्वपापप्रणाशनः । शान्तिकामो यवैःकुर्य्यादायुष्कामो घृतेनच
सिद्धार्थकैः कर्मसिद्ध्यैपयसा ब्रह्मवर्चसे । पुत्रकामस्तथादध्नाःधान्यकामस्तु शालिभिः

क्षीरिवृक्षसमिद्भिस्तु ग्रहपिडोपशान्तये ।
धनकामस्तथा विल्वैः श्रीकामः कमलैस्तथा ॥ २७ ॥
आरोग्यकामो दूर्वाभिर्गुरुत्पाते स एव हि ।
सौभाग्येच्छुर्गुग्गुलुना विद्यार्थी पायसेन च ।

अयुतेनोक्तसिद्धिःस्याल्लक्षेणमनसेप्सितम् । कोट्याब्रह्मवधान् मुक्तःकुलोद्धारीहरिर्भवेत्
ग्रहयज्ञमुखो वापि होमोऽयुतमुखोऽर्थकृत् । आवाहनञ्च गायत्र्यास्ततओङ्कारमभ्यसेत्

स्मृत्वौङ्कारन्तु गायत्र्या निबध्नीयाच्छिखां ततः ।
पुनराचम्य हृदयं नाभिं स्कन्धौ च संस्पृशेत् ॥ ३१ ॥
प्रणवस्य ऋषीर्ब्रह्मा गायत्रीच्छन्दएव च ।
देवोऽग्निः परमात्मास्याद् योगो वै सर्वकर्मसु ॥ ३२ ॥

शुक्ला चाग्निमुखी दिव्या कात्यायनसगोत्रजा ।
त्रैलोक्यवरणा दिव्या पृथिव्याधारसंयुता ॥ ३३ ॥
अक्षसूत्रधरा देवी पद्मासनगता शुभा ।
ओं तेजोऽसि महोऽसि बलमसि भ्राजोऽसि देवानान्धामनामासि
विश्वमसि विश्वायुः सर्वमसि सर्वायुः ओं अभि भूः ।
आगच्छ वरदे । देवि ! जप्ये ! मे सन्निधौ भव ॥ ३४ ॥

व्याहृतीनान्तु सर्वासामृषिरेव प्रजापतिः । व्यस्ताश्चैव समस्ताश्च ब्राह्ममक्षरमोमिति
विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गोतमः । ऋषिरत्रिर्वशिष्ठश्च काश्यपश्च यथाक्रमम् ॥
अग्निर्वायू रविश्चैव वाक्पतिर्वरुणस्तथा । इन्द्रो विष्णुर्व्याहृतीनां दैवतानि यथाक्रमम्

गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुप् च जगती चेति छन्दांस्याहुरनुक्रमात् ॥ ३८ ॥
विनियोगे व्याहृतीनां प्राणायामे च होमके ।
आपोहिष्ठेत्यृचा चापान्द्रुपदादीति वा स्मृता ॥ ३९ ॥

तथाहिरण्यवर्णाभिःपावमानीभिरन्ततः । विप्रुषोऽष्टौ क्षिपेदूर्ध्वमाजन्मकृतपापजित् ॥

अन्तर्जले ऋतञ्चेति जपेत् त्रिरघमर्षणम् ।
आपोहिष्ठेत्यृचोऽस्याश्च सिन्धुद्वीप ऋषिः स्मृतः ॥ ४१ ॥
ब्रह्मस्नानाय छन्दोऽस्य गायत्री देवता जलम् ।
मार्जने विनियोगस्य ह्यवभृथके क्रतोः ॥ ४२ ॥

अघमर्षणसूक्तस्य ऋषिरेवाघमर्षणम् । अनुष्टुप् च भवेच्छन्दो भाववृत्तस्तु दैवतम् ॥

आपोज्योतीरस इति गायत्र्यास्तु शिरः स्मृतम् ।
ऋषिः प्रजापतिस्तस्य छन्दोहीनं यजुर्यतः ॥ ४४ ॥
ब्रह्माग्निवायुसूर्य्याश्च देवताः परिकीर्त्तिताः ।
प्राणरोधात् तु वायुः स्याद् वायोरग्निश्च जायते ॥ ४५ ॥

अग्नेरापस्ततः शुद्धिस्ततश्चाचमनञ्चरेत् । अन्तश्चरसि भूतेषु गुहायां विश्वमूर्त्तिषु ॥

तपोयज्ञवषट्कार आपो ज्योतिरसोऽमृतम् । उदुत्यं जातवेदसमृषिःप्रष्कन्न उच्यते ॥

गायत्रीच्छन्द आख्यातं सूर्य्यश्चैव तु दैवतम् ।
अतिरात्रे नियोगः स्यादग्नीषोमो नियोगकः ॥ ४८ ॥
चित्रं देवेति ऋचके ऋषिः कौत्स उदाहृतः ।
त्रिष्टुप् छन्दो दैवतञ्च सूर्य्योऽस्याः परिकीर्त्तितम् ॥ ४९ ॥

इत्यादि महापुराणे आग्नेये सन्ध्याविधिःवर्णनं नाम पञ्चदशाधिकद्विशततमोऽध्यायः ।

---

# षोड़शाधिकद्विशततमोअध्यायः

## गायत्रीनिर्वाणम् ।

अग्निरुवाच ।

एवं सन्ध्याविधिं कृत्वा गायत्रीञ्च जपेत् स्मरेत् ।
गायञ्छिष्यान् यतस्त्रायेद्‌ भार्य्यां प्राणांस्तथैव च ॥ १ ॥

ततःस्मृतेयं गायत्रीसावित्रीयं ततो यतः । प्रकाशनात् सा सवितुर्वाग्रूपत्वात्सरस्वती

तज् ज्योतिः परमंब्रह्म भर्गस्तेजो यतः स्मृतम् ।
भा दीप्ताविति रूपं हि भ्रस्जः पाकेऽथ तत् स्मृतम् ॥ ३ ॥
ओषध्यादिकं पचति भ्राजृ दीप्तौ तथा भवेत् ।
भर्गः स्याद्‌ भ्राजत इति बहुलं छन्द ईरितम् ॥ ४ ॥

वरेण्यं सर्वतेजोभ्यः श्रेष्ठं वै परमं पदम् । स्वर्गापवर्गकामैर्वा वरणीयं सदैव हि ॥५॥
वृणोतेर्वरणार्थत्वाज्जाग्रत्स्वप्नादिवर्जितम् । नित्यशुद्धबुद्धमेकं सत्यन्तद्धीमहीश्वरम्॥

अहं ब्रह्म परंज्योतिर्ध्यायेम ही विमुक्तये ।
तज् ज्योतिर्भगवान् विष्णुर्जगज्जन्मादिकारणम् ॥ ७ ॥
शिवं केचित् पठन्तिस्म शक्तिरूपं पठन्ति च ।

केचित् सूर्य्यङ्केचिदग्निं वेदगा अग्निहोत्रिणः ॥ ८ ॥
अग्न्यादिरूपी विष्णुर्हि वेदादौ ब्रह्म गीयते ।
तत् पदं परमं विष्णोर्देवस्य सवितुः स्मृतम् ॥ ६ ॥
महदाज्यं सूयते हि स्वयं ज्योतिर्हरिः प्रभुः ।
पर्जन्यो वायुरादित्यः शीतोष्णाद्यैश्च पाचयेत् ॥ १० ॥
अग्नौ प्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते । आदित्याज्जायतेवृष्टिर्वृष्टेरन्नन्ततः प्रजाः ॥
दधातेर्वा धीमहीति मनसा धारयेमहि ।
नोऽस्माकं यश्च भर्गश्च सर्वेषां प्राणिनां धियः ॥ १२ ॥
चोदयात् प्रेरयेद् बुद्धिर्भोक्तॄणां सर्वकर्मसु ।
दृष्टादृष्टविपाकेषु विष्णुसूर्य्याग्निरूपवान् ॥ १३ ॥
ईश्वरप्रेरितो गच्छेत् स्वर्गं वाऽश्वभ्रमेव वा । ईशावास्यमिदं सर्वं महदादिजगद्धरिः ॥
स्वर्गाद्यैः क्रीड़ते देवो योऽहं स पुरुषः प्रभुः ।
आदित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षिभिः ॥ १५ ॥
जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च । ध्यानेन पुरुषोऽयञ्च द्रष्टव्यःसूर्य्यमण्डले॥
तत्त्वं सदसि चिद् ब्रह्म विष्णोर्यत् परमं पदम् ।
देवस्य सवितुर्भर्गो वरेण्यं हि तुरीयकम् ॥ १७ ॥
देहादिजाग्रदाब्रह्म अहं ब्रह्मेति धीमहि । योऽसावादित्यपुरुषःसोऽसावहमनन्त ओम् ।
ज्ञानानि शुभकर्मादीन् प्रवर्त्तयति यः सदा ॥ १८ ॥
इत्यादि महापुराणे आग्नेये गायत्रीनिर्वाणकथनं नामषोडशाधिकद्विशततमोऽध्यायः ।

———

# सप्तदशाधिकद्विशततमोऽध्यायः

## गायत्रीनिर्वाणम्

अग्निरुवाच ।

लिङ्गमूर्त्तिं शिवं स्तुत्वा गायत्र्या योगमाप्तवान् ।
निर्वाणं परमं ब्रह्म वसिष्ठोऽन्यश्च शङ्करात् ॥ १ ॥

नमः कनकलिङ्गाय वेदलिङ्गाय वै नमः । नमः परमलिङ्गाय व्योमलिङ्गाय वै नमः॥२॥
नमः सहस्रलिङ्गाय वह्निलिङ्गाय वै नमः । नमः पुराणलिङ्गाय श्रुतिलिङ्गाय वै नमः ॥
नमः पाताललिङ्गाय ब्रह्मलिङ्गाय वै नमः । नमो रहस्यलिङ्गाय सप्तद्वीपोर्ध्वलिङ्गिने ॥
नमः सर्वात्मलिङ्गायसर्वलोकाङ्गलिङ्गिने । नमस्त्वव्यक्तलिङ्गाय बुद्धिलिङ्गाय वै नमः ॥
नमोऽहङ्कारलिङ्गाय भूतलिङ्गाय वै नमः । नमः इन्द्रियलिङ्गाय नमस्तन्मात्रलिङ्गिने ॥
नमः पुरुषलिङ्गाय भावलिङ्गाय वै नमः । नमो रजोर्द्धलिङ्गाय सत्त्वलिङ्गाय वै नमः ॥
नमस्ते भवलिङ्गाय नमस्त्रैगुण्यलिङ्गिने । मनोऽनागतलिङ्गाय तेजोलिङ्गाय वै नमः ॥

नमो वायूदुर्ध्वलिङ्गाय श्रुतिलिङ्गाय वै नमः ।
नमस्तेऽथर्वलिङ्गाय सामलिङ्गाय वै नमः ॥ ९ ॥

नमो यज्ञाङ्गलिङ्गाय यज्ञलिङ्गाय वै नमः । नमस्ते तत्त्वलिङ्गाय देवानुगतलिङ्गिने॥१०॥
दिश नः परमं योगमपत्यं मत्समं तथा । ब्रह्म चैवाक्षयं देव ! शमश्चैव परं विभो ! ॥

अक्षयन्त्वञ्च वंशस्य धर्मे च मतिमक्षयाम् ।

अग्निरुवाच ।

वसिष्ठेन स्तुतः शम्भुस्तुष्टः श्रीपर्वते पुरा । वसिष्ठाय वरं दत्त्वा तत्रैवान्तरधीयत ॥
इत्यादि महापुराणे आग्नेये गायत्रीनिर्वाणवर्णनंनामसप्तदशाधिकद्विशततमोऽध्यायः ।

---

# अष्टदशाधिकद्विशततमोऽध्यायः

## राजाभिषकककथनम् ।

अग्निरुवाच ।

पुष्करेण च रामाय राजधर्मंहि पृच्छते । यथादौ कथितं तद्वद्द् वशिष्ठ! कथायामिते

पुष्कर उवाच ।

राजधर्मं प्रवक्ष्यामि सर्वस्मात्राजधर्मतः । राजाभवेत् शत्रुहन्ताप्रजापालः सुदण्डवान्

पालयिष्यति वः सर्वान् धर्मस्थान् व्रतमाचरेत् ।

संवत्सरं स वृणुयात् पुरोहितमथ द्विजम् ॥ ३ ॥

मन्त्रिणश्चाखिलात्मज्ञान् महिषीं धर्मलक्षणाम् ।

संवत्सरं नृपः काले ससम्भारोऽभिषेचनम् ॥ ४ ॥

कुर्य्यान् मृतेनृपेनात्र कालस्यनियमःस्मृतः । तिलैःसिद्धार्थकैःस्नानं सांवत्सरपुरोहितौ

घोषयित्वा जयं राज्ञो राजा भद्रासने स्थितः ।

अभयं घोषयेद् दुर्गान् मोचयेद्राज्जपालके ॥ ६ ॥

पुरोधसोऽभिषेकात् प्राक् कार्य्यैन्द्री शान्तिरेव च ।

उपवास्यभिषेकाहे वेद्यग्नौ जुहुयान्मनून् ॥ ७ ॥

वैष्णवानैन्द्रमन्त्रांस्तु सावित्रान् वैश्वदैवतान् ।

सौम्यान् स्वस्त्ययनं शर्म आयुष्याभयदान्मनून् ॥ ८ ॥

अपराजिताञ्च कलसं वह्नेर्दक्षिणपार्श्वगम् । सम्पातवन्तं हैमञ्च पूजयेद् गन्धपुष्पकैः ॥

प्रदक्षिणावर्त्तशिखस्ततजाम्बूनदप्रभः । रथौघमेघनिर्घोषो विधूमश्च हुताशनः ॥ १० ॥

अनुलोमः सुगन्धश्चस्वस्तिकाकारसन्निभः । प्रसन्नोर्चिर्महाज्वालःस्फुलिङ्गरहितोहितः

न व्रजेयुश्च मध्येन मार्जारमृगपक्षिणः । पर्वताग्रमृदा तावन्मूर्द्धानं शोधयेन्नृपः ॥

वल्मीकाग्रमृदा कर्णौ वदनं केशवालयात् । इन्द्रालयमृदा ग्रीवां हृदयन्तु नृपाजिराव्

करिदन्तोद्धृतमृदा दक्षिणन्तु तथा भुजम् ।
वृषश्रृङ्गोद्धृतमृदा वामञ्चैव तथा भुजम् ॥ १४ ॥

सरोमृदा तथा पृष्ठमुदरं सङ्गमान् मृदा । नदीतटद्वयमृदा पार्श्वे संशोधयेत् तथा ॥

वेश्याद्वारमृदा राज्ञः कटिशौचं विधीयते ।
यज्ञस्थानात् तथैवोरू गोस्थानाज्जानुनी तथा ॥ १६ ॥

अश्वस्थानात् तथा जङ्घे रथचक्रमृदाङ्घ्रिके । मूर्द्धानं पञ्चगव्येन भद्रासनगतं नृपम् ॥
अभिषिञ्चेदमात्यानां चतुष्टयमथो घटैः । पूर्वतो हेमकुम्भेन घृतपूर्णेन ब्राह्मणः ॥ १८ ॥
रूप्यकुम्भेन याम्ये च क्षीरपूर्णेन क्षत्रियः । दध्ना च ताम्रकुम्भेन वैश्यः पश्चिमगेन च
मृण्मयेन जलेनोदक् शूद्रामात्याऽभिषेचयेत् । ततोऽभिषेकं नृपतेर्वह्वृच प्रवरो द्विजः
कुर्वीत मधुना विप्रश्छन्दोगश्च कुशोदकैः । सम्पातवन्तं कलशं तथा गत्वा पुरोहितः
विधाय वह्निरक्षान्तु सदस्येषु यथाविधि । राजश्रियाभिषेके च ये मन्त्राः परिकीर्तिताः

तैस्तु तद्यान्महाभाग ! ब्राह्मणानां स्वनैस्तथा ।
ततः पुरोहितो गच्छेद् वेदिमूलन्तदेव तु ॥ २३ ॥

शतच्छिद्रेण पात्रेणसौवर्णेनाभिषेचयेत् । या औषधित्योषधीभीरथेत्युक्त्वेति गन्धकैः
पुष्पैः पुष्पवतीत्येव ब्राह्मणेति च वीजकैः । रत्नैराशुः शिशानश्च ये देवाश्च कुशोदकैः
यजुर्वेद्यथर्ववेदी गन्धद्वारेति संस्पृशेत् । शिरः कण्ठं रोचनया सर्वतीर्थोदकैर्द्विजाः
गीतवाद्यादिनिर्घोषैश्चामरव्यजनादिभिः । सर्वौषधिमय कुम्भं धारयेयुर्नृपाग्रतः ॥२७॥

तं पश्येद् दर्पणं राजा घृतं वै मङ्गलादिकम् ।
अभ्यर्च्य विष्णुं ब्रह्माणमिन्द्रादींश्च ग्रहेश्वरान् ॥२८॥

व्याघ्रचर्मोत्तरां शय्यामुपविष्टः पुरोहितः । मधुपर्कादिकं दत्त्वा पट्टबन्धं प्रकारयेत् ॥
राज्ञो मुकुटबन्धञ्च पञ्चचर्मोत्तरं ददेत् । ध्रुवाद्यैरिति च विशेद् वृषजं वृषदंशजम् ॥
द्वीपिजं सिंहजं व्याघ्रजातञ्चर्म तदासने । अमात्यसचिवादींश्च प्रतीहारः प्रदर्शयेत् ॥

गोऽजावि गृहदानाद्यैः सांवत्सरपुरोहितौ ।
पूजयित्वा द्विजान् प्राच्यं ह्यन्यभूगोऽन्नमुख्यकैः॥३२॥

वह्निं प्रदक्षिणीकृत्य गुरुं नत्वाथ पृष्ठतः ।
वृषमालभ्य गां वत्सां पूजयित्वाथ मन्त्रितम् ॥३३॥
अश्वमारुह्य नागञ्च पूजयेत् तं समारुहेत्। परिभ्रमेद्राजमार्गे बलयुक्तः प्रदक्षिणम्।
पुरं विशेच्च दानाद्यैः प्राच्यं सर्वान् विसर्जयेत् ॥३४॥
इत्यादिमहापुराणे आग्नेये राजाभिषेककथनंनामाष्टाधिकद्विशततमोऽध्यायः ।

————

# ऊनविंशाधिकद्विशततमोऽध्यायः

## अभिषेकमन्त्राः ।

### पुष्कर उवाच ।

राजदेवाद्यभिषेकमन्त्रान् वक्ष्येऽघमर्दनान् ।
कुम्भात् कुशोदकैः सिञ्चेत् तेन सर्वं हि सिध्यति ॥१॥
सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥
भवन्तु विजयायैते इन्द्राद्या दशदिग्गताः । रुद्रो धर्मो मनुर्दक्षो रुचिः श्रद्धा च सर्वदा॥
भृगुरत्रिर्वसिष्ठश्च सनकश्च सनन्दनः । सनत्कुमारोऽङ्गिराश्च पुलस्त्यः पुलहः क्रतुः ॥
मरीचिः कश्यपः पान्तु प्रजेशाः पृथिवीपतिः ।
प्रभासुरा वर्हिषद अग्निष्वात्ताश्च पान्तु ते ॥ ५ ॥
क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः ।
अग्निभिश्चाभिषिञ्चन्तु लक्ष्म्याद्या धर्मवल्लभाः ॥ ६ ॥
आदित्याद्याः कश्यपस्य बहुपुत्रस्यवल्लभा । कृशाश्वस्याग्निपुत्रस्यभार्य्याश्चारिष्टनेमिनः
अश्विनाद्याश्च चन्द्रस्य पुलहस्य तथा प्रियाः ।
भूता च कपिशा दंष्ट्री सुरसा सरमा दनुः ॥ ८ ॥
श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री शुकी तथा ।

पत्न्यस्त्वामभिषिञ्चन्तु अरुणश्चार्कसारथिः ॥ ६ ॥
आयातिर्नियतीरात्रिर्निद्रा लोकस्थितौ स्थिताः ।
उमा मेना शची पान्तु धूमोर्णानिर्ऋतिर्जये ॥ १० ॥
गौरी शिवा च ऋद्धिश्च वेला या चैव नड्वला ।
अशिक्नी च तथा ज्योत्स्ना देवपत्न्यो वनस्पतिः ॥ ११ ॥
महाकल्पश्च कल्पश्च मन्वन्तरयुगानि च । संवत्सराणि वर्षाणि पान्तु त्वामयनद्वयम्
ऋतवश्च तथा मासापक्षाराञ्यहनी तथा । सन्ध्यातिथिमुहूर्त्ताश्च कालस्यावयवाकृतिः
सूर्य्याद्याश्च ग्रहाः पान्तु मनुः स्वायम्भुवादिकः ।
स्वायम्भुवः स्वरोचिष औत्तमिस्तामसो मनुः ॥ १४ ॥
रैवतश्चाक्षुषः षष्ठो वैवस्वत इहेरितः । सावर्णी ब्रह्मपुत्रश्च धर्मपुत्रश्च रुद्रजः ॥ १५ ॥
दक्षजो रौच्यभौत्यौ च मनवस्तु चतुर्दश ।
विश्वभुक् च विपश्चिच्च सुचित्तिश्च शिखी विभुः ॥ १६ ॥
मनोयवस्तथौजस्वी बलिरद्भुतशान्तयः ।
वृषश्च ऋतधामा च दिवस्पृक् कविरिन्द्रकः ॥ १७ ॥
रैवन्तश्च कुमारश्च तथा वत्सविनायकः । वीरभद्रश्च नन्दी च विश्वकर्मा पुरोजवः ॥
एते त्वामभिषिञ्चन्तु सुरमुख्याःसमागताः । नासत्यौदेवभिषजौ ध्रुवाद्या वसवोऽष्ट च
दश चाङ्गिरसो वेदास्त्वाभिषिञ्चन्तु सिद्धये ।
आत्मा ह्यायुर्मनो दक्षो मदः प्राणस्तथैव च ॥ २० ॥
हविष्मांश्च गरिष्ठश्च ऋतः सत्यश्च पान्तुवः ।
क्रतुर्दक्षो वसुः सत्यः कालकामो धुरिर्जये ॥ २१ ॥
पुरूरवा माद्रवाश्च विश्वेदेवाश्च रोचनः ।
अङ्गारकाद्याः सूर्य्यस्त्वान्निर्ऋतिश्च तथा यमः ॥२२॥
अजैकपादहिर्बुध्नो धूमकेतुश्च रुद्रजाः । भरतश्च तथा मृत्युः कापालिरथ किङ्किणिः
भवनो भावनः पान्तु स्वजन्यः स्वजनस्तथा ।

क्रतुश्रवाश्च मूर्द्धा च याजनोऽभ्युशनास्तथा ॥ २४ ॥

प्रसवश्चाव्ययश्चैव दक्षश्च भृगवः सुराः । मनोऽनुमन्ता प्राणश्च नवोपानश्चवीर्यवान्

वीतिहोत्रो न यः साध्यो हंसो नारायणोऽवतु ।

विभुश्चैव प्रभुश्चैव देवश्रेष्ठा जगद्धिताः ॥२६॥

धाता मित्रोऽर्यमा पूषा शक्रोऽथ वरुणो भगः ।

त्वष्टा विवस्वान् सविता विष्णुर्द्वादश भास्कराः ॥२७॥

एक ज्योतिश्च द्विर्ज्योतिस्त्रिश्चतुर्ज्योतिरेव च ।

एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः ॥२८॥

इन्द्रश्च मेत्यादिशतु ततः प्रतिमकृत् तथा । मितश्च सम्मितश्चैव अमितश्च महाबलः

ऋतजित् सत्यजिच्चैव सुषेणः सेनजित् तथा ।

अतिमित्रोऽनुमित्रश्च पुरुमित्रोऽपराजितः ॥ ३० ॥

ऋतश्च ऋतवाग् धाता विधाता धारणो ध्रुवः ।

विधारणो महातेजा वासवस्य परः सखा ॥ ३१ ॥

ईदृक्षश्चाप्यदृक्षश्च एतादृगनिताशनः । क्रीडितश्च सदृक्षश्च सरभश्च महातपाः ॥ ३२ ॥

धर्त्ता धुर्य्यो धुरिर्भीम अभिमुक्तः क्षपात्सह ।

धृतिर्वसुरनाधृष्यो रामः कामो जयो विराट् ॥ ३३ ॥

देवा एकोनपञ्चाशन्मरुतस्त्वामवन्तुते । चित्राङ्गदश्चित्ररथः चित्रसेनश्च वै कलिः ॥

उणायुरुग्रसेनश्च धृतराष्ट्रश्च नन्दकः । हाहा हूहूर्नारदश्च विश्वावसुश्च तुम्बरुः ॥

एते त्वामभिषिञ्चन्तु गन्धर्वा विजयाय ते ।

पान्तु ते कुरूपामुख्या दिव्याश्चाप्सरसाङ्गणाः ॥ ३६ ॥

अनवद्यां सुकेशी च मेनकाः सह जन्यया । क्रतुस्थलाघृताची च विश्वाचीपुञ्जिकस्थला

प्रम्लोचा चोर्वशी रम्भा पञ्चचूड़ा तिलोत्तमा ।

चित्रलेखा लक्ष्मणा च पुण्डरीका च वारुणी ॥ ३८ ॥

प्रह्लादो विरोचनोऽथ बलिर्बाणोऽथ तत्सुताः ।

एते चान्येऽभिषिञ्चन्तु दानवा राक्षसास्तथा ॥ ३९ ॥
हेतिश्चैव प्रहेतिश्च विद्युत्स्फुर्जथुरग्रकाः । यक्षः सिद्धात्मकः पातु माणिभद्रश्चनन्दनः
पिङ्गाक्षो द्युतिमांश्चैव पुष्पवन्तो जयावहः । शङ्खःपद्मश्च मकरः कच्छपश्च निधिर्जये ॥
पिशाचा ऊर्ध्वकेशाद्या भूता भूम्यादिवासिनः ।
महाकालं पुरस्कृत्य नरसिंहश्च मातरः ॥ ४२ ॥
गुहः स्कन्दो विशाखस्त्वान्नैगमेयोऽभिषिञ्चतु ।
डाकिन्यो याश्च योगिन्यः खेचरा भूचराश्च याः ॥ ४३ ॥
गरुड़श्चारुणः पान्तु सम्पातिप्रमुखाः खगाः । अनन्ताद्या महानागाःशेषवासुकितक्षकाः
ऐरावतो महापद्मः कम्बलाश्वतरावुभौ । शङ्खःकर्कोटकश्चैव धृतराष्ट्रो धनञ्जयः ॥
कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नागाः पान्तुत्वां सर्वतः सदा ॥ ४६ ॥
पैतामहस्तथा हंसो वृषभः शङ्करस्य च । दुर्गासिंहश्च पान्तुत्वां यमस्य महिषस्तथा ॥
उच्चैःश्रवाश्चाश्वपतिस्तथा धन्वन्तरिः सदा । कौस्तुभः शङ्खराजश्च वज्रंशूलश्चचक्रकम्
नन्दकोऽस्त्राणि रक्षन्तु धर्मश्च व्यवसायकः । चित्रगुप्तश्चदण्डश्च पिङ्गलोमृत्युकालकौ
बालखिल्यादिमुनयो व्यासवाल्मीकिमुख्यकाः ।
पृथुर्दिलीपो भरतो दुष्यन्तःशक्रजिद् बली ॥ ५० ॥
मल्लः ककुतस्थश्चानेन युवनाश्वो जयद्रथः । मान्धातामुचुकुन्दश्च पान्तुत्वाञ्च पुरूरवाः
वास्तुदेवाः पञ्चविंशत् तत्त्वानि विजयायते ।
रुक्मभौमः शिलाभौमः पातालो नीलमृत्तिकः ॥ ५२ ॥
पीतरक्तः क्षितिश्चैव श्वेतभौमो रसातलम् । भूर्लोकोथ भुवर्मुख्या जम्बूद्वीपादयःश्रिये
उत्तराः कुरवः पान्तु रम्या हिरण्यकस्तथा । भद्राश्वः केतुमालश्च वर्षश्चैव बलाहकः ॥
हरिवर्षः किम्पुरुष इन्द्रद्वीपः कशेरुमान् ।
ताम्रवर्णो गभस्तिमान् नागद्वीपश्च सौम्यकः ॥ ५५ ॥
गन्धर्वो वरुणोयश्च नवमः पान्तु राज्यदाः । हिमवान् हेमकूटश्च निषधो नील एव च

श्वेतश्च शृङ्गवान् मेरुर्माल्यवान् गन्धमादनः । महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवान्गिरिः
विन्ध्यश्च पारिपात्रश्च गिरयः शान्तिदास्तु मे। ऋग्वेदाद्याः षडङ्गानि इतिहासपुराणकम्
आयुर्वेदश्च गन्धर्वधनुर्वेदोपवेदकाः । शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः
छन्दोगानि च वेदाश्च मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणञ्च विद्याह्येताश्चतुर्दश।

साङ्ख्यं योगः पाशुपतं वेदा वै पञ्चरात्रकम् ।
कृतान्तपञ्चकं ह्येतद् गायत्री च शिवा तथा ॥ ६१ ॥
दुर्गा विद्या च गान्धारी पान्तु त्वां शान्तिदाश्च ते ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलाब्धयः ॥ ६२ ॥
चत्वारः सागराः पान्तु तीर्थानि विविधानि च ।
पुष्करञ्च प्रयागश्च प्रभासो नैमिषः परः ॥ ६३ ॥

गयाशीर्षो ब्रह्मशिरस्तीर्थमुत्तरमानसम् । कालोदको नन्दिकुण्डस्तीर्थं पञ्चनदस्तथा॥
भृगुतीर्थं प्रभासश्च तथा चामरकण्टकम् । जम्बुमार्गश्च विमलः कपिलस्य तथाश्रमः॥
गङ्गाद्वारकुशावर्त्तौ विन्ध्यको नीलपर्वतः । वराहपर्वतश्चैव तीर्थङ्कनखलं तथा॥ ६६॥
कालञ्जरश्च केदारो रुद्रकोटिस्तथैव च । वाराणसी महातीर्थं बदर्य्याश्रम एव च॥
द्वारका श्रीगिरस्तीर्थं तीर्थञ्च पुरुषोत्तमः । शालग्रामोऽथ वाराहः सिन्धुसागरसङ्गमः
फल्गुतीर्थं विन्दुरसः करवीराश्रमस्तथा । नद्यो गङ्गासरस्वत्यः शतद्रुर्गण्डकी तथा

अच्छोदा च विपाशा च वितस्ता देविका नदी ।
कावेरी वरुणाचैव निश्चिरा गौमती नदी ॥ ७० ॥
पारा चर्मण्वती रूपा मन्दाकिनी महानदी ।
तापी पयोष्णी वेणा च गौरी वैतरणी तथा ॥ ७१ ॥
गोदावरी भीमरथी तुङ्गभद्रा प्रणी तथा ।
चन्द्रभागा शिवा गौरी अभिषिञ्चन्तु पान्तु वः ॥ ७२ ॥

इत्यादिमहापुराणेआग्नेयेअभिषेकमन्त्रवर्णनंनामोनविंशाधिकद्विशततमोऽध्यायः ।

———

# विंशत्यधिकद्विशततमोऽध्यायः

## सहायसम्पत्तिः ।

पुष्करउवाच ।

सोऽभिषिक्तः सहामात्यो जयेच्छत्रून् नृपोत्तमः ।
राज्ञा सेनापतिः कार्यो ब्राह्मणः क्षत्रियोऽथ वा ॥ १ ॥
कुलीनो नीतिशास्त्रज्ञः प्रतीहारश्च नीतिवित् ।
दूतश्च प्रियवादी स्यादक्षीणोऽतिबलान्वितः ॥ २ ॥
ताम्बूलधारी ना स्त्रीवा भक्तः क्लेशसहप्रियः ।
सान्धिविग्रहिकः कार्य्यःषाड्गुण्यादि विशारदः ॥ ३ ॥
खड्गधारी रक्षकः स्यात् सारथिः स्याद् बलादिवित् ।
सूदाध्यक्षो हितोविज्ञो महानसगतो हि सः ॥ ४ ॥
सभासदस्तु धर्मज्ञा लेखकोऽक्षरविद्धितः । आह्वानकालविज्ञाःस्युर्हिता दौवारिकाजनाः
रत्नादिज्ञो धनाध्यक्षः अनुद्वारे हितो नरः ।
स्यादायुर्वेदविद् वैद्यो गजाध्यक्षोऽथ हस्तिवित्॥ ६ ॥
जितश्रमो गजारोहो हयाध्यक्षो हयादिवित् ।
दुर्गाध्यक्षो हितो धीमान् स्थपिर्वास्तुवेदविद् ॥ ७ ॥
यन्त्रमुक्ते पाणिमुक्ते अमुक्ते मुक्तधारिते । अस्त्राचार्य्यो नियुद्धे च कुशलो नृपतेर्हितः
वृद्धश्चान्तःपुराध्यक्षः पञ्चाशद्वार्षिकाः स्त्रियाः । सप्तत्यब्दास्तु पुरुषाश्चरेयुःसर्वकर्मसु
जाग्रत्स्यादायुधागारे ज्ञात्वावृत्तिर्विधीयते । उत्तमाधममध्यानिवुध्वा कर्माणिपार्थिवः
उत्तमाधममध्यानि पुरुषाणि नियोजयेत् । जयेच्छुः पृथिवींराजा सहायानानयेद्धितान्
धर्मिष्ठान् धर्मकार्य्येषु शूरान् सङ्ग्रामकर्मसु । निपुणानर्थकृत्येषु सर्वत्र च तथा शुचीन्
स्त्रीषु खण्डान् नियुञ्जीत तीक्ष्णान् दारुणकर्मसु ।

यो यत्र विदितो राज्ञा शुचित्वेन तु तन्नरम् ॥ १३ ॥
धर्मे चार्थे च कामे च नियुञ्जीताधमेऽधमान् ।
राजा यथार्हं कुर्य्याच्च उपधाभिः परीक्षितान् ॥ १४ ॥
समन्त्रीचयथान्यायात् कुर्य्याद्धस्तिवनेचरान् । तत्पदान्वेषणेयत्तानध्यक्षांस्तत्रकारयेत्
यस्मिन् कर्मणि कौशल्यं यस्य तस्मिन् नियोजयेत् ।
पितृपैतामहान् भृत्यान् सर्वकर्मसु योजयेत् ॥ १६ ॥
विना दायादकृत्येषु तत्र ते हि समागताः । परराजगृहान् प्राप्तान्जनान् संश्रयकाम्यया
दुष्टानप्यथ वाऽदुष्टान् संश्रयेत प्रयत्नतः । दुष्टं ज्ञात्वा विश्वसेन्न तद्वृत्तिंवर्त्तयेद्वशे
देशान्तरागतान्पार्श्वेचारैर्ज्ञात्वा हिपूजयेत् । शत्रवोऽग्निर्विषं सर्पोनिस्त्रिंशमपिचैकतः
भृत्यावशिष्टं विज्ञेयाः कुभृत्याश्च तथैकतः । चारचक्षुर्भवेद्राजा नियुञ्जीत सदाचरान्
जनस्याविहितान् सौम्यांस्तथाज्ञातान् परस्परम् ।
वणिजो मन्त्रकुशलान् सांवत्सर चिकित्सकान् ॥ २१ ॥
तथा प्रव्रजिताकारान् वलाबलविवेकिनः । नैकस्यराजा श्रद्दध्याच्छ्रद्दध्याद्बहुवाक्यतः
रागापरागौ भृत्यानां जनस्यच गुणागुणान् । शुभानामशुभानाञ्चज्ञानं कुर्य्याद्वशाय च
अनुरागकरं कर्म चरेज्जह्याद् विरागजम् । जनानुरागयालक्ष्म्या राजा स्याज्जनरञ्जनात्
इत्यादिमहापुराणेआग्नेये सहायसम्पत्तिवर्णनंनामविंशाधिकद्विशततमोऽध्यायः ।

———

# एकविंशत्यधिकद्विशततमोऽध्यायः

## अनुजीविवृत्तम् ।

### पुष्कर उवाच ।

भृत्यः कुर्य्यात् तु राजाज्ञां शिष्यवत्सच्छ्रियः पते ।
न क्षिपेद् वचनं राज्ञो अनुकूलं प्रियं वदेत् ॥ १ ॥

रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् । न नियुक्तो हरेद् वित्तंनोपेक्षेत् तस्य मानकम्
राज्ञश्च न तथाकार्य्यं वेशभाषाविचेष्टितम् । अन्तःपुरचराध्यक्षी वैरभूतैर्निराकृतैः ॥
संसर्गं न व्रजेद्भृत्यो राज्ञोगुह्यञ्च गोपयेत् । प्रदर्श्य कौशलंकिञ्चिद्राजानन्तु विशेषयेत्

राज्ञा यच्छ्रावितं गुह्यं न तल्लोके प्रकाशयेत् ।
आज्ञाप्यमाने वान्यस्मिन् किङ्करोमीति वा वदेत् ॥ ५ ॥

वस्त्रं रत्नमलङ्कारं राज्ञा दत्तं च धारयेत् । नानिर्दिष्टो द्वारि विशेन्नायोग्येभुविराजदृक्
जृम्भान्निष्ठीवनङ्कासं कोपं पर्य्यन्तिकाश्रयम् । भृकुटीं वातमुद्गारं तत्समीपे विवर्जयेत्

स्वगुणाख्यापने युक्त्या परानेव नियोजयेत् ।
शाठ्यं लौल्यं सपैशून्यं नास्तिक्यं क्षुद्रता तथा ॥ ८ ॥
चापल्यञ्च परित्याज्यं नित्यं राजानुजीविनो ।
श्रुतेन विद्याशिल्पैश्च संयोज्यात्मानमात्मना ॥ ९ ॥

राजसेवांततः कुर्य्याद् भूतयेभूतिवर्द्धनः । नमस्कार्य्याः सदा चास्यपुत्रवल्लभमन्त्रिणः

सचिवैर्नास्य विश्वासो राजचित्तप्रियश्चरेत् ।
त्यजेद् विरक्तं रक्तात् तु वृत्तिमीहेत राजवित् ॥ ११ ॥
अपृष्टश्चास्य न ब्रूयात् कामं कुर्य्यात् तथापदि ।
प्रसन्नो वाक्यसङ्ग्राही रहस्ये न च शङ्कते ॥ १२ ॥

कुशलादिपरिप्रश्नं सम्प्रयच्छति चासनम् । तत्कथाश्रवणादधृष्टो अप्रियाण्यपि नन्दते
अल्पं दत्तं प्रगृह्णाति स्मरेत् कथान्तरेष्वपि । इति रक्तस्य कर्त्तव्यं सेवामन्यस्य वर्जयेत्
इत्यादि महापुराणे आग्नेये अनुजीविवृतकथनंनामैकविंशत्यधिकद्विशततमोऽध्यायः ।

---

# द्वाविंशत्यधिकद्विशततमोऽध्यायः

## दुर्गसम्पत्तिः ।

पुष्कर उवाच ।

दुर्गसम्पत्तिमाख्यास्ये दुर्गदेशे वसेन्नृपः । वैश्यशूद्रजनप्रायोऽह्यनाहार्य्यस्तथापरैः ॥
किञ्चिद् ब्राह्मणसंयुक्तो बहुकर्मकरस्तथा । अदेवमातृको भक्तजलो देशः प्रशस्यते ॥
परैरपीडितः पुष्प फलधान्यसमन्वितः । अगम्यः परचक्राणां व्यालतस्करवर्जितः ॥

षण्णामेकतमं दुर्गं तत्र कृत्वा वसेद् बली ।
धनुर्दुर्गं महीदुर्गं नरदुर्गं तथैव च ॥ ४ ॥

वार्क्षश्चैवाम्बु दुर्गञ्च गिरिदुर्गञ्च भार्गव । सर्वोत्तमं शैलदुर्गमभेद्यं चान्यभेदनम् ॥ ५ ॥
पुरं तत्र च हट्टाद्य देवतायतनादिकम् । अनुयन्त्रायुधोपेतं सोदकं दुर्गमुत्तमम् ॥ ६ ॥

राजरक्षां प्रवक्ष्यामि रक्ष्यो भूपो विषादितः ।
पञ्चाङ्गस्तु शिरीषः स्यान्मूत्रपिष्टो विषार्दनः ॥ ७ ॥
शतावरी छिन्नरुहा विषघ्नी तण्डुलीयकम् !
कौषातकी च कह्लारी ब्राह्मी चित्रपटोलिका ॥ ८ ॥

मण्डूकपर्णी वाराही धात्र्यानन्दकमेव च । उन्मादिनी सोमराजी विषघ्नं रत्नमेव च

वास्तुलक्षणसंयुक्ते वसन् दुर्गे सुरान्यजेत् ।
प्रजाश्च पालयेद् दुष्टाञ्जयेद् दानानि दापयेत् ॥ १० ॥

देवद्रव्यादिहरणात् कल्पन्तु नरके वसेत् । देवालयानि कुर्वीत देवपूजारतो नृपः ॥

सुरालयाः पालनीयाः स्थापनीयाश्च देवताः ।
मृण्मयाद् दारुजं पुण्यं दारुजादिष्टकामयम् ॥ १२ ॥
ऐष्टकाच्छैलजं पुण्यं शैलजात् स्वर्णरत्नजम् ।
क्रीडन् सुरगृहं कुर्वन् भुक्तिमुक्तिमवाप्नुयात् ॥ १३ ॥

चित्रकृद् गीतवाद्यादि प्रेक्षणीयादिदानकृत् ।
तैलाज्य मधुदुग्धाद्यैः स्नाप्यदेवं दिवं व्रजेत् ॥ १४ ॥
पूजयेत् पालयेद् विप्रान् द्विजस्वं न हरेन्नृपः ।
सुवर्णकं गामेकां भूमेरप्येकमङ्गुलम् ॥ १५ ॥
हरन्नरकमाप्नोति यावदाहूतसम्प्लवम् । दुराचारन्न द्विषेच्च सर्वपापेष्वपिस्थितम् ॥
नैवास्ति ब्राह्मणवधात् पापं गुरुतरं क्वचित् । अदैवं दैवतं कुर्य्युः कुर्युर्दैवमदैवतम् ॥
ब्राह्मणा हि महाभागास्तान्नमस्येत् सदैव तु ।
ब्राह्मणी रुदती हन्ति कुलं राज्यं प्रजास्तथा ॥ १८ ॥
साध्वीस्त्रीणां पालनञ्च राजाकुर्य्याच्च धार्मिकः ।
स्त्रिया प्रहृष्टया भाव्यं गृहकार्यैकदक्षया ॥ १६ ॥
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ।
यस्मैदद्यात् पितात्वेनां शुश्रूषेत् तं पतिं सदा ॥ २० ॥
मृते भर्त्तरि स्वर्य्यायात्ब्रह्मचर्येस्थिताङ्गना । परवेश्मरुचिर्नस्यान्नस्यात्कलहशालिनी
मण्डनं वर्जयेन्नारी तथा प्रोषितभर्तृका । देवताराधनपरा तिष्ठेद् भर्तृहिते रता ॥
धारयेन्मङ्गलार्थाय किञ्चिदाभरणं तथा । भर्त्ताग्नियाविशेन्नारीसापिस्वर्गमवाप्नुयात्
श्रियः सम्पूजनङ्कार्यं गृहसम्मार्जनादिकम् ।
द्वादश्यां कार्त्तिके विष्णुं गां सवत्सां ददेत् तथा ॥ २४ ॥
सावित्र्या रक्षितो भर्त्ता सत्याचारव्रतेन च । सप्तम्यांमार्गशीर्षे तु सितेभ्यर्च्यदिवाकरम्
पुत्रानाप्नोति च स्त्रीह नात्रकार्या विचारणा ॥ २५ ॥
इत्यादिमहापुराणेआग्नेयेदुर्गसम्पतिकथनंनामद्वाविंशत्यधिकद्विशततमोऽध्यायः ।

---

# त्रयोविंशत्यधिकद्विशततमोऽध्यायः

## राजधर्माः ।

पुष्कर उवाच ।

ग्रामस्याधिपतिं कुर्याद् दशग्रामाधिपं नृपः । शतग्रामाधिपञ्चान्यं तथैव विषयेश्वरम् ॥
तेषां भोगविभागश्च भवेत् कर्मानुरूपतः । नित्यमेव तथा कार्यंतेषाञ्चारैःपरीक्षणम् ॥
ग्रामे दोषान् समुत्पन्नात् ग्रामेशः प्रशमं नयेत् । अशक्तोदशपालस्य स तुगत्वानिवेदयेत

श्रुत्वापि दशपालोऽपि तत्र युक्तिमुपाचरेत् ।
वित्ताद्याप्नोति राजा वै विषयात् तु सुरक्षितात् ॥ ४ ॥
धनवान् धर्ममाप्नोति धनवान् काममश्नुते ।
उच्छिद्यन्ते विना ह्यर्थैः क्रिया ग्रीष्मे सरिद् यथा ॥ ५ ॥

विशेषो नास्ति लोकेषु पतितस्याधनस्य च । पतितान्न तु गृह्णन्ति दरिद्रो नप्रयच्छति
धनहीनस्य भार्यापि नैका स्यादुपवर्त्तिनी । राष्ट्रपीड़ाकरो राजा नरके वसते चिरम्
नित्यं राज्ञा तथाभाव्यं गर्भिणीसहधर्मिणी । यथास्वंसुखमुत्सृज्यगर्भस्यसुखमावहेत

किं यज्ञैस्तपसा तस्य प्रजा यस्य न रक्षिताः ।
सुरक्षिताः प्रजा यस्य स्वर्गस्तस्य गृहोपमः ॥ ६ ॥

अरक्षिताः प्रजायस्य नरकं तस्य मन्दिरम् । राजा षड्भागमादत्ते सुकृताद् दुष्कृतादपि
धर्मागमो रक्षणाच्च पापमाप्नोत्यरक्षणात् । सुभगा विटभीतेव राजवल्लभ तस्करैः ॥

भक्ष्यमाणाः प्रजा रक्ष्याः कायस्थैश्च विशेषतः ।
रक्षिता तद्भयेभ्यस्तु राज्ञो भवति सा प्रजा ॥ १२ ॥

अरक्षिता सा भवति तेषामेवेह भोजनम् । दुष्टसम्मर्दनं कुर्य्याच्छास्त्रोक्तं करमाददेत

कोषे प्रवेशयेदर्द्धं नित्यञ्चार्द्धं द्विजे ददेत् ।
निधिं द्विजोत्तमः प्राप्य गृह्णीयात् सकलं तथा ॥ १४ ॥

चतुर्थमष्टमं भागं तथाषोडशमं द्विजः । वर्णक्रमेण दद्याच्च निधिपात्रे तु धर्मतः ॥

अनृतन्तु वदन् दण्ड्यः सुवित्तस्यांशमष्टमम् ।
प्रनष्टस्वामिकं ऋक्थं राजाब्दं निधापयेत् ॥ १६ ॥
अर्वाक् त्र्यब्दाद्धरेत् स्वामी परेण नृपतिर्हरेत् ।
ममेदमिति यो ब्रूयात् सोऽर्थयुक्तो यथाविधि ॥ १७ ॥
सम्पाद्य रूपसङ्ख्यादीन् स्वामी तद् द्रव्यमर्हति ।
बालदायादिकं ऋक्थं तावद्राजानुपालयेत् ॥ १८ ॥
यावत् स्यात् स समावृत्तो यावद्वातीतशैशवः ।
बालपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ॥ १६ ॥
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ।
जीवन्तीनान्तु तासां ये संहरेयुः स्वबान्धवाः ॥ २० ॥

ताञ्छिष्याच्चौरदण्डेन धार्मिकःपृथिवीपतिः। सामान्यतोहृतञ्चौरैस्तद्वैदद्यात्स्वयंनृपः

चौररक्षाधिकारिभ्यो राजापि हृतमाप्नुयात् ।
अहृतेयो हृतं ब्रूयान्निःसार्य्यो दण्डय एव सः ॥ २२ ॥

न तद्राज्ञा प्रदातव्यं गृहे यद् गृहगैर्हृतम् । स्वराष्ट्रपण्यादादद्याद्राजा विंशतिमं द्विज ?

शुल्कांशं परदेशाच्च क्षयव्ययप्रकाशकम् ।
ज्ञात्वा सङ्कल्पयेच्छुल्कं लाभं वणिग् यथाप्नुयात् ॥ २४ ॥
विंशांशं लाभमादद्यात् दण्डनीयस्ततोऽन्यथा ।
स्त्रीणां प्रव्रजितानाञ्च तरशुल्कं विवर्जयेत् ॥ २५ ॥

तरेषु दासदोषेण नष्टं दासांस्तु दापयेत् । शूकधान्येषु षड्भागं शिम्बिधान्येतथाष्टमम्
राजावन्यार्थमादद्यात् देशकालानुरूपकम् । पञ्चषड्भागमादद्याद् राजा पशुहिरण्ययो
गन्धौषधिरसानाञ्च पुष्पमूलफलस्य च । पत्रशाकतृणानाञ्च वंशवैणवचर्मणाम् ॥
वैदलानाञ्च भाण्डानां सर्वस्याश्ममयस्य च । षड्भागमेव चादद्यान् मधुमांसस्य सर्पिषः

म्रियन्नपि न चादद्याद् ब्राह्मणेभ्यस्तथा करम् ।

यस्यराज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा ॥ ३० ॥

तस्य सीदति तद्राष्ट्रं व्याधिदुर्भिक्षतस्करैः । श्रुतं वृत्तन्तु विज्ञाय वृत्तिं तस्य प्रकल्पयेत्

रक्षेच्च सर्वसत्वेन पिता पुत्रमिवौरसम् ।

संरक्ष्यमाणो राज्ञा यः कुरुते धर्ममन्वहम् ॥३२॥

तेनायुर्वर्द्धते राज्ञो द्रविणं राष्ट्रमेव च । कर्म कुर्य्युर्नरेन्द्रस्य मासेनैकञ्च शिल्पनः ।

भुक्तमात्रेण ये चान्ये स्वशरीरोपजीविनः ॥३३॥

इत्यादिमहापुराणेआग्नेयेराजधर्मवर्णनंनामत्रयोविंशत्यधिकद्विशततमोऽध्यायः ।

---

# चतुर्विंशत्यधिकद्विशततमोऽध्यायः

## राजधर्माः ।

पुष्कर उवाच ।

वक्ष्येऽन्तःपुरचिन्तां च धर्माद्याः पुरुषार्थकाः ।

अन्योऽन्यरक्षया तेषां सेवा कार्य्या स्त्रिया नृपैः ॥१॥

धर्ममूलोऽर्थविटपस्तथा कर्मफलो महान् । त्रिवर्ग पादपस्तत्र रक्षया फलभाग भवेत्

कामाधीनाः स्त्रियो राम ! तदर्थं रत्नसंग्रहः ।

सेव्यास्ता नातिसेव्याश्च भूभुजा विषयैषिणा ॥ ३ ॥

आहारो मैथुनं निद्रा सेव्या नाति हि रुग् भवेत् ।

मञ्चाधिकारे कर्त्तव्याः स्त्रियः सेव्याः स्वरामिकाः ॥४॥

दुष्टान्यावरते या तु नाभिनन्दति तत्कथाम् । ऐक्यं द्विषद्भिर्व्रजति गर्वं वहतिचोद्धता

चुम्बितामार्ष्टि वदनं दत्तं न बहुमन्यते । स्वपित्यादौ प्रसुप्तापि तथा पश्चाद् विबुध्यते

स्पृष्टा धुनोति गात्राणि गात्रञ्च विरुणद्धिया ।

ईषच्छृणोति वाक्यानि प्रियाण्यपि पराङ्मुखी ॥७॥

न पश्यत्यग्रदत्तन्तु जघनञ्च निगूहति। दृष्टे विवर्णवदना मित्रेष्वथ पराङ्मुखी ॥८॥
तत्कामितासु च स्त्रीसु मध्यस्थेव च लक्ष्यते।
ज्ञातमण्डनकालापि न करोति च मण्डनम् ॥९॥
या सा विरक्ता तान् त्यक्त्वा सानुरागां स्त्रियं भजेत्।
दृष्ट्वैव हृष्टा भवति वीक्षिते च पराङ्मुखी ॥१०॥
दृश्यमाना तथाऽन्यत्र दृष्टिं क्षिपति चञ्चलाम्। तचाप्युपावर्त्तयितुं नैव शक्नोत्यशेषतः
विवृणोति तथाङ्गानि स्वस्या गुह्यानि भार्गव!।
गर्हितञ्च तथैवाङ्गं प्रयत्नेन निगूहति॥ १२ ॥
तद्दर्शने च कुरुते बालालिङ्गनचुम्बनम्। आभाष्यमाणा भवति सत्यवाक्या तथैव च
स्पृष्टा पुलकितैरङ्गैः स्वेदेनैव च भज्यते। करोति च तथा राम! सुलभद्रव्ययाचनम्
ततः स्वल्पमपि प्राप्य करोति परमां मुदम्। नामसङ्कीर्त्तनादेव मुदिता बहुमन्यते॥
करजाङ्काङ्कितान्यस्य फलानि प्रेषयत्यपि। तत्प्रेषितञ्च हृदये विन्यसत्यपि चादरात्
आलिङ्गनैश्च गात्राणि लिम्पतीवामृतेन या।
सुप्ते स्वपित्यथादौ च तथा तस्य विबुध्यते ॥१७॥
ऊरू स्पृशति चात्यर्थं सुप्तञ्चैनं विबुध्यते। कपित्थचूर्णयोगेन तथा दध्नः स्रजा तथा
घृतं सुगन्धि भवति दुग्धैः क्षिप्तैस्तथा यवैः।
भोज्यस्य कल्पनैवं स्याद् गन्धमुक्तिः प्रदर्श्यते ॥१९॥
शौचमाचमनं राम! तथैव च विरेचनम्। भावना चैव पाकश्च बोधनं धूपनं तथा
वासनञ्चैव निर्दिष्टं कर्माष्टकमिदं स्मृतम्। कपित्थविल्वजं वाम्र करवीरकपल्लवैः॥
कृत्वोदकन्तु यद् द्रव्यं शौचितं शौचनन्तु तत्।
तेषामभावे शौचन्तु मृगदर्पाम्भसा भवेत् ॥२२॥
नखं कुष्ठं धनं मांसी स्पृक्कशैलेयजं जलम्। तथैव कुङ्कुमं लाक्षा चन्दनागुरुनीरदम्॥
सरलं देवकाष्ठञ्च कर्पूरं कान्तया सह।
बालः कुन्दुरुकश्चैव गुग्गुलुः श्रीनिवासकः ॥२४॥

सह सर्जरसेनैवं धूपद्रव्यैकविंशतिः। धूपद्रव्यगणादस्मादेकविंशाद् यथेच्छया ॥२५॥
द्वे द्वे द्रव्ये समादाय सर्जभागैर्नियोजयेत्। नखपिण्याकमलयैः संयोज्य मधुना तथा
धूपयोगा भवन्तीह यथावत् स्वेच्छया कृताः।
त्वचन्नाड़ीं फलं तैलं कुङ्कुमं ग्रन्थि पर्वकम् ॥२७॥
शैलेयन्तगरं क्रान्तां चोलङ्कर्पूरमेव च।
मांसीं सुराञ्च कुष्ठञ्च स्नानद्रव्याणि निर्दिशेत् ॥२८॥
एतेभ्यस्तु समादाय द्रव्यत्रयमथेच्छया। मृगदर्पयुतं स्नानं कार्य्यं कन्दर्पवर्द्धनम् ॥
त्वङ्मुरानलदैस्तुल्यैर्बालकार्द्धसमायुतैः।
स्नानमुत्पलगन्धि स्यात् सतैलं कुङ्कुमायते ॥३०॥
जातीपुष्पसुगन्धि स्यात् तगरार्द्धेन योजितम्।
सद्व्यामकं स्याद् वकुलैस्तुल्यगन्धि मनोहरम् ॥ ३१ ॥
मञ्जिष्ठातगरं चोलं त्वचं व्याघ्रनखं नखम्। गन्धपत्रञ्च विन्यस्य गन्धतैलं भवेच्छुभम्
तैलं निपीड़ितं राम! तिलैः पुष्पाधिवासितैः।
वासनात् पुष्पसदृशं गन्धेन तु भवेद् ध्रुवम् ॥ ३३ ॥
एलालवङ्गकक्कोलजातीफलनिशाकराः। जातीपत्रिकया सार्द्धं स्वतन्त्रा मुखवासकाः
कर्पूरं कुङ्कुमं कान्ता मृगदर्पं हरेणुकम्। कक्कोलैलालवङ्गञ्च जाती कोशकमेव च ॥
त्वक्पत्रं त्रुटिमुस्तौ च लतां कस्तूरिकं तथा।
कण्टकानि लवङ्गस्य फलपत्रे च जातितः ॥ ३६ ॥
कटुकञ्च फलं राम! कार्षिकाण्युपकल्पयेत्।
तच्चूर्णे खदिरं सारं दद्यात् तुर्य्यं तु वासितम् ॥ ३७ ॥
सहकाररसेनास्मात् कर्त्तव्या गुटिकाः शुभाः।
मुख न्यस्ताः सुगन्धास्ता मुखरोगविनाशनाः ॥३८॥
पूगं प्रक्षालितं सम्यक् पञ्चपल्लववारिणा।
शक्त्या तु गुटिकाद्रव्यैर्वासितं मुखवासकम् ॥३९॥

कटुकं दन्तकाष्ठञ्च गोमूत्रे वासितं त्र्यहम्। कृतञ्च पूगवद्राम मुखसौगन्धिकारकम् ॥
त्वक्पथ्ययोः समावंशौ शशिभागार्द्धसंयुतौ। नागवल्लीसमो भातिमुखवासो मनोहरः
एवं कुर्य्यात्सदा स्त्रीणांरक्षणं पृथिवीपतिः। न चासां विश्वसेज्जातु पुत्रमातुर्विशेषतः
न स्वपेत् स्त्रीगृहे रात्रौ विश्वासः कृत्रिमो भवेत् ॥४२॥

इत्यादिमहापुराणे आग्नेये राजधर्मवर्णनंनामचतुर्विंशत्यधिकद्विशततमोऽध्यायः।

---

## पञ्चविंशत्यधिकद्विशततमोऽध्यायः

### राजधर्माः।

पुष्कर उवाच।

राजपुत्रस्य रक्षा च कर्त्तव्या पृथिवीक्षिता। धर्मार्थकामशास्त्राणि धनुर्वेदञ्च शिक्षयेत्
शिल्पानि शिक्षयेच्चैवमाप्तैर्मिथ्याप्रियंवदैः।
शरीररक्षाव्याजेन रक्षिणोऽस्य नियोजयेत् ॥ २ ॥
न चास्य सङ्गो दातव्यः क्रुद्धलुब्धविमानितैः।
अशक्यन्तु गुणाधानं कर्त्तुं तं बन्धयेत् सुखैः ॥ ३ ॥
अधिकारेषु सर्वेषु विनीतं विनियोजयेत्। मृगयां पानमक्षांश्च राज्यनाशं त्यजेन्नृपः
दिवास्वप्नं वृथाट्याञ्च वाक्पारुष्यं विवर्जयेत्।
निन्दाञ्च दण्डपारुष्यमर्थदूषणमुत्सृजेत् ॥ ५ ॥
आकाराणां समुच्छेदो दुर्गादीनामसत्क्रिया। अर्थानां दूषणं प्रोक्तं विप्रकीर्णत्वमेव च
अदेशकाले यद् दानमपात्रे दानमेव च। अर्थेषु दूषणं प्रोक्तमसत्कर्म प्रवर्त्तनम् ॥ ७ ॥
कामं क्रोधं मदं मानं लोभं दर्पञ्च वर्जयेत्।
ततो भृत्यजयं कृत्वा पौरजानपदं जयेत् ॥ ८ ॥
जयेद् बाह्यानरीन् पश्चाद् बाह्याश्च त्रिविधारयः।

गुरवस्ते यथा पूर्वं कुल्यानन्तरकृत्रिमाः ॥ ६ ॥
पितृपैतामहं मित्रं सामन्तञ्च तथा रिपोः। कृत्रिमञ्च महाभाग ! मित्रं त्रिविधमुच्यते
स्वाम्यमात्यं जनपदा दुर्गं दण्डस्तथैव च। कोषोमित्रञ्च धर्मज्ञ ! सप्ताङ्गं राज्यमुच्यते
मूलं स्वामी स वै रक्ष्यस्तस्माद्राज्यं विशेषतः।
राज्याङ्गद्रोहिणं हन्यात् काले तीक्ष्णो मृदुर्भवेत् ॥ १२ ॥
एवं लोकद्वयं राज्ञो भृत्यैर्हासं विवर्जयेत्। भृत्याः परिभवन्तीह नृपं हर्षणसत्कथम्
लोकसङ्ग्रहणार्थायकृतकव्यसनो भवेत्। स्मितपूर्वाभिभाषीस्यात् लोकानांरञ्जनंचरेत्
दीर्घसूत्रस्य नृपतेः कर्महानिर्ध्रुवं भवेत्। रागे दर्पे च माने च द्रोहे पापे च कर्मणि ॥
अप्रिये चैव वक्तव्ये दीर्घसूत्रः प्रशस्यते। गुप्तमन्त्रो भवेद्राजा नापदो गुप्तमन्त्रतः॥१६॥
ज्ञायते हि कृतं कर्म नारब्धं तस्य राज्यकम्।
आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ॥ १७ ॥
नेत्रवक्त्रविकाराभ्यां गृह्यतेऽन्तर्गतं पुनः। नैकस्तु मन्त्रयेन् मन्त्रं न राजा बहुभिः सह
बहुभिर्मन्त्रयेत् कामं राजा मन्त्रान् पृथक् पृथक्।
मन्त्रिणामपि नो कुर्य्यान् मन्त्री मन्त्रप्रकाशनम् ॥ १९ ॥
क्वापि कस्यापि विश्वासो भवतीह सदा नृणाम्।
निश्चयश्च तथामन्त्रे कार्य्यं एकेन सूरिणा ॥ २० ॥
नश्येदविनयाद्राजाराज्यञ्चविनयाल्लभेत्। त्रैविद्येभ्यस्त्रयींविद्यांदण्डनीतिञ्च शाश्वतीम्
आन्वीक्षिकीञ्चार्थविद्यां वार्त्तारम्भांश्च लोकतः।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥ २२ ॥
पूज्या देवा द्विजाः सर्वे दद्याद् दानानि तेषु च।
द्विजे दानञ्चाक्षयोऽयं निधिः कैश्चिन्न नाश्यते ॥ २३ ॥
सङ्ग्रामेष्वनिवर्त्तित्वं प्रजानां परिपालनम्।
दानानि ब्राह्मणानाञ्च राज्ञो निःश्रेयसम्परम् ॥ २४ ॥
कृपणानाथवृद्धानां विधवानाञ्च योषिताम्। योगक्षेमञ्च वृत्तिञ्च तथैव परिकल्पयेत् ॥

वर्णाश्रमव्यवस्थानं कार्य्यं तापसपूजनम् । न विश्वशेच्च सर्वत्र तापसेषु च विश्वसेत्
विश्वासयेच्चापि परं तत्त्वभूतेन हेतुना । वकवच्चिन्तयेदर्थं सिंहवच्च पराक्रमेत् ॥
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् । दृढ़प्रहारी च भवेत् तथा शूकरवन्नृपः ॥
चित्राकारश्च शिखिवद् दृढ़भक्तिस्तथाश्ववत् । भवेच्च मधुराभाषीतथाकोकिलवन्नृपः

काकशङ्की भवेन् नित्यमज्ञातां वसतिं वसेत् ।
नापरीक्षितपूर्वञ्च भोजनं शयनं स्पृशेत् ॥ ३० ॥
नाविज्ञातां स्त्रियं गच्छेन्नाज्ञातं नावमारुहेत् ।
राष्ट्रकर्षी भ्रस्यते च राज्यार्थाच्चैव जीवितात् ॥ ३१ ॥
भृतो वत्सो जातबलः कर्मयोग्यो यथा भवेत् ।
तथा राष्ट्रं महाभाग ! भृतं कर्मसहं भवेत् ॥ ३२ ॥

सर्वं कर्मेदमायत्तं विधाने दैवपौरुषे । तयोर्दैवमचिन्त्यं हि पौरुषे विद्यते क्रिया ॥

जनानुरागप्रभवा राज्ञो राज्यमहीश्रियः ॥ ३३ ॥

इत्यादिमहापुराणेआग्नेयेराजधर्मकथनंनामपञ्चविंशत्यधिकद्विशततमोऽध्यायः ।

---

# षड्विंशत्यधिकद्विशततमोऽध्यायः

## सामाद्युपायकथनम्

पुष्कर उवाच ।

स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम् । तस्मात् पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः

प्रतिकूलं तथादैवं पौरुषेण विहन्यते ।
सात्त्विकात् कर्मणः पूर्वात् सिद्धिः स्यात् पौरुषं विना ॥ २ ॥

पौरुषं दैवसम्पत्त्या काले फलति भार्गव ! । दैवं पुरुषकारश्च द्वयं पुंसः फलावहम् ॥

कृषेर्वृष्टिसमायोगात् काले स्युः फलसिद्धयः ।

सधर्मं पौरुषं कुर्यान् नालसो न च दैववान् ॥ ४ ॥
सामादिभिरुपायैस्तु सर्वेसिध्यन्त्युपक्रमाः । साम चोपप्रदानञ्च भेददण्डौ तथापरौ ॥
मायोपेक्षेन्द्रजालञ्च उपायाः सप्तताञ्छृणु । द्विविधं कथितं साम तथ्यञ्चातथ्यमेव च
तत्राप्यतथ्यं साधूनामाक्रोशायैव जायते । महाकुलीना ह्यृजवो धर्मनित्याजितेन्द्रियाः
सामसाध्या अतथ्यैश्च गृह्यन्ते राक्षसा अपि ।
तथा तदुपकाराणां कृतानाञ्चैव वर्णनम् ॥ ८ ॥
परस्परन्तु ये द्विष्टाः क्रुद्धभीतावमानिताः । तेषां भेदं प्रयुञ्जीत परमंदर्शयेद् भयम् ॥
आत्मीयान् दर्शयेदाशां येन दोषेण विभ्यति ।
परास्तेनैव ते भेद्या रक्ष्यो वै ज्ञातिभेदकः ॥ १० ॥
सामन्तकोपो बाह्यस्तु मन्त्रामात्यात्मजादिकः ।
अन्तःकोषञ्चोपशाम्यं कुर्वन् शत्रोश्च तं जयेत् ॥ ११ ॥
उपायश्रेष्ठं दान स्याद् दानादुभयलोकभाक् । न सोऽस्ति नामदानेन वशगोयोनजायते
दानवानेव शक्नोति संहतान् भेदितुं परान् ।
त्रयासाध्यं साधयेत् तं दण्डेन च कृतेन च ॥ १३ ॥
दण्डे सर्वं स्थितं दण्डो नाशयेद् दुष्प्रणीकृतः ।
अदण्ड्यान् दण्डयन्नश्येद् दण्ड्यान्राजाप्यदण्डयन् ॥ १४ ॥
देवदैत्योरगनराः सिद्धाभूताः पतत्रिणः ।
उत्क्रमेयुः स्वमर्य्यादां यदि दण्डान्न पालयेत् ॥ १५ ॥
यस्माददान्तान् दमयत्यदण्ड्यान् दण्डयत्यपि ।
दमनाद् दण्डनाच्चैव तस्माद् दण्ड विदुर्बुधाः ॥ १६ ॥
तेजसा दुर्निरीक्ष्यो हि राजा भास्करवत् ततः ।
लोकप्रसादं गच्छेत दर्शनाच्चन्द्रवत् ततः ॥ १७ ॥
जगद्व्याप्नोति वै चारैरतो राजा समीरणः । दोषनिग्रहकारित्वाद्राजा वैवस्वतः प्रभुः
यदादहति दुर्बुद्धिं तदाभवति पावकः । यदादानं द्विजातिभ्यो दद्यात् तस्माद्धनेश्वरः

घनधाराप्रवर्षित्वाद् देवादौ वरुणः स्मृतः ।
क्षमया धारयन् लोकान् पार्थिवः पार्थिवो भवेत् ।
उत्साहमन्त्रशक्त्याद्यै रक्षेद् यस्माद्धरिस्ततः ॥ २० ॥

इत्यादिमहापुराणेआग्नेयेसामाद्युपायकथनंनामषड्विंशत्यधिकद्विशततमोऽध्यायः ।

---

## सप्तविंशत्यधिकद्विशततमोऽध्यायः

### दण्डप्रणयनम् ।

पुष्कर उवाच ।

दण्डप्रणयनं वक्ष्ये येन राज्ञः परागतिः । त्रियवं कृष्णलं विद्धि माषस्तत्पञ्चकं भवेत्
कृष्णलानां तथा षष्ट्या कर्षार्द्धं राम ! कीर्त्तितम् ।
सुवर्णश्च विनिर्दिष्टो राम ! षोड़शमाषकः ॥ २ ॥
निष्कः सुवर्णाश्चत्वारो धरणं दशभिस्तु तैः ।
ताम्ररूप्यसुवर्णानां मानमेतत् प्रकीर्त्तितम् ॥३॥
ताम्रिकैः कार्षिको रामा ! प्रोक्ताः कार्षापणो बुधैः ।
पणानां द्वे शते सार्द्धं प्रथमः साहसः स्मृतः ॥४॥
मध्यमः पञ्चविज्ञेयः सहस्रमपि चोत्तमः । चौरैरमूषितो यस्तु मूषितोऽस्मीति भाषते
तत्प्रदातरि भूपाले स दण्ड्यस्तावदेव तु ।
यो यावद् विपरीतार्थं मिथ्या वा यो वदेत् तु तम् ॥६॥
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद् द्विगुणं दमम् ।
कूटसाक्ष्यन्तु कुर्वाणांस्त्रीन् वर्णांश्च प्रदापयेत् ॥७॥
विवासयेद् ब्राह्मणन्तु भोज्यो विधिर्न हीरितः ।
निक्षेपस्य समं मूल्यं दण्ड्यो निक्षेपभुक् तथा ॥८॥

वस्त्रादिकस्य धर्मज्ञ ! तथा धर्मो न हीयते ।
यो निक्षेपं घातयति यश्चानिक्षिप्य याचते ॥९॥
तावुभौ चौरवच्छास्यौ दण्ड्यौ वा द्विगुणं दमम् ।
अज्ञानाद्यः पुमान् कुर्य्यात् परद्रव्यस्त विक्रयम् ॥ १०॥

निर्दोषो ज्ञानपूर्वन्तु चौरवद्दण्डमर्हति । मूल्यमादाय यःशिल्पं न दद्याद् दण्डय एवसः
प्रतिश्रुत्याप्रदातारं सुवर्णां दण्डयेन्नृपः । भृतिंगृह्य न कुर्य्याद् यःकर्माष्टौ कृष्णलादमः

अकाले तु त्यजन् भृत्यं दण्डयः स्यात् तावदेव तु ।
क्रीत्वा विक्रीय वा किञ्चिद् यस्येहानुशयो भवेत् ॥ १३ ॥

सोऽन्तर्दशाहात् तत्स्वामी दद्याच्चैवाददीत च। परेण तु दशाहस्य नादद्यान्नैव दापयेत्
आददद्धि ददच्चैव राज्ञादण्डयः शतानि षट् । वरे दोषानविख्याप्य यः कन्यां वरयेदिह

दत्ताप्यदत्ता सा तस्य राज्ञा दण्डयः शतद्वयम् ।
प्रदाय कन्यां योऽन्यस्मै पुनस्तां सम्प्रयच्छति ॥ १६ ॥

दण्डः कार्य्योनरेन्द्रेण तस्याप्युत्तमसाहसः । सत्यङ्कारेण वाचाच युक्तं पुण्यमसंशयम्
लुब्धोऽन्यत्र च विक्रेता षट्शतं दण्डमर्हति। दद्याधेनुं न यःपालो गृहीत्वा भक्तवेतनम्
स तु दण्डयः शतं राज्ञा सुवर्णं वाप्यरक्षिता । धनुःशतं परीणाहोग्रामस्य तु समन्ततः
द्विगुणं त्रिगुणं वापि नगरस्य च कलपयेत् । वृतिं तत्र प्रकुर्वीत यामुष्ट्रो नावलोकयेत्
तत्रापरिवृते धान्ये हिंसिते नैव दण्डनम् । गृहं तड़ागमारामं क्षेत्रं वा भीषया हरन् ॥

शतानि पञ्च दण्डय,ः स्यादज्ञानाद् द्विशतो दमः ॥
मर्य्यादाभेदकाः सर्वे दण्डयाः प्रथमसाहसम् ॥ २२ ॥

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति । वैश्यश्च द्विशतं राम ! शूद्रश्च वधमर्हति ॥

पञ्चाशद् ब्राह्मणो दण्डयः क्षत्रियस्याभिशंसने ।
वैश्ये चाप्यर्द्धपञ्चाशच्छूद्रे द्वादशको दमः ॥ २४ ॥

क्षत्रियस्याप्नुयाद् वैश्यःसाहसंपूर्वमेव तु । शूद्रःक्षत्रियमाक्रुश्य जिह्वाच्छेदनमाप्नुयात्

धर्मोपदेशं विप्राणां शूद्रः कुर्वंश्च दण्डभाक् ।

श्रुतदेशादिवितथी दाप्यो द्विगुणसाहसम् ॥ २६ ॥
उत्तमः साहसस्तस्य यः पापैरुत्तमान् क्षिपेत् ।
प्रमादाद्यैर्मया प्रोक्तं प्रीत्या दण्डार्द्धमर्हति ॥ २७ ॥

मातरं पितरं ज्येष्ठं भ्रातरं श्वशुरं गुरुम् । आकारयञ्छतं दण्ड्यः पन्थानंचाददद्गुरोः
अन्त्यजातिर्द्विजातिन्तु येनाङ्गेनापराध्नुयात् । तदेव छेदयेत् तस्य क्षिप्रमेवाविचारयन्
अवनिष्ठीवतो दर्पाद् द्वावोष्ठौ छेदयेन्नृपः । अपमूत्रयतो मेढ्रमपशब्दयतो गुदम् ॥३०॥
उत्कृष्टासनसंस्थस्य नीचस्याधोनिकृन्तनम् । यो यदङ्गं च रुजयेत् तदङ्गं तस्यकर्त्तयेत्
अर्द्धपादकराः कार्य्याः गोगजाश्वोष्ट्रघातकाः । वृक्षन्तु विफलंकृत्वा सुवर्णं दण्डमर्हति

द्विगुणं दापयेच्छिन्ने पथि सीम्नि जलाशये ।
द्रव्याणि यो हरेद् यस्य ज्ञानतोऽज्ञानतोऽपि वा ॥ ३३ ॥
स तस्योदपाद्य तुष्टिन्तु राज्ञे दद्यात् ततो दमम् ।
यस्तु रज्जुं घटं कूपाद्धरेच्छिन्द्याच्च तां प्रपाम् ॥ ३४ ॥
स दण्डं प्राप्नुयात् मासं दण्ड्यः स्यात् प्राणिताड़ने ।
धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः ॥ ३५ ॥

शेषेऽप्येकांदशगुणं तस्य दण्डं प्रकल्पयेत् । सुवर्णरजतादीनां नृस्त्रीणां हरणे वधः ॥
येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते । तत् तदेव हरेदस्य प्रत्यादेशाय पार्थिवः ॥

ब्राह्मणः शाकधान्यादि अल्पं गृह्णन्न दोषभाक् ।
गोदेवार्थं हरंश्चापि हन्याद् दुष्टं बधोद्यतम् ॥ ३८ ॥
गृहक्षेत्रापहर्त्तारं तथा पत्न्यभिगामिनम् ।
अग्निदं गरदं हन्यात् तथा चाभ्युद्यतायुधम् ॥ ३६ ॥

राजा गवाभिचाराद्यं हन्याच्चैवाततायिनः । परस्त्रियं न भाषेत प्रतिषिद्धो विशेन्नहि
अदण्ड्या स्त्रीभवेद्राजावरयन्तीपतिं स्वयम् । उत्तमांसेवमानः स्त्रीं जघन्योबधमर्हति

भर्त्तारं लङ्घयेद् या तां श्वभिः सङ्घातयेत् स्त्रियम् ।
सवर्णदूषितां कुर्य्यात् पिण्डमात्रोपजीविनीम् ॥ ४२ ॥

ज्यायसा दूषिता नारी मुण्डनं समवाप्नुयात् ।

वैश्यागमे तु विप्रस्य क्षत्रियस्यान्त्यजागमे ॥ ४३ ॥

क्षत्रियः प्रथमं वैश्यो दण्ड्यःशूद्रागमे भवेत् । गृहीत्वा वेतनंवेश्या लोभादन्यत्रगच्छति

वेतनं द्विगुणं दद्याद् दण्डश्च द्विगुणं तथा ।

भार्य्या पुत्राश्च दासाश्च शिष्यो भ्राता च सोदरः ॥ ४५ ॥

कृतापराधास्ताड्याः स्यूरज्ज्वा वेणुदलेन वा ।

पृष्ठेन मस्तके हन्याच्चौरस्याप्नोति किल्विषम् ॥ ४६ ॥

रक्षास्वधिकृतैर्यस्तुप्रजाऽत्यर्थं विलुप्यते । तेषां सर्वस्वमादाय राजाकुर्य्यात्प्रवासनम्

ये नियुक्ताः स्वकार्य्येषु हन्युः कार्य्याणि कर्मिणाम् ।

निर्घृणाः क्रूरमनसस्तानि निःस्वान् कारयेन्नृपः ॥ ४८ ॥

अमात्यः प्राड्विवाको वा यः कुर्य्यात् कार्य्यमन्यथा ।

तस्य सर्वस्वमादाय तं राजा विप्रवासयेत् ॥ ४६ ॥

गुरुतल्पेभयः कार्य्यःसुरापाने सुराध्वजः । स्तेयेषु श्वपदं विद्यात् ब्रह्महत्याशिरःपुमान्

शूद्रादीन् घातयेद्राजा पापान् विप्रान् प्रवासयेत् ।

महापातकीनां वित्तं वरुणायोपपादयेत् ॥ ५१ ॥

ग्रामेष्वपि च ये केचिच्चौराणां भक्तदायकाः ।

भाण्डारकोषदश्चैव सर्वांस्तानपि घातयेत् ॥ ५२ ॥

राष्ट्रेषु राष्ट्राधिकृतान् सामन्तान् पापिनो हरेत् ।

सन्धिं कृत्वा तु ये चौर्य्यं रात्रौ कुर्वन्ति तस्कराः ॥ ५३ ॥

तेषां छीत्वा नृपो हस्तौतीक्ष्णे शूले निवेशयेत् । तड़ागदेवतागारभेदकान् घातयन्नृपः

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ।

स हि कार्षापणं दण्ड्यस्तममेध्यञ्च शोधयेत् ॥ ५५ ॥

प्रतिमासङ्क्रमभिदो दद्युः पञ्चशतानि ते । समैश्च विषमं यो वा चरते मूल्यतोऽपि वा

समाप्नुयान्नरः पूर्वं दमं मध्यममेव वा । द्रव्यमादाय वणिजामनर्घेणावरुन्धताम्॥५७॥

राजा पृथक् पृथक् कुर्य्याद् दण्डमुत्तमसाहसम् ।
द्रव्याणां दूषको यश्च प्रतिच्छन्दकविक्रयी ॥ ५८ ॥
मध्यमं प्राप्नुयाद् दण्डं कूटकर्त्ता तथोत्तमम् । कलहापकृतं देयं दण्डश्च द्विगुणस्ततः
अभक्ष्यभक्ष्ये विप्रे वा शूद्रे वा कृष्णलो दमः ।
तुलाशासनकर्त्ता च कूटकृन्नाशकस्य च ॥ ६० ॥
एभिश्च व्यवहर्त्ता यः स दाप्यो दममुत्तमम् ।
विषाग्निदां पतिगुरु विप्रापत्यप्रमापिणीम् ॥६१॥
विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रवासयेत् । क्षेत्रवेश्मग्रामवनविदारकास्तथा नराः
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना ।
ऊनं वाप्यधिकं वापि लिखेद् यो राजशासनम् ॥६३॥
पारजायिकचौरौ च मुञ्चतो दण्ड उत्तमः । राजयानासनारोढुर्दण्ड उत्तमसाहसः ॥
यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ।
तमायान्तं पराजित्य दण्डयेद् द्विगुणं दमम् ॥६५॥
आह्वानकारी वध्यः स्यादनाहूतमथाह्वयन् । दाण्डिकस्य च यो हस्तादभियुक्तःपलायते
हीनः पुरुषकारेण तद् दद्याद् दाण्डिको धनम् ॥६६॥
इत्यादि महापुराणे आग्नेये दण्डप्रणयनकथनं नाम सप्तविंशत्यधिकद्विशततमोऽध्यायः

---

## अष्टाविंशत्यधिकद्विशततमोऽध्यायः

### युद्धयात्रा ।

पुष्कर उवाच ।

यदा मन्येत नृपतिराक्रन्देन बलीयसा ।
पार्ष्णिग्राहोऽभिभूतो मे तदा यात्रां प्रयोजयेत् ॥१॥

पुष्टा योधा भृता भृत्याः प्रभूतश्च वलं मम ।
मूलरक्षासमर्थोऽस्मि तैर्गत्वा शिवरे व्रजेत् ॥२॥
शत्रोर्वा व्यसने यायात् दैवाद्यैः पीड़ितं परम् ।
भूकम्पायां दिशंयाति याञ्च केतुर्व्यदूषयत् ॥३॥
विद्विष्टनाशकं सैन्यं सम्भूतान्तःप्रकोपनम् । शरीरस्फुरणे धन्ये तथा सुस्वप्नदर्शने ॥
निमित्ते शकुने धन्यं जाते शत्रुपरं व्रजेत् ।
पदातिनागवहुलां सेना प्रावृषि योजयेत् ॥५॥
हेमन्ते शिशिरेचैव रथवाजिसमाकुलाम् । चतुरङ्गवलोपेतां वसन्ते वा शरन्मुखे ॥६॥
सेना पदारिवहुला शत्रून् जयति सर्वदा ।
अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत् ॥ ७ ॥
न शस्तन्तु तथा वामे पृष्ठस्य हृदयस्य च । लाञ्छनं पिटकश्चैव विज्ञेयं स्फुरणं तथा ।
विपर्य्ययेणाभिहितं सव्ये स्त्रीणां शुभं भवेत् ॥८॥
इत्यादिमहापुराणेआग्नेये युद्धयात्रावर्णनं नामाष्टाविंशत्यधिकद्विशततमोऽध्यायः ।

---

# ऊनत्रिंशत्यधिकद्विशततमोऽध्यायः

## स्वप्नाध्यायः ।

### पुष्कर उवाच ।

स्वप्नं शुभाशुभं वक्ष्ये दुःस्वप्नहरणं तथा । नाभिं विनान्यत्र गात्रे तृणवृक्षसमुद्भवः ॥
चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा ।
मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ॥ २ ॥
उच्चात् प्रपतश्चैव विवाहो गीतमेव च । तन्त्रीवाद्यविनोदश्च दोलारोहणमेव च ॥३॥
अर्जनं पद्मलोहानां सर्पाणामथ मारणम् । रक्तपुष्पद्रुमाणाञ्च चण्डालस्य तथैव च

वरावश्वखरोष्ट्राणां तथा चारोहणक्रिया। भक्षणं पक्षिमांसानां तैलस्य कृशरस्य च
मातुः प्रवेशो जठरे चितारोहणमेव च। शक्रध्वजाभिपतनं पतनं शशिसूर्य्ययोः ॥६॥

दिव्यान्तरिक्षभौमानामुत्पातानाञ्च दर्शनम्।
देवद्विजातिभूतानां गुरूणां कोप एव च॥ ७॥

नर्त्तनं हसनञ्चैव विवाहो गीतमेव च।
तन्त्रीवाद्यविहीनानां वाद्यानामपि वादनम्॥ ८॥

स्रोतोवहाधोगमनं स्नानं गोमयवारिणा। पङ्कोदकेन च तथा मशीतोयेन वाप्यथ॥

आलिङ्गनं कुमारीणां पुरुषाणाञ्च मैथुनम्।
हानिश्चैव स्वगात्राणां विरेको वमनक्रिया॥ १०॥

दक्षिणाशाप्रगमनं व्याधिनाभिभवस्तथा। फलानामुपहानिश्च धातूनां भेदनं तथा॥
गृहाणाञ्चैव पतनं गृहसम्मार्जनं तथा। क्रीड़ा पिशाचक्रव्यादवानरान्त्यनरैरपि॥१२॥

परादभिभवश्चैव तस्माच्च व्यसनोद्भवः।
काषायवस्त्रधारित्वं तद्वस्त्रैः क्रीडनं तथा॥ १३॥

स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम्। इत्यधन्यानि स्वप्नानि तेषामकथनं शुभम्॥

भूयश्च स्वपनं तद्वत् कार्य्यं स्नानं द्विजार्चनम्।
तिलैर्होमो हरिब्रह्मशिवार्कगणपूजनम्॥ १५॥

तथा स्तुतिप्रपठनं पुंसूक्तादिजपस्तथा। स्वप्नास्तु प्रथमे यामे संवत्सर विपाकिनः॥

षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्त्रियामिकाः।
चतुर्थे त्वर्द्धमासेन दशाहादरुणोदये॥ १७॥

एकस्यामथ चेद्रात्रौ शुभं वा यदि वाऽशुभम्।
पश्चाद् दृष्टस्तु यस्तत्र तस्य पाकं विनिर्दिशेत्॥१८॥

तस्मात् तु शोभने स्वप्ने पश्चात् स्वापो न शस्यते।
शैलप्रासादनागाश्ववृषभारोहणं हितम्॥ १९॥

द्रुमाणां श्वेतपुष्पाणां गगने च तथा द्विज!।

द्रुमतृणोद्भवो नाभौ तथा च वहुवाहुता ॥२०॥

तथा च वहुशीर्षत्वं पलितोद्भव एव च। सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता ॥
चन्द्रार्कताराग्रहणं परिमार्जनमेव च। शक्रध्वजालिङ्गनञ्च ध्वजोच्छ्रायक्रिया तथा ॥

भूम्यम्बुधाराग्रहणं शत्रूनाञ्चैव विक्रिया।
जयो विवादे द्यूते च संग्रामे च तथा द्विज ॥ २३ ॥
भक्षणञ्चार्द्रमांसानां पायसस्य च भक्षणम्।
दर्शनं रुधिरस्यापि स्नानं वा रुधिरेण च ॥ २४ ॥

सुरारुधिरमद्यानां पानं क्षीरस्य वाप्यथ। अस्त्रैर्विचेष्टनं भूमौ निर्मलं गगनं तथा ॥

मुखेन दोहनं शस्तं महिषीणां तथा गवाम्।
सिंहीनां हस्तिनीनाञ्च वड़वानां तथैव च ॥ २६ ॥
प्रसादो दैवविप्रेभ्यो गुरुभ्यश्च तथा द्विज !।
अम्भसा चाभिषेकस्तु गवां श्रृङ्गच्युतेन च ॥ २७ ॥
चन्द्राद् भ्रष्टेन् वा राम ! ज्ञेयं राज्यप्रदं हि तत्।
राज्याभिषेकश्च तथा छेदनं शिरसोऽप्यथ ॥ २८ ॥

मरणं वह्निलाभश्च वह्निदाहो गृहादिषु। लब्धिश्च राजलिङ्गानां तन्त्रीवाद्याभिवादनम्

यस्तु पश्यति स्वप्नान्ते राजानं कुञ्जरं हयम्।
हिरण्यं वृषभं गाञ्च कुटुम्बस्तस्य वर्द्धते ॥ ३० ॥

वृषेभगृहशैलाग्रवृक्षारोहणरोदनम्। घृतविष्ठानुलेपो वा अगम्यागमनं तथा।

सितवस्त्रं प्रसन्नाम्भः फली वृक्षो नभोऽमलम् ॥ ३१ ॥

इत्यादि महापुराणे आग्नेये स्वप्नाध्यायवर्णनंनामोनत्रिंशत्यधिकद्विशततमोऽध्यायः।

———

# त्रिंशदधिकद्विशततमोऽध्यायः

## शकुनानि ।

पुष्कर उवाच ।

औषधानिच युक्तानिधान्यं कृष्णमशोभनम् । कार्पासंतृणशुष्कञ्च गोमयं वै धनानिच
अङ्गारं गुड़सर्जौ च मुण्डाभ्यक्तञ्च नग्नकम् । अयः पङ्कं चर्मकेशौ उन्मत्तञ्च नपुंसकम्

चण्डालश्वपचाद्यानि नरा बन्धनपालकाः ।

गर्भिणी स्त्री च विधवाः पिण्याकादीनि वै मृतम् ॥ ३ ॥

तुषभस्मकपालास्थि भिन्नभाण्डमशस्तकम् । अशस्तो वाद्यशब्दश्च भिन्नभैरवझर्झरः

एहीति पुरतः शब्दः शस्यते न तु पृष्ठतः ।

गच्छेति पश्चाच्छब्दोऽग्रयः पुरस्तात् तु विगर्हितः ॥ ५ ॥

क्व यासि तिष्ठ मा गच्छ किन्ते तत्र गतस्य च ।

अनिष्टशब्दा मृत्यर्थं क्रव्यादश्च ध्वजादिगः ॥ ६ ॥

स्खलनं वाहनानाञ्च शस्त्रभङ्गस्तथैव च । शिरोघातश्च द्वाराद्यैश्छत्रवासादिपातनम् ॥
हरिमभ्यर्च्य संस्तुत्यस्यादमङ्गल्यनाशनम् । द्वितीयन्तु ततोद्दृष्ट्वा विरुद्धंप्रविशेद्गृहम्

श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भो महोत्तमः ।

मांसं मत्स्या दूरशब्दा वृद्ध एकः पशुस्त्वजः ॥ ६ ॥

गावस्तुरङ्गमा नागा देवाश्च ज्वलितोऽनलः । दूर्वार्द्रगोमयं वेश्यास्वर्णरूप्यञ्च रत्नकम्
वचासिद्धार्थकौषध्यो मुद्ग आयुधखड्गकम् । छत्रं पीठं राजलिङ्गं शवं रुदितवर्जितम् ॥
फलं घृतं दधि पयो अक्षतादर्शमाक्षिकम् । शङ्ख इक्षुः शुभं वाक्यं भक्तवादित्रगीतकम्
गम्भीरमेघस्तनितं तड़ित् तुष्टिश्चमानसी । एकतः सर्वलिङ्गानि मनसस्तुष्टिरेकतः ॥

इत्यादिमहापुराणे आग्नेयेशकुनविचारकथनंनामत्रिंशदधिकद्विशततमोऽध्यायः ।

---

# एकत्रिंशदधिकद्विशततमोऽध्यायः

## शकुनानि ।

पुष्कर उवाच ।

तिष्ठतो गमने प्रश्ने पुरुषस्य शुभाशुभम् । निवेदयन्ति शकुना देशस्य नगरस्य च ॥
सर्वः पापफलो दीप्तो निर्दिष्टो दैवचिन्तकैः । शान्तः शुभफलश्चैव दैवज्ञैः समुदाहृतः ॥

षट्प्रकारा विनिर्दिष्टा शकुनानाञ्च दीप्तयः ।
वेलादिग्देशकरणरुतजातिविभेदतः ॥ ३ ॥

पूर्वा पूर्वा च विज्ञेया सा तेषां बलवत्तरा । दिवाचरो रात्रिचरस्तथा रात्रौ दिवाचरः
क्रूरेषु दीप्ता विज्ञेया ऋक्षलग्नग्रहादिषु । धूमिता सा तु विज्ञेया याङ्गमिष्यति भास्करः

यस्यां स्थितः सा ज्वलिता मुक्ता चाङ्गारिणी मता ।
एतास्तिस्रः स्मृता दीप्ता पञ्च शान्तास्तथापराः ॥ ६ ॥
दीप्तायां दिशि दिग्दीप्तं शकुनं परिकीर्त्तितम् ।
ग्रामेऽरण्या वने ग्राम्यास्तथा निन्दितपादपः ॥ ७ ॥

देशे चैवाशुभे ज्ञेयो देशदीप्तो द्विजोत्तमः । क्रियादीप्तो विनिर्दिष्टः स्वजात्यनुचितक्रियः
रुतदीप्तश्च कथितो भिन्नभैरवनिस्वनः । जातिदीप्तस्तथा ज्ञेयः केवलं मांसभोजनः ॥

दीप्ताच्छान्तो विनिर्दिष्टः सर्वैर्भेदैः प्रयत्नतः ।
मिश्रैर्मिश्रो विनिर्दिष्टास्तस्य वाच्यं फलाफलम् ॥ १० ॥
गोश्वोष्ट्रगर्दभश्वानः सारिका गृहगोधिका ।
चटका भासकूर्माद्याः कथिता ग्रामवासिनः ॥ ११ ॥
अजाविशुकनागेन्द्राः कोलो महिषवायसौ ।
ग्राम्यारण्या विनिर्दिष्टाः सर्वेऽन्ये वनगोचराः ॥ १२ ॥

मार्जारकुक्कुटौ ग्राम्यौ तौ चैव वनगोचरौ । तयोर्भवति विज्ञानं नित्यं वै रूपभेदतः ॥

गोकर्णशिखिचक्राह्वखरहारीतवायसाः। कुलाहकुक्कुभश्येनफेरुखञ्जनवानराः ॥ १४ ॥
शतघ्नचटकश्यामचासश्येनकपिञ्जलाः। तित्तिरिः शतपत्रश्च कपोतश्च तथा त्रयः ॥
खञ्जरीटकदात्यूहशुकराजीवकुक्कुटाः। भारद्वाजश्चसारङ्ग इति ज्ञेया दिवाचराः ॥ १६ ॥
वागुर्युलूकशरभक्रौञ्चाः शशककच्छपाः।
लोमासिकाः पिङ्गलिकाः कथिता रात्रिगोचराः ॥ १७ ॥
हंसाश्च मृगमार्जारनकुलर्क्षभुजङ्गमाः। वृकारिसिंहव्याघ्रोष्ट्रग्रामशूकरमानुषाः ॥ १८ ॥
श्वाविद्वृषभगोमायुवृककोकिलसारसाः। तुरङ्गकौपीननरा गोधा ह्युभयचारिणः ॥
चलप्रस्थानयोःसर्वेपुरस्तात् सञ्चारिणः। जयावहाविनिर्दिष्टाः पश्चान्निधनकारिणः
गृहाद्गम्य यदा चासो व्याहरेत् पुरतः स्थितः।
नृपावमानं वदति वामः कलहभोजने ॥ २१ ॥
याने तद्दर्शनं शस्तं सव्यमङ्गस्य वाप्यथ। चौरैर्मोषमथाख्याति मयूरो भिन्ननिस्वनः
प्रयातस्याग्रतो राम ! मृगः प्राणहरो भवेत्। ऋक्षाखुजम्बुकव्याघ्रसिंहमार्जारगर्दभाः
प्रतिलोमास्तथा राम ! खरश्च विकृतस्वनः।
वामः कपिञ्जलः श्रेष्ठस्तथा दक्षिणसंस्थितः ॥ २४ ॥
पृष्ठतो निन्दितफलस्तित्तिरिस्तु न शस्यते।
एणा वराहाः पृषता वामा भूत्वा तु दक्षिणाः ॥ २५ ॥
भवन्त्यर्थकरा नित्यं विपरीता विगर्हिताः। वृषाश्वजम्बुकव्याघ्राः सिंहमार्जारगर्दभाः
वाञ्छितार्थकरा ज्ञेया दक्षिणाद् वामतो गताः।
शिवा श्यामाननाच्छूच्छूः पिङ्गला गृहगोधिका ॥ २७ ॥
शूकरी परपुष्टा च पुन्नामानश्च वामतः। स्त्रीसञ्ज्ञाभासकारूषकपिश्रीकर्णच्छित्कराः
कपिश्रीकर्णपिप्पीका रुरुश्येनाश्च दक्षिणाः।
जातोक्षाहिशशक्रोड़गोधानां कीर्त्तनं शुभम् ॥ २९ ॥
ततः सन्दर्शनं नेष्टं प्रतिपंवानरर्क्षयोः। कार्य्यकृद् बलीशकुनः प्रस्थितस्य हि योऽन्वहम्
भवेत् तस्य फलं वाच्यं तदेव दिवसं बुधैः।

मत्ता भक्ष्यार्थिनो बाला वैरशक्तास्तथैव च ॥ ३१ ॥
सीमान्तमभ्यन्तरिता विज्ञेया निष्फला द्विज ! ।
एकद्वित्रिचतुर्भिस्तु शिवा धन्यारुतैर्भवेत् ॥ ३२ ॥
पञ्चभिश्च तथाषड्भिरधन्या परिकीर्त्तिता । सप्तभिश्च तथाधन्यानिष्फला परतोभवेत्
नृणां रोमाञ्चजननी वाहनानां भयप्रदा । ज्वालानला सूर्य्यमुखी विज्ञेया भयवर्द्धनी ॥
प्रथमं सारङ्गे दृष्टे शुभे देशे शुभं ददेत् । संवत्सरं मनुष्यस्य अशुभे च शुभं तथा ॥
तथाविधं नरः पश्येत् सारङ्गं प्रथमेऽहनि ।
आत्मनश्च तथात्वेन ज्ञातव्यं वत्सरं फलम् ॥ ३६ ॥
इत्यादि महापुराणे आग्नेये शकुनविचारवर्णनंनामैकत्रिंशदधिकद्विशततमोऽध्यायः ।

---

# द्वात्रिंशदधिकद्विशततमोऽध्यायः

## शकुनानि ।

पुष्कर उवाच ।

विशन्ति येन मार्गेण वायसा वहवः पुरम् । तेन मार्गेण रुद्धस्य पुरस्य ग्रहणं भवेत् ॥
सेनोयां यदि वासार्थे निविष्टो वायसो रुवन् ।
वामो भयातुरस्त्रस्तो भयं वदति दुस्तरम् ॥ २ ॥
छायाङ्गवाहनोपानच्छत्रवस्त्रादिकुट्टने । भृत्युस्तत्पूजने पूजा तदिष्टकरणे शुभम् ॥ ३ ॥
प्रोषितागमकृत् काकःकुर्वन् द्वारि गतागतम् । रक्तंदग्धं गृहेद्रव्यं क्षिपन् वन्हिनिवेदकः
न्यसेद्रक्तं पुरस्ताच्च निवेदयति बन्धनम् । पीतं द्रव्यं तथा रुक्म रूप्यमेव तु भार्गव ॥
यच्चैवोपनयेद् द्रव्यं तस्य लब्धिविनिर्दिशेत् ।
द्रव्यं वापनयेद् यत्तु तस्यहानिं विनिर्दिशेत् ॥ ६ ॥
पुरतो धनलब्धिः स्यादाममांसस्यछर्दने । भूलब्धिःस्यान् मृदःक्षेपे राज्यं रत्नार्पणेमहत्

यातुः काकोऽनुकूलस्तुक्षेमः कर्मक्षयो भवेत् । न त्वर्थसाधकोज्ञेयः प्रतिकूलोभयावहः
सम्मुखेऽभ्येति विरुवन् यात्राघातकरो भवेत् ।
वामः काकः स्मृतो धन्यो दक्षिणोऽर्थविनाशकृत् ॥ ६ ॥
वामोऽनुलोमगः श्रेष्ठो मध्यमो दक्षिणः स्मृतः । प्रतिलोमगतिर्वामो गमनप्रतिषेधकृत्
निवेदयति यात्रार्थमभिप्रेतं गृहे गतः । एकाक्षिचरणस्त्वर्कं वीक्षमाणो भयावहः॥
कोटरे वासमानश्च महानर्थकरो भवेत् । न शुभस्तूगरे काकः पङ्काङ्कः स तु शस्यते ॥
अमेध्यपूर्णवदनः काकः सर्वार्थसाधकः ।
ज्ञेयाः पतत्रिणोऽन्येपि काकवद् भृगुनन्दनः ! ॥ १३ ॥
स्कन्धावारापसव्यस्थाः श्वानो विप्रविनाशकाः। इन्द्रस्थाने नरेन्द्रस्यपुरेशस्य तु गोपुरे
अन्तर्गृहे गृहेशस्य मरणाय-भवेद् भषन् । यस्य जिघ्रति वामाङ्गं तस्यस्यादर्थसिद्धये ॥
भयाय दक्षिणं चाङ्गं तथाभुजमदक्षिणम् ।
यात्राघातकरो यातुर्भवेत् प्रतिमुखागताः ॥ १६ ॥
मार्गावरोधको मार्गे चौरान् वदति भार्गव ! ।
अलाभोऽस्थिमुखः पापो रज्जुचीरमुखस्तथा ॥ १७ ॥
सोपानत्कमुखो धन्यो मांसपूर्णमुखोऽपि च । अमङ्गल्यमुखद्रव्यं केशश्चैवाशुभं तथा ॥
अवमूत्र्यागतो याति यस्य तस्य भयं भवेत् ।
यस्यावमूत्र्य व्रजति शुभं देशं तथाद्रुमम् ॥ १६ ॥
मङ्गल्यश्च तथाद्रव्यं तस्यस्यादर्थसिद्धये । श्ववच्च राम ! विज्ञेयास्तथा वै जम्बुकादयः
भयाय स्वामिनो ज्ञेयमनिमित्तं रुतं गवाम् ।
निशिचौरभयायस्याद् विकृतं मृत्यवे तथा ॥ २१ ॥
शिवाय स्वामिनो रात्रौ बलीवर्दोनदन् भवेत् । उत्सृष्टवृषभो राज्ञो विजयं सम्प्रयच्छति
अभयं भक्षयन्त्यश्च गावो दत्तास्तथास्वकाः। त्यक्तस्नेहाःस्ववत्सेषु गर्भक्षयकरामताः
भूमिं पादैर्विनिघ्नन्त्यो दीनाभीता भयावहाः ।
आर्द्राङ्ग्यो हृष्टरोमाश्च श्रृङ्गलग्नमृदः शुभाः ॥ २४ ॥

महिष्यादिषु चाप्येतत् सर्वंवाच्यं विजानता । आरोहणंतथाऽन्येनसपर्याणस्य वाजिनः
जलोपवेशनं नेष्टं भूमौ च परिवर्त्तनम् । विपत्करं तुरङ्गस्य सुप्तं चाप्यनिमित्ततः ॥
यवमोदकयोर्द्वेषस्त्वकस्माच्च न शस्यते । वदनाद्रुधिरोत्पत्तिर्वेपनं न च शस्यते ॥

क्रीड़न् वकैः कपोतैश्च सारिकाभिर्मृतिं वदेत् ।
साश्रुनेत्रो जिह्वया च पादलेहो विनष्टये ॥ २८ ॥

वामपादेन च तथा विलिखंश्च वसुन्धराम् । स्वपेद्वा वामपार्श्वेन दिवा वा न शुभप्रदः

भयाय स्यात् सकृन्मूत्री तथा निद्राविलाननः ।
आरोहणं न चेद्दु दद्यात् प्रतीपं वा गृहं व्रजेत् ॥ ३० ॥

यात्राविघातमाचष्टे वामपार्श्वं तथा स्पृशन् । हेषमाणः शत्रुयोधं पादस्पर्शी जयावहः
ग्रामे व्रजति नागश्चेन् मैथुनं देशहा भवेत् । प्रसूता नागवनिता मत्ता चान्ताय भूपतेः

आरोहणं न चेद्दु दद्यात् प्रतीपं वा गृहं व्रजेत् ।
मदं वा वारणो जह्याद्राजघातकरो भवेत् ॥ ३३ ॥

वामं दक्षिणपादेन पादमाक्रमते शुभः । दक्षिणञ्च तथा दन्तं परिमार्ष्टिकरेण च ॥

वृषोऽश्वः कुञ्जरो वापि रिपुसैन्यगतोऽशुभः ।
खण्डमेघातिवृष्ट्या तु सेनानाशमवाप्नुयात् ॥ ३५ ॥

प्रतिकूलग्रहर्क्षात् तु तथासम्मुखमारुतात् । यात्राकाले रणे वापि छत्रादिपतनं भयम्

हृष्टा नराश्चानुलोमा ग्रहा वै जयलक्षणम् ।
काकैर्योधाभिभवनं क्रव्याद्भिर्मण्डलक्षयः ।
प्राचीपश्चिमकैशानी सौम्या प्रेष्ठा शुभा च दिक् ॥ ३७ ॥

इत्यादिमहापुराणेआग्नेयेशकुनविचारवर्णनं नामद्वात्रिंशदधिकद्विशततमोऽध्यायः ।

———

## त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः

### यात्रामण्डलचिन्तादिः ।

पुष्कर उवाच ।

सर्वयात्रां प्रवक्ष्यामि राजधर्मसमाश्रयात् । अस्तङ्गते नीचगते विकले रिपुराशिगे ॥
प्रतिलोमे च विध्वस्ते शुक्रे यात्रां विसर्जयेत् ।
प्रतिलोमे वुभेयात्रां दिक्पतौ च तथाग्रहे ॥ २ ॥
वैधृतौ च व्यतीपाते नागे च शकुनौ तथा । चतुष्पादे च किन्तुघ्ने तथायात्रां विवर्जयेत्
विपत्तारे नैधने च प्रत्यरौ चाथ जन्मनि । गण्डे विवर्जयेद् यात्रां रिक्तायाञ्च तिथावपि
उदीची च तथा प्राची तयोरैक्यं प्रकीर्त्तितम् ।
पश्चिमा दक्षिणा या दिक् तयोरैक्यं तथैव च ॥ ५ ॥
वाय्वग्निदिक्समुद्भूतं परिघं न तु लङ्घयेत् । आदित्यचन्द्रशौरास्तु दिवसाश्च न शोभना
कृत्तिकाद्यानिपूर्वेण माघाद्यानि च याम्यतः । मैत्राद्यान्यपरेचाथ वासवाद्यानिवाप्युदक्
सर्वद्वाराणि शस्तानि छायामानं वदामि ते ।
आदित्ये विंशतिर्ज्ञेयाश्चन्द्रे षोड़श कीर्त्तिताः ॥ ८ ॥
भौमे पञ्चदशैवोक्ताश्चतुर्दश तथाबुधे । त्रयोदश तथाजीवे शुक्रे द्वादश कीर्त्तिताः ॥
एकादश तथा सौरे सर्वकर्मसु कीर्त्तिताः । जन्मलग्ने शक्रचापे सम्मुखेन व्रजेन्नरः ॥
शकुनादौ शुभे यायाज्जयाय हरिमास्मरन् ।
वक्ष्ये मण्डलचिन्तान्ते कर्त्तव्यं राजरक्षणम् ॥ ११ ॥
स्वाम्यमात्यं तथादुर्गं कोषो दण्डस्तथैव च । मित्रञ्जनपदश्चैव राज्यं सप्ताङ्गमुच्यते ॥
सप्ताङ्गस्य तु राज्यस्य विघ्नकर्तॄन् विनाशयेत् ।
मण्डलेषु च सर्वेषु वृद्धिः कार्य्यो महीक्षिताः ॥ १३ ॥
आत्ममण्डलमेवात्र प्रथमं मण्डलंभवेत् । सामन्तास्तस्य विज्ञेया रिपवो मण्डलस्य तु

उपेतस्तु सुहृज्ज्ञेयः शत्रुमित्रमतः परम् । मित्रमित्रं ततो ज्ञेयं मित्रमित्ररिपुस्ततः ॥
एतत् पुरस्तात् कथितं पश्चादपि निबोधमे ।
पार्ष्णिग्राहस्ततः पश्चात् ततस्त्वाक्रन्द उच्यते ॥ १६ ॥
आसारस्तु ततोऽन्यः स्यादाक्रन्दासार उच्यते ।
जिगीषोः शत्रुयुक्तस्य विमुक्तस्य तथाद्विज ! ॥ १७ ॥
नात्रापि निश्चयः शक्यो वक्तुं मनुजपुङ्गव ! । निग्रहानुग्रहेशक्तो मध्यस्थःपरिकीर्त्तितः
निग्रहानुग्रहेशक्तःसर्वेषामपि यो भवेत् । उदासीनः स कथितो वलवान् पृथिवीपतिः ॥
न कस्यचिद्रिपुर्मित्रङ्कारणाच्छत्रुमित्रके । मण्डलं तव सम्प्रोक्तमेतद् द्वादश राजकम् ॥
त्रिविधा रिपवो ज्ञेयाः कुल्यानन्तरकृत्रिमाः । पूर्वपूर्वौ गुरुस्तेषां दुश्चिकित्स्यतमो मतः
अनन्तरोऽपि यःशत्रुः सोऽपि मे कृत्रिमो मतः ।
पार्ष्णिग्राहो भवेच्छत्रोर्मित्राणि रिपवस्तथा ॥ २२ ॥
पार्ष्णिग्राहमुपायैश्च शमयेच्च तथास्वकम् । मित्रेण शत्रोरुच्छेदं प्रसंशन्ति पुरातनाः
मित्रञ्च शत्रुतामेति सामन्तत्त्वादनन्तरम् ।
शत्रुं जिगीषुरुच्छिन्द्यात् स्वयं शक्नोति चेद् यदि ॥ २४ ॥
प्रतापवृद्धौ तेनापि नामित्राज्जायते भयम् ।
यथास्य नोद्विजेल्लोको विश्वासश्च यथा भवेत् ।
जिगीषुर्धर्मविजयी तथालोकं वशं नयेत् ॥ २५ ॥

इत्यादिमहापुराणेआग्नेयेयात्रामण्डलचिन्तादिवर्णनंनाम
त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ।

---

# चतुस्त्रिंशदधिकद्विशततमोऽध्यायः

## षाड्गुण्यम् ।

पुष्कर उवाच ।

सामभेदौ मया प्रोक्तौ दानदण्डौ तथैव च । दण्डः स्वदेशे कथितः परदेशे ब्रवीमि ते
प्रकाशश्चाप्रकाशश्च द्विविधो दण्ड उच्यते । लुण्ठनंग्रामघातश्च शस्यघातोऽग्निदीपनम्
प्रकाशोऽथ विषं वह्निर्विविधैः पुरुषैर्वधः । दूषणञ्चैव साधूनामुदकानाञ्च दूषणम् ॥
दण्डप्रणयनं प्रोक्तमुपेक्षां शृणु भार्गव ! । यदामन्येत नृपति रणे न मम विग्रह ॥ ४ ॥

अनर्थायानुबन्धः स्यात् सन्धिना च तथा भवेत् ।
सामलब्धास्पदश्चात्र दानञ्चार्थक्षयङ्करम् ॥ ५ ॥
भेदद्दण्डानुबन्धः स्यात् तदोपेक्षां समाश्रयेत् ।
न चायं ममशक्नोति किञ्चित् कर्त्तुमुपद्रवम् ॥ ६ ॥

न चाहमस्य शक्नोमि तत्रोपेक्षां समाश्रयेत् । अवज्ञोपहतस्तत्र राज्ञाकार्यो रिपुर्भवेत्॥
मायोपायं प्रवक्ष्यामि उत्पातैरनृतैश्चरन् । शत्रोरुद्वेजनं शत्रोः शिविरस्थस्य पक्षिणः

स्थूलस्य तस्य पुच्छस्तां कृत्वोल्कां विपुलां द्विज !
विसृजेच्च ततश्चैवमुल्कापातं प्रदर्शयेत् ॥ ९ ॥

एवमन्ये दर्शनीया उत्पाता बहवोऽपि च । उद्वेजनं तथा कुर्य्यात् कुहकैर्विविधैर्द्विषाम्

सांवत्सरास्तापसाश्च नाशंब्रूयुः परस्य च ।
जिगीषुः पृथिवीं राजा तेन चोद्वेजयेत् परान् ॥ ११ ॥

देवतानां प्रसादश्च कीर्त्तनीयः परस्य तु । आगतन्नोऽमित्रबलं प्रहरध्वमभीतवत् ॥

एवं ब्रूयाद्रणे प्राप्ते भग्नाः सर्वे परेइति ।
क्ष्वेडाः किलकिलाः कार्य्या वाच्यः शत्रुर्हतस्तथा ॥ १३ ॥

देवाज्ञावृंहितो राजा सन्नद्धः समरं प्रति । इन्द्रजालं प्रवक्ष्यामि इन्द्रं कालेन दर्शयेत्॥

चतुरङ्गं बलं राजा सहायार्थं दिवौकसाम् । बलन्तु दर्शयेत् प्राप्तं रक्तवृष्टिश्चरैर्द्विपौ ॥
छिन्नानि रिपुशीर्षाणि प्रासादाद्येषु दर्शयेत् ।
षाड्गुण्यं सम्प्रवक्ष्यामि तद्वरौ सन्धिविग्रहौ ॥ १६ ॥
सन्धिश्च विग्रहश्चैव यानमासनमेव च । द्वैधीभावः संशयश्च षड्गुणाः परिकीर्त्तिताः
पणबन्धः स्मृतः सन्धिरपकारस्तु विग्रहः ।
जिगीषोः शत्रुविषये यानं यात्राऽभिधीयते ॥१८ ॥
विग्रहेण स्वके देशे स्थितिरासनमुच्यते । बलार्द्धेन प्रयाणन्तु द्वैधीभावः सं उच्यते ॥
उदासीनो मध्यमो वा संश्रयात् संश्रयः स्मृतः ।
समेन सन्धिरन्वेष्योऽहीनेन च बलीयसा ॥ २० ॥
हीनेन विग्रहः कार्य्यः स्वयं राज्ञा बलीयसा ।
तत्रापि शुद्धपार्ष्णिस्तु बलीयांसं समाश्रयेत् ॥ २१ ॥
आसीनः कर्मविच्छेदं शक्तः कर्त्तुं रिपोर्यदा ।
अशुद्धपार्ष्णिश्चासीत विगृह्य वसुधाधिपः ॥ २२ ॥
अशुद्धपार्ष्णिर्वलवान् द्वैधीभावं समाश्रयेत् ।
वलिना विगृहीतस्तु योऽसन्देहेन पार्थिवः ॥ २३ ॥
सश्रयस्तेन वक्तव्यो गुणानामधमो गुणः । बहुक्षयव्ययायासं तेषां यानं प्रकीर्तितम्
बहुलाभकरं पश्चात् तदा राजा समाश्रयेत् ।
सर्वशक्तिविहीनस्तु तदाकुर्य्यात् तु संश्रयम् ॥ २५ ॥
इत्यादिमहापुराणेआग्नेयेषाड्गुण्यंकथनंनामचतुस्त्रिंशदधिकद्विशततमोऽध्यायः ।

———

# पञ्चत्रिंशदधिकद्विशततमोऽध्यायः

## प्रात्यहिकराजकर्म ।

पुष्कर उवाच ।

अजस्रं कर्म वक्ष्यामि दिनंप्रति यदा चरेत् । द्विमुहूर्त्तावशेषायां रात्रौनिद्रां त्यजेन्नृपः

वाद्यवन्दिस्वनैर्गीतैः पश्येद् गूढ़ांस्ततो नरान् ।

विज्ञायते न ये लोकास्तदीया इति केनचित् ॥ २ ॥

आयव्ययस्य श्रवणं ततः कार्य्यं यथाविधि ।

वेगोत्सर्गं ततः कृत्वा राजा स्नानगृहं व्रजेत् ॥ ३ ॥

स्नानं कुर्य्यान्नृपः पश्चाद् दन्तधावनपूर्वकम् ।

कृत्वा सन्ध्यां ततो जप्यं वासुदेवं प्रपूजयेत् ॥ ४ ॥

वह्नौ पवित्रान् जुहुयात् तर्पयेदुदकैः पितॄन् । दद्याद् सकाञ्चनीं धेनु द्विजाशीर्वादसंयुतः

अनुलिप्तोऽलङ्कृतश्च मुखं पश्येच्च दर्पणे । ससुवर्णे धृते राजा शृणुयाद् दिवसादिकम्

औषधं भिषजोक्तंच मङ्गलालम्भनञ्चरेत् । पश्येद्गुरुं तेन दत्ताशीर्वादोऽथ व्रजेत सभाम्

तत्रस्थो ब्राह्मणान् पश्येदमात्यान् मन्त्रिणस्तथा ।

प्रकृतीश्च महाभाग ! प्रतीहारनिवेदिताः ॥ ८ ॥

श्रुत्वेतिहासं कार्य्याणि कार्य्याणां कार्य्यनिर्णयम् ।

व्यवहारं ततः पश्येन् मन्त्रं कुर्य्यात् तु मन्त्रिभिः ॥९॥

नैकेन सहितःकुर्य्यान् न कुर्य्याद्वहुभिः सह । न च मूर्खैर्नचानाप्तैर्गुप्तं न प्रकटं चरेत्

मन्त्रं स्वधिष्ठितं कुर्य्याद् येन राष्ट्रं न बाधते । आकारग्रहणे राज्ञो मन्त्ररक्षा परा मता

आकारैरिङ्गितैः प्राज्ञा मन्त्रं गृह्णन्ति पण्डिताः ।

सांवत्सराणां वैद्यानां मन्त्रिणां वचने रतः ॥ १२ ॥

राजा विभूतिमाप्नोति धारयन्ति नृपं हि ते । मन्त्रं कृत्वाथव्यायामश्चक्रे यानेच शस्त्रके

निःसत्त्वादौ नृपः स्नातः पश्येद् विष्णुं सुपूजितम् ।
हुतञ्च पावकं पश्येद् विप्रान् पश्येत् सुपूजितान् ॥ १४ ॥
भूषितो भोजनं कुर्य्याद् दानाद्यैःसुपरीक्षितम् ।
भुक्त्वा गृहीतताम्बूलो वामपार्श्वेन संस्थितः ॥ १५ ॥
शास्त्राणि चिन्तयेद् दृष्ट्वा योधान् कोष्ठायुधं गृहम् ।
अन्वास्य पश्चिमां सन्ध्यां कार्य्याणि च विचिन्त्य तु ॥१६॥
चरान् सम्प्रेष्य भुक्त्वान्नमन्तःपुरचरो भवेत् । वाद्यगीतैरक्षितोऽन्यैरेवं नित्यञ्चरेन् नृप
इत्यादिमहापुराणेआग्नेयेप्रात्यहिकराजकर्मकथनंनामपञ्चत्रिंशदधिकद्विशततमोऽध्यायः

---

## षट्त्रिंशत्यधिकद्विशततमोऽध्यायः

### रणदीक्षा ।

पुष्कर उवाच ।

यात्राविधानपूर्वन्तुवक्ष्ये साङ्ग्रामिकं विधिम् । सप्ताहेनयदा यात्राभविष्यति महीपतेः
पूजनीयो हरिः शम्भुर्मोदकाद्यैर्विनायकः ।
द्वितीयेऽहनि दिक्पालान् सम्पूज्य शयनञ्चरेत् ॥ २ ॥
शय्यायां वा तदग्रेऽथ देवान् प्राच्र्य मनुं स्मरेत् ।
नमः शम्भो ! त्रिनेत्राय रुद्राय वरदाय च ॥ ३ ॥
वामनाय विरूपाय स्वप्नाधिपतये नमः । भगवन् ! देवदेवेश ! शूलभृद्वृषवाहन ! ४
इष्टानिष्टे ममाचक्ष्व स्वप्ने सुप्तस्य शाश्वत ! । यज्जाग्रतो दूरमिति पुरोधा मन्त्रमुच्चरेत
तृतीयेऽहनि दिक्पालान् रुद्रांस्तान् दिक्पतीन्यजेत् ।
ग्रहान् यजेच्चतुर्थेऽह्नि पञ्चमे चाश्विनौ यजेत् ॥ ६ ॥
मार्गे या देवतास्तासां नद्यादीनाञ्च पूजनम् । दिव्यान्तरीक्षभौमस्थदेवानाञ्च तथावलिः

रात्रौ भूतगणानाञ्च वासुदेवादिपूजनम् । भद्रकाल्याःश्रियःकुर्य्यात् प्रार्थयेत् सर्वदेवताः
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः । नारायणोऽब्जजो विष्णुर्नारसिंहो वराहकः

शिव ईशस्तत् पुरुषो ह्यघोरो राम ! सत्यजः ।

सूर्य्यः सोमः कुजश्चान्द्रिजीवशुक्रशनैश्चराः ॥ १० ॥

राहु केतुर्गणपतिः सेनानी चण्डिका ह्युमा ।

लक्ष्मीः सरस्वती दुर्गा ब्रह्माणी प्रमुखागणाः ॥ ११ ॥

रुद्रा इन्द्रादयो वह्निनागास्ताक्ष्योंऽपरे सुराः । दिव्यान्तरीक्षभूमिष्ठा विजयाय भवन्तुमे
मर्दयन्तु रणे शत्रून् सम्प्रगृह्योपहारकम् । सपुत्रमातृभृत्योऽहं देवा वः शरणङ्गतः ॥

चमूनां पृष्ठतो गत्वा रिपुनाशा नमोस्तु वः ।

विनिवृत्तः प्रदास्यामि दत्तादभ्यधिकं बलिम् ॥ १४ ॥

षष्ठेऽह्नि विजयस्नानं कर्त्तव्यंचाभिषेकवत् । यात्रादिने सप्तमे च पूजयेच्चत्रिविक्रमम्
नीराजनोक्तमन्त्रैश्च आयुधं वाहनं यजेत् । पुण्याहजयशब्देन मन्त्रमेतन्निशामयेत् ॥

दिव्यान्तरीक्षभूमिष्ठाः सन्त्वायुर्दाः सुराश्च ते ।

देवसिद्धिं प्राप्नुहि त्वं देवायात्रास्तु सा तव ॥ १७ ॥

रक्षन्तु देवताः सर्वा इति श्रुत्वा नृपो व्रजेत् । गृहीत्वासशरश्चापं धनुर्नागेति मन्त्रतः

तद् विष्णोरिति जप्त्वाथ दद्याद्रिपुमुखे पदम् ।

दक्षिणं पदं द्वात्रिंशद् दिक्षु प्राच्यादिषु क्रमात् ॥ १६ ॥

नागं रथं हयञ्चैव धुर्य्यांश्चैवारुहेत् क्रमात् ।

आरुह्य वाद्यैर्गच्छेत् पृष्ठतो नावलोकयेत् ॥ २० ॥

क्रोशमात्रं गतस्तिष्ठेत् पूजयेद्देवता द्विजान् । परदेशंव्रजेत् पश्चादात्मसैन्यं हि पालयन्
राजा प्राप्य विदेशन्तुदेशपालन्तु पालयेत् । देवानांपूजनं कुर्य्यान् न छिन्द्यादायमत्रतु

नावमानयेत् तद् देश्यानागत्य स्वपुरं पुनः ।

जयं प्राप्यार्च्चयेद्देवान् दद्याद् दानानि पार्थिवः ॥ २३ ॥

द्वितीयेऽहनि सङ्ग्रामोभविष्यतियदा तदा । स्नापयेद्गजमश्वादि यजेद् देवंनृसिंहकम्

छत्रादिराजलिङ्गानि शस्त्राणि निशि वै गणान् । प्रातर्न्नृसिंहकं पूज्य वाहनाद्यमशेषतः

पुरोधसा हुतं पश्येद् वन्हिं हुत्वा द्विजान् यजेत् ।
गृहीत्वा सशरञ्चापं गजाद्यारुह्य वै व्रजेत् ॥ २६ ॥
देशे त्वदृश्यः शत्रूणां कुर्य्यात् प्रकृतिकल्पनाम् ।
संहतान् योधयेदल्पान् कामं विस्तारयेद् बहून् ॥ २७ ॥

सूचीमुखमनीकं स्यादल्पानांबहुभिः सह । व्यूहाःप्राण्यङ्गरूपाश्च द्रव्यरूपाश्च कीर्त्तिताः
गरुड़ो मकरव्यूहश्चक्रः श्येनस्तथैव च । अर्द्धचन्द्रश्च वज्रश्च शकटव्यूह एव च॥ २६ ॥
मण्डलः सर्वतोभद्रः सूचीव्यूहश्च ते नराः । व्यूहानामथ सर्वेषां पञ्चधा सैन्यकल्पना ॥
द्वौ पक्षावनुपक्षौ द्वाववश्यंपञ्चम् भवेत् । एकेन यदि वा द्वाभ्यांभागाभ्यां युद्धमाचरेत्

भागत्रयं स्थापयेत् तु तेषां रक्षार्थमेव च ।
न व्यूहकल्पना कार्य्या राज्ञो भवति कर्हिचित् ॥ ३२ ॥
मूलच्छेदे विनाशः स्यान्न युध्येच्च स्वयं नृपः ।
सैन्यस्य पश्चात् तिष्ठेत् तु क्रोशमात्रे महीपतिः ॥ ३३ ॥

भग्नसन्धारणं तत्र योधानां परिकीर्त्तितम् । प्रधानभङ्गे सैन्यस्य नावस्थानं विधीयते

न संहतान् न विरलान् योधान् व्यूहे प्रकल्पयेत् ।
आयुधानान्तु सम्मर्दो यथा न स्यात् परस्परम् ॥ ३५ ॥

भेत्तुकामः परानीकं संहतैरेव भेदयेत् । भेद्रक्ष्याः परेणापि कर्त्तव्याः संहतास्तथा ॥
व्यूहंभेदावहं कुर्य्यात् परव्यूहेषु चेच्छया । गजस्य पादरक्षार्थाश्चत्वारस्तु तथा द्विज!

रथस्य चाश्वश्चत्वारः समास्तस्य च चर्मिणः ।
धन्विनश्चर्मिभिस्तुल्याः पुरस्ताच्चर्मिणो रणे ॥ ३८ ॥
पृष्ठतो धन्विनः पश्चाद्धन्विनां तुरगा रथाः ।
रथानां कुञ्जराः पश्चाद् दातव्याः पृथिवीक्षिता ॥ ३६ ॥

पदाति कुञ्जराश्वानां धर्मकार्य्यं प्रयत्नतः । शूराः प्रमुखतो देयाः स्कन्धमात्रप्रदर्शनम् ॥
कर्त्तव्यं भीरुसङ्घेन शत्रुविद्रावकारकम् । दारयन्ति पुरस्तात् तु न देया भीरवः पुरः ॥

प्रोत्साहयन्त्येव रणे भीरून् शूराः पुरस्थिताः ।
प्रांशवः शुकनाशाश्च ये चाजिह्मेक्षणा नराः ॥ ४२ ॥
संहतभ्रू युगाश्चैव क्रोधना कलहप्रियाः । नित्यहृष्टाः प्रहृष्टाश्च शूरा ज्ञेयाश्च कामिनः
संहतानां हतानाञ्च रणापनयनक्रिया । प्रतियुद्धं गजानाञ्च तोयदानादिकञ्च यत्॥४४॥
आयुधानयनं चैव पत्तिकर्म विधीयते । रिपूणां भेत्तुकामानां स्वसैन्यस्य तु रक्षणम्
भेदनं संहतानाञ्च चर्मिणां कर्म कीर्त्तितम् ।
विमुखीकरणं युद्धे धन्विनाञ्च तथोच्यते ॥ ४६ ॥
दुरापसरणं यानं सुहतस्य तथोच्यते । त्रासनं रिपुसैन्यानां रथकर्म तथोच्यते॥ ४७ ॥
भेदनं संहतानाञ्च भेदानामपि संहतिः । प्राकारतोरणाट्टालद्रुमभङ्गश्च सद्गजे ॥ ४८ ॥
पत्तिभूर्विषमा ज्ञेया रथाश्वस्य तथा समा । सकर्मदा च नागानां युद्धभूमिरुदाहृता ॥
एवं विरचितव्यूहः कृतपृष्ठदिवाकरः । तथानुलोमशुक्रार्किदिक्पालमृदुमारुताः ॥ ५० ॥
योधानुत्तेजयेत् सर्वान् नामगोत्रावदानतः ।
भोगप्राप्त्या च विजये स्वर्गप्राप्त्या मृतस्य च ॥ ५१ ॥
जित्वारीन् भोगसम्प्राप्तिः मृतस्य च परागतिः ।
निष्कृतिः स्वामिपिण्डस्य नास्ति युद्धसमा गतिः ॥ ५२ ॥
शूराणां रक्तमायाति तेन पापं त्यजन्ति ते । घातादिदुःखसहनं रणे तत् परमं तपः ॥
वराप्सरःसहस्राणि यान्तिशूरं रणे मृतम् । स्वामीसुकृतमादत्ते भग्नानां विनिर्त्तिनाम्
ब्रह्महत्याफलं तेषां तथा प्रोक्तं पदे पदे ।
त्यक्त्वा सहायान् यो गच्छेद् देवास्तस्य विनष्टये ॥ ५५ ॥
अश्वमेधफलं प्रोक्तं शूराणामनिवर्त्तिनाम् । धर्मनिष्ठे जयो राज्ञि योद्धव्याश्च समाःसमैः
गजाद्यैश्च गजाद्याश्च न हन्तव्याः पलायिनः ।
न प्रेक्षकाः प्रविष्टाश्च अशस्त्राः पतितादयः ॥ ५७ ॥
शान्ते निद्राभिभूते च अर्द्धोत्तीर्णे नदीवने । दुर्दिने कूटयुद्धानि शत्रुनाशार्थमाचरेत् ॥
बाहू प्रगृह्य विक्रोशेद् भग्ना भग्नाः परे इति ।

प्राप्तं मित्रं बलं भूरि नायकोऽत्र निपातितः ॥ ५६ ॥

सेनानीर्निहतश्चायं भूपतिश्चापि विप्लुतः । विद्रुतानान्तु योधानां सुखं घातो विधीयते

धूपाश्च देया धर्मज्ञ ! तथा च परमोहनाः । पताकाश्चैव सम्भारो वादित्राणां भयावहः

सम्प्राप्य विजयं युद्धे देवान् विप्रांश्च संयजेत् ।

रत्नानि राजगामीनि अमात्येन कृते रणे ॥ ६२ ॥

तस्य स्त्रियो न कस्यापि रक्ष्यास्ताश्च परस्य च ।

शत्रुं प्राप्य रणे मुक्तं पुत्रवत् परिपालयेत् ॥ ६३ ॥

पुनस्तेन न योद्धव्यं देशाचारादि पालयेत् । ततश्च स्वपुरं प्राप्य ध्रुवेभे प्रविशेद् गृहम्

देवादिपूजनं कुर्य्याद्रक्षेद् योधकुटुम्बकम् । संविभागं परावाप्तैःकुर्य्याद् भृत्यजनस्यच

रणदीक्षा मयोक्ता ते जयाय नृपतेर्ध्रुवा ॥ ६५ ॥

इत्यादिमहापुराणेआग्नेयेरणदीक्षाकथनंनामषट्त्रिंशदधिकद्विशततमोऽध्यायः ।

---

## सप्तत्रिंशदधिकद्विशततमोऽध्यायः

### श्रीस्तोत्रम् ।

पुष्कर उवाच ।

राजलक्ष्मीस्थिरत्वाय यथेन्द्रेण पुरा श्रियः ।

स्तुतिः कृता तथा राजा जयार्थं स्तुतिमाचरेत् ॥ १ ॥

इन्द्र उवाच ।

नमस्ये सर्वलोकानां जननीमब्धिसम्भवाम् ।

श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षःस्थलस्थिताम् ॥ २ ॥

त्वं सिद्धिस्त्वं स्वधा स्वाहा सुधा त्वं लोकपावनि ।

सन्ध्याः रात्रिः प्रभा भूतिर्मेधा श्रद्धा सरस्वती ॥ ३ ॥

यज्ञविद्यामहाविद्या गुह्यविद्याच शोभने। आत्मविद्याच देवी! त्वं विमुक्तिफलदायिनि

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्त्वमेव च।
सौम्या सौम्यैर्जगद्रूपैस्त्वयैतद् देवि! पूरितम्॥ ५॥
का त्वन्या त्वामृते देवि! सर्वयज्ञमयं वपुः।
अध्यास्ते देव! देवस्य योगिचिन्त्यं गदाभृतः॥ ६॥

त्वया देवी! परित्यक्तं सकलं भुवनत्रयम्। विनष्टप्रायमभवत् त्वयेदानीं समेधितम्॥

दाराः पुत्रास्तथागारं सुहृद्धान्यधनादिकम्।
भवत्येतन्महाभागे! नित्यं त्वद्वीक्षणान् नृणाम्॥ ८॥

शरीरारोग्यमैश्वर्य्यमरिपक्षक्षयः सुखम्। देवि! त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम्

त्वमम्बा सर्वभूतानां देवदेवो हरिः पिता।
त्वयैतद् विष्णुना चाम्ब! जगद् व्याप्तं चराचरम्॥ १०॥

मानं कोषं तथा कोष्ठं मा गृहं मा परिच्छदम्। मा शरीरं कलत्रञ्च त्यजेथाः सर्वपावनि

मा पुत्रान् मा सुहृद्वर्गान् मा पशून् मा विभूषणम्।
त्यजेथा मम देवस्य विष्णोर्वक्षःस्थलालये॥ १२॥
सत्त्वेन सत्यशौचाभ्यां तथा शीलादिभिर्गुणैः।
त्यजन्ते ते नराः सद्यः सन्त्यक्ता ये त्वयामले॥ १३
त्वयावलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः।
कुलैश्वर्य्यैश्च युज्यन्ते पुरुषा निर्गुणा अपि॥ १४॥
स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान्।
स शूरः स च विक्रान्तो यस्त्वा देवी! वीक्षितः॥ १५॥
सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः।
पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे!॥ १६॥
न ते वर्णयितुं शक्ता गुणान् जिह्वापि वेधसः।
प्रसीद देवी! पद्माक्षि! नास्मांस्त्याक्षीः कदाचन॥ १७॥

पुष्कर उवाच ।

एवं स्तुता ददौ श्रीश्च वरमिन्द्राय चेप्सितम् ।

सुस्थिरत्वञ्च राज्यस्य सङ्ग्रामविजयादिकम् ॥ १८ ॥

स्वस्तोत्रपाठश्रवणकर्तॄणां भुक्तिमुक्तिदम् ।

श्रीस्तोत्रं सततं तस्मात् पठेच्च शृणुयान्नरः ॥ १९ ॥

इत्यादिमहापुराणेआग्नेयेश्रीस्तोत्रकथनंनामसप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥

---

# अष्टत्रिंशदधिकद्विशततमोऽध्यायः

## रामोक्तनीतिः ।

अग्निरुवाच ।

नीतिस्ते पुष्करोक्ता तु रामोक्ता लक्ष्मणाय या ।

जयाय तां प्रवक्ष्यामि शृणु धर्मादिवर्द्धनीम् ॥ १ ॥

राम उवाच ।

न्यायेनार्जनमर्थस्य वर्द्धनं रक्षणं चरेत् । सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ॥२॥

नयस्य विनयो मूलं विनयः शास्त्रनिश्चयात् ।

विनयो हीन्द्रियजयस्तैर्युक्तः पालयेन्महीम् ॥ ३ ॥

शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता ।

उत्साहो वाग्मितौदार्य्यमापत्कालसहिष्णुता ॥ ४ ॥

प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता । कुलशीलं दमश्चेति गुणाः सम्पत्तिहेतवः

प्रकीर्णविषयारण्ये धावन्तं विप्रमाथिनम् । ज्ञानाङ्कुशेन कुर्वीत वश्यमिन्द्रियदन्तिनम्

कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा ।

षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी नृपः ॥ ७ ॥

आन्वीक्षिकीं त्रयीं वार्त्तां दण्डनीतिं च पार्थिवः ।
तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद् विनयान्वितः ॥८॥
आन्वीक्षिक्यार्थविज्ञानं धर्माधर्मौ त्रयीस्थितौ ।
अर्थानर्थौ तु वार्त्तायां दण्डनीत्यां नयानयौ ॥९॥
अहिंसा सूनृतावाणी सत्यंशौचं दयाक्षमा । वर्णिनां लिङ्गिनांचैव सामान्यो धर्मउच्यते
प्रजाः समनुगृह्णीयात् कुर्य्यादाचारसंस्थितिम् ।
वाक् सूनृता दया दानं हीनोपगतरक्षणम् ॥११॥
इति वृत्तं सतां साधुहितं सत्पुरुषव्रतम् । आधिव्याधिपरीताय अद्य श्वो वा विनाशिने
को हि राजा शरीराय धर्मापेतं समाचरेत् ।
न हि स्वसुखमन्विच्छन् पीड़येत् कृपणं जनम् ॥१३॥
कृपणः पीड्यमानो हि मन्युना हन्ति पार्थिवम् ।
क्रियतेऽभ्यर्हणीयाय स्वजनाय यथाञ्जलिः ॥ १४ ॥
ततः साधुतरः कार्य्योदुर्जनाय शिवार्थिना । प्रियमेवाभिधातव्यं सत्सुनित्यं द्विषत्सुच
देवास्ते प्रियवक्तारः पशवः क्रूरवादिनः । शुचिरास्तिक्यपूतात्मा पूजयेद् देवताः सदा
देवतावद् गुरुजनमात्मवच्च सुहृज्जनम् । प्रणिपातेन हि गुरुं सतोऽमृषानुचेष्टितैः ॥
कुर्वीताभिमुखान् भृत्यैर्देवान् सुकृतकर्मणा ।
सद्भावेन हरेन् मित्रं सम्भ्रमेण च बान्धवान् ॥ १८ ॥
स्त्रीभृत्यान् प्रेमदानाभ्यां दाक्षिण्येनेतरं जनम् । अनिन्दा परकृत्येषु स्वधर्मपरिपालनम्
कृपणेषु दयालुत्वं सर्वत्र मधुरा गिरः । प्राणैरप्युपकारित्वं मित्रायाव्यभिचारिणे ॥
गृहागते परिष्वङ्गः शक्त्या दानं सहिष्णुता । स्वसमृद्धिष्वनुत्सेकः परवृद्धिष्वमत्सरः
अपरोपतापि वचनं मौनव्रतचरिष्णुता । बन्धुभिर्बद्धसंयोगः स्वजने चतुरश्रता ॥
उचितानुविधायित्वमिति वृत्तं महात्मनाम् ॥ २२ ॥
इत्यादिमहापुराणेआग्नेयेरामोक्तनीतिकथनंनामाष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥

# ऊनचत्वारिंशदधिकद्विशततमोऽध्यायः

## राजधर्माः ।

### राम उवाच ।

स्वाम्यमात्यश्च राष्ट्रञ्च दुर्गं कोषो बलं सुहृत् । परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते
राज्याङ्गानां वरं राष्ट्रं साधनं पालयेत् सदा ।
कुलं शीलं वयः सत्त्वं दाक्षिण्यं क्षिप्रकारिता ॥२॥
अविसंवादिता सत्यं वृद्धसेवा कृतज्ञता । दैवसम्पन्नता बुद्धिरक्षुद्रपरिवारता ॥ ३ ॥
शक्यसामन्तता चैव तथा च दृढ़भक्तिता । दीर्घदर्शित्वमुत्साहः शुचिता स्थूललक्षिता
विनीतत्वं धार्मिकता साधोश्चनृपतेर्गुणाः । प्रख्यातवंशमक्रूरंलोकसङ्ग्राहिणं शुचिम्
कुर्वीतात्महिताकाङ्क्षी परिचारं महीपतिः ।
वाग्मी प्रगल्भः स्मृतिमानुदग्रो बलवान् वशी ॥६॥
नेता दण्डस्य निपुणः कृतशिल्पपरिग्रहः । पराभियोगप्रसहः सर्वदुष्ट प्रतिक्रिया ॥
परवृत्तान्ववेक्षी च सन्धिविग्रहतत्त्ववित् । गूढ़मन्त्रप्रचारज्ञो देशकालविभागवित् ॥
आदाता सम्यगर्थानां विनयोक्ता च पात्रवित् । क्रोधलोभभयद्रोहदम्भचापलवर्जितः
परोपतापपैशून्यमात्सर्य्येर्षानृतातिगः । वृद्धोपदेशसम्पन्नः शक्तो मधुरदर्शनः ॥१०॥
गुणानुरागस्थितिमानात्मसम्पद्गुणाः स्मृताः ।
कुलीनाः शुचयः शूराः श्रुतवन्तोऽनुरागिणः ॥११॥
दण्डनीतेः प्रयोक्तारः सचिवाः स्युर्महीपतेः । सुविग्रहो जानपदः कुलशीलकलान्वितः
वाग्मी प्रगल्भश्चक्षुष्मान्नुतसाही प्रतिपत्तिमान् ।
स्तम्भचापलहीनश्च मैत्रः क्लेशसह शुचिः ॥ १३ ॥
सत्यसत्त्वधृतिस्थैर्य्यप्रभावारोग्यसंयुतः । कृतशिल्पश्च दक्षश्च प्रज्ञावान् धारणान्वितः
दृढ़िभक्तिरकर्त्ता च वैराणांसचिवो भवेत् । स्मृतिस्तत्परतार्थेषु चित्तज्ञो ज्ञाननिश्चयः

दृढ़ता मन्त्रगुप्तिश्च मन्त्रिसम्पत् प्रकीर्त्तिता ।
त्रय्यां च दण्डनीत्यां च कुशलः स्यात् पुरोहितः ॥१६॥
अथर्ववेदविहितं कुर्य्याच्छान्तिकपौष्टिकम् । साधुतैषाममात्यानां तद्विद्यैः सह बुद्धिमान्
चक्षुष्मत्तां च शिल्पञ्च परीक्षेत गुणद्वयम् ।
स्वजनेभ्यो विजानीयात् कुलं स्थानमवग्रहम् ॥१८॥
परिकर्मसु दक्षञ्च विज्ञानं धारयिष्णुताम् । गुणत्रयं परीक्षेत प्रागल्भ्यं प्रीतितां तथा
कथायोगेषु बुध्येत वाग्मित्वं सत्यवादिताम् ।
उत्साहं च प्रभावं च तथा क्लेशसहिष्णुताम् ॥ २० ॥
धृतिं चैवानुरागं च स्थैर्य्यञ्चापदि लक्षयेत् ।
भक्तिं मैत्रीं च शौचं च जानीयाद् व्यवहारतः ॥२१॥
संवासिभ्यो बलं सत्त्वमारोग्यंशीलमेव च । अस्तब्धतामचापल्यं वैराणां चाप्यकीर्त्तनम्
प्रत्यक्षतो विजानीयाद् भद्रतां क्षुद्रतामपि । फलानुमेयाः सर्वत्र परोक्षगुणवृत्तयः ॥
शस्याकरवती पुण्या खनिद्रव्यसमन्विता । गोहिता भूरिसलिला पुण्यैर्जनपदैर्युता ॥
रम्या सकुञ्जरबला वारिस्थलपथान्विता ।
अदेवमातृका चेति शस्यते भूरिभूतये ॥ २५ ॥
शूद्रकारुवणिक्प्रायो महारम्भः कृषीवलः । सानुरागो रिपुद्वेषी पीड़ासहकरः पृथुः ॥
नानादेश्यैः समाकीर्णो धार्मिकः पशुमान् बली ।
ईदृक्जनपदः शस्तोऽमूर्खव्यसननायकः ॥ २७ ॥
पृथुसीमं महाखातमुच्चप्राकारतोरणम् । पुरं समावसेच्छैल सरिन्मरुवनाश्रयम्॥२८॥
जलवद्धान्यधनवद् दुर्गं कालसहं महत् । औदकं पार्वतं वार्क्षमैरिणं धन्विनं च षट् ॥
ईप्सितद्रव्यसम्पूर्णः पितृपैतामहोचितः । धर्मार्जितो व्ययसहः कोषो धर्मादिवृद्धये ॥
पितृपैतामहो वश्यः संहतो दत्तवेतनः । विख्यातपौरुषो जन्यः कुशलः शकुनैर्वृतः ॥
नानाप्रहरणोपेतो नानायुद्धविशारदः । नानायोधसमाकीर्णो नीराजितहयद्विपः ॥३२॥
प्रवासायासदुःखेषु युद्धेषु च कृतश्रमः । अद्वैधक्षत्रियप्रायो दण्डो दण्डवतां मतः ॥

योगविज्ञान सत्त्वाढ्यं महापक्षं प्रियं वदम् । आयतिक्षममद्वैधं मित्रं कुर्वीत सत्कुलम्
दूरादेवाभिगमनं स्पष्टार्थहृदयानुगा । वाक् सत्कृत्य प्रदानञ्च त्रिविधो मित्रसंग्रहः ॥
धर्मकामार्थसंयोगो मित्रात् तु त्रिविधं फलम् ।
औरसं तत्र सन्नद्धं तथा वंशक्रमागतम् ॥ ३६ ॥
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् । मित्रे गुणाः सत्यताद्याः समानसुखदुःखता
वक्ष्येऽनुजीविनां वृत्तं सेवो सेवेत भूपतिम् ।
दक्षता भद्रता दाढर्यं क्षान्तिः क्लेशसहिष्णुता ॥ ३८ ॥
सन्तोषः शीलमुत्साहो मण्डयत्यनुजीविनम् । यथाकालमुपासीत राजानं सेवकोनयात्
परस्थानगमं क्रौर्य्यमौद्धत्यं मत्सरं त्यजेत् ।
विगृह्य कथनं भृत्यो न कुर्य्याज् ज्यायसा सहः ॥ ४० ॥
गुह्यं मर्म च मन्त्रञ्च न च भर्त्तुः प्रकाशयेत् ।
रक्ताद् वृत्तिं समीहेत विरक्तं सन्त्यजेन् नृपम् ॥४१ ॥
अकार्य्ये प्रतिषेधश्च कार्य्येचापि प्रवर्त्तनम् ।
सङ्क्षेपादिति सद्वृत्तं बन्धुमित्रानुजीविनाम् ।
आजीव्यः सर्वसत्त्वानां राजा पर्जन्यवद् भवेत् । आयद्वारेषु चाप्त्यर्थंधनं चाददतीतिव
कुर्य्यादुद्योगसम्पन्नानध्यक्षान् सर्वकर्मसु । कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम्
खन्याकरबलादानं शून्यानां च निवेशनम् । अष्टवर्गमिमं राजा साधुवृत्तोऽनुपालयेत्
आमुक्तिकेभ्यश्चौरेभ्यः पौरेभ्यो राजवल्लभात् ।
पृथवीपतिलोभाच्च प्रजानां पञ्चधाभयम् ॥ ४६ ॥
अवेक्ष्यैतद् भयं काले आददीत करं नृपः । अभ्यन्तरं शरीरं स्वं वाह्यं राष्ट्रञ्च रक्षयेत
दण्ड्यांस्तान् दण्डयेद्राजा स्वं रक्षेच्च विषादितः ।
स्त्रियः पुत्रांश्च शत्रुभ्यो विश्वसेन्न कदाचन ॥ ४८ ॥
इत्यादिमहापुराणेआग्नेयेराजधर्मवर्णनंनामोनचत्वारिंशदधिकद्विशततमोऽध्यायः ।

———

# चत्वारिंशदधिकद्विशततमोऽध्यायः

## षाड्गुण्यम् ।

राम उवाच ।

मण्डलं चिन्तयेन् मुख्यं राजाद्वादशराजकम् । अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् ॥
तथारिमित्रमित्रञ्च विजिगीषोः पुरः स्मृताः ।
पार्ष्णिग्राहः स्मृतः पश्चादाक्रन्दस्तदनन्तरम् ॥ २ ॥
आशारावनयोश्चैवं विजिगीषोश्च मण्डलम् । अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः
अनुग्रहे संहतयोर्निग्रहे व्यस्तयोः प्रभुः । मण्डलाद् वहिरेतेषामुदासीनो बलाधिकः ॥
अनुग्रहे संहतानां व्यस्तानाञ्च वधे प्रभुः । सन्धिञ्च विग्रहं यानमासनादि वदामि ते
बलवद् विगृहीतेन सन्धिं कुर्य्याच्छिवाय च । कपाल उपहारश्च सन्तानः सङ्गतस्तथा
उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः । अदृष्टनर आदिष्ट आत्मापि स उपग्रहः ॥
परिक्रमस्तथा छिन्नस्तथा च परदूषणम् । स्कन्धोपनेयः सन्धिश्च सन्धयःषोड़शेरिताः
परस्परोपकारश्च मैत्रः सम्बन्धकस्तथा । उपहाराश्च चत्वारस्तेषु मुख्याश्च सन्धयः ॥
बालोवृद्धो दीर्घरोगस्तथा वन्धुवहिष्कृतः । भीभरुकोभीरुकजनो लुब्धोलुब्धजनस्तथा
विरक्तप्रकृतिश्चैव विषजेष्वतिशक्तिमान् । अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥
दैवोपहतकश्चैव दैवनिन्दक एव च । दुर्भिक्षव्यसनोपेतो बलव्यसनसङ्कुलः ॥ १२ ॥
स्वदेशस्थो बहुरिपुर्मुक्तः कालेन यश्च ह । सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥
एतैः सन्धिं न कुर्वीत विगृह्णीयात् तु केवलम् ।
परस्परापकारेण पुंसां भवति विग्रहः ॥ १४ ॥
आत्मनोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा ।
देशकालबलोपेतः प्रारभेतेह विग्रहम् ॥ १५ ॥
राज्यस्त्रीस्थानदेशानां ज्ञानस्य च बलस्य च ।

अपहारो मदो मानः पीड़ा वैषयिकी तथा ॥ १६ ॥
ज्ञानात्मशक्तिधर्माणां विघातो दैवमेव च। मित्रार्थञ्चापमानश्च तथा बन्धुविनाशनम्
भूतानुग्रहविच्छेदस्तथा मण्डलदूषणम्। एकार्थाभिनिवेशित्वमिति विग्रहयोनयः॥
सपत्न्यां वास्तुजं स्त्रीजं वाग्जातमपराधजम्।
वैरं पञ्चविधं प्रोक्तं साधनैः प्रशमनं नयेत्॥ १६ ॥
किञ्चित्फलंनिष्फलं वा सन्दिग्धफलमेव च। तदात्वेदोषजननमायत्याञ्चैव निष्फलम्
आयत्याञ्च तदात्वे च दोषसञ्जननं तथा। अपरिज्ञातवीर्य्येण परेण स्तोमितोऽपि वा
परार्थं स्त्रीनिमित्तञ्च दीर्घकालं द्विजैः सहः।
अकालदैवयुक्तेन बलोद्धतसखेन च॥ २२ ॥
तदात्वे फलसंयुक्तमायत्यां फलवर्जितम्। आयत्यां फलसंयुक्तं तदात्वे निष्फलं तथा
इतिमं षोड़शविधं न कुर्य्यादेव विग्रहम्। तदात्वायतिसंशुद्धं कर्म राजा सदाचरेत्॥
हृष्टं पुष्टं बलं मत्वा गृह्णीयाद् विपरीतकम्। मित्रमाक्रन्द आसारो यदा स्युर्दृढ़भक्तयः
परस्य विपरीतञ्च तदा विग्रहमाचरेत्। विगृह्य सन्धाय तथा सम्भूयाथ प्रसङ्गतः॥
उपेक्षया च निपुणैर्यानंपञ्चविधंस्मृतम्। परस्परस्य सामर्थ्य विघातादासनं स्मृतम्॥
अरेश्च विजिगीषोश्च यानवत् पञ्चधा स्मृतम्।
बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन्॥ २८ ॥
द्वैधीभावेन तिष्ठेत्त काकाक्षिवदलक्षितः। उभयोरपि सम्पाते सेवेत बलवत्तरम्॥
यदा द्वावपि नेच्छेतां संश्लेषं जातसंविदौ। तदोपसर्पेत् तच्छत्रुमधिकं वा स्वयं व्रजेत्
उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः। कुलोद्धतं सत्यमार्य्यमासेवेत बलोत्कटम्
तद्दर्शनोपास्तिकता नित्यं तद्भावभाविता। तत्कारितप्रश्रयिता वृत्तं संश्रयिणः श्रुतम्॥
इत्यादिमहापुराणेआग्नेयेषाड्गुण्यकथनंनामचत्वारिंशदधिकद्विशततमोऽध्यायः॥

---

# एकचत्वारिंशदधिकद्विशततमोऽध्यायः

## सामादिः ।

राम उवाच ।

प्रभावोत्साहशक्तिभ्यां मन्त्रशक्तिःप्रशस्यते । प्रभावोत्साहवान् काव्योजितो देवपुरोधसा

मन्त्रयेतेह कार्य्याणि नानाप्तैर्नाविपश्चिता ।

अशक्यारम्भवृत्तीनां कुतः क्लेशादृते फलम् ॥ २ ॥

अविज्ञातस्य विज्ञानं विज्ञातस्य च निश्चयः । अर्थद्वैधस्य सन्देहच्छेदनं शेषदर्शनम् ॥

सहायाः साधनोपाया विभागो देशकालयोः । विपत्तेश्चप्रतीकारः पञ्चाङ्गो मन्त्र इष्यते

मनःप्रसादः श्रद्धाच तथा करणपाटवम् । सहायोत्थानसम्पच्च कर्मणां सिद्धिलक्षणम्

मदः प्रमादः कामश्च सुप्तप्रलपितानि च ।

भिन्दन्ति मन्त्रं प्रच्छन्नाः कामिन्यो रमतां तथा ॥ ६ ॥

प्रगल्भः स्मृतिमान् वाग्मी शस्त्रे शास्त्रे च निष्ठितः ।

अभ्यस्तकर्मा नृपतेर्दूतो भवितुमर्हति ॥ ७ ॥

निसृष्टार्थो मितार्थश्च तथा शासनहारकः ।

सामर्थ्यात् पादतो हीनो दूतस्तु त्रिविधः स्मृतः ॥ ८ ॥

नाविज्ञातं पुरं शत्रोः प्रविशेच्च न संसदम् । कालमिक्षेत कार्य्यार्थमनुज्ञातश्च निष्पतेत्

छिद्रञ्च शत्रोर्जानीयात् कोषमित्रबलानि च । रागापरागौ जानीयाद् दृष्टिगात्रविचेष्टितैः

कुर्य्याच्चतुर्विधं स्तोत्रं पक्षयोरुभयोरपि । तपस्विव्यञ्जनोपेतैः सुचरैः सह संवसेत् ॥

चरः प्रकाशो दूतः स्यादप्रकाशश्चरो द्विधा ।

बणिक् कृषीबलो लिङ्गी भिक्षुकद्यात्मकाश्चराः ॥ १२ ॥

यायादरिं व्यसनिनं निष्फले दूतचेष्टिते ।

प्रकृतिव्यसनं यत् स्यात् तत् समीक्ष्य समुत्पतेत् ॥ १३ ॥

अनयाद् व्यस्यति श्रेयस्तस्मात् तद् व्यसनं स्मृतम् ।
हुताशनो जलं व्याधिदुर्भिक्षं मरकं तथा ॥ १४ ॥

इति पञ्चविधं दैवं व्यसनं मानुषं परम् । दैवं पुरुषकारेण शान्त्या च प्रशमं नयेत् ॥
उत्थापितेन नीत्याच मानुषंव्यसनं हरेत् । मन्त्रोमन्त्रफलावाप्तिः कार्य्यानुष्ठानमायति
आयव्ययौ दण्डनीतिरमित्रप्रतिषेधनम् । व्यसनस्य प्रतीकारो राज्यराजाभिरक्षणम्
इत्यमात्यस्य कर्मेदं हन्ति सव्यसनान्वितः । हिरण्यधान्यवस्त्राणि वाहनं प्रजया भवेत्

तथान्ये द्रव्यनिचया हन्ति सव्यसना प्रजा ।
प्रजानामापदिस्थानां रक्षणं कोषदण्डयोः ॥ १६ ॥

पौराद्याश्चोपकुर्वन्ति संश्रयादिह दुर्दिनम् । तूष्णीं युद्धं जनत्राणं मित्रामित्रपरिग्रहः ॥
सामन्तादिकृते दोषे नश्येत् तद्व्यसनाच्च तत् । भृत्यानां भरणंदानं प्रजामित्रपरिग्रहः
धर्मकामादिभेदश्च दुर्गसंस्कारभूषणम् । कोषात् तद्व्यसनाद्धन्ति कोषमूलो हि भूपतिः
मित्रामित्रावनीहेम साधनं रिपुमर्दनम् । दूरकार्य्याशुकारित्वं दण्डात् तद्व्यसनाद्धरेत्

संस्तम्भयति मित्राणि अमित्रं नाशयत्यपि ।
धनाद्यैरुपकारित्वं मित्रात् तद्व्यसनाद्धरेत् ॥ २४ ॥
राजा सव्यसनी हन्याद्राजकार्य्याणि यानि च ।
वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ॥ २५ ॥

पानं स्त्री मृगयाद्यूतं व्यसनानि महीपतेः । आलस्यंस्तब्धता दर्पः प्रमादो द्वैधकारिता
इति पूर्वोपदिष्टश्च सचिवव्यसनं स्मृतम् । अनावृष्टिश्च पीड़ादी राष्ट्रव्यसनमुच्यते ॥
विशीर्णयन्त्रप्राकारपरिखात्वमशस्त्रता । क्षीणया सेनया नद्धं दुर्गव्यसनमुच्यते॥२८॥
व्ययीकृतः परिक्षिप्तोऽप्रजितोऽसञ्चितस्तथा । दूषितो दूरसंस्थश्च कोषव्यसनमुच्यते
उपरुद्धं परिक्षिप्तममानितविमानितम् । अभूतं व्याधितं श्रान्तं दूरायातं नवागतम् ॥
परिक्षीणं प्रतिहतं प्रहताग्रतरं तथा । आशानिर्वेदभूयिष्ठमनृतप्राप्तमेव च ॥ ३१ ॥

कलत्रगर्भं निक्षिप्तमन्तःशल्यं तथैव च ।
विच्छिन्न विविधासारं शून्यमूलं तथैव च ॥ ३२ ॥

अस्वास्थ्यसंहतं वापि भिन्नकूटं तथैव च। दुष्पार्ष्णिग्राहमर्थश्च बलव्यसनमुच्यते ॥
देवोपपीड़ितं मित्रं ग्रस्तं शत्रुबलेन च। कामक्रोधादिसंयुक्तमुत्साहादरिभिर्भवेत् ॥

अर्थस्य दूषणं क्रोधात् पारुष्यं वाक्यदण्डयोः।
कामजं मृगयाद्यूतं व्यसनं पानकं स्त्रियः ॥ ३५ ॥

वाक्पारुष्यं परं लोके उद्वेजनमनर्थकम्। असिद्धसाधनं दण्डस्थं युक्त्यावनयेन् नृपः

उद्वेजयति भूतानि दण्डपारुष्यवान् नृपः।
भूतान्युद्वेज्यमानानि द्विषतां यान्ति संश्रयम् ॥ ३७ ॥

विवृद्धाः शत्रवश्चैव विनाशाय भवन्ति ते। दूष्यस्य दूषणार्थञ्च परित्यागो महीयसः
अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते। पानात् कार्य्यादिनो ज्ञानं मृगयातोऽरितक्षयः ॥
जितश्रमार्थं मृगयां विचरैद्रक्षिते वने। धर्मार्थप्राणनाशादि द्यूते स्यात् कलहादिकम्

कालातिपातो धर्मार्थपीड़ा स्त्रीव्यसनाद् भवेत्।
पानदोषात् प्राणनाशः कार्य्याकार्य्याविनिश्चयः ॥ ४१ ॥
स्कन्धावारनिवेशज्ञो निमित्तज्ञो रिपुं जयेत्।
स्कन्धावारस्य मध्ये तु सकोषं नृपतेर्गृहम् ॥ ४२ ॥

मौलीभूतं श्रेणिसुहृद्द्विषदाटविकं बलम्। राजहर्म्यं समावृत्य क्रमेण विनिवेशयेत् ॥
सैन्यैकदेशः सन्नद्धः सेनापतिपुरःसरः। परिभ्रमेच्चत्वरांश्च मण्डलेन वहिर्निशि ॥

वार्त्ताः स्वका विजानीयाद् दरसीमान्तचारिणः।
निर्गच्छेत् प्रविशेच्चैव सर्व एवोपलक्षितः ॥ ४५ ॥
साम दानञ्च भेदश्च दण्डोपेक्षेन्द्रजालकम्।
मायोपायाः सप्त परे निक्षिपेत् साधनाय तान् ॥ ४६ ॥

चतुर्विधं स्मृतं साम उपकारानुकीर्त्तनात्। मिथःसम्बन्धकथनं मृदुपूर्वञ्च भाषणम् ॥
आयाते दर्शनं वाचा तवाहमिति चार्पणम्। यः सम्प्राप्तधनोत्सर्ग उत्तमाधममध्यमः
प्रतिदानं तदा तस्य गृहीतस्यानुमोदनम्। द्रव्यदानमपूर्वं च स्वयङ्ग्राहप्रवर्त्तनम् ॥
देयश्च प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम्। स्नेहरागापनयनसंहर्षोत्पादनं तथा ॥

मिथो भेदश्च भेदज्ञैर्भेदश्च त्रिविधः स्मृतः । बधोऽर्थहरणं चैव परिक्लेशस्त्रिधा दमः

प्रकाशश्चाप्रकाशश्च लोकद्विष्टान् प्रकाशतः ।
उद्विजेत हतैर्लोकस्तेषु पिण्डः प्रशस्यते ॥ ५२ ॥
विशेषेणोपनिषद् योगैर्हन्याच्छस्त्रादिना द्विषः ।
जातिमात्रं द्विजं नैव हन्यात् सामोत्तरं वशे ॥ ५३ ॥

प्रलिम्पन्निव चेतांसि दृष्ट्वासाधु पिबन्निव । ग्रसन्निवामृतं साम प्रयुञ्जीत प्रियंवचः

मिथ्याभिशस्तः श्रीकाम आहूयाप्रतिमानितः ।
राजद्वेषी चातिकर आत्मसम्भावितस्तथा ॥ ५५ ॥
विच्छिन्नधर्मकामार्थः क्रुद्धो मानी विमानितः ।
अकारणात् परित्यक्तः कृतवैरोऽपि सान्त्वितः ॥ ५६ ॥
हृतद्रव्यकलत्रश्च पूजार्होऽप्रतिपूजितः ।
एतांस्तु भेदयेच्छत्रौ स्थितान् नित्यान् सुशङ्कितान् ॥ ५७ ॥

आगतान् पूजयेत् कामैर्निजांश्च प्रशमं नयेत् । सामदृष्ट्वानुसन्धानमत्यग्रभयदर्शनम्
प्रधानदानमानं च भेदोपायाः प्रकीर्त्तिताः । मित्रं हतं काष्ठमिव घुणजग्धं विशीर्य्यते
त्रिशक्तिर्देशकालज्ञो दण्डेनास्तं नयेदरीन् । मैत्रीप्रधानं कल्याणबुद्धिं सान्त्वेनसाधयेत

लुब्धं क्षीणञ्च दानेन मित्रानन्योऽन्यशङ्कया ।
दण्डस्य दर्शनाद् दुष्टान् पुत्रभ्रातादि सामतः ॥ ६१ ॥
दानभेदैश्चमूमुख्यान् योधान् जनपदादिकान् ।
सामान्ताटविकान् भेद दण्डाभ्यामपराद्धकान् ॥ ६२ ॥

देवताप्रतिमानान्तु पूजयांन्तर्गतैर्नरैः । पुमान् स्त्रीवस्त्रसंवीतो निशि चाद्भुतदर्शनः ॥

वेतालोल्कापिशाचानां शिवानां च स्वरूपिकी ।
कामतो रूपधारित्वं शस्त्राग्न्यश्माम्बुवर्षणम् ॥ ६४ ॥
तमोऽनिलोऽनलो मेघ इति माया ह्यमानुषी ।
जघान कीचकं भीम आस्थितः स्त्रीस्वरूपताम् ॥ ६५ ॥

अन्याये व्यसने युद्धे प्रवृत्तस्यानिवारणन्। उपेक्षेयं स्मृता भ्रातोपेक्षितश्च हिडम्बिया
मेघान्धकारवृष्ट्यग्नि पर्वताद्भुतदर्शनम्। दरस्थानं च सैन्यानां दर्शनं ध्वजशालिनाम्॥
छिन्नपाटितभिन्नानां संसृतानां च दर्शनम्। इतीन्द्रजालं द्विषतां भीत्यर्थमुपकल्पयेत्
इत्यादिमहापुराणेआग्नेयेसामादिदण्डविधानंनामैकचत्वारिंशदधिकद्विशततमोऽध्यायः

---

# द्विचत्वारिंशदधिकद्विशततमोऽध्यायः

## राजनीतिः।

राम उवाच।

षड्विधन्तु बलं व्यूह्य देवान् प्राच्यर्य रिपुं व्रजेत्।
मौलं भूतं श्रोणिसुहृद् द्विषदाटविकं बलम्॥ १॥
पूर्वं पूर्वं गरीयस्तु बलानां व्यसनं तथा। षड़ङ्गं यन्त्रकोषाभ्यां पदात्यश्वरथद्विपैः॥
नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत्। सेनापतिस्तत्र गच्छेद् तत्रव्यूहीकृतैर्बलैः॥ ३॥

नायकः पुरतो यायात् प्रवीरपुरुषावृतः।
मध्ये कलत्रं स्वामी च कोशः फल्गु च यद् बलम्॥ ४॥
पार्श्वयोरुभयोरश्वा वाजिनां पार्श्वयो रथाः।
रथानां पार्श्वयोर्नागा नागानां चाटवीवलम्॥ ५॥
पश्चात् सेनापतिः सर्वं पुरस्कृत्य कृती स्वयम्।
यायात् सन्नद्धसैन्यौघः खिन्नानाश्वासयञ्छनैः॥ ६॥

यायाद् व्यूहेन महता मकरेण पुरोभये। श्येनेनोद्धृतपक्षेण सूच्या वा वीरवक्त्रया॥
पश्चाद् भये तु शकटं पार्श्वयोर्वज्रसञ्ज्ञितम्। सर्वतः सर्वतोभद्रं भये व्यूहं प्रकल्पयेत्
कन्दरे शैलगहने निम्नगा वनसङ्कटे। दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितक्लमम्॥
व्याधिदुर्भिक्षमरकपीड़ितं दस्युविद्रुतम्। पङ्कपांशुजलस्कन्धं व्यस्तं पुञ्जीकृतं पथि॥

प्रसुप्तं भोजनव्यग्रमभूमिष्ठमसुस्थितम्। चौराग्निभयवित्रस्तं वृष्टिवातसमाहतम्॥

इत्यादौ स्वचमूं रक्षेत् परसैन्यं च घातयेत्।

विशिष्टो देशकालाभ्यां भिन्नविप्रकृतिर्बली ॥१२॥

कुर्य्यात् प्रकाशयुद्धं हि कूटयुद्धं विपर्य्यये। तेष्ववस्कन्दकालेषु परं हन्यात् समाकुलम्

अभूमिष्ठं स्वभूमिष्ठः स्वभूमौ चोपजायतः। प्रकृतिप्रग्रहाकृष्टं पाशैर्वनचरादिभिः ॥१४॥

हन्यात् प्रवीरपुरुषैर्भङ्गदानापकर्षणैः। पुरस्ताद् दर्शनं दत्त्वा तल्लक्षकृतनिश्चयान् ॥१५॥

हन्यात् पश्चात् प्रवीरेण बलेनोपेत्य वेगिना। पश्चाद् वासङ्कुलीकृत्यहन्याच्छूरेणपूर्वतः

आभ्यां पार्श्वाभितातौ तु व्याख्यातौ कूटयोधने।

पुरस्ताद् विषमे देशे पश्चाद्धन्यात् तु वेगवान्॥ १७ ॥

पुरः पश्चात् तु विषमे एवमेव तु पार्श्वयोः। प्रथमं योधयित्वा तु दूष्यामित्राटवीबलैः

श्रान्तं मन्दं निराक्रन्दं हन्यादश्रान्तवाहनम्।

दूष्यामित्रबलैर्वापि भङ्गं दत्त्वा प्रयत्नवान् ॥१९॥

जितमित्येव विश्वस्तं हन्यान् मन्त्रव्यपाश्रयः।

स्कन्धावारपुरग्राम शस्यस्वामि प्रजादिषु ॥ २० ॥

विश्रम्यन्तं परानीकमप्रमत्तो विनाशयेत्। अथवा गोग्रहाकृष्टं तल्लक्ष्यं मार्गबन्धनात्॥

अवस्कन्दभयाद्रात्रिप्रजागरकृतश्रमम्। दिवासुप्तं समाहन्यान्निद्राव्याकुलसैनिकम्

निशि विश्रब्धसंसुप्तं नागैर्वा षड्गपाणिभिः। प्रयाणे पूर्वयायित्वं वनदुर्गप्रवेशनम्

अभिन्नानामनीकानां भेदनं भिन्नसङ्ग्रहः। विभीषिकाद्धारघातं कोषरक्षेभकर्म च॥

अभिन्नभेदनं मित्रसन्धान रथकर्म च। वनदिङ्मार्गविचये वीवधासारलक्षणम्॥

अनुयानापसरणे शीघ्रकार्य्योपपादनम्। दीनानुसरणं घातः कोटिनां जघनस्य च॥

अश्वकर्माथ पत्तेश्च सर्वदा शस्त्रधारणम्।

शिविरस्य च मार्गादेः शोधनं वस्तिकर्म च ॥२७॥

संस्थूलस्थाणुवल्मीकवृक्षगुल्मापकण्टकम्। सापसारा पदातीनां भूर्नातिविषमा मता

स्वल्पवृक्षोपला क्षिप्र लङ्घनीयनगा स्थिरा।

निःशर्करा विपङ्का च सापसारा च वाजिभूः ॥२९॥

निस्थाणुवृक्षकेदारा रथभूमिरकर्दमा । मर्दनीयतरुच्छेद्य व्रततीपङ्कवर्जिता ॥ ३० ॥

निर्झरागम्यशैला च विषमा गजमेदिनी । उरस्यादीनि भिन्नानि प्रतिगृह्णन् बलानि हि

प्रतिग्रह इति ख्यातो राजकार्य्यान्तरक्षमः ।
तेन शून्यस्तु यो व्यूहः स भिन्न इवलक्ष्यते ॥३२॥
जयार्थी न च युध्येत मतिमानप्रतिग्रहः ।
यत्र राजा तत्र कोषः कोषाधीना हि राजता ॥३३॥
योधेभ्यस्तु ततो दद्याद् किञ्चिद् दातुं न युज्यते ।
द्रव्यलक्षं राजघाते तदर्द्धं तत्सुतार्दने ॥ ३४ ॥

सेनापतिवधे तद्वद् दद्याद्धस्त्यादिमर्दने । अथवा खलु युध्येरन् पत्यश्वरथदन्तिनः ॥
यथा भवेदसम्बाधो व्यायामविनिवर्त्तने । असङ्करेण युद्धेरन् सङ्करः सङ्कुलावहः ॥
महासङ्कुलयुद्धेषु संश्रयेरन् मतङ्गजम् । अश्वस्य प्रतियोद्धारो भवेयुः पुरुषास्त्रयः
इति कल्प्यास्त्रयश्चाश्वा विधेयाः कुञ्जरस्य तु । पादगोपा भवेयुश्च पुरुषा दश पञ्च च

विधानमिति नागस्य विहितं स्यन्दनस्य च ।
अनीकमिति विज्ञेयमिति कल्प्या नव द्विपाः ॥ ३६ ॥

तथानीकस्य रन्ध्रन्तु पञ्चधा च प्रचक्षते । इत्यनीकविभागेन स्थापयेद् व्यूहसम्पदः ॥
उरस्यकक्षपक्षांस्तु कल्प्यानेतान् प्रचक्षते । उरःकक्षौ च पक्षौ च मध्यं पृष्ठं प्रतिग्रहः ॥
कोटी च व्यूहशास्त्रज्ञैः सप्ताङ्गो व्यूह उच्यते । उरस्यकक्षपक्षास्तु व्यूहोऽयं सप्रतिग्रहः
गुरोरेष च शुक्रस्य कक्षाभ्यां परिवर्जितः । तिष्ठेयुः सेनापतयः प्रवीरैः पुरुषैर्वृताः ॥
अभेदेन च युध्येरन् रक्षेयुश्च परस्परम् । मध्यव्यूहे फल्गु सैन्यं युद्धवस्तु जघन्यतः ॥

युद्धं हि नायकप्राणं हन्यते तदनायकम् ।
उरसि स्थापयेन्नागान् प्रचण्डान् कक्षयो रथान् ॥ ४५ ॥

हयांश्च पक्षयोर्व्यूहो मध्यभेदि प्रकीर्त्तितः । मध्यदेशे हयानीकं रथानीकञ्च कक्षयोः ॥
पक्षयोश्च गजानीकं व्यूहोऽन्तर्भेद्ययं स्मृतः । रथस्थाने हयान् दद्यात् पदातींश्च हयाश्रये

रथाभावे तु द्विरदान् व्यूहे सर्वत्र दापयेत् ।
यदि स्याद् दण्डबाहुल्यमाबाधः सम्प्रकीर्त्तितः ॥ ४८ ॥
मण्डलासंहतो भोगो दण्डस्ते बहुधा शृणु ।
तिर्य्यग्वृत्तिस्तु दण्डः स्याद् भोगोऽन्यावृत्तिरेव च ॥ ४९ ॥
मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः । प्रदरो दृढकोऽसह्यः चापो वै कुक्षिरेव च ॥
प्रतिष्ठः सुप्रतिष्ठश्च श्येनो विजयसञ्जयौ । विशालो विजयः शूची स्थूणाकर्णचमूमुखौ
सर्पास्यो वलयश्चैव दण्डभेदाश्च दुर्जयाः । अतिक्रान्तःप्रतिक्रान्तः कक्षाभ्याञ्चैकपक्षतः
अतिक्रान्तस्तु पक्षाभ्यां त्रयोऽन्ये तद्विपर्य्यये ।
पक्षोरस्यैरतिक्रान्तः प्रतिष्ठोऽन्यो विपर्य्ययः ॥ ५३ ॥
स्थूणापक्षो धनुःपक्षो द्विस्थूणो दण्ड ऊर्ध्वगः ।
द्विगुणोऽन्तस्त्वतिक्रान्त पक्षोऽन्यस्य विपर्य्ययः ॥ ५४ ॥
द्विचतुर्दण्ड इत्येते ज्ञेया लक्षणतः क्रमात् । गोमूत्रिकाहि सञ्चारी शकटो मकरस्तथा
भोगभेदाः समाख्यातास्तथा पारिप्लवङ्गकः । दण्डपक्षौ युगोरस्य शकटस्तद्विपर्य्यये
मकरो व्यतिकीर्णश्च शेषः कुञ्जरराजिभिः । मण्डलव्यूह भेदौ तु सर्वतोभद्रदुर्जयौ ॥
अष्टानीको द्वितीयस्तु प्रथमः सर्वतोमुखः । अर्द्धचन्द्रक उर्द्धाङ्गो वज्रभेदस्तु संहते ॥
तथा कर्कटशृङ्गी च काकपादी च गोधिका ।
त्रिचतुःपञ्चसैन्यानां ज्ञेया आकारभेदतः ॥ ५९ ॥
दण्डस्य स्युः सप्तदश व्यूहा द्वौ मण्डलस्य च ।
असङ्घातस्य षट् पञ्च भोगस्यैव तु सङ्गरे ॥ ६० ॥
पक्षादीनामथैकेन हत्वा शेषैः परिक्षिपेत् । उरसा वा समाहत्य कोटिभ्यां परिवेष्टयेत्
परे कोटी समाक्रम्य पक्षाभ्यामप्रतिग्रहात् । कोटिभ्याञ्जघनं हन्यादुरसा च प्रपीड़येत्
यतः फल्गु यतो भिन्नं यतश्चान्यैरधिष्ठितम् । ततश्चारिबलं हन्यादात्मनश्चोपबृंहयेत्
सारं द्विगुणसारेण फल्गु सारेण पीड़येत् । संहतश्च गजानीकैः प्रचण्डैर्दारयेद् बलम्
स्यात् कक्षपक्षोरस्यैश्च वर्त्तमानस्तु दण्डकः ।

तत्र प्रयोगो दण्डस्य स्थानं तुर्य्येण दर्शयेत् ॥ ६५ ॥
स्यात् दण्डसमपक्षाभ्यामतिक्रान्तः प्रदारकः ।
भवेत् स पक्षकक्षाभ्यामतिक्रान्तो दृढः स्मृतः ॥ ६६ ॥
कक्षाभ्याञ्च प्रतिक्रान्तव्यूहो सऽह्यः स्मृतो यथा ।
कक्षपक्षावधः स्थाप्योरस्यैः क्रान्तश्च खातकः ॥ ६७ ॥

द्वौ दण्डौ वलयः प्रोक्तो व्यूहो रिपुविदारणः । दुर्जयश्चतुर्वलयः शत्रोर्बलविमर्दनः ॥
कक्षपक्षोरस्यैर्भोगो विषयं परिवर्त्तयन् । सर्पचारी गोमूत्रिका शकटः शकटाकृतिः ॥
विपर्य्ययोऽमरः प्रोक्तः सर्वशत्रुविमर्दकः । स्यात् कक्षपक्षोरस्यानामेकोभावस्तु मण्डलः
चक्रपद्मादयो भेदा मण्डलस्य प्रभेदकाः । एवञ्च सर्वतोभद्रो वज्राक्षवर काकवत्॥७१॥
अर्द्धचन्द्रश्च शृङ्गाटो ह्यचलो नामरूपतः । व्यूहा यथासुखं कार्य्याः शत्रूणां बलवारणाः

अग्निरुवाच ।

रामस्तु रावणं हत्वा अयोध्यां प्राप्तवान् द्विज ! ।
रामोक्तनीत्येन्द्रजितं हतवांल्लक्ष्मणः पुरा ॥ ७३ ॥

इत्यादिमहापुराणेआग्नेयेराजनीतिकथनंनामद्विचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

## त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः

### पुरुषलक्षणम् ।

अग्निरुवाच ।

रामायोक्ता मया नीतिः स्त्रीणां राजन् ! नृणां वदे ।
लक्षणं यत् समुद्रेण गर्गायोक्तं यथा पुरा ॥ १ ॥

समुद्र उवाच ।

पुंसाञ्च लक्षणं वक्ष्ये स्त्रीणाञ्चैव शुभाशुभम् ।

एकाधिको द्विशुक्लश्च त्रीगम्भीरस्तथैव च ॥ २ ॥
त्रित्रिकस्त्रिप्रलम्बश्च त्रिभिर्व्याप्नोति यस्तथा ।
त्रिवलीमांस्त्रिविनतस्त्रिकालज्ञश्च सुव्रत ! ॥ ३ ॥

पुरुषः स्यात् सुलक्षण्यो विपुलश्च तथा त्रिषु । चतुर्लेखस्तथा यश्च तथैव च चतुःसमः
चतुष्किष्कुश्चतुर्दंष्ट्रः शुक्लकृष्णस्तथैव च । चतुर्गन्धश्चतुर्ह्रस्वः सूक्ष्मदीर्घश्च पञ्चसु ॥
षडुन्नतोऽष्टवंशश्च सप्तस्नेहो नवामलः । दशपद्मो दशव्यूहो न्यग्रोधपरिमण्डलः ॥ ६ ॥

चतुर्दशसमद्वन्द्वः षोड़शाक्षश्च शस्यते ।
धर्मार्थकामसंयुक्तो धर्मो ह्येकाधिको मतः ॥ ६ ॥
तारकाभ्यां विना नेत्रे शुक्लदन्ती द्विशुक्लकः ।
गम्भीरस्त्रिश्रवो नाभिः सत्त्वश्चैकं त्रिकं स्मृतम् ॥ ८ ॥

अनसूया दया क्षान्तिर्मङ्गलाचारयुक्तता ! शौचं स्पृहा त्वकार्पण्यमनायासश्च शौर्य्यता

त्रित्रिकस्त्रिप्रलम्बः स्याद् वृषणे भुजयोर्नरः ।
दिग्देशजातिवर्गांश्च तेजसा यशसा श्रिया ॥ १० ॥

व्याप्नोति यस्त्रिकव्यापी त्रिवलीमान् नरस्त्वसौ । उदरे वलयस्तिस्रो नरं त्रिविनतं शृणु
देवतानां द्विजानाञ्च गुरूणां प्रणतस्तु यः । धर्मार्थकामकालज्ञोऽस्त्रिकालज्ञोऽभिधीयते

उरो ललाटं वक्त्रञ्च त्रिविस्तीर्णो विलेखवान् ।
द्वौ पाणी द्वौ तथा पादौ ध्वजच्छत्रादिभिर्युतौ ॥ १३ ॥

अङ्गुल्यो हृदयं पृष्ठं कटिः शस्तं चतुःसमम् । षणवत्यङ्गुलोत्सेधश्चतुष्किष्कुप्रमाणतः ॥
दंष्ट्राश्चतस्रश्चन्द्राभाश्चतुःकृष्णं वदामि ते । नेत्रतारौ भ्रुवौ श्मश्रुः कृष्णाः केशास्तथैव च

नासायां वदने स्वेदे कक्षरोर्विड़गन्धकः ।
ह्रस्वं लिङ्गं तथा ग्रीवा जङ्घे स्याद् वेदह्रस्वकम् ॥ १६ ॥
सूक्ष्माण्यङ्गुलिपर्वाणि नखकेशद्विजत्वचः ।
हनूनेत्रे ललाटे च नासा दीर्घा स्तनान्तरम् ॥ १७ ॥
वक्षः कक्षौ नखा नासोन्नतं वक्त्रं कृकाठिका ।

स्निग्धास्त्वक्केशदन्ताश्च लोम दृष्टिर्नखाश्च वाक् ॥ १८ ॥
जान्वोरुवोश्च पृष्ठस्थवंशौ द्वौ करनासयोः। नेत्रे नासापुटौ कर्णौ मेढ्रं पायुमुखेऽमलम्
जिह्वोष्ठे तालुनेत्रे तु हस्तपादौ नखास्तथा।
शिश्नाग्रवक्त्रं शस्यन्ते पद्माभा दश देहिनाम् ॥ २० ॥
पाणिपादं मुखं ग्रीवा श्रवणे हृदयं शिरः। ललाटमुदरं पृष्ठं वृहन्तः पूजिता दश ॥२१॥
प्रसारितभुजस्येह मध्यमाग्रद्वयान्तरम्। उच्छ्रायेण समंयस्य न्यग्रोधपरिमण्डलः ॥
पादौ गुल्फौ स्फिचौ पार्श्वौ वङ्क्षणौ वृषणौ कुचौ।
कर्णौष्ठे सक्थिनौ जङ्घे हस्तौ बाहू तथाक्षिणी ॥ २३ ॥
चतुर्दशसमद्वन्द्व एतत् सामान्यतो नरः। विद्याचतुर्दश द्व्यक्षैः पश्येद् यः षोडशाक्षकः
रूक्षं शिराततं गात्रमशुभं मांस वर्जितम्। दुर्गन्धिविपरीतं य च्छस्तं दृष्ट्वा प्रसन्नया
धन्यस्य मधुरा वाणी गतिर्मत्तेभसन्निभा। एककूपभवं रोम भये रक्षा सकृत् सकृत्
इत्यादिमहापुराणेआग्नेये पुरुषलक्षणकथनंनामत्रिचत्वारिंशदधिकद्विशततमोऽध्यायः।

---

# चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः

## स्त्रीलक्षणम्

### समुद्र उवाच।

शस्ता स्त्री चारुसर्वाङ्गी मत्तमातङ्गगामिनी। गुरूरुजघना या च मत्तपारावतेक्षणा ॥
सुनीलकेशी तन्वङ्गी विलोमाङ्गी मनोहरा। समभूमिस्पृशौ पादौ संहतौ च तथा स्तनौ
नाभिः प्रदक्षिणावर्त्ता गुह्यमश्वत्थपत्रवत्।
गुल्फौ निमूढौ मध्येन नाभिरङ्गुष्ठमानिका ॥ ३ ॥
जठरं न प्रलम्बञ्च रोमरूक्षा न शोभना। नर्क्षवृक्षनदीनाम्नी न सदा कलहप्रिया ॥ ४ ॥
न लोलुपा न दुर्भाषा शुभा देवादिपूजिता। गण्डैर्मधूकपुष्पाभैर्न शिराला न लोमशा

न संहतभ्रू कुटिला पतिप्राणा पतिप्रिया। अलक्षणापि लक्षण्या यत्राकारस्ततो गुणाः
भुवङ्कनिष्ठिका यस्या न स्पृशेन् मृत्युरेव सा ॥ ६ ॥
इत्यादिमहापुराणेआग्नेयेस्त्रीलक्षणकथनंनामचतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः।

---

# पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः

## चामरादिलक्षणम् ।

### अग्निरुवाच ।

चामरो रुक्मादण्डोऽग्र्यः छत्रं राज्ञः प्रशस्यते। हंसपक्षैर्विरचितं मयूरस्य शुकस्य च
पक्षैर्वाथ बलाकाया न कार्य्यं मिश्रपक्षकैः। चतुरस्रं ब्राह्मणस्य वृत्तं राज्ञश्च शुक्लकम्
त्रिचतुःपञ्चषट्सप्तअष्टपर्वैश्च दण्डकः। भद्रासनं क्षीरवृक्षैः पञ्चाशदङ्गुलोच्छ्रयैः ॥३॥
विस्तारेण त्रिहस्तं स्यात्सुवर्णाद्यैश्च चित्रितम्। धनुर्द्रव्यत्रयं लोहं श्रृङ्गं दारु द्विजोत्तम
ज्याद्रव्यत्रितयञ्चैव वंशभङ्गत्वचस्तथा। दारुचापप्रमाणन्तु श्रेष्ठं हस्तचतुष्टयम् ॥ ५॥
तदेव समहीनन्तु प्रोक्तं मध्यकनीयसि। मुष्टिग्राहनिमित्तानि मध्ये द्रव्याणि कारयेत्

स्वल्पकोटिस्त्वचा श्रृङ्गं शार्ङ्गलोहमये द्विज!।
कामिनीभ्रू लताकारा कोटिः कार्य्या सुसंयता ॥ ७ ॥
पृथग् वा विप्र! मिश्रं वा लौहं शार्ङ्गन्तु कारयेत्।
शार्ङ्गं समुचितं कार्य्यं रुक्मविन्दुविभूषितम् ॥ ८ ॥

कुटिलं स्फुटितञ्चापं सच्छिद्रञ्च न शस्यते। सुवर्णं रजतं ताम्रं कृष्णायो धनुषिस्मृतम्
महिषं शारभं शार्ङ्गं रौहिषं वा धनुः शुभम्। चन्दनं वेतसं सालं धावलं ककुभं तरुः
सर्वश्रेष्ठं धनुर्वंशैर्गृहीतैः शरदि श्रितैः। पूजयेत् तु धनुः खड्ग मन्त्रैस्त्रैलोक्यमोहनैः ॥
अयसश्चाथ वंशस्य शरस्याप्यशरस्य च। ऋजवो हेमवर्णाभाः स्नायुश्लिष्टाः सुपत्रकाः

रुक्मपुङ्खाः सुपुङ्खास्ते तैलधौताः सुवर्णकाः।

यात्रायामभिषेकादौ यजेद् बाणधनुर्मुखान् ॥ १३ ॥

सपताकास्त्रसङ्ग्राह सांवत्सरकान् नृपः । ब्रह्मा वै मेरुशिखरे स्वर्गगङ्गातटेऽयजत् ॥

लोहदैत्यं स ददृशे विघ्नं यज्ञे तु चिन्तयन् ।

तस्य चिन्तयतो वह्नेः पुरुषोऽभूद् बली महान् ॥ १५ ॥

ववन्देऽजश्च तं देवा अभ्यनन्दन्त हर्षिताः ।

तस्मात् स नन्दकः खड्गो देवोक्तो हरिरग्रहीत् ॥ १६ ॥

तं जग्राह शनैर्देवो विकोषः सोऽभ्यपद्यत । खड्गो नीलो रत्नमुष्टिस्ततोऽभूच्छतबाहुकः

दैत्यः स गदयादेवान् द्रावयामास वै रणे । विष्णुनाखड्गच्छिन्नानि दैत्यगात्राणिभूतले

पतितानि तु संस्पर्शान् नन्दकस्य च तानि हि ।

लोहभूतानि सर्वाणि हत्वा तस्मै हरिर्वरम् ॥ १९ ॥

ददौ पवित्रमङ्गं ते आयुधाय भवेद् भुवि । हरिप्रसादाद् ब्रह्मापि विनाविघ्नं हरिं प्रभुम्

पूजयामास यज्ञेन वक्ष्येऽथो खड्गलक्षणम् । खटीखट्टरजाता ये दर्शनीयास्तु ते स्मृताः

कायच्छिदस्त्वार्षिकाः स्युर्दृढा सूर्पारकोद्भवाः ।

तीक्ष्णाश्छेदसहा वङ्गास्तीक्ष्णाः स्युश्चाङ्गदेशजाः ॥ २२ ॥

शतार्द्धमङ्गुलानाञ्च श्रेष्ठं खड्गं प्रकीर्त्तितम् । तदर्द्धं मध्यमं ज्ञेयं ततोहीनं न धारयेत् ॥

दीर्घं सुमधुरं शब्दं यस्य खड्गस्य सत्तम! । किङ्किणी सदृशं तस्य धारणं श्रेष्ठमुच्यते

खड्गः पद्मपलाशाग्रो मण्डलाग्रश्च शस्यते । करवीरदलाग्राभो घृतगन्धो वियत्प्रभः

समाङ्गुलस्थाः शस्यन्ते व्रणाः खड्गेषु लिङ्गवत् ।

काकोलूकसवर्णाभा विषमास्ते न शोभनाः ॥ २६ ॥

खड्गे न पश्येद् वदनमुच्छिष्टो न स्पृशेदसिम् ।

मूल्यं जातिं न कथयेन् निशि कुर्य्यान् न शीर्षके ॥ २७ ॥

इत्यादिमहापुराणेआग्नेयेचामरादिलक्षणकथनंनाम

पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

# षट्चत्वारिंशदधिकद्विशततमोऽध्यायः

## रत्नपरीक्षा ।

### अग्निरुवाच ।

रत्नानां लक्षणं वक्ष्ये रत्नं धार्य्यमिदं नृपैः । वज्रं मरकतं रत्नं पद्मरागश्च मौक्तिकम्
इन्द्रनीलं महानीलं वैदूर्य्यं गन्धशस्यकम् । चन्द्रकान्तं सूर्य्यकान्तं स्फटिक पुलकं तथा
कर्केतनं पुष्परागं तथाज्योतिरसं द्विज ! । स्फटिकं राजपट्टञ्च तथा राजमयं शुभम्॥
सौगन्धिकं तथा गञ्जं शङ्खब्रह्ममयं तथा । गोमेदं रुधिराक्षञ्च तथाभल्लातकं द्विज ! ॥
धूलिं मरकतश्चैव तुथकं सीसमेव च । पीलुं प्रवालकश्चैव शिरिवज्रं द्विजोत्तम ! ॥
भुजङ्गममणिश्चैव तथा वज्रमणिं शुभम् । टिट्टिभश्च तथा पिण्डं भ्रामणञ्च तथोत्पलम्
सुवर्णप्रतिवद्धानि रत्नानि श्रीजयादिके । अन्तःप्रभत्वं वैमल्यं सुसंस्थानत्वमेव च ॥

सुधार्य्या नैव धार्य्यास्तु निष्प्रभा मलिनास्तथा ।
खण्डाः सशर्करा ये च प्रशस्तं वज्रधारणम् ॥ ८ ॥
अम्भस्तरति यद् वज्रमभेद्यं विमलं च यत् ।
षट्कोणं शक्रचापाभं लघु चार्कनिभं शुभम् ॥ ६ ॥

शुकपक्षनिभःस्निग्धःकान्तिमान्विमलस्तथा । स्वर्णचूर्णनिभैःसूक्ष्मैर्मरकतश्चविन्दुभिः

स्फटिकजाः पद्मरागाः स्यू रागवन्तोऽतिनिर्मलाः ।
जातवङ्गा भवन्तीह कुरुविन्दसमुद्भवाः ॥ ११ ॥
सौगन्धिकोत्था काषाया मुक्ताफलास्तु शुक्तिजाः ।
विमलास्तेभ्य उत्कृष्टा ये च शङ्खोद्भवा मुने ! ॥ १२ ॥

नागदन्तभवाश्चाग्रयाः कुम्भशूकरमत्स्यजाः । वेणुनागभवाः श्रेष्ठा मौक्तिकं मेघजंवरम्

वृत्तत्वं शुक्लता स्वाच्छ्यं महत्वं मौक्तिके गुणाः ।
इन्द्रनीलं शुभं क्षीरे राजते भ्राजतेऽधिकम् ॥ १४ ॥

रञ्जयेत् स्वप्रभावेण तममूल्यं विनिर्दिशेत्। नीलरक्तन्तु वैदूर्य्यं श्रेष्ठं हारादिकं भजेत्
इत्यादिमहापुराणेआग्नेये रत्नपरीक्षाकथनंनामषट्चत्वारिंशदधिकद्विशततमोऽध्यायः।

---

# सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः

## वास्तुलक्षणम्।

अग्निरुवाच।

वास्तुलक्ष्म प्रवक्ष्यामि विप्रादीनां च भूरिह।
श्वेतारक्ता तथा पीता कृष्णा चैव यथाक्रमम्॥ १॥

घृतरक्तान्नमद्यानां गन्धाढ्या वसतश्च भूः। मधुरा च कषया च अम्लाद्युपरसा क्रमात्
कुशैः शरैस्तथाकाशैर्दूर्वाभिर्या च संश्रिता।
प्रार्च्य विप्रांश्च निःशल्पां खातपूर्वन्तु कल्पयेत्॥ ३॥

चतुःषष्टिपदं कृत्वा मध्ये ब्रह्मा चतुष्पदः। प्राक्तेषां वै गृहस्वामी कथितस्तु तथार्यमा
दक्षिणेन विवस्वांश्च मित्रः पश्चिमतस्तथा। उदङ्महीधरश्चैव आपवत्सौ च वह्निगे॥
सावित्रश्चैव सविता जयेन्द्रौ नैर्ऋतेऽम्बुधौ।
रुद्रव्याधी च वायव्ये पूर्वादौ कोणगाद् बहिः॥ ६॥

महेन्द्रश्च रविः सत्यो भृशः पूर्वेऽथ दक्षिणे। गृहक्षतोऽर्य्यमधृती गन्धर्वाश्चाथ वारुणे
पुष्पदन्तोऽसुराश्चैव वरुणोयक्ष एव च। सौम्ये भल्लाटसोमौ च अदितिर्धनदस्तथा॥
नागः करग्रहश्चैशे अष्टौ दिशि दिशि स्मृताः।
आद्यन्तौ तु तयोर्देवौ प्रोक्तावत्र गृहेश्वरौ॥ ६॥

पर्जन्यः प्रथमो देवो द्वितीयश्च करग्रहः। महेन्द्ररविसत्याश्च भृशोऽथगगनं तथा॥
पवनः पूर्वतश्चैव अन्तरीक्ष धनेश्वरौ। आग्नेये चाथ नैर्ऋत्ये मृगसुग्रीवकौ सुरौ॥
रोगोमुख्यश्च वायव्ये दक्षिणे पुष्पवित्तदौ। गृहक्षतो यमभृशौ गन्धर्वो नागपैतृकः॥

आप्ये दौवारिकसुग्रीवौ पुष्पदन्तोऽसुरो जलम् ।
यक्ष्मा रोगश्च शोषश्च उत्तरे नागराजकः ॥ १३ ॥

मुख्यो भल्लाटशशिनौ अदितिश्च कुवेरकः । नागोहुताशः श्रेष्ठो वै शक्र सूर्य्यौ च पूर्वतः
दक्षे गृहक्षतः पुष्प आप्ये सुग्रीव उत्तमः । पुष्पदन्तो ह्युदग् द्वारि भल्लाटः पुष्पदन्तकः

शिलेष्टकादिविन्यासं मन्त्रैः प्रार्च्य सुरांश्चरेत् ।
नन्दे ! नन्दय वासिष्ठे ! वसुभिः प्रजया सह ॥ १६ ॥

जये ! भार्गवदायादे ! प्रजानां जयमावह । पूर्णेऽङ्गिरसदायादे ! पूर्णकामं कुरुष्वमाम्
भद्रे ! काश्यपदायादे ! कुरु भद्रां मतिं मम । सर्वबीजसमायुक्ते ! सर्वरत्नौषधैर्वृते !

रुचिरे ! नन्दने ! नन्दे वासिष्ठे ! रम्यतामिह ।
प्रजापतिसुते ! देवि ! चतुरस्रे ! महीमये ॥ १९ ॥
सुभगे ! सुव्रते ! भद्रे ! गृहे काश्यपि ! रम्यताम् ।
पूजिते !! परमाचार्य्यैर्गन्धमाल्यैरलङ्कृते ! ॥ २० ॥
भवभूतिकरे ! देवि ! गृहे भार्गवि ! रम्यताम् ।
अव्यङ्गर्ये ! चाक्षते ! पूर्णे ! मुनेरङ्गिरसः सुते ! ॥ २१ ॥

इष्टके ! त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहम् । देशस्वामिपुरस्वामिगृहस्वामिपरिग्रहे !॥
मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव । गृहप्रवेशेऽपि तथा शिलान्यासं समाचरेत्॥

उत्तरेण शुभः प्लक्षो वटः प्राक् स्याद् गृहादितः ।
उदुम्बरश्च याम्येन पश्चिमेऽश्वत्थ उत्तमः ॥ २४ ॥
वामभागे तथोद्यानं कुर्य्याद् वासं गृहे शुभम् ।
सायं प्रातस्तु घर्माप्तौ शीतकाले दिनान्तरे ॥ २५ ॥

वर्षारात्रे भुवः शोषे सेक्तव्या रोपितद्रुमाः । विडङ्गघृतसंयुक्तान् सेचयेच्छीतवारिणा
फलनाशे कुलत्थैश्च माषैर्मुद्गैस्तिलैर्यवैः । घृतशीतपयःसेकः फलपुष्पाय सर्वदा॥२७॥

मत्स्याम्भसा तु सेकेन वृद्धिर्भवति शाखिनः ।
आविकाजसकृच्चूर्णं यवचूर्णं तिलानि च ॥ २८ ॥

गोमांसमुदकञ्चेति सप्तरात्रं निधापयेत् । उत्सेकं सर्ववृक्षाणां फलपुष्पादिवृद्धिदम् ॥

मत्स्योदकेन शीतेन आम्राणां सेक इष्यते ।

प्रशस्तं चाप्यशोकानां कामिनीपादताड़नम् ॥ ३० ॥

खर्जूरनारिकेलादेर्लवणाद्भिर्विवर्द्धनम् । विड़ङ्गमत्स्यमांसाद्भिः सर्वेषां दोहदं शुभम् ॥

इत्यादिमहापुराणेआग्नेयेवास्तुलक्षणकथनंनामसप्तचत्वारिंशदधिकद्विशततमोऽध्यायः

---

## अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः

### पुष्पादिपूजाफलम् ।

अग्निरुवाच ।

पुष्पैस्तु पूजनाद् विष्णुः सर्वकार्य्येषु सिद्धिदः ।

मालती मल्लिका यूथी पाटला करवीरकम् ॥ १ ॥

पावन्तिरतिमुक्तश्च कर्णिकारः कुरण्टकः । कुब्जकस्तगरो नीपो वाणो वर्वरमल्लिका ॥

अशोकस्तिलकः कुन्दः पूजायै स्यात् तमालजम् । विल्वपत्रं शमीपत्रं पत्रं भृङ्गरजस्य तु

तुलसीकालतुलसीपत्रं वासकमर्च्चने । केतकीपत्रपुष्पं च पद्मं रक्तोत्पलादिकम् ॥४॥

नार्क्कन्नोन्मत्तकङ्काञ्ची पूजने गिरिमल्लिका । कौटजं शाल्मलीपुष्पं कण्टकारीभवन्नहि

घृतप्रस्थेन विष्णोश्च स्नानङ्गोकोटिसत्फलम् ।

आढ़केन तु राजा स्यात् घृतक्षीरैर्दिवं व्रजेत् ॥ ६ ॥

इत्यादिमहापुराणेआग्नेयेपुष्पादिपूजाफलकथनंनामा-

ष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

# ऊनपञ्चाशदधिकद्विशततमोऽध्यायः

## धनुर्वेदः ।

अग्निरुवाच ।

चतुष्पादं धनुर्वेदं वदे पञ्चविधं द्विजः ! ।
रथनागाश्वपत्तीनां योधांश्चाश्रित्य कीर्त्तितम् ॥ १ ॥
यन्त्रमुक्तं पाणिमुक्तं मुक्तसन्धारितं तथा । अमुक्तं बाहुयुद्धञ्च पञ्चधा तत् प्रकीर्त्तितम्
तत्र शस्त्रास्त्रसम्पत्त्या द्विविधं परिकीर्त्तितम् । ऋजुमायाविभेदेन भूयो द्विविधमुच्यते
क्षेपणी चापयन्त्राद्यैर्यन्त्रमुक्तं प्रकीर्त्तितम् ।
शिलातोमरयन्त्राद्यं पाणिमुक्तं प्रकीर्त्तितम् ॥ ४ ॥
मुक्तसन्धारितं ज्ञेयं प्रासाद्यमपि यद् भवेत् । खड्गादिकममुक्तञ्च नियुद्धं विगतायुधम्
कुर्य्याद् योग्यानि पात्राणि योद्धुमिच्छुर्जितश्रमः ।
धनुःश्रेष्ठानि युद्धानि प्रासमध्यानि तानि च ॥ ६ ॥
तानि खड्गजघन्यानि बाहुप्रत्यवराणि च । धनुर्वेदे गुरुर्विप्रः प्रोक्तो वर्णद्वयस्य च ॥
युद्धाधिकारः शूद्रस्य स्वयं व्यापदि शिक्षया ।
देशस्थैः शङ्करै राज्ञः कार्य्या युद्धे सहायता ॥ ८ ॥
अङ्गुष्टगुल्फपाण्यङ्घ्रयः श्लिष्टाः स्युः सहिता यदि ।
दृष्टं समपदं स्थानमेतल्लक्षणतस्तथा ॥ ९ ॥
बाह्याङ्गुलिस्थितौ पादौ स्तब्धजानुबलावुभौ ।
त्रिवितस्त्यन्तरास्थानमेतद् वैशाखमुच्यते ॥ १० ॥
हंसपङ्क्त्याकृतिसमे दृश्येते यत्र जानुनी । चतुर्वितस्तिविच्छिन्ने तदेतन्मण्डलं स्मृतम्
हलाकृतिमयं यच्च स्तब्धजानूरुदक्षिणम् । वितस्त्यः पञ्च विस्तारे तदालीढं प्रकीर्त्तितम्
एतदेव विपर्य्यस्तं प्रत्यालीढमिति स्मृतम् ।

तिर्य्यग्भूतो भवेद् वामो दक्षिणोऽपि भवेदृजुः ॥ १३ ॥
गुल्फौ पार्ष्णिग्रहौ चैव स्थितौ पञ्चाङ्गुलान्तरौ ।
स्थानं जातं भवेदेतद् द्वादशाङ्गुलमायतम् ॥ १४ ॥
ऋजुजानुर्भवेद् वामो दक्षिणः सुप्रसारितः । अथवा दक्षिणञ्जानु कुब्जं भवति निश्चलम्
दण्डायतो भवेदेष चरणः सह जानुना । एवं विकटमुद्दिष्टं द्विहस्तान्तरमायतम् ॥१६॥
जानुनी द्विगुणे स्यातामुत्तानौ चरणावुभौ । अनेन विधियोगेन सम्पुटं परिकीर्त्तितम्
किञ्चिद् विवर्त्तितौ पादौ समदण्डायतौ स्थिरौ ।
दृष्टमेव यथान्यायं षोड़शाङ्गुलमायतम् ॥ १८ ॥
स्वस्तिकेनात्र कुर्वीत प्रणामं प्रथमं द्विज ! । कार्मुकं गृह्य वामेन वाणं दक्षिणकेन तु
वैशाखे यदि वा जाते स्थितौ वाप्यथ वायतौ ।
गुणान्तन्तु ततः कृत्वा कार्मुके प्रियकार्मुकः ॥ २० ॥
अधःकोटिन्तु धनुषः फलदेशन्तु पत्रिणः । धरण्यां स्थापयित्वा तु तोलयित्वातथैव च
भुजाभ्यामत्र कुब्जाभ्यां प्रकोष्ठाभ्यां शुभव्रत ! ।
तस्य वाणं धनुः श्रेष्ठं पुङ्खदेशे च पत्रिणः ॥ २२ ॥
विन्यासो धनुषश्चैव द्वादशाङ्गुलमन्तरम् ।
ज्यया विशिष्टः कर्त्तव्यो नातिहीनो न चाधिकः ॥ २३ ॥
निवेश्य कार्मुकं नाभ्यां नितम्बे शरसङ्करम् । उत्क्षिपेदुत्थितं हस्तमन्तरेणाक्षिकर्णयोः
पूर्वेण मुष्टिना ग्राह्यस्तनाग्रे दक्षिणे शरः । हरणन्तु ततः कृत्वा शीघ्रंपूर्वंप्रसारयेत् ॥२५॥
नाभ्यन्तरा नैव वाह्या नोर्ध्वका नाधरा तथा ।
न च कुब्जा न चोत्ताना न चला नातिवेष्टिता ॥ २६ ॥
समा स्थैर्य्यगुणोपेता पूर्वदण्डमिव स्थिता । छादयित्वा ततो लक्ष्यं पूर्वेणानेन मुष्टिना
उरसा तूत्थितो यन्ता त्रिकोणविनतस्थितः ।
स्रस्तांशो निश्चलग्रीवो मयूराञ्चितमस्तकः ॥ २८ ॥
ललाटनाशावक्त्रांसाः कुर्य्युरश्वसमम्भवेत् । अन्तरं त्र्यङ्गुलं ज्ञेयं चिबुकस्यांसकस्य च

प्रथमं त्र्यङ्गुलं ज्ञेयं द्वितीये द्व्यङ्गुलं स्मृतम् । तृतीयेऽङ्गुलमुद्दिष्टमायतश्चिबुकांसयोः
गृहीत्वा सायकं पुङ्खात् तर्जन्याङ्गुष्ठकेन तु । अनामया पुनर्गृह्य तथा मध्यमयापि च

तावदाकर्षयेद् वेगाद् यावद् वाणः सुपूरिताः ।
एवंविधमुपक्रम्य मोक्तव्यं विधिवत् खगम् ॥ ३२ ॥
दृष्टिमुष्टिहतं लक्ष्यं भिन्द्याद् वाणेन सुव्रत ! ।
मुक्त्वा तु पश्चिमं हस्तं क्षिपेद् वेगेन पृष्ठतः ॥ ३३ ॥

एतदुच्छेदमिच्छन्ति ज्ञातव्यं हि त्वया द्विज ! । कूर्परं तदधः कार्य्यमाकृष्य तु धनुष्मता
ऊर्ध्वं विमुक्तके कार्य्ये लक्षश्लिष्टन्तु मध्यमम् । श्रेष्ठं प्रकृष्टं विज्ञेयं धनुःशास्त्रविशारदैः
ज्येष्ठस्तु सायको ज्ञेयो भवेद् द्वादशमुष्टयः । एकादश तथा मध्यः कनीयान् दशमुष्टयः
चतुर्हस्तं धनुः श्रेष्ठं त्रयः सार्द्धन्तु मध्यमम् । कनीयस्तु त्रयः प्रोक्तं नित्यमेव पदातिनः

अश्वे रथे गजे श्रेष्ठे तदेव परिकीर्त्तितम् ॥ ३७ ॥

इत्यादिमहापुराणेआग्नेये धनुर्वेदवर्णनं नामोनपञ्चाशदधिकद्विशततमोऽध्यायः ।

---

## पञ्चाशदधिकद्विशततमोऽध्यायः

### धनुर्वेदकथनम् ।

अग्निरुवाच ।

पूर्णायतं द्विजः कृत्वा ततो मांसैर्गदायुधान् ।
सुनिर्धौतं धनुः कृत्वा यज्ञभूमौ विधापयेत् ॥ १ ॥
ततो वाणं समागृह्य दंशितः सुसमाहितः ।
तूणमासाद्य वध्नीयाद् दृढां कक्षाञ्च दक्षिणाम् ॥ २ ॥
विलक्ष्यमपि तद् वाणं तत्र चैव सुसंस्थितम् ।
ततः समुद्धरेद् वाणं तूणाद् दक्षिणपाणिना ॥ ३ ॥

तेनैव सहितं मध्ये शरं संगृह्य धारयेत् । वामहस्तेन वै कक्षां धनुस्तस्मात् समुद्धरेत्
अविषस्म मतिभूत्वा गुणे पुङ्खं निवेशयेत् । सम्पीड्य सिंहकर्णेन पुङ्खेनापि समे दृढम्
वामकर्णोपविष्टश्च फलं वामस्य धारयेत् । वर्णान् मध्यमया तत्र वामाङ्गुल्या च धारयेत्

मनो लक्ष्यगतं कृत्वा मुष्टिना च विधानवित् ।
दक्षिणे गात्रभागे तु कृत्वा वर्णं विमोक्षयेत् ॥ ७ ॥

ललाटपुटसंस्थानं दण्डं लक्ष्ये निवेशयेत् । आकृष्य ताड़येत तत्र चन्द्रकं षोड़शाङ्गुलम्

मुक्त्वा बाणं ततः पश्चादुल्काशिक्षस्तदा तया ।
निगृह्णीयान् मध्यमया ततोऽङ्गुल्या पुनः पुनः ॥ ९ ॥

अक्षिलक्ष्यं क्षिपेत् तूणाच्चतुरस्रञ्च दक्षिणम् । चतुरस्रगतं वेध्यमभ्यसेच्चादितः स्थितः
तस्मादनन्तरं तीक्ष्णं परावृत्तं गतञ्च यत् । निम्नमुन्नतवेधञ्च अभ्यसेत् क्षिप्रकं ततः ॥
वेध्यस्थानेष्वथैतेषु सत्त्वस्य पुटकाद्धनुः । हस्तावापशतैश्चित्रैस्तर्जयेद् दुस्तरैरपि ॥

तस्मिन् वेध्यगते विप्र ! द्वे वेध्ये दृढसञ्ज्ञके ।
द्वे वेध्ये दुष्करे वेध्ये द्वे तथा चित्रदुष्करे ॥ १३ ॥

न तु निम्नञ्च तीक्ष्णञ्च दृढवेध्ये प्रकीर्त्तिते । निम्नं दुष्करमुद्दिष्टं वेध्यमूर्ध्वगतञ्च यत
मस्तकायनमध्ये तु चित्रदुष्करसञ्ज्ञके । एवं वेध्यगणं कृत्वा दक्षिणेनेतरेण च ॥१५॥
आरोहेत् प्रथमं वीरो जितलक्षस्ततो नरः । एष एव विधिः प्रोक्तस्तत्र दृष्टः प्रयोक्तृभिः

अधिकं भ्रमणं तस्य तस्माद् वेध्यात् प्रकीर्त्तितम् ।
लक्ष्यं स योजयेत् तत्र पत्रिपत्रगतं दृढम् । ॥ १७ ॥
भ्रान्तं प्रचलितञ्चैव स्थिरं यच्च भवेदति ।
समन्तात् ताड़येद् भिन्द्याच्छेदयेद् व्यथयेदपि ॥ १८ ॥

कर्मयोगविधानज्ञो ज्ञात्वैवं विधिमाचरेत् । मनसा चक्षुषा दृष्ट्या योगशिक्षुर्यमं जयेत्

इत्यादिमहापुराणेआग्नेयेधनुर्वेदकथनंनामपञ्चाशदधिकद्विशततमोऽध्यायः ।

———

# एकपञ्चाशदधिकद्विशततमोऽध्यायः

## धनुर्वेदकथनम् ।

अग्निरुवाच ।

जितहस्तो जितमतिर्जितदृग्लक्ष्यसाधकः । नियतां सिद्धिमासाद्य ततो वाहनमारुहेत्
दशहस्तो भवेत् पाशो वृत्तः करमुखस्तथा । गुणकार्पासमुञ्जानां भङ्गस्नाय्वर्कवर्मिणाम्
अन्येषां सुदृढानाञ्च सुकृतं परिवेष्टितम् ।
तथा त्रिंशत्समं पाशं वुधः कुर्य्यात् सुवर्त्तितम् ॥ ३ ॥
कर्त्तव्यं शिक्षकैस्तस्य स्थानं कक्षासु वै तदा । वामहस्तेन संगृह्य दक्षिणेनोद्धरेत् ततः
कुण्डलस्याकृतिं कृत्वा भ्राम्यैकं मस्तकोपरि । क्षिपेत् तृणमये तूर्णं पुरुषे चर्मवेष्टिते ॥
वल्गिते च प्लुते चैव तथा प्रव्रजितेषु च । समयोगविधिं कृत्वा प्रयुञ्जीत सुशिक्षितम्
विजित्वा तु यथान्यायं ततो वन्धं समाचरेत् ।
कट्यां वद्धा ततः खड्गं वामपार्श्वावलम्बितम् ॥ ७ ॥
दृढं विगृह्य वामेन निष्कर्षेद् दक्षिणेन तु । षड्ङ्गुलपरीणाहं सप्तहस्तसमुच्छ्रितम् ॥
अयोमय्यः शलाकाश्च वर्माणि विविधानि च । अर्द्धहस्ते समे चैव तिर्य्यगूर्ध्वगतं तथा
योजयेद् विधिना येन तथात्वं गदतः शृणु ।
तूणचर्मावनद्धाङ्गं स्थापयित्वा नवं दृढम् ॥ १० ॥
करेणादाय लगुडं दक्षिणाङ्गुलकंनवम् । उद्यम्यघातयेद् यस्य नाशस्तेन शिशोर्दृढम्
उभाभ्यामक्षहस्ताभ्यां कुर्य्यात् तस्य निपातनम् ।
अक्लेशेन ततः कुर्वन् वधे सिद्धिः प्रकीर्त्तिता ।
वाहानां श्रमकरणं प्रचारार्थं पुरा तव ॥ १२ ॥

इत्यादिमहापुराणेआग्नेयेधनुर्वेदवर्णनं नामैकपञ्चाशदधिकद्विशततमोऽध्यायः ।

———

# द्विपञ्चाशदधिकद्विशततमोऽध्यायः

## धनुर्वेदकथनम् ।

अग्निरुवाच ।

भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं स्मृतम् । सम्पातं समुदीशञ्च श्येनपातमथाकुलम्
उद्धूतमवधूतञ्च सव्यं दक्षिणमेव च । अनालक्षितविस्फोटौ करालेन्द्रमहासखौ ॥
विकरालनिपातौ च विभीषणभयानकौ । समग्रार्द्ध तृतीयांश पादपादार्द्धवारिजाः ॥
प्रत्यालीढ़मथालीढ़ं वराहं लुलितं तथा । इति द्वात्रिंशतो ज्ञेयाः खड्गचर्मविधौ रणे ॥

परावृत्तमपावृत्तं गृहीतं लघुसङ्ज्ञितम् ।
ऊर्ध्वात् क्षिप्रमधक्षिप्तं सन्धारितविधारितम् ॥ ५ ॥

श्येनपातं गजपातं ग्राहग्राह्यं तथैव च । एवमेकादशविधा ज्ञेयाः पाशविधा रणाः ॥
ऋज्वायतं विशालञ्च तिर्य्यग्भ्रामितमेव च । पञ्चकर्म विनिर्दिष्टं व्यस्ते पाशे महात्मभिः
छेदनं भेदनं पातो भ्रमणं शयनं तथा । विकर्त्तनं कर्त्तनञ्च चक्रकर्मेदमेव च ॥ ८ ॥

आस्फोटः क्ष्वेड़नं भेदस्त्रासान्दोलितकौ तथा ।
शूलकर्माणि जानीहि षष्ठमाघातसञ्ज्ञितम् ॥ ६ ॥

दृष्टिघातं भुजाघातं पार्श्वघातं द्विजोत्तम ! । ऋज्जुपक्षेषुणा पातं तोमरस्य प्रकीर्त्तितम्
आहतं विप्र ! गोमूत्रप्रभूतं कमलासनम् । ततोर्ध्वगात्रं नमितं वामदक्षिणमेव च ॥११॥
आवृत्तञ्च परावृत्तं पादोद्धूतमवप्लुतम् । हंसमर्दं विमर्दञ्च गदाकर्म प्रकीर्त्तितम् ॥
करालमवघातञ्च दंशोपप्लुतमेव च । क्षिप्तहस्तं स्थितं शून्यं परशोस्तु विनिर्दिशेत् ॥
ताड़नं छेदनं विप्र ! तथा चूर्णनमेव च । मुद्गरस्य तु कर्माणि तथा प्लवनघातनम् ॥

संभ्रान्तमथ विश्रान्तं गोविसर्गं सुदुर्द्धरम् ।
भिन्दिपालस्य कर्माणि लगुण्डस्य च तान्यपि ॥ १५ ॥
अन्त्यं मध्यं परावृत्तं निदेशान्तं द्विजोत्तम ।

वज्रस्येतानि कर्माणि पट्टिशस्य च तान्यपि ॥ १६ ॥
हरणं छेदनं घातो वलोद्धारणमायतम् । कृपाणकर्म निर्दिष्टं पातनं स्फोटनं तथा ॥
त्रासनं रक्षणं घातो वलोद्धरणमायतम् । क्षेपणोकर्म निर्दिष्टं यन्त्रकर्मैतदेव तु ॥ १८॥
सन्त्यागमवदंशश्च वराहोद्धूतकं तथा । हस्तावहस्तमालीनमेकहस्तावहस्तके ॥ १६ ॥
द्विहस्तबाहुपाशे च कटिरेचितकोद्गते । उरोललाटघाते च भुजाविधमनन्तथा ॥ २० ॥
करोद्धूतं विमानञ्च पादाहति विपादिकम् । गात्रसंश्लेषणं शान्तं तथागात्रविपर्य्ययः
ऊद्र्ध्वंप्रहारं घातञ्च गोमूत्रं सव्यदक्षिणे । पारकं तारकं दण्डं करवीरन्धमाकुलम् ॥
तीर्य्यग्वन्धमपामार्गं भीमवेगं सुदर्शनम् ।
सिंहाक्रान्तं गजाक्रान्तं गर्द्दभाक्रान्तमेव च ॥ २३
गदाकर्माणि जानीयान्नियुद्धस्याथ कर्म च । आकर्षणं विकर्षञ्च बाह्ननां मूलमेव च ॥
ग्रीवाविपरिवर्त्तञ्च पृष्टभङ्गं सुदारुणम् । पर्य्यासनविपर्य्यासौ पशुमारमजाविकम् ॥
पादप्रहारमास्फोटं कटिरेचितकं तथा । गात्राश्लेषं स्कन्धगतं महीव्याजनमेव च ॥
उरोललाटघातञ्च विस्पष्टतरणं तथा । उद्धूतमवधूतञ्च तिर्य्यङ्मार्गगतं तथा ॥२७॥
गजस्कन्धमवक्षेपमपराङ्मुखमेव च । देवमार्गमधोमार्गममार्गगमनाकुलम् ॥ २८ ॥
यष्टिघातमवक्षेपो वसुधादारणं तथा । जानुबन्धं भुजाबन्धं गात्रबन्धं सुदारुणम् ॥
विपृष्टं सोदकं शुभ्रं भुजावेष्टितमेव च । सन्नद्धैः संयुगे भाव्यं सशस्त्रैस्तैर्गजादिभिः
वराङ्कुशधरौ चोभौ एको ग्रीवागतोऽपरः ।
स्कन्धगौ द्वौ च धानुष्कौ द्वौ च खड्गधरौ गजे ॥ ३१ ॥
रथे रणे गजे चैव तुरङ्गाणां त्रयं भवेत् । धानुष्काणां त्रयं प्रोक्तं रक्षार्थं तुरगस्य च
धन्विनो रक्षणार्थाय चर्मिणन्तु नियोजयेत् ।
स्वमन्त्रैः शस्त्रमभ्यर्च्य शास्त्रं त्रैलोक्यमोहनम् ।
यो युद्धे याति स जयेदरीन् सम्पालयेद् भुवम् ॥ ३२ ॥

इत्यादिमहापुराणेआग्नेये धनुर्वेदकथनंनाम द्विपञ्चाशदधिकद्विशततमोऽध्यायः ।

---

## त्रिपञ्चाशदधिकद्विशततमोऽध्यायः

### व्यवहारकथनम् ।

अग्निरुवाच ।

व्यवहारं प्रवक्ष्यामि नयानयविवेकदम् । चतुष्पाच्च चतुःस्थानश्चतुःसाधन उच्यते ॥
चतुर्हितश्चतुर्व्यापी चतुष्कारी च कीर्त्यते । अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैव च ॥
त्रियोनिर्द्व्यभियोगश्च द्विद्वारो द्विगतिस्तथा । धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ॥
चतुष्पाद् व्यवहाराणमुत्तरः पूर्वसाधकः । तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु

चरित्रं संग्रहे पुंसां राजाज्ञायान्तु शासनम् ।

सामाभ्युपायसाध्यत्वाच्चतुःसाधनः उच्यते ॥ ५ ॥

चतुर्णामाश्रमाणाञ्च रक्षणात् स चतुर्हितः । कर्त्तारं साक्षिणश्चैव सत्यान्राजानमेव च

व्याप्नोति पादगो यस्माच्चतुर्व्यापी ततः स्मृतः ।

धर्मस्यार्थस्य यशसो लोकपङ्क्तेस्तथैव च ॥ ७ ॥

चतुर्णाङ्करणादेष चतुष्कारी प्रकीर्त्तितः । राजा सपुरुषः सभ्याः शास्त्रं गणकलेखकौ

हिरण्यमग्निरुदकमष्टाङ्गः समुदाहृतः ।

कामात् क्रोधाच्च लोभाच्च त्रिभ्यो यस्मात् प्रवर्त्तते ।

त्रियोनिः कीर्त्यते तेन त्रयमेतद् विवादकृत् ।

द्व्यभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः ॥ १० ॥

शङ्काषड्भिस्तु संसर्गात् तत्त्वषोढ़ादि दर्शनात् ।

पक्षद्वयाभिसम्बन्धाद् द्विद्वारः समुदाहृतः ॥ ११ ॥

पूर्ववादस्तयोः पक्षः प्रतिपक्षस्त्वनन्तरः । भूतच्छलानुसारित्वाद् द्विगतिः समुदाहृता॥
ऋणं देयमदेयञ्च येन यत्र तथा च यत् । दानग्रहणधर्मश्च ऋणादानमिति स्मृतम् ॥

स्वद्रव्यं यत्र विश्रम्भान् निक्षिपत्यविशङ्कितः ।

निक्षेपन्नाम तत् प्रोक्तं व्यवहारपदं बुधैः ॥ १४ ॥

वणिक्प्रभृतयो यत्र कर्म सम्भूय कुर्वते । तत् सम्भूयसमुत्थानं व्यवहारपदं विदुः ॥

दत्त्वा द्रव्यञ्च सम्यग् यः पुनरादातुमिच्छति ।

दत्त्वाप्रदानिकं नाम तद् विवादपदं स्मृतम् ॥ १६ ॥

अभ्युपेत्य च शुश्रूषां यस्तां न प्रतिपद्यते । अशुश्रूषाभ्युपेत्यैतद् विवादपदमुच्यते ॥

भृत्यानां वेतनस्योक्ता दानादानविधिक्रिया । वेतनस्यानपाकर्म तद् विवादपदं स्मृतम्

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वा प्रहृत्य वा ।

विक्रीयते परोक्षं यत् स ज्ञेयोऽस्वामिविक्रयः ॥ १९ ॥

विक्रीय पुण्यं मूल्येन क्रेत्रे यच्च न दीयते । विक्रीयासम्प्रदानं तद् विवादपदमुच्यते ॥

क्रीत्वा मूल्येन यत् पुण्यं क्रेता न बहुमन्यते ।

क्रीत्वा मूल्येन यत् पण्यं दुष्क्रीतं मन्यते क्रयी ॥ २१ ॥

पाषण्डनैगमादीनां स्थितिः समय उच्यते । समयस्यानपाकर्म तद् विवादपदं स्मृतम्

सेतुकेदारमर्य्यादाविकृष्टाकृष्टनिश्चयाः । क्षेत्राधिकारे यत्र स्युर्विवादः क्षेत्रजस्तु सः ॥

वैवाहिको विधिः स्त्रीणां यत्र पुंसाञ्च कीर्त्यते ।

स्त्रीपुंसयोगसंज्ञन्तु तद्विवादपदं स्मृतम् ॥ २४ ॥

विभागोऽर्थस्य पैत्रस्य पुत्रैर्यस्तु प्रकल्प्यते । दायभागमिति प्रोक्तं तत् विवादपदं बुधैः॥

सयसा क्रियते कर्म यत् किञ्चित् बलदर्पितैः ।

तत् साहसमिति प्रोक्तं विवादपदमुच्यते ॥ २६ ॥

देशजातिकुलादीनामात्क्रोशत्यङ्गसंयुतम् । यद् वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते

परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः । अग्न्यादिभिश्चोपघातैर्दण्डपारुष्यमुच्यते ॥

अक्षवज्रशलाकाद्यैर्देवतं द्यूतमुच्यते । पशुक्रीडावयोभिश्च प्राणिद्यूतसमाह्वयः ॥ २९ ॥

प्रकीर्णकः पुनर्ज्ञेयो व्यवहारो निराश्रयः । राज्ञामाज्ञाप्रतीघातस्तत्कर्माकरणं तथा

व्यवहारोऽष्टादशपदस्तेषां भेदोऽथ वै शतम् ।

क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते ॥ ३१ ॥

व्यवहारान् नृपः पश्येज् ज्ञानिविप्रैरकोपनः ।
शत्रु मित्रसमाः सभ्या अलोभाः श्रुतिवेदिनः ॥ ३२ ॥
अपश्यता कार्य्यवशात् सभ्यैर्विप्रं नियोजयेत् ।
रागाल्लोभाद् भयाद् वापि स्मृत्यपेतादिकारिणः ॥ ३३ ॥
सभ्याः पृथक् पृथक् दण्ड्या विवादाद् द्विगुणो दमः ।
स्मृत्याचारव्यपेतेन मार्गेण धर्षितः परैः ॥ ३४ ॥

आवेदयति यद्राज्ञे व्यवहारपदं हि तत् । प्रत्यर्थिनोऽग्रतो लेख्यं यथा वेदितमर्थिना ॥
समामासतदर्द्धाहर्नामजात्यादिचिह्नितम् । श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ॥

ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम् ।
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ॥ ३७ ॥

चतुष्पाद् व्यवहारोऽयं विवादेषूपदर्शितः । अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत्

अभियुक्तश्च नान्येन त्यक्तं विप्रकृतिं नयेत् ।
कुर्य्यात् प्रत्यभियोगन्तु कलहे साहसेषु च ॥ ३९ ॥

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्य्यनिर्णये । निह्नवे भावितो दद्याद्धनं राज्ञे तु तत्समम्

मिथ्याभियोगाद् द्विगुणमभियोगाद्धनं हरेत् ।
साहसस्तेयपारुष्येष्वभिशापात्यये स्त्रियाः ॥ ४१ ॥
विचारयेत् सद्य एवं कालोऽन्यत्रेच्छया स्मृतः ।
देशाद् देशान्तरं याति सृक्कणी परिलेढ़ि च ॥ ४२ ॥

ललाटं स्विद्यते चास्य मुखवैवर्ण्यमेव च । स्वभावाद् विकृतं गच्छेन्मनोवाक्कायकर्मभिः

अभियोगेऽथ वा साक्ष्ये वाग्दुष्टः परिकीर्त्तितः ।
सन्दिग्धार्थं स्वतन्त्रो यः साधयेद् यश्च निष्पतेत् ॥ ४४ ॥
न चाहूतो वदेत् किञ्चिद्धनी दण्ड्यश्च स स्मृतः ।
साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ॥ ४५ ॥

पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः । सगणश्चेद् विवादः स्यात् तत्र हीनन्तु दापयेत्

दत्तं पणं वसुश्चैव धनिनो धनमेव च। छलं निरस्य दूतेन व्यहारान् नयेन् नृपः ॥४७॥
भूतमप्यर्थमप्यस्तं हीयते व्यवहारतः। निह्नुते निखिलानेकमेकदेशविभावितम् ॥४८॥

दाप्यः सर्वान् नृपेणार्थान् न ग्राह्यस्त्वनिवेदितः।
स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ॥ ४९ ॥
अर्थशास्त्राद्धि बलवद्धर्मशास्त्रमिति स्थितः।
प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम् ॥ ५० ॥

एषामन्यतमाभावे दिव्यान्यतममुच्यते। सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया॥
आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा। पश्यतो ब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी॥
परेण भुज्यमानाया धनस्य दशवार्षिकी। आधिसीमोपनिःक्षेप जड़बालधनैर्विना॥
तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि। आध्यादीनां विहर्त्तारं धनिने दापयेद्धनम्

दण्ड्यश्च तत्समं राज्ञे शक्त्येपेक्ष्यमथापि वा।
आगमोऽप्यधिको भुक्ति विना पूर्वक्रमागताम् ॥ ५५ ॥
आगमोऽपि बलं नैव भुक्तिः स्तोकापि यत्र न।
आगमेन विशुद्धेन भोगो याति प्रमाणताम् ॥ ५६ ॥
अविशुद्धागमो भोगः प्रामाण्यं नाधिगच्छति।
आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ॥ ५७ ॥
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी।
योऽभियुक्तः परेतः स्यात् तस्य ऋक्थात् तमुद्धरेत् ॥ ५८ ॥

न तत्र कारणं भुक्तिरागमेन विनाकृता। बलोपाधिविनिर्वृत्तान् व्यवहारान् निवर्त्तयेत्
स्त्रीनक्तमन्तरागारबहिःशत्रुकृतस्तथा। मत्तोन्मत्तार्त्तव्यसनिबालभीतप्रयोजितः ॥६०॥
असम्बद्धकृतश्चैव व्यवहारो न सिध्यति। प्रनष्टाधिगतं देयं नृपेण धनिने धनम्॥
विभावयेन्न चेल्लिङ्गैस्तत्समं दातुमर्हति। देयश्चौरहृतं द्रव्यं राज्ञा जनपदाय तु ॥६२॥

अशीतिभागो वृद्धिः स्यान् मासि मासि सबन्धके।
वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा ॥ ६३॥

सप्ततिस्तु पशुस्त्रीणां सप्तस्याष्टगुणा परा। वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणातथा
ग्रामान्तरात् तु दशकं सामुद्रादपि विंशतिम्।
दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥ ६५ ॥
प्रपन्नं साधयन्नर्थं न वाच्यो नृपतिर्भवेत्।
साध्यमानो नृप गच्छेद् दण्ड्यो दाप्यश्च तद्धनम् ॥ ६६ ॥
इत्यादिमहापुराणेआग्नेयेव्यवहारवर्णनंनामत्रिपञ्चाशदधिकद्विशततमोऽध्यायः।

---

## चतुःपञ्चाशदधिकद्विशततमोऽध्यायः

### व्यवहारकथनम्।

अग्निरुवाच।

गृहीतार्थः क्रमाद् दाप्यो धनिनामधमर्णिकः। दत्त्वा तु ब्राह्मणायादौ नृपतेस्तदनन्तरम्
राज्ञाधमर्णिको दाप्यः साधिताद् दशकं स्मृतम्।
पञ्चकन्तु शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः ॥ २ ॥
हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्। ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम्
दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्।
मध्यस्थस्थापितं तत् स्याद् वर्द्धते न ततः परम् ॥ ४ ॥
ऋक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य ऋक्थिनः ॥ ५ ॥
अविभक्तैः कुटुम्बार्थं यद्दृणन्तु कृतं भवेत्। दद्युस्तदृक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि
न योषित् पतिपुत्राभ्यां न पुत्रेण कृतं पिता।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥ ७ ॥
गोपशौण्डिकशैलूषरजकव्याधयोषिताम्।

ऋणं दद्यात् पतिस्त्वासां यस्माद् वृत्तिस्तदाश्रया ॥ ८ ॥
प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत् कृतम् ।
स्वयं कृतं वा यदृणं नान्यस्त्री दातुमर्हति ॥ ६ ॥

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽथवा । पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम्
सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम् । वृथा दानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥११॥

भ्रातृणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रतिभाव्यमृणं ग्राह्यमविभक्तेन च स्मृतम् ॥ १२ ॥

दर्शने प्रत्यये दाने प्रतिभाव्यं विधीयते । आद्यौ तु वितथे दाप्या वितथस्य स्सुता अपि
दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा । न तत्पुत्रा धनं दद्युर्दद्युर्दानाय ये स्थिताः॥
वहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् । एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि
प्रतिभूर्दापितो यत्र प्रकाशं धनिने धनम् । द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद् भवेत्
स्वसन्तति स्त्रीपशव्यं धान्यं द्विगुणमेव च । वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा॥

आधिः प्रणश्येत् द्विगुणे धने यदि न मोक्ष्यते ।
काले कालकृतं नश्येत् फलभोग्यो न नश्यति ॥ १८ ॥

गोप्याधिभोग्यो नावृद्धिः सोपकारेऽथ भाविते । नष्टो देयो विनष्टश्च दैवराजकृताद्दृते

आधेः स्वीकरणात् सिद्धीरक्ष्माणोऽप्यसारताम् ।
यातश्चेदन्य आधेयो धनभाग् वा धनी भवेत् ॥ २० ॥

चरित्रं वन्धककृतं सवृद्धं दापयेद्धनम् । सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत्।

उपस्थितस्य मोक्तव्य आधिर्दण्डोऽन्यथा भवेत् ।
प्रयोजके सति धनं कुलेऽन्यस्याधिमाप्नुयात् ॥ २२ ॥
तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ।
विना धारणकाद् वापि विक्रीणीते समाक्षिकम् ॥ २३ ॥

यदा तु द्विगुणीभूतमृणमाधौ तथा खलु । मोच्यश्चाधिस्तदुत्पाद्य प्रविष्टे द्विगुणे धने
व्यसनस्थमनाख्याय हस्तेऽन्यस्य यदर्पयेत् । द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत्।

न दाप्योऽपहृतं तत् तु राजदैवकतस्करैः ।
प्रेषश्चेन् मार्गिते दत्ते दाप्यो दण्डश्च तत्समम् ॥ २६ ॥
आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तच्चापि सोदयम् ।
याचितावाहितन्यासे निक्षेपेष्वप्ययं विधिः ॥ २७ ॥

इत्यादिमहापुराणेआग्नेयेव्यवहारकथनम्नामचतुःपञ्चाशदधिकद्विशततमोऽध्यायः ।

---

# पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः

## दिव्यप्रमाणकथनम् ।

अग्निरुवाच ।

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥ १ ॥
पञ्चयज्ञक्रियायुक्ताः साक्षिणः पञ्च वा त्रयः । यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः
स्त्रीवृद्धबालकितवमत्तोन्मत्ताभिशस्तकाः । रङ्गावतारिपाषण्डिकूटकृद्विकलेन्द्रियाः ॥
पतिताप्तान्नसम्बन्धिसहायरिपुतस्कराः । असाक्षिणः सर्वसाक्षी चौर्य्यपारुष्यसाहसे
उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् । अब्रुवन् हि नरःसाक्ष्यमृणंसदशबन्धकम्
राज्ञा सर्वं प्रदाप्यः स्यात् षट् चत्वारिंशकेऽहनि ।
न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ॥ ६ ॥
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ।
साक्षिणः श्रावयेद् वादि प्रतिवादि समीपगान् ॥ ७ ॥
ये पातककृतां लोका महापातकिनां तथा ।
अग्निदानाश्च ये लोका ये च स्त्रीबालघातिनाम् ॥ ८ ॥
तान् सर्वान् समवाप्नोति यः साक्ष्यमनृतं वदेत् ।

सुकृतं यत् त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ॥ ९ ॥

तत् सर्वं तस्यजानीहि यं पराजयसे मृषा ।

द्वैधे वहूनां वचनं समेषु गुणिनां तथा ॥ १० ॥

गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः ।

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ॥ ११ ॥

अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजयः ।

उक्तेऽपि साक्षिभिः सक्ष्ये यद्यन्ये गुणवत्तराः ॥ १२ ॥

द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ।

पृथक् पृथग् दण्डनीयाः कूटकृत्साक्षिणस्तथा ॥ १३ ॥

विवादाद् द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ।

यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत् तमोवृतः ॥ १४ ॥

स दाप्योऽष्टगुणं दण्डं ब्राह्मणन्तु विवासयेत् ।

वर्णिनां हि वधो यत्र तत्र साक्ष्येऽनृतं वदेत् ॥ १५ ॥

यः कश्चिदर्थोऽभिमतः स्वरुच्या तु परस्परम् ।

लेख्यं तु साक्षिमत् कार्य्यं तस्मिन् धनिकपूर्वकम् ॥ १६ ॥

समामासतदर्द्धाहर्नामजातिस्वगोत्रजैः । सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम्॥१७

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् । मतं मेऽमुकपुत्रस्य यदत्रोपरिलेखित

साक्षिणश्च स्वहस्तेन पितनामकपूर्वकम् । अत्राहममुकः साक्षी लिखेयुरिति ते सम

अलिपिज्ञ ऋणी यः स्याल्लेखयेत् स्वमतन्तु सः ।

साक्षी वा साक्षिणान्येन सर्वसाक्षिसमीपतः ॥ २० ॥

उभयाभ्यर्थितेनैतन् मया ह्यमुकसूनुना । लिखितं ह्यमुकेनेति लेखकोऽर्थान् ततो लि

विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितञ्च यत् ।

तत् प्रमाणं स्मृतं सर्वं बलोपाधिकृताहृते ॥ २२ ॥

ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु । अधिस्तु भुज्यते तावद् यावत् तन्न प्रदीयते

देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा।
भिन्ने छिन्ने तथा दग्धे लेख्यमन्यत् तु कारयेत् ॥ २४ ॥
सन्दिग्धार्थविशुद्ध्यर्थं स्वहस्तलिखितन्तुयत्। युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः
लेख्यस्य पृष्ठेऽभिलिखेत् प्रविष्टमधमर्णिनः।
धनी चोपगतं दद्यात् स्वहस्तपरिचिह्नितम् ॥ २६ ॥
दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै चान्यत् तु कारयेत्।
साक्षिमच्च भवेत् यत् तु तद् दातव्यं ससाक्षिकम् ॥ २७ ॥
तुलाग्न्यापो विषं कोषो दिव्यानीह विशुद्धये।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥ २८ ॥
रुच्या वान्यतरः कुर्य्यादितरो वर्त्तयेच्छिरः।
विनापि शीर्षकात् कुर्य्यान् नृपद्रोहेऽथ पातके ॥ २९ ॥
नासहस्राद्धरेत् फालं न तुलां न विषं तथा। नृपार्थेष्वभियोगेषु वहेयुः शुचयः सदा
सहस्रार्थे तुलादीनि कोषमल्पेऽपि दापयेत्।
शतार्द्धं दापयेच्छुद्धमशुद्धो दण्डभाग् भवेत् ॥ ३१ ॥
सचेलस्नातमाहूय सूर्य्योदय उपोषितम्। कारयेत् सर्वदिव्यानि नृपब्रह्मणसन्निधौ ॥
तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम्।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥ ३३ ॥
तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः। प्रतिमानसमीभूतो रेखां कृत्वावतारितः ॥
आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ ३५ ॥
त्वं तुले ! सत्यधामासि पुरा देवैर्विनिर्मिता।
सत्यं वदस्व कल्याणि ! संशयान् मां विमोचय ॥ ३६ ॥
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय।
शुद्धश्चेद् गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥ ३७ ॥

करौ विमृदितव्रीहेर्लक्षयित्वा ततोन्यसेत् । सप्ताश्वत्थस्य पत्राणि तावत् सूत्रेणवेष्टये
त्वमेव सर्वभूतानामन्तश्चरसि पावक ! । साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यङ्कवे म

तस्येत्युक्तवतो लौहं पञ्चाशत्पलिकं समम् ।
अग्निवर्णं न्यसेत् पिण्डं हस्तयोरुभयोरपि ॥ ४० ॥

स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत् । षोड़शाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम्

मुक्त्वाग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् ।
अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत् ॥ ४२ ॥
पवित्राणां पवित्र ! त्वं शोध्यं शोधय पावन ! ।
सत्येन माभिरक्षस्व वरुणेत्यभिशस्तकम् ॥ ४३ ॥

नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् । समकालमिषुं मुक्तमानीयान्यो जवी

यदि तस्मिन् निमग्नाङ्गं पश्येच्च शुद्धिमाप्नुयात् ।
त्वं विष ! ब्रह्मणः पुत्र ! सत्यधर्मे व्यवस्थित ! ॥ ४५ ॥
त्रायस्वास्मादभीशापात् सत्येन भव मेऽमृतम् ।
एवमुक्त्वा विषं सार्ङ्गं भक्षयेद्धिमशैलजम् ॥ ४६ ॥
यस्य वेगैर्विना जीर्णं शुद्धिं तस्य विनिर्दिशेत् ।
देवानुग्रान् समभ्यर्च्य तत् स्नानोदकमाहरेत् ॥ ४७ ॥

संश्राव्यपाययेत् तस्माज्जलात् तु प्रसृतित्रयम् । आचतुर्दशमादह्नो यस्य नोराजदैवि
व्यसनं जायते घोरं स शुद्धः स्यादसंशयम् । सत्यवाहनशस्त्राणि गोबीजकनका
देवतागुरुपादाश्च इष्टापूर्त्तकृतानि च । इत्येते सुकराः प्रोक्ता शपथाः स्वल्पसंश
इत्यादिमहापुराणे आग्नेये दिव्यप्रमाणकथनंनामपञ्चपञ्चाशदधिकद्विशततमोऽध्या

———

# षट्पञ्चाशदधिकद्विशततमोऽध्यायः

## दायविभागकथनम् ।

अग्निरुवाच ।

विभागश्चेत् पिता कुर्य्यादिच्छया विभजेत् सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥ १ ।
यदि दद्यात् समानंशान् कार्य्याः पत्न्याः समांशिका ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥ २ ॥
शक्तस्यानीहमानस्य किञ्चिद् दत्त्वा पृथक् क्रिया ।
न्यूनाधिकविभक्तानां धर्म्यश्च पितृना कृतः ॥ ३ ॥

विभजेयुःसुताः पित्रोरूर्ध्वमृक्थमृणंसमम् । मातुर्दुहितरः शेषमृणात् ताभ्यऋतेऽन्वयः
पितृद्रव्याविनाशेन यदन्यत् स्वयमर्जयेत् । मैत्रमौद्वाहिकञ्चैव दायादानां न तद् भवेत्

सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ।
अनेकपितृकाणान्तु पितृतो भागकल्पना ॥ ६ ॥
भूर्य्यापिता महोपात्ता निबन्धो द्रव्यमेव वा ।
तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः ॥ ७ ॥
विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।
दृश्याद् वा तद्विभागः स्यादायव्ययविशोधितात् ॥ ८ ॥

क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेच्च यः । दायादेभ्यो न तद् दद्याद् विद्यया लब्धमेव च

पितृभ्यां यस्य यद् दत्तं तत् तस्यैव धनं भवेत् ।
पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत् ॥ १० ॥
असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्वसंस्कृतैः ।
भगिन्यश्च निजादंशाद् दत्त्वांशन्तु तुरीयकम् ॥ ११ ॥

चतुःस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः ।
क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः ॥ १२ ॥
अन्योऽन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते । तत् पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः
अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसावृक्थी पिण्डदाता च धर्मतः
औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः । क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥ १६ ॥
क्षतायामक्षतायां वा जातः पौनर्भवः सुतः ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥ १७ ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं कृतः ।
दत्तात्मा तु स्वयं दत्तो गर्भे वित्तः सहोढजः ॥ १८ ॥
उत्सृष्टो गृहते यस्तु सोपविद्धो भवेत् सुतः । पिण्डदोऽंशहरश्चैषां पूर्वाभावे परः परः
सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ।
जातोऽपि दास्यां शूद्रस्य कामतोऽंशहरो भवेत् ॥ २० ॥
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्द्धभागिकम् । अभ्रातृको हरेत् सर्वं दुहितॄणां सुतादृते
पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः । स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥२३॥
वानप्रस्थयति ब्रह्मचारिणामृक्थभागिनः । क्रमेणाचार्य्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः
संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः । दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च ॥
अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यधनं हरेत् ।
असंसृष्ट्यपि चादद्यात् सोदर्य्यो नान्यमातृजः ॥ २६ ॥
पतितस्तत्सुतः क्लीवः पङ्गुरुन्मत्तको जड़ ।
अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्यास्तु निरंशकाः ॥ २७ ॥
औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः ।

सुताश्चैषां प्रहैर्त्तव्या यावद् वै भर्त्तृसात्कृताः ॥ २८ ॥
अपुत्रा योषितश्चैषां भर्त्तव्या साधुवृत्तयः ।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥ २६ ॥

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकञ्चैव स्त्रीधनं परिकीर्त्तितम् ॥
बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च । अप्रजायामतीतायां बान्धवास्तदवाप्नुयुः ॥
अप्रजास्त्रीधनं भर्त्तुर्ब्राह्मयादिषु चतुर्ष्वपि । दुहितृणां प्रसूता चेच्छेषे तु पितृगामि तत्

दत्त्वा कन्यां हरन् दण्ड्यो व्ययं दद्याच्च सोदयम् ।
मृतायां दत्तमादद्यात् परिशोध्योभयव्ययम् ॥ ३३ ।

दुर्भिक्षे धर्मकार्य्ये च व्याधौ संप्रतिरोधके । गृहीतं स्त्रीधनं भर्त्ता न स्त्रिये दातुमर्हति

अधिवित्तस्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकीर्त्तितम् ॥ ३५ ॥

विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः । विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः

इत्यादिमहापुराणे आग्नेये दायविभागकथनंनामषट्पञ्चाशदधिकद्विशततमोऽध्यायः ।

---

# सप्तपञ्चाशदधिकद्विशततमोऽध्यायः

## सीमाविवादादिनिर्णयः ।

### अग्निरुवाच ।

सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरा गणाः ।
गोपाः सीमाकृषाणा ये सर्वे च वनगोचराः ॥ १ ॥

नयेयुरेते सीमानं स्थलाङ्गारतुषद्रुमैः । सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षिताम् ॥

सामन्ता वा समंग्रामाश्चत्वारोऽष्टौ दशापि वा ।
रक्तस्रग्वसनाः सीमान्नयेयुः क्षितिधारिणः ॥ ३ ॥

अनृते तु पृथग् दण्ड्या राज्ञा मध्यमसाहसम् ।
अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्त्तकः ॥ ४ ॥
आरामायतनग्रामनिपानोद्यानवेश्मसु । एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहेषु च ॥ ५ ॥
मर्य्यादायाः प्रभेदेषु क्षेत्रस्य हरणे तथा । मर्य्यादायाथ दण्ड्याः स्युरधमोत्तममध्यमाः
न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः ।
परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः ॥ ७ ॥
स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रकल्पयेत् ।
उत्पन्ने स्वामिनौ भोगस्तदभावे महीपतेः ॥ ८ ॥
फालाहतमपि क्षेत्रं यो न कार्य्यान्न कारयेत् । स प्रदाप्योऽकृष्टफलं क्षेत्रमन्येन कारयेत्
मासानष्टौ तु महिषी शस्यघातस्य कारिणी । दण्डनीया तदर्द्धन्तु गौस्तदर्द्धमजाविकम्
भक्षयित्वोपविष्टानां यथोक्ताद् द्विगुणो दमः ।
सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम् ॥ ११ ॥
यावत् शस्यं विनश्यन्तु तावत् क्षेत्री फलं लभेत् ।
पालस्ताड्योऽथ गोस्वामी पूर्वोक्तं दण्डमर्हति ॥ १२ ॥
पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते । अकामतः कामचारे चौरवद् दण्डमर्हति
महोक्षोत्सृष्टपशवः सूतिकागन्तुका च गौः ।
पालो येषान्तु ते मोच्या दैवराजपरिप्लुताः ॥ १४ ॥
यथार्पितान् पशून् गोपः सायं प्रत्यर्पयेत् तथा ।
प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः ॥ १५ ॥
पालदोषविनाशे तु पाले दण्डो विधीयते । अर्द्धत्रयोदशपणः स्वामिनो द्रव्यमेव च ॥
ग्रामेच्छया गोपचारो भूमिराजवशेन वा । द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरेत्
धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत् । द्वे शते खर्वटस्य स्यान्नगरस्य चतुःशतम् ॥
स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते । हीनाग्रहो हीनमूल्ये वेलाहीने च तस्करः
नष्टापहृतमासाद्य हर्त्तारं ग्राहयेन्नरम् । देशकालातिपत्तौ वा गृहीत्वा स्वयमर्पयेत् ॥

विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।
क्रेता मूल्यं समाप्नोति तस्माद् यस्तत्र विक्रयी ॥ २१ ॥

आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा । पञ्चबन्धो दमस्तस्य राज्ञे तेनाप्यभाविते ॥
हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात् । अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक् संवत्सरात् स्वामी लभते परतो नृपः ॥ २४ ॥

पणानेकशफे दद्याच्चतुरः पञ्च मानुषे । महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥
स्वकुटुम्बाविरोधेन देयं दारसुतादृते । नान्वये सति सर्वस्वं देयंयच्चान्यसंश्रुतम् ॥

प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषतः ।
देयं प्रतिश्रुतञ्चैव दत्त्वा नापहरेत् पुनः ॥ २७ ॥

दशैकपञ्चसप्ताहमासत्र्यहार्द्धमासिकम् । बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां प्रतीक्षणम् ॥
अग्नौ सुवर्णमक्षीणं द्विपलं रजते शते । अष्टौ त्रपुणि सीसे च ताम्रे पञ्चदशायसि ॥
शते दशपलावृद्धिरौर्णे कार्पासिके तथा । मध्ये पञ्चपला ज्ञेया सूक्ष्मे तु त्रिपला मता ॥

कार्मिके रोमवद्धे च त्रिंशद्भागः क्षयो मतः ।
न क्षयो न च वृद्धिस्तु कौशेये वल्कलेषु च ॥ ३१ ॥
देशं कालञ्च भोगञ्च ज्ञात्वा नष्टे बलोबलम् ।
द्रव्याणां कुशला ब्रूयुर्यत् तद् दाप्यमसंशयम् ॥ ३२ ॥
बलाद् दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते ।
स्वामीप्राणप्रदो भक्तत्यागात् तं निष्क्रयादपि ॥ ३३ ॥
प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकः ।
वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ॥ ३४ ॥

कृतशिल्पोऽपि निवसेत् कृतकालं गुरोर्गृहे । अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रदः

राजा कृत्वा पुरे स्थानं ब्राह्मणान् न्यस्य तत्र तु ।
त्रैविद्यं वृत्तिमद् ब्रूयात् स्वधर्मः पाल्यतामिति ॥ ३६ ॥

निजधर्माविरोधेन यस्तु सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥ ३७ ॥
गणद्रव्यं हरेद् यस्तु सम्विदं लङ्घयेच्च यः । सर्वस्वहरणं कृत्वा तं राष्ट्राद् विप्रवासयेत्
कर्त्तव्यं वचनं सर्वैः समूहहितवादिभिः ।
यस्तत्र विपरीतः स्यात् स दाप्यः प्रथम दमम् ।। ३९ ॥
समूहकार्य्यप्रहितो यल्लभेत् तत् तदर्पयेत् । एकादशगुणं दाप्यो यद्यसौ नार्पयेत् स्वयम्
वेदज्ञाः शुचयोऽलुब्धा भवेयुः कार्य्यचिन्तकाः ।
कर्त्तव्यं वचनं तेषां समूहहितवादिनाम् ॥ ४१ ॥
श्रेणिनैगमपाषण्डगणानामप्ययं विधिः । भेदञ्चैषां नृपो रक्षेत् पूर्ववृत्तिञ्च पालयेत् ॥
गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत् । अगृहीते समं दाप्यो भृत्यैरक्ष्य उपस्करः ॥
दाप्यस्तु दशमं भागं वाणिज्यपशुशस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत् स महीक्षिता ॥ ४४ ॥
देशं कालञ्च योऽतीयात् कर्म कुर्य्याच्च योऽन्यथा ।
तत्र तु स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके ॥ ४५ ॥
यो यावत् कुरुते कर्म तावत् तस्य तु वेतनम् ।
उभयोरप्यसाध्यश्चेत् साध्ये कुर्य्याद् यथाश्रुतम् ॥ ४६ ॥
अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः । प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम्
प्रक्रान्ते सप्तमं भागं चतुर्थं पथिसन्त्यजन् ।
भृतिमर्द्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च ॥ ४८ ॥
ग्लहे शतिकवृद्धेस्तु समिकः पञ्चकं शतम् । गृह्णीयाद् धूर्त्तकितवादितराद् दशकं शतम्
स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम् ।
जितमुद्ग्राहयेज्जेत्रे दद्यात् सत्यं वचः क्षमी ॥ ५० ॥
प्राप्ते नृपतिना भागे प्रसिद्धे धूर्त्तमण्डले । जितं समभिके स्थाने दापयेदन्यथा न तु ॥
द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हि ।

राज्ञा सचिह्ना निर्वास्याः कूटाक्षोपधिदेविनः ॥ ५२ ॥
द्यूतमेकमुखं कार्य्यं तस्करज्ञानकारणात्। एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ॥

इत्यादिमहापुराणेआग्नेयेसीमाविवादादिनिर्णयकथनंनाम
सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ।

---

# अष्टपञ्चाशदधिकद्विशततमोऽध्यायः

## वाक्पारुष्यादिप्रकरणम् ।

अग्निरुवाच ।

सत्यासत्यान्यथा स्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिनाम् ।
क्षेपं करोति चेद् दण्ड्यः पर्णानर्द्धत्रयोदश ॥ १ ॥
अभिगन्तास्मि भगिनीं मातरं वा तवेति च। शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम्
अर्द्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च। दण्डप्रणयनं कार्य्यं वर्णजात्युत्तराधरैः ॥
प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः। वर्णानामानुलोम्येन तस्मादेवार्द्धहानितः
बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः। शक्तस्ततोऽर्द्धिकः पादनाशाकर्णकरादिषु
अशक्तस्तु वदन्नेवं दण्डनीयः पणान् दश। तथा शक्तः प्रतिभुवं दद्यात् क्षेमाय तस्यतु
पतनीयकृते क्षेपे दण्डो मध्यमसाहसः। उपपातकयुक्ते तु दाप्यः प्रथमसाहसम् ॥ ७ ॥
त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः। मध्यमो ज्ञातिपूगानां प्रथमो ग्रामदेशयोः ॥ ८ ॥
अशाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च। द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृताद् भयात् ॥
भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूत स्पर्शने द्विगुणः स्मृतः ॥ १० ॥
समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च। हीनेष्वर्द्धं दमो मोहमदादिभिरदण्डनम् ॥
विप्रपीड़ाकरं चेदमङ्गमब्राह्मणस्य तु। उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्द्धिकः ॥

उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ । परस्परन्तु सर्वेषां शास्त्रे मध्यमसाहसः ॥
पादकेशांशुककरोल्लुञ्चनेषु पणान् दश । पीड़ाकर्षांशुकाम्वेष्टपादाध्यासे शतं दमः ॥
शोणितेन विना दुःखं कुर्वन् काष्ठादिभिर्नरः ।
द्वात्रिंशतं पणान् दाप्यो द्विगुणं दर्शनेऽसृजः ॥ १५ ॥
करपाददतो भङ्गे छेदने कर्णनाशयोः । मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा॥१६॥
चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने । कन्धरावाहुसक्थ्याश्च भङ्गे मध्यमसाहसः ॥
एकं घ्नतां वहूनाञ्च यथोक्ताद् द्विगुणा दमाः ।
कलहापहृतं देयं दण्डस्तु द्विगुणः स्मृतः ॥ १८ ॥
दुःखमुत्पादयेद् यस्तु स समुत्थानजं व्ययम् ।
दाप्यो दण्डञ्च यो यस्मिन् कलहे समुदाहृतः ॥ १६ ॥
तरिकः स्थलजं शुल्कं गृह्णन् दण्ड्यः पणान् दश ।
ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे ॥ २० ॥
अभिघाते तथा भेदे छेदे कुड्यावपातने । पणान् दाप्यः पञ्चदशविंशतिं तत्त्रयं तथा ॥
दुःखोत्पादिगृहे द्रव्यं क्षिपन् प्राणहरं तथा ।
षोड़शाद्यः पणान् दाप्यो द्वितीयो मध्यमं दमम् ॥ २२ ॥
दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
दण्डः क्षुद्रपशूनां स्याद् द्विपणप्रभृतिः क्रमात् ॥ २३ ॥
लिङ्गस्य छेदने मृत्तौ मध्यमो मूल्यमेव च । महापशूनामेतेषु स्थानेषु द्विगुणा दमाः ॥
प्ररोहिशाखिनां शाखास्कन्ध सर्वविदारणे । उपजीव्यद्रुमाणान्तु विंशतेर्द्विगुणा दमाः
यः साहसं कारयति स दाप्यो द्विगुणं दमम् ।
यस्त्वेवमुक्त्वाहं दाता कारयेत् स चतुर्गुणम् ॥ २६ ॥
आर्य्याक्रोशातिक्रमकृद् भ्रातृजायाप्रहारदः । संदिष्टस्याप्रदाता च समुद्रगृहभेदकः ॥
सामन्तकुलिकादीनामपकारस्य कारकः । पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः
स्वच्छन्दविधवागामी विक्रुष्टे नाभिधावकः ।

आकारणे च विक्रोष्टा चण्डालश्चोत्तमान् स्पृशन् ॥ २६ ॥

शूद्रः प्रव्रजितानाञ्च दैवे पैत्र्ये च भोजकः । अयुक्तं शपथं कुर्वन्नयोग्य योग्यकर्मकृत् ॥

वृषक्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिघातकृत् । साधारणस्यापलापी दासीगर्भविनाशकृत्

पितापुत्रस्वसृभ्रातृदम्पत्याचार्य्यशिष्यका ।

एषामपतितान्योऽन्यत्यागी च शतदण्डभाक् ॥ ३२ ॥

वसानस्त्रीन् पणान् दण्ड्यो नेजकस्तु परांशुकम् ।

विक्रयावक्रयाधान याचितेषु पणान् दश ॥ ३३ ॥

तुलाशासनमानानां कूटकृन्नाणकस्य च । एभिश्च व्यवहर्त्ता यः स दाप्यो दण्डमुत्तमम्

अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम् । स नाणकपरीक्षी तु दाप्यः प्रथमसाहसम्

भिषङ् मिथ्याचरन् दाप्यस्तिर्य्यक्षु प्रथमं दमम् ।

मानुषे मध्यमं राजमानुषेषूत्तमं तथा ॥ ३६ ॥

अवध्यं यश्च बध्नाति बध्यं यश्च प्रमुञ्चति । अप्राप्तव्यवहारञ्च स दाप्यो दमनुत्तमम् ॥

मानेन तुलया वापि योऽंशमष्टमकं हरेत् ।

द्वाविंशतिपणान् दाप्यो वृद्धौ हानौ च कल्पितम् ॥ ३८ ॥

भेषजस्नेहलवणगन्धधान्यगुणादिषु । पण्येषु प्रक्षिपन् हीनं पणान् दाप्यस्तु षोड़श ॥

सम्भूय कुर्वतामर्घं सबाधं कारुशिल्पिनाम् ।

अर्थस्य ह्रास वृद्धि वा सहस्रो दण्ड उच्यते ॥ ४० ॥

राजनि स्थाप्यते योर्थः प्रत्यहं तेन विक्रयः ।

क्रयो वा निस्रवस्तस्माद् बणिजां लाभकृत् स्मृतः ॥ ४१ ॥

स्वदेशपण्ये तु शतं बणिग् गृह्णीत पञ्चकम् । दशकं पारदेश्ये तु यः सद्यः क्रयविक्रयी

पण्यस्योपरि संस्थाप्य व्ययं पण्यसमुद्भवम् । अथोऽनुग्रहकृत् कार्य्यः क्रेतुर्विक्रेतुरेवच

गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ।

सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिगागते ॥ ४४ ॥

विक्रीतमपि विक्रेयं पूर्वे क्रेतर्य्यगृह्णति ।

हानिश्चेत् क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥ ४५ ॥
राजदैवोपघातेन पण्ये दोषमुपागते। हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ॥
अन्यहस्ते च विक्रीतं दुष्टं वा दुष्टवद् यदि।
विक्रीणीते दमस्तत्र तन्मूल्याद् द्विगुणो भवेत् ॥ ४७ ॥
क्षयं वृद्धिञ्च वणिजा पण्यानाम विजानता।
क्रीत्वा नानुशयः कार्य्यः कुर्वन् षड् भागदण्डभाक् ॥ ४८ ॥
समवायेन, वणिजां लाभार्थं कर्म कुर्वताम्।
लाभालाभौ यथा द्रव्यं यथा वा संविदा कृतौ ॥ ४६ ॥
प्रतिषिद्धमनादिष्टं प्रमादाद् यच्च नाशितम्।
स तद् दद्याद् विप्लवाच्च रक्षिताद् दशमांशभाक् ॥ ५० ॥
अर्थप्रक्षेपणाद् विंशं भागं शुल्कं नृपो हरेत्।
व्यासिद्धं राजयोग्यञ्च विक्रीतं राजगामि तत् ॥ ५१ ॥
मिथ्या वदन् परीमाणं शुल्कस्थानादपक्रमन्। दाप्यस्त्वष्टगुणं यश्च सव्याजक्रयविक्रयी
देशान्तरगते प्रेते द्रव्यं दायाद बान्धवाः। ज्ञातयो वा हरेयुस्तदागतास्तैर्विना नृपः ॥
जिह्मं त्यजेयुर्निर्लोभमशक्तोऽन्येन कारयेत्।
अनेन विधिराख्यात ऋत्विक् कर्षककर्मिणाम् ॥ ५४ ॥
ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा। पूर्वकर्मापराधी वा तथैवाशुद्धवासका ॥
अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवे। द्यूतस्त्रीपानशक्ताश्च शुष्कभिन्नमुखस्वराः
परद्रव्यगृहाणाञ्च पृच्छका गूढचारिणः। निरायाव्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥
गृहीतः शङ्कया चौर्य्येनात्मानञ्चेद् विशोधयेत्।
दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत् ॥ ५८ ॥
चौरं प्रदाप्यापहृतं घातयेद् विविधैर्वधैः।
सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद् विप्रवासयेत् ॥ ५६ ॥
घातितेऽपहृते दोषो ग्रामभर्त्तुरनिर्गते।

स्वसीम्नि दद्याद् ग्रामस्तु पदं वा यत्र गच्छति ॥ ६० ॥
पञ्चग्रामी वहिः क्रोशाद् दशग्राम्योऽथवा पुनः ।
वन्दिग्राहांस्तथा वाजिकुञ्जराणाञ्च हारिणः ॥ ६१ ॥

प्रसह्य घातिनश्चैव शूलमारोपयेन् नरान् । उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ ॥ कार्य्यौं द्वितीयापराधे करपादैकहीनकौ । भक्तावदाशाग्न्युदकमन्त्रोपकरणव्ययान् ॥ दत्त्वा चौरस्य हन्तुर्वा जानतो दम उत्तमः । शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः

उत्तमो वाऽधमो वापि पुरुषस्त्रीप्रमापणे ।
शिलां बद्ध्वा क्षिपेदप्सु नरघ्नीं विषदां स्त्रियम् ॥ ६५ ॥

विषाग्निदां निजगुरुनिजापत्यप्रमापणीम् । विकर्णकरणासौष्ठीं कृत्वागोभिःप्रमापयेत् क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः । राजपत्न्याभिगामी च दग्धव्यास्तु कटाग्निना

पुमान् संग्रहणे ग्राह्यः केशाकेशिपरस्त्रियाः ।
स्वजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ॥ ६८ ॥

प्रातिलोम्ये वधः पुंसां नार्य्याः कर्णावकर्त्तनम् । नीवीस्तनप्रावरणनाभिकेशावमर्दनम् अदेशकालसम्भाषं सहावस्थानमेव च । स्त्रीनिषेधे शतं दद्याद् द्विशतन्तु दमं पुमान्

प्रतिषेधे तयोर्दण्डो यथासंग्रहणे तथा ।
पशून् गच्छं श्छतं दाप्यो हीनां स्त्रीं गाञ्च मध्यमम् ॥ ७१ ॥
अवरुद्धासु दासीषु भुजिष्यासु तथैव च ।
गम्यास्वपि पुमान् दाप्यः पञ्चाशत् पणिकं दमम् ॥ ७२ ॥

प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः । कुवन्धेनाङ्क्य गमयेदन्त्याप्रव्रजितागमे

न्यूनं वाप्यधिकं वापि लिखेद् यो राजशासनम् ।
पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः ॥ ७४ ॥

अभक्षैर्दूषयन् विप्रं दण्डउत्तमसाहसम् । कूटस्वर्णव्यवहारी विमांशस्य च विक्रयी ॥ अङ्गहीनश्च कर्त्तव्योदाप्यश्चोत्तमसाहसम् । शक्तोह्यमोक्षयन्स्वामी दंष्ट्रिणःशृङ्गिणस्तथा प्रथमं साहसं दद्यात् विक्रुष्टे द्विगुणं तथा । अचौरश्चौरेऽभिवदन् दाप्यः पञ्चशतं दमम्

राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकं तथा। मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा॥
तन्मन्त्रस्य च भेत्तारं छित्त्वा जिह्वां प्रवासयेत्। राजयानासनारोढुर्दण्डो मध्यमसाहसः
द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा। विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः॥

यो मन्येताजितोऽस्मीति न्यायेनाभिपराजितः।
तमायान्तं पुनर्जित्वा दण्डयेद् द्विगुणं दमम्॥ ८१॥
राज्ञाऽन्यायेन यो दण्डो गृहीतो वरुणायतम्।
निवेद्य दद्याद् विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम्॥ ८२॥

धर्मश्चार्थश्च कीर्त्तिश्च लोकपङ्क्तिरुपग्रहः। प्रजाभ्यो बहुमानश्च स्वर्गस्थानञ्च शाश्वतम्

पश्यतो व्यवहारांश्च गुणाः स्युः सप्त भूपतेः॥ ८३॥

इत्यादिमहापुराणेआग्नेयेवाक्पारुष्यादिप्रकरणकथनंनामा-
ष्टपञ्चाशदधिकद्विशततमोऽध्यायः।

---

# ऊनषष्ठ्यधिकद्विशततमोऽध्यायः

## ऋग्विधानम्।

अग्निरुवाच।

ऋग्यजुःसामाथर्वविधानं पुष्करोदितम्। भुक्तिमुक्तिकरं जप्याद्धोमाद्रामाय तद् वदे॥

पुष्कर उवाच।

प्रतिवेदन्तु कर्माणि कार्य्याणि प्रवदामि ते।
प्रथमं ऋग्विधानं वै शृणु त्वं भुक्तिमुक्तिदम्॥ २॥

अन्तर्जले तथाहोमे जपतो मनसेप्सितम्। कामं करोति गायत्री प्राणायामाद् विशे-
गायत्र्या दशसाहस्रो जपो नक्ताशिनो द्विज!। बहुस्नातस्य तत्रैव सर्वकल्मषनाशनः
दशायुतानि जप्त्वाऽथ हविष्याशी स मुक्तिभाक्। प्रणवो हि परं ब्रह्म तज्जपः सर्वपा-

ओंकारशतजप्तन्तु नाभिमात्रोदके स्थितः । जलं पिवेत् स सर्वैस्तु पापैर्वै विप्रमुच्यते

मात्रात्रयं त्रयो वेदास्त्रयो देवास्त्रयोऽग्नयः ।

महाव्याहृतयः सप्त लोका होमोऽखिलाघहा ॥ ७ ॥

गायत्री परमा जप्या महाव्याहृतयस्तथा । अन्तर्जले तथा राम ! प्रोक्तश्चैवाघमर्षणः ॥

अग्निमीले पुरोहितं सूक्तोऽयं वह्निदैवतः । शिरसा धारयन् वह्निं यो जपेत् परिवत्सरम्

होमं त्रिषवणं भैक्ष्यमनग्निज्वलनश्चरेत् । अतः परमृचः सप्त वाय्वाद्या याः प्रकीर्त्तिताः

ता जपन् प्रयतो नित्यमिष्टान् कामान् समश्नुते ।

मेधाकामो जपेन्नित्यं सदसस्पतिमिति त्यृचम् ॥ ११ ॥

अन्वयो यन्निमाः प्रोक्ताः नवर्चो मृत्युनाशनाः ।

शुनःशेफमृषिं बद्धः सन्निरुद्धोऽथ वा जपेत् ॥ १२ ॥

मुच्यते सर्वपापेभ्यो गदीवाप्यगदो भवेत् । य इच्छेच्छाश्वतं काममिन्द्रं प्राज्ञं पुरन्दरम्

ऋग्भिः षोड़शभिः कुर्य्यादिन्द्रस्येति दिने दिने ।

हिरण्यस्तूपमित्येतज्जपन् शत्रून् प्रबाधते ॥ १४ ॥

क्षेमि भवति चाध्वानो ये ते पन्था जपन् नरः ।

रौद्रीभिः षड्भिरीशानं स्तूयाद् यो वै दिने दिने ॥ १५ ॥

चरुं वा कल्पयेद्रौद्रं तस्य शान्तिः परा भवेत् ।

उदित्युदन्तमादित्यमुपतिष्ठन् दिने दिने ॥ १६ ॥

क्षिपेज्जलाञ्जलीन् सप्त मनोदुःखविनाशनम् ।

द्विषन्तमित्यथार्द्धर्चं यद् विप्रान्तं जपेन् स्मरेत् ॥ १७ ॥

आगस्कृत् सप्तरात्रेण विद्वेषमधिगच्छति ।

आरोग्यकामी रोगी वा प्रस्कण्वस्योत्तमं जपन् ॥ १८ ॥

उत्तमस्तस्य चार्द्धर्चो जपेद् वै विविधासने । उदयत्यायुरक्षय्यं तेजो मध्यन्दिने जपेत्

अस्तं प्रतिगते सूर्य्ये द्विषन्तं प्रतिबाधते । न वयश्चेति सूक्तानि जपन् शत्रून् नियच्छति

एकादश सुपर्णस्य सर्वकामान् विनिर्दिशेत् ।

आध्यात्मिकीः क इत्येता जपन् मोक्षमवाप्नुयात् ॥ २१ ॥
आ नो भद्रा इत्यनेन दीर्घमायुरवाप्नुयात् । त्वं सोमेति च सूक्तेन नवं पश्येन्निशाकरम्
उपतिष्ठेत् समित्पाणिर्वासांस्याप्नोत्यसंशयम् ।
आयुरीप्सन्निममिति कौत्ससूक्तं सदा जपेत् ॥ २३ ॥
आपनः शोशुचदिति स्तुत्वा मध्ये दिवाकरम् । यथा मुञ्चति चेषीकां तथा पापंप्रमुञ्चति
जातवेदस इत्येतज्जपेत् स्वस्त्ययनं पथि ।
भयैर्विमुच्यते सर्वैः स्वस्तिमानाप्नुयात् गृहान् ॥ २५ ॥
व्युष्टायाश्च यथा रात्र्यामेतद् दुःस्वप्ननाशनम् ।
प्रमन्दिनेति सूयन्त्या जपेद् गर्भविमोचनम् ॥ २६ ॥
उपन्निन्द्रमिति स्नातो वैश्यदेवन्तु सततम् ।
मुञ्चत्याज्यं तथा जुह्वन् सकलं किल्विषं नरः ॥ २७ ॥
इमामिति जपन् शश्वत् कामानाप्नोत्यभीप्सितान् ।
मानस्तोक इति द्वाभ्यां त्रिरात्रोपोषितः शुचिः ॥ २८ ॥
औदुम्बरीश्च जुहुयात् समिधश्चाज्यसंस्कृताः ।
छित्त्वा सर्वान् मृत्युपाशान् जीवेद्रोगविवर्जितः ॥ २९ ॥
ऊर्ध्वबाहुरनेनैव स्तुत्वा शम्भुं तथैव च । मानस्तोकेति च ऋचा शिखाबन्धे कृते नरः
अधृष्यः सर्वभूतानां जायते संशयं विना । चित्रमित्युपतिष्ठेत त्रिसन्ध्यं भास्करं तथा
समित्पाणिर्नरो नित्यमीप्सितं धनमाप्नुयात् ।
अथ स्वप्नेति च जपन् प्रातर्मध्यन्दिने दिने ॥ ३२
दुःस्वप्नञ्चार्दते कृत्स्नं भोजनञ्चाप्नुयाच्छुभम् ।
उभे पुमानीति तथा रक्षोघ्नः परिकीर्त्तितः ॥ ३३ ॥
उभे वासा इति ऋचो जपन् कामानवाप्नुयात् ।
न सागन्निति च जपन् मुच्यते चाततायिनः ॥ ३४ ॥
कया शुभेति च जपन् जातिश्रैष्ठमवाप्नुयात् ।

इमन्नृसोममित्येतत् सर्वान् कामानवाप्नुयात् ॥ ३५

पितरित्युपतिष्ठेत नित्यमर्थमुपस्थितम् । अग्ने नयेति सूक्तेन घृतहोमश्च मार्गगः ॥

वीरान्नयमवाप्नोति सुश्लोकं यो जपेत् सदा ।

कङ्कतो नेति सूक्तेन विषान् सर्वान् व्यपोहति ॥ ३७ ॥

यो जात इति सूक्तेन सर्वान् कामानवाप्नुयात् ।

गणानामिति सूक्तेन स्निग्धमाप्नोत्यनुत्तमम् ॥ ३८ ॥

यो मे राजन्नितीमान्तु दुःस्वप्नशमनीमृचम् ।

अध्वनि प्रस्थितो यस्तु पश्येच्छत्रुं समुत्थितम् ॥ ३९ ॥

अप्रशस्तं प्रशस्तं वा कुविदङ्ग इमं जपेत् । द्वाविंशकं जपन् सूक्तमाध्यात्मिकमनुत्तमम्

पर्वसुप्रयतो नित्यमिष्टान् कामान् समश्नुते । कृणुष्वेति जपन् सूक्तं जुहुदाज्यंसमाहितः

अरातीनां हरेत् प्राणान् रक्षांस्यपि विनाशयेत् ।

उपतिष्ठेत् स्वयं वह्निं परित्यृचा दिने दिने ॥ ४२ ॥

तं रक्षति स्वयं वह्निर्विश्वतो विश्वतोमुखः ।

हंसः शुचिः सदित्येतच्छुचिरीक्षेद् दिवाकरम् ॥ ४३ ॥

कृषिं प्रपद्यमानस्तु स्थालीपाकं यथाविधि ।

जुहुयात् क्षेत्रमध्ये तु स्वनीस्वाहास्तु पञ्चभिः ॥ ४४ ॥

इन्द्राय च मरुद्भ्यस्तु पर्जन्याय भगाय च । यथालिङ्गन्तु विहरैल्लाङ्गलन्तु कृषीबलः

युक्तो धान्याय सीतायै सुनासीरमथोत्तरम् । गन्धमाल्यैर्नमस्कारैर्यजेदेताश्च देवताः

प्रघापने प्रलवने खलसीतापहारयोः । अमोघं कर्म भवति वर्द्धते सर्वदा कृषिः ॥ ४७ ॥

समुद्रादिति सूक्तेन कामानाप्नोति पावकात् ।

विश्वानर इति द्वाभ्यां य ऋग्भ्यां वह्निमर्हति ॥ ४८ ॥

स तरत्यापदः सर्वा यशः प्राप्नोति चाक्षयम् ।

विपुलां श्रियमाप्नोति जयं प्राप्नोत्यनुत्तमम् ॥ ४९ ॥

अग्ने त्वमिति च स्तुत्वा धनमाप्नोति वाञ्छितम् ।

प्रजाकामो जपेन् नित्यं वरुणदैवतत्रयम् ॥ ५० ॥

स्वस्त्या त्रयं जपेत् प्रातः सदा स्वस्त्ययनं महत् ।

स्वस्ति पन्था इति प्रोच्य स्वस्तिमान् प्रव्रजेऽध्वनि ॥ ५१ ॥

विजिगीषुर्वनस्पते शत्रूणां व्याधितं भवेत् । स्त्रिया गर्भप्रमूढ़ाया गर्भमोक्षणमुत्तमम्
अच्छावदेति सूक्तञ्च वृष्टिकामः प्रयोजयेत् । निराहारः क्लिन्नवासा न चिरेण प्रवर्षति
मनसः काम इत्येतां पशुकामो नरो जपेत् । कर्दमेन इति स्नायात् प्रजाकामः शुचिर्व्रतः

अश्वपूर्वा इति स्नायादाज्यकामस्तु मानवः ।

रोहिते चर्मणि स्नायात् ब्राह्मणस्तु यथाविधि ॥ ५५ ॥

राजा चर्मणि वैयाघ्रे छागे वैश्यस्तथैव च । दशसाहस्त्रिको होम प्रत्येकं परिकीर्त्तितः

आगार इति सूक्तेन गोष्ठे गां लोकमातरम् ।

उपतिष्ठेद् व्रजेच्चैव यदिच्छेत् ताः सदाक्षयाः ॥ ५७ ॥

उपेति तिसृभीराज्ञो दुन्दुभिमभिमन्त्रयेत् । तेजो बलञ्च प्राप्नोति शत्रुञ्चैव नियच्छति
तृणपाणिर्जपेत् सूक्तं रक्षोघ्नं दस्युभिर्वृतः । ये के च ज्मेत्यृचं जप्त्वा दीर्घमायुरवाप्नुयात्

जीमूतसूक्तेन तथा सेनाङ्गान्यभिमन्त्रयेत् ।

यथा लिङ्गं ततोराजा विनिहन्ति रणे रिपून् ॥ ६० ॥

आग्नेयेति त्रिभिः सूक्तैर्धनमाप्नोति चाक्षयम् । अमीवहेति सूक्तेन भूतानि स्थापयेन्निशि

सम्बाधे विषमे दुर्गे बन्धो वा निर्गतः क्वचित् ।

पलायन् वा गृहीतो वा सूक्तमेतत् तथा जपेत् ॥ ६२ ॥

त्रिरात्रं नियतोपोष्य श्रापयेत् पायसञ्चरुम् ।

तेनाहुतिशतं पूर्णं जुहुयात् त्र्यम्बकेत्यृचा ॥ ६३ ॥

समुद्दिश्य महादेवं जीवेदब्दशतं सुखम् । तच्चक्षुरित्यृचा स्नात उपतिष्ठेद् दिवाकरम्
उद्यन्तं मध्यगञ्चैव दीर्घमायुर्जिजीविषुः । इन्द्रा सोमेति सूक्तन्तु कथितं शत्रुनाशनम्

यस्य लुप्तं व्रतं मोहाद् व्रात्यैर्वा संसृजेत् सह ।

उपोष्याज्यं स जुहुयात् त्वमग्ने व्रतपा इति ॥ ६६ ॥

आदित्येत्यृक् च सम्राजं जप्त्वा वादे जयी भवेत् ।
महीति च चतुष्केण मुच्यते महतो भयात् ॥ ६७ ॥
ऋचं जप्त्वा यदि ह्येतत् सर्वकामानवाप्नुयात् ।
द्वाचत्वारिंशतिं चैन्द्रं जप्त्वा नाशयते रिपून् ॥ ६८ ॥
वाचं महीति जप्त्वा च प्राप्नोत्यारोग्यमेव च ।
शन्नो भवेति द्वाभ्यान्तु भुक्त्वान्नं प्रयतः शुचिः ॥ ६९ ॥
हृदयं पाणिना स्पृष्ट्वा व्याधिभिर्नाभिभूयते ।
उत्तमेदमिति स्नातो हुत्वा शत्रुं प्रमापयेत् ॥ ७० ॥
शन्नोग्न इति सूक्तेन हुतेनान्नमवाप्नुयात् । कन्यावारर्षिसूक्तेन दिग्दोषाद् विप्रमुच्यते ॥
यदत्य कव्येत्युदिते जप्तेऽवश्यं जगद् भवेत् ।
यद्वागिती च जप्तेन वाणी भवति संस्कृता ॥ ७२ ॥
वाचो विदमिति त्वेतां जपन् वाचं समश्नुते ।
पवित्राणां पवित्रन्तु पावमान्योत्यृचो मताः ॥ ७३ ॥
वैखानसा ऋचस्त्रिंशत्पवित्राः परमा मताः ।
ऋचो द्विषष्टिः प्रोक्ताश्च परस्वेत्यृषिसत्तम ! ॥ ७४ ॥
सर्वकल्मषनाशाय पावनाय शिवाय च । स्वादिष्ठयेतिसूक्तानां सप्तषष्टिरुदाहृता ॥७५॥
दशोत्तराण्यृचाश्चैताः पावमान्यः शतानि षट् ।
एतज्जपंश्च जुह्वच्च घोरं मृत्युभयं जयेत् ॥ ७६ ॥
आपोहिष्ठेति वारिस्थो जपेत् पापभयार्दने । प्रदेवन्नेति नियतो जपेच्च मरुधन्वसु ॥
प्राणान्तिके भये प्राप्ते क्षिप्रमायुस्तु विन्दति ।
प्रावेयामित्यृचमेकां जपेच्च मनसा निशि ॥ ७८ ॥
व्युष्टायामुदिते सूर्ये द्यूते जयमवाप्नुयात् । मा प्रगामेति मूढश्च पन्थानं पथि विन्दति
क्षीणायुरिति मन्येत यं कञ्चित् सुहृदं प्रियम् ।
यत्तेयमिति तु स्नातस्तस्य मूर्द्धानमालभेत् ॥ ८० ॥

सहस्रकृत्वः पञ्चाहं तेनायुर्विन्दते महत् । इदं मध्येति जुहुयात् घृतं प्राज्ञः सहस्रशः ॥
पशुकामो गवां गोष्ठे अर्थकामश्चतुष्पथे । वयः सुपर्ण इत्येतां जपन् वै विन्दते श्रियम्
हविष्यन्तीयमभ्यस्य सर्वपापैः प्रमुच्यते । तस्यरोगा विनश्यन्ति कायाग्निर्वर्द्धते तथा

या ओषधयः स्वस्त्ययनं सर्वव्याधिविनाशनम् ।
वृहस्पते ! अतीत्येतद् वृष्टिकामः प्रयोजयेत् ॥ ८४ ॥
सर्वत्रेति परा शान्तिर्ज्ञेया प्रतिरथस्तथा ।
सूत सांकश्यपं नित्यं प्रजाकामस्य कीर्त्तितम् ॥ ८५ ॥

अहंरुद्रेति इत्येतत् वाग्मी भवति मानवः । न योनौ जायते विद्वान् जपन्नातीतिरात्रिषु

रात्रिसूक्तं जपन्रात्रौ रात्रिं क्षेमी नयेन्नरः ।
कल्पयन्तीति च जपन् नित्यं कृत्वारिनाशनम् ॥ ८७ ॥

आयुष्यश्चैव वर्चस्यं सूक्तं दाक्षायणं महत् । उत देवा इति जपेदामयघ्नं धृतव्रतः॥८८॥
अयमग्ने जनित्येतज्जपेदग्निभये सति । अरण्यानीत्यरण्येषु जपेत् तद्भयनाशनम् ॥

ब्राह्मीमासाद्य सूक्ते द्वे ऋचं ब्राह्मीं शतावरीन् ।
पृथगद्भिर्घृतैर्वाथ मेधां लक्ष्मीश्च विन्दति ॥ ९० ॥

मास इत्यसपत्नघ्नं संग्रामं विजिगीषतः । ब्रह्मणोऽग्निः संविदानं गर्भमृत्यु निवारणम्

अपैहीति जपेत् सूक्तं शुचिर्दुःस्वप्ननाशनम् ।
येनेदमिति वै जप्त्वा समाधिं विन्दते परम् ॥ ९२ ॥

मयो भूर्वात इत्येतत् गवां स्वस्त्ययनं परम् । शाम्बरीमिन्द्रजालं वा मायामेतेनवारयेत्

महीत्रीणामवरोस्त्विति पथि स्वस्त्ययनं जपेत् ।
अग्नये विद्विषन्नेवं जपेच्च रिपुनाशनम् ॥ ९४ ॥

वास्तोष्पतेन मन्त्रेण यजेत गृहदेवताः । जपस्यैष विधिः प्रोक्तो हुते ज्ञेयो विशेषतः ॥
होमान्ते दक्षिणा देया पापशान्तिर्हुतेन तु । हुतं शाम्यति चान्नेन अन्नहेमप्रदानतः ॥

विप्राशिषस्त्वमोघाः स्युर्वहिःस्नानन्तु सर्वतः ।
सिद्धार्थका यवा धान्यं पयो दधि घृतं तथा ॥ ९७ ॥

क्षीरवृक्षास्तथेध्मन्तु होमा वै सर्वकामदाः ।
समिधः कण्टकिन्यश्च राजिका रुधिरं विषम् ॥ ९८ ॥
अभिचारे तथा शैलम् अशनं शक्तवः पयः । दधि भैक्ष्यं फलं मूलमृग्विधानमुदाहृतम्
इत्यादिमहापुराणे आग्नेयेऋग्विधानकथनंनामोनषष्ठ्यधिकद्विशततमोऽध्यायः ।

---

# षष्ठ्यधिकद्विशततमोऽध्यायः

## यजुर्विधानम् ।

### पुष्कर उवाच ।

यजुर्विधानं वक्ष्यामि भुक्तिमुक्तिप्रदं शृणु । ओंकारपूर्विका राम ! महाव्याहृतयो मताः
सर्वकल्मषनाशिन्यः सर्वकामप्रदास्तथा । आज्याहुतिसहस्रेण देवानाराधयेद् बुधः ॥
मनसः काङ्क्षितं राम ! मनसेप्सितकामदम् ।
शान्तिकामो यवैः कुर्य्यात् तिलैः पापापनुत्तये ॥ ३ ॥
धान्यैः सिद्धार्थकैश्चैव सर्वकामकरैस्तथा ।
औदुम्बरीभिरिध्माभिः पशुकामस्य शस्यते ॥ ४ ॥
दध्ना चैवान्नकामस्य पयसा शान्तिमिच्छतः ।
अपामार्गसमिद्भिस्तु कामयन् कनकं बहु ॥ ५ ॥
कन्याकामो घृताक्तानि युग्मशो ग्रथितानि तु ।
जातीपुष्पाणि जुहुयाद् ग्रामार्थी तिलतण्डुलान् ॥ ६ ॥
वश्यकर्मणि शाखीढ़वासापामार्गमेव च । विषासृङ्मिश्रसमिधो व्याधिघातस्य भार्गव
क्रुद्धस्तु जुहुयात् सम्यक् शत्रूणां बधकाम्यया ।
सर्वव्रीहिमयीं कृत्वा राज्ञः प्रतिकृतिं द्विज ! ॥ ८ ॥
सहस्रशस्तुजहुयाद्राजा वशगतो भवेत् । वस्त्रकामस्यपुष्पाणि दूर्वा व्याधिविनाशिनी

ब्रह्मवर्चसकामस्य वासोग्रश्च विधीयते। प्रत्यङ्गिरेषु जुहुयात् तुषकण्टकभस्मभिः॥
विद्वेषणेच पक्ष्माणि काककौशिकयोस्तथा। कापिलश्च घृतं हुत्वा तथा चन्द्रग्रहे द्विज

वचाचूर्णेन सम्पातात् समानीय च तां वचाम्।
सहस्रमन्त्रितां भुक्त्वा मेधावी जायते नरः॥ १२॥
एकादशाङ्गुलं शङ्कु लौहं खादिरमेव च।
द्विषतो वधोऽसीति जपन् निखनेद्रिपुवेश्मनि॥ १३॥

उच्चाटनमिदं कर्म शत्रूणां कथितं तव। चक्षुष्या इति जप्त्वा च विनष्टश्चक्षुराप्नुयात्
उपयुञ्जत इत्येतदनुवाकं तथान्नदम्। तनूनपाग्ने सदिति दूर्वां हुत्वार्त्तिवर्जितः॥
भेषजमसीति दध्याज्यैर्होमःप शूपसर्गनुत्। त्रियम्बकं यजामहे होमः सौभाग्यवर्द्धनः॥

कन्यानाम गृहीत्वा तु कन्यालाभकरः परः।
भयेषु तु जपन् नित्यं भयेभ्यो विप्रमुच्यते॥ १७॥
धुस्तूरपुष्पं सघृतं हुत्वा स्यात् सर्वकामभाक्।
हुत्वा तु गुग्गुलं राम! स्वप्ने पश्यति शङ्करम्॥ १८॥
युञ्जते मनोऽनुवाकं जप्त्वा दीर्घायुराप्नुयात्।
विष्णोरराटमित्येतत् सर्वबाधाविनाशनम्॥ १९॥

रक्षोघ्नश्च यशस्यश्च तथैव विजयप्रदम्। अयं नो अग्निरित्येतत् संग्रामे विजयप्रदम्॥
इदमापः प्रवहत स्नाने पापापनोदनम्। विश्वकर्मन्नु हविषा सूचीं लौहीं दशाङ्गुलाम्॥
कन्याया निखनेद् द्वारि साऽन्यस्मै न प्रदीयते। देव! सवितरेतेन हुतेनैतेन चान्नवान्

अग्नौ स्वाहेति जुहुयाद् बलकामो द्विजोत्तम!।
तिलैर्यवैश्च धर्मज्ञ! तथापामार्गतण्डुलैः॥ २३॥
सहस्रमन्त्रितां कृत्वा तथा गोरोचनां द्विज!।
तिलकञ्च तथा कृत्वा जनस्य प्रियतामियात्॥ २४॥

रुद्राणाञ्च तथा जप्यं सर्वाघविनिसूदनम्। सर्वकर्मकरो होमस्तथा सर्वत्र शान्तिदः॥

अजाविकानामश्वानां कुञ्जराणां तथा गवाम्।

मनुष्याणां नरेन्द्राणां बालानां योषितामपि ॥ २६ ॥
ग्रामाणां नगराणाञ्च देशानामपि भार्गव! । उपद्रुतानां धर्मज्ञ! व्याधितानां तथैव च ॥
मरके समनुप्राप्ते रिपुजे च तथा भये । रुद्रहोमः परा शान्तिः पायसेन घृतेन च ॥
कुष्माण्डघृतहोमेन सर्वान् पापान् व्यपोहति । शक्तुयावकभैक्षाशी नक्तं मनुजसत्तम !
बहिःस्नानरतो मासान् मुच्यते ब्रह्महत्यया ।
मधुवातेति मन्त्रेण होमादितोऽखिलं लभेत् ॥ ३० ॥
दधि क्राव्नेति हुत्वा तु पुत्रान् प्राप्नोत्यसंशयम् ।
तथा घृतवतीत्येतदायुष्यं स्यात् घृतेन तु ॥ ३१ ॥
स्वस्तिन इन्द्र इत्येतत् सर्वबाधाविनाशनम् । इह गावः प्रजायध्वमिति पुष्टिविवर्धनम्
घृताहुतिसहस्रेण तथा लक्ष्मीविनाशनम् । श्रुवेण देवस्य त्वेति हुत्वापामार्गतण्डलम्
मुच्यते विकृताच्छीघ्रमभिचारान्न संशयः ।
रुद्र ! पातु पलाशस्य समिद्भिः कनकं लभेत् ॥ ३४ ॥
शिवो भवेत्यग्न्युत्पाते व्रीहिभिर्जुहुयान्नरः ।
याः सेना इति चैतच्च तस्करेभ्यो भयापहम् ॥ ३५ ॥
यो अस्मभ्यमवातीयाद्धुत्वा कृष्णतिलान् नरः ।
सहस्रशोऽभिचाराच्च मुच्यते विकृताद् द्विज ! ॥ ३६ ॥
अन्नेनान्नपतेत्येवं हुत्वा चान्नमवाप्नुयात् ।
हंसः शुचिः सदित्येतज्जप्तं तोयेऽघनाशनम् ॥
चत्वारि भृङ्गेत्वेतत् तु सर्वपापहरं जले । देवा यज्ञेति जप्त्वा तु ब्रह्मलोके महीयते ॥
वसन्तेति च हुत्वाज्यम् आदित्यात् वरमाप्नुयात् ॥
सुपर्णोऽसीति चेत्यस्य कर्मव्याहृतिवद् भवेत् ॥ ३९ ॥
नमःस्वाहेति त्रिर्जप्त्वा बन्धनान् मोक्षमाप्नुयात् ।
अन्तर्जले त्रिरावर्त्य द्रुपदा सर्वपापभुक् ॥ ४० ॥
इह गावः प्रजायध्वं मन्त्रोऽयं बुद्धिवर्द्धनः । हुतन्तु सर्पिषा दध्ना पयसा पायसेन वा

शतं य इति चैतेन हुत्वा पर्णफलानि च । आरोग्यं श्रियमाप्नोति जीवितञ्च चिरं तथा

औषधीः प्रतिमोदध्वं वपने लवनेऽर्थकृत् ।
अश्वावती पायसेन होमाच्छान्तिमवाप्नुयात् ॥ ४३ ॥
तस्मा इति च मन्त्रेण बन्धनस्थो विमुच्यते ।
युवा सुवासा इत्येव वसांस्याप्नोति चोत्तमम् ॥ ४४ ॥
मुञ्चन्तु मा शपथ्यानि सर्वान्तकविनाशनम् ।
मा माहिंसीस्तिलाज्येन हुतं रिपुविनाशनम् ॥ ४५ ॥

नमोऽस्तु सर्वसर्पेभ्यो घृतेन पायसेन तु । कृणुध्वं राज ! इत्येतदभिचारविनाशनम्॥

दूर्वाकाण्डायुतं हुत्वा काण्डात् काण्डेति मानवः ।
ग्रामे जनपदे वापि मकरन्तु शमन् नयेत् ॥ ४७ ॥
रोगार्त्तो मुच्यते रोगात् तथा दुःखात् तु दुःखितः ।
औदुम्बरीश्च समिधो मधुमान्नो वनस्पतिः ॥ ४८ ॥
हुत्वा सहस्रशो राम ! धनमाप्नोति मानवः ।
सौभाग्यं महदाप्नोति व्यवहारे तथा जयम् ॥ ४९ ॥

अपां गर्भमिति हुत्वा देवं वर्षापयेद् ध्रुवम् । अपः पिबेति च तथा हुत्वा दधि घृतं मधु
प्रवर्त्तयति धर्मज्ञ ! महावृष्टिमनन्तरम् । नमस्ते रुद्र ! इत्येतत् सर्वोपद्रवनाशनम्॥
सर्वशान्ति करं प्रोक्तं महापातकनाशनम् । अध्यवोचदित्यनेन रक्षणं व्याधितस्य तु॥
रक्षोघ्नञ्चयशस्यञ्च चिरायुः पुष्टिवर्द्धनम् । सिद्धार्थकानां क्षेपेण पथि चैतज्जपन् सुखी॥

असौ यस्ताम्र इत्येतत् पठन् नित्यं दिवाकरम् ।
उपतिष्ठेत धर्मज्ञ ! सायं प्रातरतन्द्रितः ॥ ५४ ॥
अन्नमक्षयमाप्नोति दीर्घमायुश्च विन्दति ।
प्रमुञ्च धन्वन्नित्येतत् षड्भिरायुधमन्त्रणम् ॥ ५५ ॥
रिपूणां भयदं युद्धे नात्र कार्य्या विचारणा ।
मानो महान्त इत्येवं बालानां शान्तिकारकम् ॥ ५६ ॥

नमो हिरण्यबाहवे इत्यनुवाकसप्तकम्। राजिकां कटुतैलाक्तां जुहुयाच्छत्रुनाशनीम् ॥
नमो वः किरिकेभ्यश्च पद्मलक्षाहुतैर्नरः।
राज्यलक्ष्मीमवाप्नोति तथा विल्वैः सुवर्णकम् ॥ ५८ ॥
इमा रुद्रायेति तिलैर्होमाच्च धनमाप्यते। दूर्वाहोमेन चान्येन सर्वव्याधिविवर्जितः ॥
आशुः शिशान इत्येतदायुधानाञ्च रक्षणे। संग्रामे कथितं राम! सर्वशत्रुनिवर्हणम् ॥
राजसामेति जुहुयात् सहस्रं पञ्चभिर्द्विज!।
आज्याहुतीनां धर्मज्ञ! चक्षुरोगाद् विमुच्यते ॥ ६१ ॥
शन्नो वनस्पते गेहे होमः स्याद् वास्तुदोषनुत्।
अग्न आयूंसि हुत्वाज्यं द्वेषं नाप्नोति केनचित् ॥ ६२ ॥
अपां फेनेति लाजाभिर्हुत्वा जयमवाप्नुयात्।
भद्रा इतीन्द्रियैर्हीनो जपन् स्यात् सकलेन्द्रियः ॥ ६३ ॥
अग्निश्च पृथिवी चेति वशीकरणमुत्तमम्। अध्वनेति जपन् मन्त्रं व्यवहारे जयीभवेत्
ब्रह्म राजन्यमिति च कर्म्मारम्भे तु सिद्धिकृत्।
संवत्सरोऽसीतिघृतैर्लक्षहोमादरोगवान् ॥ ६५ ॥
केतुं कृण्वन्नितीत्येतत् संग्रामे जयवर्द्धनम्। इन्द्रोऽग्निर्धर्म इत्येतद्रणे धर्मनिबन्धनम्
धन्वा नागेति मन्त्रश्च धनुर्ग्राहणिकः परः। यजीतेति तथा मन्त्रो विज्ञेयो ह्यभिमन्त्रणे
मन्त्रश्चाहिरथेत्येतच्छराणां मन्त्रणे भवेत्।
वह्नीनां पितरित्येतत् तूणमन्त्रः प्रकीर्त्तितः ॥ ६८ ॥
युञ्जन्तीति तथाश्वानां योजने मन्त्रउच्यते।
आशुः शिशान इत्येतद् यात्रारम्भणमुच्यते ॥ ६९ ॥
विष्णोः क्रमेति मन्त्रश्च रथारोहणिकः परः।
आजङ्घेतीति चाश्वानां ताड़नीयमुदाहृतम् ॥ ७० ॥
याः सेना अभित्वरीति परसैन्यमुखे जपेत्।
दुन्दुभ्य इति चाप्येतद् दुन्दुभीताड़नं भवेत् ॥ ७१ ॥

एतैः पूर्वहुतैर्मन्त्रैः कृत्वैवं विजयी भवेत्। यमेन दत्तमित्यस्य कोटिहोमाद् विचक्षणः
रथमुत्पादयेच्छीघ्रं संग्रामे विजयप्रदम्। आकृष्णेति तथैतस्य कर्मव्याहृतिवद् भवेत्
शिवसंकल्प जापेन समाधिं मनसो लभेत्।
पञ्चनद्यः पञ्चलक्षं हुत्वा लक्ष्मीमवाप्नुयात् ॥ ७४ ॥
यदा वधूं दाक्षायणां मन्त्रेणानेन मन्त्रितम्। सहस्रकृत्वः कनकं धारयेद्रिपुवारणम्॥
इमं जीवेभ्य इति च शिलां लोष्ठञ्चतुर्दिशम्।
क्षिपेद् गृहे तदा तस्य न स्याच्चौरभयं निशि ॥ ७६ ॥
परिमेगामनेनेति वशीकरणमुत्तमम्। हन्तुमभ्यागतस्तत्र वशीभवति मानवः ॥ ७७ ॥
भक्ष्यताम्बूलपुष्पाद्यं मन्त्रितन्तु प्रयच्छति।
यस्य धर्मज्ञ! वशगः सोऽस्य शीघ्रं भविष्यति ॥ ७८ ॥
शन्नो मित्र इतीत्येतत् सदा सर्वत्र शान्तिदम्।
गणानां त्वा गणपतिं कृत्वा होमञ्चतुष्पथे ॥ ७९ ॥
वशेकुर्य्याज्जगत्सर्वं सर्वधान्यैरसंशयम्। हिरण्यवर्णाः शुचयो मन्त्रोऽयमभिषेचने॥
शन्नो देवीरभिष्टये तथा शान्तिकरा परः। एकचक्रेति मन्त्रेण हुतेनाज्येन भागशः॥
गृहेभ्यः शान्तिमाप्नोति प्रसादं न च संशयः।
गावो भग् इति द्वाभ्यां हुत्वाज्यङ्गा अवाप्नुयात् ॥ ८२ ॥
प्रवादांषः सोपदिति गृहयज्ञे विधीयते। देवेभ्यो वनस्पत इति द्रुमयज्ञे विधीयते॥
गायत्री वैष्णवी ज्ञेया तद्विष्णोः परमं पदम्। सर्वपापप्रशमनं सर्वकामकरं तथा॥
इत्यादिमहापुराणेआग्नेयेयजुर्विधानवर्णनंनामषष्ठ्यधिकद्विशततमोऽध्यायः।

———

## एकषष्ठ्यधिकद्विशततमोऽध्यायः

### सामविधानम् ।

पुष्कर उवाच ।

यजुर्विधानं कथितं वक्ष्ये साम्नां विधानकम् ।
संहितां वैष्णवीं जप्त्वा हुत्वा स्यात् सर्वकामभाक् ॥ १ ॥
संहितां छान्दसीं साधु जप्त्वा प्रीणाति शङ्करम् ।
स्कान्दीं पैत्र्यां संहिताञ्च जप्त्वा स्यात् तु पसादवान् ॥ २ ॥
यत् इन्द्रं भजामहे हिंसादोष विनाशनम् ।
अवकीर्णी मुच्यते च अग्निस्तिग्मेति वै जपन् ॥ ३ ॥
सवपापहरं ज्ञेयं परितोयञ्च तासु च ।.अविक्रेयञ्च विक्रीय जपेद् घृतवतीति च ॥
अयानो देव ! सवितर्ज्ञेयं दुःस्वप्ननाशनम् ।
अबोध्यग्निरितिमन्त्रेण घृतं राम ! यथाविधि ॥ ५ ॥
अभ्युक्ष्य घृतशेषेण मेखलाबन्ध इष्यते । स्त्रीणां यासान्तु गर्भाणि पतन्ति भृगुसत्तम
मणिजातस्य बालस्य बध्नीयात् तदनन्तरम् । सोमं राजानमेतेन व्याधिभिर्विप्रमुच्यते
सर्पसाम प्रयुञ्जानो नाप्नुयात् सर्पजं भयम् ।
माच त्वा वायतेत्येतद्धुत्वा विप्रःसहस्रशः ॥ ८ ॥
शतावरिमणिं बद्ध्वा नाप्नुयाच्छस्त्रतो भयम् ।
दीर्घतमसोऽर्क इतिहुत्वान्नं प्राप्नुयाद् बहु ॥ ९ ॥
स्वमध्यायन्तीति जपन् न म्रियते पिपासया ।
त्वमिमा ओषधी ह्येतज्जप्त्वा व्याधिं न वाप्नुयात् ॥ १० ॥
पथिदेवव्रतं जप्त्वा भयेभ्यो विप्रमुच्यते । यदिन्द्रो मुनये खेति हुतं सौभाग्यवर्द्धनम्
भगो न चित्र इत्येशं नेत्रयो रञ्जनं हितम् ।

सौभाग्यवर्द्धनं राम ! नात्र कार्य्या विचारणा ॥ १२ ॥
जपेदिन्द्रेति वर्गञ्च तथा सौभाग्यवर्द्धनम् ।
परिप्रिया हि यः कारिः काम्यां संश्रावयेत् स्त्रियम् ॥ १३ ॥
सा तङ्कामयते राम ! नात्र कार्य्या विचारणा । रथन्तरं वामदेव्यं ब्रह्मवर्चसवर्द्धनम्
प्राशयेद् बालकं नित्यं वचाचूर्णं घृतप्लुतम् ।
इन्द्रमिद्गाथिनं जप्त्वा भवेच्छ्रुतिधरस्त्वसौ ॥ १५ ॥
हुत्वा रथन्तरं जप्त्वा पुत्रमाप्नोत्य संशयम् ।
मयि श्रीरिति मन्त्रोऽयं जप्तव्यःश्रीविवर्द्धनः ॥ १६ ॥
वैरूप्यस्याष्टकं नित्यं प्रयुञ्जानः श्रियंलभेत् ।
सप्ताष्टकं प्रयुञ्जान सर्वान् कामानवाप्नुयात् ॥ १७ ॥
गव्येषुणेति यो नित्यं सायं प्रातरतन्द्रितः ।
उपस्थानं गवां कुर्य्यात् तस्य स्युस्ताः सदागृहे ॥ १८ ॥
घृताक्तन्तु यवद्रोणं वात आवातु भेषजम् ।
अनेन हुत्वा विधिवत् सर्वां मायां व्यपोहति ॥ १९ ॥
प्रदेवो दासेन तिलान् हुत्वा कार्मणकृन्तनम् ।
अभि त्वा पूर्व पीतये वषट्कारसमन्वितम् ॥ २० ॥
वासकेध्मसहस्रन्तु हुतं युद्धे जयप्रदम् । हस्त्यश्वपुरुषान् कुर्य्याद् बुधःपिष्टमयान्शुभान्
परकीयानथोद्दिश्य प्रधानपुरुषांस्तथा । सुस्विन्नान् पिष्टकवरान् क्षुरेणोत्कृत्य भागशः
अभि त्वा शूरणोनुमो मन्त्रेणानेन मन्त्रवित् ।
कृत्वा सर्षपतैलाक्तान् क्रोधेन जुहुयात् ततः ॥ २३ ॥
एतत् कृत्वा बुधः कर्म संग्रामे जयमाप्नुयात् । गारुडं वामदेव्यञ्च रथन्तरबृहद्रथौ ।
सर्वपाप प्रशमनाः कथिताः संशयं विना ॥ २४ ॥
इत्यादिमहापुराणेआग्नेयेसामविधानवर्णनंनामैकषष्ट्यधिकद्विशततमोऽध्यायः ।

———

# द्विषष्ट्यधिकद्विशततमोऽध्यायः

## अथर्वविधानम् ।

### पुष्कर उवाच ।

साम्नां विधानं कथितं वक्ष्ये चाथर्वणामय ।
शान्तातीयं गणं हुत्वा शान्तिमाप्नोति मानवः ॥ १ ॥
भैषज्यञ्च गणं हुत्वा सर्वान् रोगान् व्यपोहति ।
त्रिसप्तीयं गणं हुत्वा सर्वपापैः प्रमुच्यते ॥ २ ॥
क्वचिन्नाप्नोति च भयं हुत्वा चैवाभयं गणम् ।
न क्वचिज्जायते राम ! गणं हुत्वा पराजितम् ॥ ३ ॥
आयुष्यञ्च गणं हुत्वा अपमृत्युं व्यपोहति ।
स्वस्तिमाप्नोति सर्वत्र हुत्वा स्वस्त्ययनङ्गणम् ॥ ४ ॥
श्रेयसा योगमाप्नोति शर्मवर्मगणं तथा ।
वास्तोष्पत्यगणं हुत्वा वास्तुदोषान् व्यपोहति ॥ ५ ॥

तथा रौद्रगणं हुत्वा सर्वान् दोषान् व्यपोहति । एतैर्दशगुणैर्होमो ह्यष्टादशसु शान्तिषु

वैष्णवी शान्तिरैन्द्री च ब्राह्मी रौद्री तथैव च ।
वायव्या वारुणी चैव कौवेरी भार्गवी तथा ॥ ७ ॥
प्रजापत्या तथा त्वाष्ट्री कौमारी वह्निदेवता ।
मारुद्गणा च गान्धारी शान्तिर्नैर्ऋतकी तथा ॥ ८ ॥
शान्तिराङ्गिरसी याम्या पार्थिवी सर्वकामदा ।
यस्त्वां मृत्युरिति ह्येतज्जप्तं मृत्युविनाशनम् ॥ ६ ॥

सुपर्णस्त्वेति हुत्वा च भुजगैर्नैव बाध्यते । इन्द्रेण दत्तमित्येतत् सर्वकामकरं भवेत्
इन्द्रेण दत्तमित्येतत् सर्वबाधाविनाशनम् । इमा देवीति मन्त्रश्च सर्वशान्तिकरः परः

देवां मरुत इत्येतत् सर्वकामकरं भवेत्। यमस्यलोकादित्येतत् दुःस्वप्नशमनं परम्
इन्द्रश्च पञ्चवणिजेति पण्यलाभकरं परम्।
कामो मे वाजीति हुतं स्त्रीणां सौभाग्यवर्द्धनम्॥ १३॥
तुभ्यमेव जवीमन्नित्ययुतन्तु हुतं भवेत्। अग्ने गोभिन्न इत्येतन् मेधावृद्धिकरं परम्
ध्रुवं ध्रुवेणेति हुतं स्थानलाभकरं भवेत्। अलक्तजीवेति शुना कृषिलाभकरं भवेत्॥
अहन्ते भग्न इत्येतत् भवेत् सौभाग्यवर्द्धनम्।
ये मे पाशास्तथाप्येतद् बन्धनान्मोक्षकारणम्॥ १६॥
शपत्वहन्निति रिपून् नाशयेद्धोम जाप्यतः। त्वमुत्तममितीत्येतद् यशोबुद्धिविवर्द्धनम्
यथामृगतीत्येतत् स्त्रीणां सोभाग्यवर्द्धनम्। येन चेहदिशश्चैव गर्भलाभकरं भवेत्॥
अयन्ते योगिरित्येतत् पुत्रलाभकरं भवेत्।
शिवः शिवाभिरित्येतद् भवेत् सौभाग्यवर्द्धनम्॥ १९॥
बृहस्पतिर्नः परिपातु पथि स्वस्त्ययनं भवेत्।
मुञ्चामि त्वेति कथितमपमृत्यु निवारणम्॥ २०॥
अथर्व शिरसोऽध्येता सर्वपापैः प्रमुच्यते।
प्रधान्येन तु मन्त्राणां किञ्चित् कर्म तवेरितम्॥ २१॥
वृक्षाणां यज्ञियानां तु समिधः प्रथमं हविः। आज्यश्च व्रीहयश्चैव तथा वै गौरसर्षपाः
अक्षतानि तिलाश्चैव दधिक्षीरे च भार्गवः। दर्भास्तथैव दूर्वाश्च बिल्वानि कमलानि च
शान्तिपुष्टिकराण्याहुर्द्रव्याण्येतानि सर्वशः।
तैलं कणानि धर्मज्ञ! राजिका रुधिरं विषम्॥ २४॥
समिधः कण्टकोपेता अभिचारेषु योजयेत्। आर्षं वै दैवतं छन्दो विनियोगज्ञ आचरेत्
इत्यादिमहापुराणेआग्नेयेअथर्वविधानकथनंनामद्विषष्ठ्यधिकद्विशततमोऽध्यायः

---

# त्रिषष्ठ्यधिकद्विशततमोऽध्यायः

## उत्पातशान्तिः

पुष्कर उवाच ।

श्रीसूक्तं प्रतिवेदञ्च ज्ञेयं लक्ष्मीविवर्द्धनम् । हिरण्यवर्णां हरिणीमृचः पञ्चदश श्रियः ॥
रथेष्वक्षेषु वाजेति चतस्रो यजुषि श्रियः । स्रावन्तीयं तथा साम श्रीसूक्तं सामवेदके
श्रियं धातर्मयि धेहि प्रोक्तमाथर्वणे तथा ।
श्रीसूक्तं यो जपेद् भक्त्या हुत्वा श्रीस्तस्य वै भवेत् ॥ ३ ॥
पद्मानि चाथ विल्वानि हुत्वाज्यं वा तिलान् श्रियः ।
एकन्तु पौरुषं सूक्तं प्रतिवेदन्तु सर्वदम् ॥ ४ ॥
सूक्तेन दद्यान् निष्पापो ह्येकैकया जलाञ्जलिम् ।
स्नात एकैकया पुष्पं विष्णोर्दत्त्वाघहा भवेत् ॥ ५ ॥
स्नात एकैकया दत्वा फलं स्यात् सर्वकामभाक् ।
महापापोपपापान्तो भवेत् जप्त्वा तु पौरुषम् ॥ ६ ॥
कृच्छ्रैर्विशुद्धो जप्त्वा च हुत्वा स्नात्वाथ सर्वभाक् ।
अष्टादशभ्यः शान्तिभ्यस्तिस्रोऽन्याः शान्तयो वराः ॥ ७ ॥
अमृता चाभया सौम्या सर्वोत्पातविमर्दनाः । अमृता सर्वदैवत्या अभया ब्रह्मदैवता ॥
सौम्या च सर्वदैवत्या एका स्यात् सर्वकामदा ।
अभयाया मणिः कार्य्यो वरुणस्य भृगूत्तम ! ॥ ६ ॥
शतकाण्डोऽमृतायाश्च सौम्यायाः शङ्खजो मणिः ।
तद्दैवत्यास्तथा मन्त्राः सिद्धौ स्यान्मणिबन्धनम् ॥ १० ॥
दिव्यान्तरीक्षभौमादि समुत्पातार्दना इमा । दिव्यान्तरीक्षभौमन्तु अद्भुतं त्रिविधं शृणु
अहर्क्षवैकृतं दिव्यमान्तरीक्षं निबोध मे । उल्कापातश्च दिग्दाहः परिवेशस्तथैव च ॥१२॥

गन्धर्वनगरश्चैव वृष्टिश्च विकृता च या। चरस्थिरभवं भूमौ भूकम्पमपि भूमिजम्॥

सप्ताहाभ्यन्तरे वृष्टावद्भुतं निष्फलं भवेत्।
शान्तिं विना त्रिभिर्वर्षैरद्भुतं भयकृद् भवेत्॥ १४॥
देवताच्चार्चाः प्रनृत्यन्ति वेपन्ते प्रज्वलन्ति च।
आरठन्ति च रोदन्ति प्रस्विद्यन्ते हसन्ति च॥ १५॥
अर्च्चाविकारोपशमोऽभ्यर्च्य हुत्वा प्रजापतेः।
अनग्निर्दीप्यते यत्र राष्ट्रं च भृशनिस्वनम्॥ ॥ १६॥

न दीप्यते चेन्धनवांस्तद्राष्ट्रं पीड्यते नृपैः। अग्निवैकृत्यशमनमग्निमन्त्रैश्च भार्गव!
अकाले फलिता वृक्षाः क्षीरं रक्तं स्रवन्ति च। वृक्षोत्पातप्रशमनं शिवं पूज्य,च कारयेत्
अतिवृष्टिरनावृष्टिदुर्भिक्षायोभयं मतम्। अनृतौ त्रिदिनारब्धवृष्टिर्ज्ञेया भयाय हि।
वृष्टिवैकृत्यनाशः स्यात् पर्जन्येन्द्वर्कपूजनात्। नगरादपसर्पन्ते समीपमुपयान्ति च।
नद्यो ह्रदप्रश्रवणा विरसाश्च भवन्ति च। शलिलाशय वैकृत्ये जप्तव्यो वारुणो मनुः
अकालप्रसवा नार्य्यः कालतो वा प्रजास्तथा। विकृतप्रसवाश्चैव युग्मप्रसवनादिकम्
स्त्रीणां प्रसववैकृत्ये स्त्रीविप्रादिं प्रपूजयेत्। वड़वा हस्तिनी गौर्वा यदि युग्मं प्रसूयते
विजात्यं विकृतं वापि षड्भिर्मासैर्म्रियेत वै। विकृतं वा प्रसूयन्ते परचक्रभयं भवेत्
होमः प्रसूतिवैकृत्ये जपो विप्रादिपूजनम्। यानि यानान्ययुक्तानि युक्तानि न वहन्ति च

आकाशे तूर्य्यनादाश्च महद्भयमुपस्थितम्।
प्रविशन्ति यदा ग्राममारण्या मृगपक्षिणः॥ २६॥
अरण्यं यान्ति वा ग्राम्याः जलं यान्ति स्थलोद्भवाः।
स्थलं वा जलजा यान्ति राजद्वारादिके शिवाः॥ २७॥
प्रदोषे कुक्कुटो वासे शिवा चार्कोदये भवेत्।
गृहं कपोतः प्रविशेत् क्रव्याद् वा मूर्ध्नि लीयते॥ २८॥
मधुरां मक्षिकां कुर्य्यात् काको मैथुनगो दृशि।
प्रासादतोरणोद्यान द्वारप्राकारवेश्मनाम्॥ २९॥

अनिमित्तन्तु पतनं द्रुढ़ानां राजमृत्यवे । रजसा वाथ धूमेन दिशो यत्र समाकुलाः ॥
केतुदयोपरागौ च छिद्रता शशिसूर्य्ययोः । ग्रहर्क्षविकृतिर्यत्र तत्रापि भयमादिशेत् ॥
अग्निर्यत्र न दीप्येत स्रवन्ते चोदकुम्भकाः । मृतिर्भयं शून्यतादिरुत्पातानां फलं भवेत्
द्विजदेवादिपूजाभ्यः शान्तिर्जप्यैस्तु होमतः ॥ ३२ ॥

इत्यादिमहापुराणेआग्नेयेउत्पातशान्तिकथनंनामत्रिषष्ठ्यधिकद्विशततमोऽध्यायः ।

---

# चतुःषष्ठ्यधिकद्विशततमोऽध्यायः

## देवपूजावैश्वदेवबलिः ।

पुष्कर उवाच ।

देवपूजादिकं कर्म वक्ष्ये चोत्पातमर्दनम् ।
आपोहिष्ठेति तिसृभिः स्नातोऽर्घ्यं विष्णवेऽर्पयेत् ॥ १ ॥
हिरण्यवर्णा इति च पाद्यञ्च तिसृभिर्द्विज ! । शन्न आपो ह्याचमनमिदमापोऽभिषेचनम्
रथे अक्षे चतिसृभिर्गन्धं युवेति वस्त्रकम् । पुष्पं पुष्पवतीत्येवं धूपं धूपोऽसि चाप्यथ
तेजोऽसि शुक्रं दीपं स्यान्मधुपर्कं दधीति च । हिरण्यगर्भ इत्यष्टावृचः प्रोक्ता निवेदने
अन्नस्य मनुजश्रेष्ठ ! पानस्य च सुगन्धिनः ।
चामरव्यजनोपानच्छत्रं यानासने तथा ॥ ५ ॥
यत् किञ्चिदेवमादि स्यात् सावित्रेण निवेदयेत् ।
पौरुषन्तु जपेत् सूक्तं तदेव जुहुयात् तथा ॥ ६ ॥
अर्च्चाभावे तथा वेद्यां जले पूर्णघटे तथा ।
नदीतीरेऽथ कमले शान्तिः स्याद् विष्णुपूजनात् ॥ ७ ॥
ततो होमः प्रकर्त्तव्यो दीप्यमाने विभावसौ ।
परिसं मृज्य पर्य्युक्ष्य परिस्तीर्य्य परिस्तरैः ॥ ८ ॥

सर्वान्नाग्रं समुद्धृत्य जुहुयात् प्रयतस्ततः । वासुदेवाय देवाय प्रभवे चाव्ययाय च ॥

अग्नये चैव सोमाय मित्राय वरुणाय च ।
इन्द्राय च महाभाग ! इन्द्राग्निभ्यां तथैव च ॥ १० ॥

विश्वेभ्यश्चैव देवेभ्यः प्रजानां पतये नमः । अनुमत्यै तथा राम ! धन्वन्तरय एव च ॥

वास्तोष्पत्यै ततो देव्यै ततः स्विष्टिकृतेऽग्नये ।
सचतुर्थ्यन्तनाम्ना तु हुत्वै तेभ्यो वलिं हरेत् ॥ १२ ॥

तक्षोपतक्षमभितः पूर्वेणाग्निमतः परम् । अश्वानामपि धर्मज्ञ ! ऊर्णानामानि चाप्यथ

निरुन्धीधूम्रिणीका च अस्वपन्ती तथैव च ।
मेघपत्नी च नामानि सर्वेषामेव भार्गव ! ॥ १४ ॥
आग्नेयाद्याः क्रमेणाथ ततः शक्तिषु निक्षिपेत् ।
नन्दिन्यै च सुभाग्यै च सुमङ्गल्यै च भार्गव ! ॥ १५ ॥
भद्रकाल्यै ततो दत्त्वा स्थूणायाञ्च तथा श्रिये ।
हिरण्यकेश्यै च तथा वनस्पतय एव च ॥ १६ ॥

धर्माधर्ममयौ द्वारे गृहमध्ये ध्रुवाय च । मृत्यवे च वहिर्दद्याद् वरुणायोदकाशये ॥

भूतेभ्यश्च वहिर्दद्याच्छरणे धनदाय च । इन्द्रायेन्द्रपुरुषेभ्यो दद्यात् पूर्वेण मानवः ॥१८॥

यमाय तत् पुरुषेभ्यो दद्याद् दक्षिणतस्तथा ।
वरुणाय तत्पुरुषेभ्यो दद्यात् पश्चिमतस्तथा ॥ १९ ॥
सोमाय सोमपुरुषेभ्य उदग् दद्यादनन्तरम् ।
ब्रह्मणे ब्रह्मपुरुषेभ्यो मध्ये दद्यात् तथैव च ॥ २० ॥
आकाशे च तथा चोर्ध्वे स्थण्डिलाय क्षितौ तथा ।
दिवा दिवाचरेभ्यश्च रात्रौ रात्रिचरेषु च ॥ २१ ॥
वलिं वहिस्तथा दद्यात् सायं प्रातस्तु प्रत्यहम् ।
पिण्डनिर्वपणं कुर्य्यात् ततः सायं न कारयेत् ॥ २२ ॥

पित्रे तु प्रथमं दद्यात् तत्पित्रे तदनन्तरम् । प्रपितामहाय तन्मात्रे पितृमात्रे ततोऽर्पयेत्

तन्मात्रे दक्षिणाग्रेषु कुशेष्वेवं यजेत् पितॄन्। इन्द्रवारुणवायव्या याम्या वा नैर्ऋताश्च ये

ते काकाः प्रतिगृह्णन्तु इमं पिण्डं मयोद्धृतम्।

काकपिण्डन्तु मन्त्रेण शुनः पिण्डं प्रदापयेत् ॥ २५ ॥

विवस्वतः कुले जातौ द्वौ श्यावशबलौ शुनौ।

तेषां पिण्डं प्रदास्यामि पथि रक्षन्तु मे सदा ॥ २६ ॥

सौरभेय्यः सर्वहिताः पवित्राः पापनाशनाः। प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः

गोग्रासञ्च स्वस्त्ययनं कृत्वा भिक्षां प्रदापयेत्।

अतिथीन् दीनान् पूजयित्वा गृही भुञ्जीत च स्वयम्।

ओं भूः स्वाहा ओं भुवः स्वाहा ओं स्वः स्वाहा ओं भूर्भुवः स्वः स्वाहा।

ओं देवकृतस्यैनसोऽवयजनमसि स्वाहा ओं पितृकृतस्यैनसोऽवयजनमसि स्वाहा ओं आत्मकृतस्यैनसोऽवयजनमसि स्वाहा ओं मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा ओं एनस एनसोऽवयजनमसि स्वाहा। यच्चाहमेनो विद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यैनसोऽवयजनमसि स्वाहा अग्नये स्विष्टिकृते स्वाहा ओं प्रजापते स्वाहा।

विष्णुपूजावैश्वदेवबलिस्ते कीर्त्तितो मया ॥ २८ ॥

इत्यादिमहापुराणेआग्नेयेदेवपूजावैश्वदेवबलिःकथनंनाम
चतुःषष्ठ्यधिकद्विशततमोऽध्यायः।

---

## पञ्चषष्ठ्यधिकद्विशततमोऽध्याय

### दिक्पालादिस्नानम्।

अग्निरुवाच।

सर्वार्थसाधन स्नान वक्ष्ये शान्तिकरं श्रृणु।

स्नापयेच्च सरित्तीरे ग्रहान् विष्णुं विचक्षणः ॥ १ ॥

देवालये ज्वरार्त्यादौ विनायकग्रहार्दिते। विद्यार्थिना हृदे गेहे जयकामस्य तीर्थके॥
पद्मिन्यां स्नापयेत् नारीं गर्भो यस्याः स्रवेत् तथा।
अशोकसन्निधौ स्नायाज्जातो यस्या विनश्यति॥ ३॥
पुष्पार्थिनाञ्च पुष्पाढ्ये पुत्रार्थिनाञ्च सागरे।
गृहसौभाग्यकामानां सर्वेषां विष्णुसन्निधौ॥ ४॥
वैष्णवे रैवतीपुष्ये सर्वेषां स्नानमुत्तमम्। स्नानकामस्य सप्ताहं पूर्वमुत्सादनं स्मृतम्
पुनर्नवां रोचनाञ्च शताङ्गं गुरुणी त्वचम्।
मधूकं रजनी द्वे च तगरं नागकेशरम्॥ ६॥
अम्बरीञ्चैव मञ्जिष्ठां मांसीयासकमर्दनैः। प्रियङ्गुसर्षपं कुष्ठं बलां ब्राह्मीञ्च कुङ्कुमम्॥
पञ्चगव्यं शक्तुमिश्रं उद्वर्त्त्य स्नानमाचरेत्।
मण्डले कर्णिकायाञ्च विष्णुं ब्राह्मणमर्चयेत्॥ ८॥
दक्षे वामे हरं पूर्वं पत्रे पूर्वादिके क्रमात्।
लिखेदिन्द्रादिकान् देवान् सायुधान् सहबान्धवान्॥ ९॥
स्नानमण्डलकान् दिक्षु कुर्य्याच्चैव विदिक्षु च।
विष्णुब्रह्मेशशक्रादींस्तदस्त्राण्यर्च्य होमयेत्॥ १०॥
एकैकस्य त्वष्टशतं समिधस्तु तिलान् घृतम्।
भद्रः सुभद्रः सिद्धार्थः कलसाः पुष्टिवर्द्धनाः॥ ११॥
अमोघश्चित्रभानुश्च पर्जन्योऽथ सुदर्शनः।
स्थापयेत् तु घटानेतान् साश्विरुद्रमरुद्गणान्॥ १२॥
विश्वेदेवास्तथा दैत्या वसवो मुनयस्तथा। आवेशयन्तु सुप्रीतास्तथान्या अपि देवताः
ओषधीर्निक्षिपेत् कुम्भे जयन्तीं विजयां जयाम्।
शतावरीं शतपुष्पां विष्णुक्रान्तापराजिताम्॥ १४॥
ज्योतिष्मतीमतिबलाञ्चन्दनोशीरकेशरम्। कस्तूरीकाञ्च कर्पूरं बालकं पत्रकं त्वचम्॥
जातीफलं लवङ्गञ्चमृत्तिकां पञ्चगव्यकम्। भद्रपीठे स्थितं साध्यं स्नापयेयुर्द्विजाबलात्

राजाभिषेकमन्त्रोक्त देवानां होमकाः पृथक् ।
पूर्णाहुतिं ततो दत्त्वा गुरवे दक्षिणां ददेत् ॥ १७ ॥
इन्द्रोऽभिषिक्तो गुरुणा पुरा दैत्यान् जघान ह ।
दिक्पालस्नानं कथितं संग्रामादौ जयादिकम् ॥ १८ ॥

इत्यादिमहापुराणेआग्नेये दिक्पालस्नानकथनंनामपञ्चषष्ठ्यधिकद्विशततमोऽध्यायः

---

## षट्षष्ठ्यधिकद्विशततमोऽध्यायः

### विनायकस्नानम् ।

पुष्कर उवाच ।

विनायकोपसृष्टानां स्नानं सर्वकरं वदे । विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः
गणानामाधिपत्ये च केशवेशपितामहैः । स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति
विनायकोपसृष्टस्तु क्रव्यादानधिरोहति । व्रजमानस्तथात्मानं मन्यतेऽनुगतं परैः ॥३॥

विमना विफला रम्भः संसीदत्यनिमित्ततः ।
कन्या वरं न चाप्नोति न चापत्यं वराङ्गना ॥ ४ ॥
आचार्य्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं लभेत् ।
धनी न लाभमाप्नोति न कृषिञ्च कृषीवलः ॥ ५ ॥
राजा राज्यं न चाप्नोति स्नपनं तस्य कारयेत् ।
हस्तपुष्याश्वयुक्सौम्ये वैष्णवे भद्रपीठके ॥ ६ ॥

गौरसर्षपकल्केन साज्येनोत्सादितस्य च । सर्वौषधैः सर्वगन्धैः प्रलिप्तशिरसस्तथा ॥

चतुर्भिः कलसैः स्नानं तेषु सर्वौषधीः क्षिपेत् ।
अश्वस्थानाद् गजस्थानाद् वल्मीकात् सङ्गमाद्ध्रदात् ॥ ८ ॥
मृत्तिकां रोचनां गन्धं गुग्गुलुं तेषु निक्षिपेत् ।

सहस्राक्षं शतधारमृषभिः पावनं कृतम् ॥ ६ ॥
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते। भगं ते वरुणो राजा भगं सूर्य्यो बृहस्पतिः
भगमिद्रश्च वायुश्च भगं सप्तर्षयो ददुः।
यत् ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि ॥ ११ ॥
ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु सर्वदा। दर्भपिञ्जलिमादाय वामहस्ते ततो गुरुः॥
स्नातस्य सार्षपं तैलं श्रुवेणोडुम्बरेण च। जुहायान् मूर्द्धनि कुशान् सव्येन परिगृह्य च
मितश्च सम्मितश्चैव तथा शालककण्टकौ।
कुष्माण्डो राजपुत्रश्च एतैःस्वाहासमन्वितैः ॥ १४ ॥
नामभिर्वलिमन्त्रैश्च नमस्कारसमन्वितैः। दद्याश्चतुष्पथे शूर्पे कुशानास्तीर्य्य सर्वतः॥
कृताकृतांस्तण्डुलांश्च पललौदनमेव च।
मत्स्यान् पक्कांस्तथैवामान् पुष्पं चित्रं सुरां त्रिधा ॥ १६ ॥
मूलकं पूरिकां पूपांस्तथैवैण्डविकास्रजः। दध्यन्नं पायसं पिष्टं मोदकं गुड़मर्पयेत्॥
विनायकस्य जननीमुपतिष्ठेत् ततोऽम्बिकाम्।
दूर्वासर्षपपुष्पाणां दत्त्वार्घ्यं पूर्णमञ्जलिम् ॥ १८ ॥
रूपं देहि यशो देहि सौभाग्यं सुभगे! मम।
पुत्रं देहि धनं देहि सर्वान् कामांश्च देहि मे ॥ १९ ॥
भोजयेद्ब्राह्मणान् दद्यात् वस्त्रयुग्मं गुरोरपि।
विनायकं ग्रहान् प्राच्र्य श्रियं कर्मफलं लभेत् ॥ २० ॥
इत्यादिमहापुराणेआग्नेयेविनायकस्नानकथनंनामषट्षष्ठ्यधिकद्विशततमोऽध्यायः।

———

# सप्तषष्ठ्यधिकद्विशततमोऽध्यायः

## माहेश्वरस्नानलक्षकोटिहोमादयः ।

पुष्कर उवाच ।

स्नानं माहेश्वरं वक्ष्ये राजादेर्जयवर्द्धनम् । दानवेन्द्राय बलये यज्ञगादोशनाः पुरा ॥
भास्करेऽनुदिते पीठे प्रातः संस्नापयेद् घटैः ।
ओं नमो भगवते रुद्राय च बलाय च पाण्डुरोचितभस्मानुलिप्तगात्राय । तद् यथा जय जय सर्वान् शत्रून् मूकस्य कलविग्रहविवादेषु भञ्जय ।
ओं मथ मथ सर्वपथिकान् योऽसौ युगान्तकाले दिधक्षति इमां पूजां रौद्रमूर्त्तिः सहस्रांशुः शुक्रः स ते रक्षतु जीवितम् । संवर्त्तकाग्नितुल्यश्च त्रिपुरान्तकरः शिवः । सर्वदेवमयः सोऽपि तव रक्षतु जीवितं लिखि लिखि खिलि स्वाहा ॥
एवं स्नातस्तु मन्त्रेण जुहुयान् तिलतण्डुलम् ॥ २ ॥
पञ्चामृतैस्तुसंस्नाप्यपूजयेच्छूलपाणिनम् । स्नानान्यन्यानि वक्ष्यामि सर्वदा विजयाय ते
स्नानं घृतेन कथितमायुष्यवर्द्धनं परम् ।
गोमयेन च लक्ष्मीः स्याद् गोमूत्रेणाघमर्दनम् ॥ ४ ॥
क्षीरेण बलवुद्धिः स्याद् दध्ना लक्ष्मीविवर्द्धनम् ।
कुशोदकेन पापान्तः पञ्चगव्येन सर्वभाक् ॥ ५ ॥
शतमूलेन सर्वाप्तिर्गोश्रृङ्गोदकतोऽघजित् । पलाशविल्वकमलकुशस्नानन्तु सर्व्वदम् ॥
वचा हरिद्रे द्वे मुस्तं स्नानं रक्षोहणं परम् । आयुष्यञ्च यशस्यञ्च धर्म्ममेधाविवर्द्धनम्
हैमाद्भिश्चैव माङ्गल्यं रूप्यताम्रोदकैस्तथा । रत्नोदकैस्तु विजयः सौभाग्यं सर्वगन्धकैः
फलाद्भिश्च तथारोग्यं धात्र्यद्भिः परमां श्रियम् ।
तिलसिद्धार्थकैर्लक्ष्मीः सोभाग्यञ्च प्रियङ्गुणा ॥ ६ ॥
पद्मोत्पलकदम्बैश्च श्रीर्बलं बलाद्रुमोदकैः । विष्णुपादोदकस्नानं सर्वस्नानेभ्य उत्तमम्

एकाकी एककामायेत्येकोर्कं विधिवच्चरेत् । आक्रन्दयतिसूक्तेन प्रबध्नीयान् मणिं करे
कुष्ठपाठा वचा शुण्ठीशङ्खलोहादिको मणिः ।
सर्व्वेषामेव कामानामीश्वरो भगवान् हरिः ॥ १२ ॥
तस्य संपूजनादेव सर्व्वान् कामान् समश्नुते ।
स्नापयित्वा घृतक्षीरैः पूजयित्वा च पित्तहा ॥ १३ ॥
पञ्चमुद्गबलिं दत्त्वा अतिसारात् प्रमुच्यते ।
पञ्चगव्येन संस्नाप्य वातव्याधिं विनाशयेत् ॥ १४ ॥
द्विस्नेहस्नपनात् श्लेष्मरोगहा चातिपूजया ।
घृतं तैलं तथा क्षौद्रं स्नानन्तु त्रिरसं परम् ॥ १५ ॥
स्नानं घृताम्बु द्विस्नेहं समलं घृततैलकम् । क्षौद्रमिक्षुरसं क्षीरं स्नानं त्रिमधुरं स्मृतम्
घृतमिक्षुरसं तैलं क्षौद्रञ्च त्रिरसं श्रिये । अनुलेपस्त्रिशुक्लस्तु कर्पूरोशीरचन्दनैः ॥१७॥
चन्दना गुरुकर्पूरमृगदर्पैः सकुङ्कुमैः । पञ्चानुलेपनं विष्णोः सर्वकामफलप्रदम् ॥ १८॥
त्रिसुगन्धञ्च कर्पूरं तथा चन्दन कुङ्कुमैः । मृगदर्पं सकर्पूरं मलयं सर्वकामदम्॥१९॥
जातीफलं सकर्पूरं चन्दनञ्च त्रिशीतकम् ।
पीतानि शुक्लवर्णानि तथा शुक्लादि भार्गव ॥ २० ॥
कृष्णानि चैव रक्तानि पञ्चवर्णानि निर्दिशेत् ।
उत्पलं पद्मजाती च त्रिशीतं हरिपूजने ॥ २१ ॥
कुङ्कुमं रक्तपद्मानि त्रिरक्तं रक्तमुत्पलम् ।
धूपदीपादिभिः प्रार्च्य विष्णुं शान्तिर्भवेन् नृणाम् ॥ २२ ॥
चतुरस्रकरे कुण्डे ब्राह्मणाश्चाष्ट षोडश । लक्षहोमं कोटिहोमं तिलाज्ययवधान्यकैः ।
ग्रहानभ्यर्च्य गायत्र्या सर्वशान्तिः क्रमाद् भवेत् ॥ २३ ॥
इत्यादिमहापुराणेआग्नेयेमाहेश्वरस्नानलक्षकोटिहोमादिकथनंनाम
सप्तषष्ठ्यधिकद्विशततमोऽध्यायः ।

———

# अष्टषष्ठ्यधिकद्विशततमोऽध्यायः

## नीराजनादिविधिः।

पुष्कर उवाच।

कर्म सांवत्सरं राज्ञां जन्मर्क्षे पूजयेच्च तम्।
मासिमासि च संक्रान्तौ सूर्य्यसोमादि देवताः ॥ १ ॥
अगस्त्यस्योदयेऽगस्त्यश्चातुर्मास्यं हरिं यजेत्।
शयनोत्थापने पञ्चदिनं कुर्य्यात् समुत्सवम् ॥ २ ॥
प्रोष्ठपादे सिते पक्षे प्रतिपत्प्रभृतिक्रमात्।
शिविरात् पूर्वदिग्भागे शक्रार्थं भवनञ्चरेत् ॥ ३ ॥
तत्र शक्रध्वजं स्थाप्य शचीं शक्रञ्च पूजयेत्। अष्टम्यां वाद्यघोषेण तान्तु यष्टिं प्रवेशयेत्
एकादश्यां सोपवासो द्वादश्यां केतुमुत्थितम्।
यजेद् वस्त्रादिसंवीतं घटस्थं सुरपं शचीम् ॥ ५ ॥
वर्द्धस्वेन्द्र! जितामित्र! वृत्रहन्! पाकशासन!।
देव! देव! महाभाग! त्वं हि भूमिष्ठतां गतः ॥ ६ ॥
त्वं प्रभुः शाश्वतश्चैव सर्वभूतहिते रतः। अनन्ततेजा वैराजो यशोजयविवर्द्धनः ॥ ७ ॥
तेजस्ते वर्द्धयन्त्वेते देवाः शक्रः सुवृष्टिकृत्। ब्रह्मविष्णुमहेशाश्च कार्त्तिकेयो विनायकः
आदित्या वसवो रुद्राः साध्याश्च भृगवोदिशः।
मरुद्गणा लोकपाला ग्रहा यक्षादिनिम्नगाः ॥ ९ ॥
समुद्रा श्रीर्मही गौरी चण्डिका च सरस्वती। प्रवर्त्तयन्तुते तेजो जय शक्र! शचीपते!
तव चापि जयान् नित्यं मम सम्पद्यतां शुभम्।
प्रसीद राज्ञां विप्राणां प्रजानामपि सर्वशः ॥ ११ ॥
भवत्प्रसादात् पृथिवी नित्यं शस्यवती भवेत्।

शिवं भवतु निर्विघ्नं शाम्यन्तामीतयो भृशम् ॥ १२ ॥

मन्त्रेणेन्द्रं समभ्यर्च्य जितभूः स्वर्गमाप्नुयात् । भद्रकालीं पटे लिख्य पूजयेदाश्विने जये

शुक्लपक्षे तथाष्टम्यामायुधं कार्मुकं ध्वजम् । छत्रञ्च राजलिङ्गानि शस्त्राद्यं कुसुमादिभिः

जाग्रन्निशि बलिं दद्याद् द्वितीयेऽह्नि पुनर्यजेत् ।

भद्रकालि ! महाकालि ! दुर्गे ! दुर्गार्त्तिहारिणि ! ॥ १५ ॥

त्रैलोक्यविजये ! चण्डि ! मम शान्तौ जये भव ।

नीराजनविधं वक्ष्ये ऐशान्यां मन्दिरं चरेत् ॥ १६ ॥

तोरणत्रितयं तत्र गृहेदेवान् यजेत् सदा ।

चित्रां त्यक्त्वा यदा स्वातिं सविता प्रतिपद्यते ॥ १७ ॥

ततः प्रभृति कर्त्तव्यं यावत् स्वातौ रविः स्थितः ।

ब्रह्मा विष्णुश्च शम्भुश्च शक्रश्चैवानलानिलौ ॥ १८ ॥

विनायकः कुमारश्च वरुणोधनदो यमः । विश्वेदेवा वैश्रवसो गजाश्चाष्टौ च तान्यजेत्

कुमुदैरावणौ पद्मः पुष्पदन्तश्च वामनः ।

सुप्रतीकोऽञ्जनो नीलः पूजा कार्य्या गृहादिके ॥ २० ॥

पुरोधा जुहुयादाज्यं समित् सिद्धार्थकं तिलाः ।

कुम्भा अष्टौ पूजिताश्च तैः स्नाप्याश्वगजोत्तमाः ॥ २१ ॥

अश्वाः स्नाप्याः ददेत् पिण्डान् ततो हि प्रथमं गजान् ।

निष्कामयेत् तोरणैस्तु गोपुरादि न लङ्घयेत् ॥ २२ ॥

विक्रमेयुस्ततः सर्वे राजलिङ्गं गृहे यजेत् । वारुणे वरुणं प्राच्य रात्रौ भूतबलिं ददेत् ॥

विशाखायां गते सूर्य्ये आश्रमे निवसेन् नृपः ।

अलङ्कुर्य्याद् दिने तस्मिन् वाहनन्तु विशेषतः ॥ २४ ॥

पूजिता राजलिङ्गाश्च कर्त्तव्या नरहस्तगाः । हस्तिनं तुरगं छत्रं खड्गं चापञ्च दुन्दुभिम्

ध्वजं पताकां धर्मज्ञ ! कालज्ञस्त्वभिमन्त्रयेत् ।

अभिमन्त्र्य ततः सर्वान् कुर्य्यात् कुञ्जरधूर्गतोन् ॥ २६ ॥

कुञ्जरोपरिगौ स्यातां सांवत्सरपुरोहितौ । मन्त्रितांश्च समारुह्य तोरणेन विनिर्गमेत् ॥
निष्क्रम्य नागमारुह्य तोरणेनाथ निर्गमेत् । बलिं विभज्य विधिवद्राजा कुञ्जरधूर्गतः ॥
उल्मूकानान्तु निचयमादीपितदिगन्तरम् ।
राजा प्रदक्षिणं कुर्य्यात् त्रीन् वारान् सुसमाहितः ॥ २६ ॥
चतुरङ्गबलोपेतः सर्वसैन्येन नादयन् । एवं कृत्वा गृहं गच्छेद् विसर्जितजलाञ्जलिः ॥
शान्तिर्नीराजनाख्येयं वृद्धये रिपुमर्दनी ॥ ३० ॥
इत्यादिमहापुराणेआग्नेयेनीराजनादिविधिवर्णनंनामाष्टषष्ठ्यधिकद्विशततमोऽध्यायः ।

---

## ऊनसप्तत्यधिकद्विशततमोऽध्यायः

### छात्रादिमन्त्रादयः ।

पुष्कर उवाच ।

छत्रादिमन्त्रान् वक्ष्यामि यैस्तत् पूज्य जयादिकम् ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥ १ ॥
सूर्य्यस्य च प्रभावेण वर्द्धस्व त्वं महामते ! । पाण्डराभप्रतीकाश ! हिमकुन्देन्दुसुप्रभ !
यथाम्बुदश्छादयते शिवायैनां वसुन्धराम् । तथाच्छादय राजानं विजयारोग्यवृद्धये ॥
गन्धर्वकुलजातस्त्वं मा भूयाः कुलदूषकः । ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च
प्रभावाच्च हुताशस्य बर्द्धस्व त्वं तुरङ्गम ! । तेजसा चैव सूर्य्यस्य मुनीनां तपसा तथा
रुद्रस्य ब्रह्मचर्य्येण पवनस्य बलेन च । स्मर त्वं राजपुत्रोऽसि कौस्तुभन्तु मणिं स्मर
यां गतिं ब्रह्महा गच्छेत् पितृहा मातृहा तथा ।
भूम्यर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः ॥ ७ ॥
व्रजेस्त्वं तां गतिं क्षिप्रं मा तत् पापं भवेत् तव ।
विकृतिं मापगच्छेस्त्वं युद्धेऽध्वनि तुरङ्गम ! ॥ ८ ॥

रिपून् विनिघ्नन् समरे सह भर्त्रा सुखी भव ।
शक्रकेतो ! महावीर्य्यः सुवर्णस्त्वामुपाश्रितः ॥ ६ ॥
पतत्रिराड्वैनतेयस्तथा नारायणध्वजः । काश्यपेयोऽमृताहर्त्ता नागारिर्विष्णुवाहनः ॥
अप्रमेयो दुराधर्षो रणे देवारिसूदनः । महाबलो महावेगो महाकायोऽमृताशनः ॥ ११ ॥
गरुत्मान् मारुतगतिस्त्वयि सन्निहितः स्थितः ।
विष्णुना देवदेवेन शक्रार्थं स्थापितो ह्यसि ॥ १२ ॥
जयाय भव मे नित्यं वृद्धयेऽथ बलस्य च ।
साश्ववर्मायुधान् योधान् रक्षास्माकं रिपून् दह ॥ १३ ॥
कुमुदैरावणी पद्मः पुष्पदन्तोऽथ वामनः । सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः ॥
तेषां पुत्राश्च पौत्राश्च बलान्यष्टौ समाश्रिताः । भद्रो मन्दो मृगश्चैव गजः संकीर्ण एव च
वने वने प्रसूतास्ते स्मरयोनिं महागजाः ।
पान्तु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः ॥ १६ ॥
भर्तारं रक्ष नागेन्द्र समयः परिपाल्यताम् । ऐरावताधिरुढ़स्तु वज्रहस्तः शतक्रतुः ॥
पृष्ठतोऽनुगतस्त्वेष रक्षतु त्वां स देवराट् । अवाप्नुहि जयं युद्धे सुस्थश्चैव सदा व्रज ॥
अवाप्नुहि बलश्चैव ऐरावतसमं युधि ।
श्रीस्ते सोमाद् बलं विष्णोस्तेजः सूर्य्याज्जवोऽनिलात् ॥ १९ ॥
स्थैर्य्यं गिरेर्जयं रुद्राद् यशो देवात् पुरन्दरात् ।
युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः ॥ २० ॥
अश्विनौ सह गन्धर्वैः पान्तु त्वां सर्वतो दिशः ।
मनवो वसवो रुद्रा वायुः सोमो महर्षयः ॥ २१ ॥
नागकिन्नरगन्धर्वयक्षभूतगणा ग्रहाः । प्रमथास्तु महादित्यैर्भूतेशो मातृभिः सह ॥२२॥
शक्रः सेनापतिः स्कन्दो वरुणश्चाश्रितस्त्वयि ।
प्रदहन्तु रिपून् सर्वान् राजा विजयमृच्छतु ॥ २३ ॥
यानि प्रयुक्तान्यरिभिर्भूषणानि समन्ततः । पतन्तु तव शत्रूणां हतानि तव तेजसा ॥

कालनेमिवधे यद्वद् युद्धे त्रिपुरघातने । हिरण्यकशिपोर्युद्धे वधे सर्वासुरेषु च ॥२५॥
शोभितासि तथैवाद्य शोभस्वसमयं स्मर। नीलश्वेतामिमां दृष्ट्वा नश्यन्त्वाशु नृपारयः

व्याधिभिर्विविधैर्घोरैः शस्त्रैश्च युधि निर्जिताः ।
पूतना रेवती लेखा कालरात्रीति पठ्यते ॥ २७ ॥

दहन्त्वाशु रिपून् सर्वान् पताके ! त्वामुपाश्रिताः । सर्वमेधे महायज्ञे देवदेवेन शूलिना ॥
शर्वेण जगतश्चैव सारेण त्वं विनिर्मितः । नन्दकस्यापरां मूर्त्तिं स्मर शत्रुनिवर्हण ! ॥

नीलोत्पलदलश्याम ! कृष्ण ! दुःस्वप्ननाशन ? ।
असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ॥ ३० ॥

श्रीगर्भो विजयश्चैव धर्मपालस्तथैव च । इत्यष्टौ तव नामामि पुरोक्तानि स्वयम्भुवा ॥
नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः । हिरण्यञ्च शरीरन्ते दैवतन्ते जनार्दनः ॥३२॥
राजानं रक्ष निस्त्रिंश सबलं सपुरं तथा । पिता पितामहो देवः स त्वं पालय सर्वदा

शर्मप्रदस्त्वं समरे वर्मन् सैन्ये यशोऽद्य मे ।
रक्ष मां रक्षणीयोऽहं तवानघ ! नमोऽस्तु ते ॥ ३४ ॥

दुन्दुभे ! त्वं सपत्नानां घोषाद्धृदयकम्पनः । भव भूमिपसैन्यानां यथा विजयवर्द्धनः
यथा जीमूतघोषेण हृष्यन्ति वरवारणाः । तथास्तु तव शब्देन हर्षोऽस्माकं मुदावह !

यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते ।
तथा तु तव शब्देन त्रस्यन्त्वस्मद्द्विषो रणे ॥ ३७ ॥
मन्त्रैः सदार्चनीयास्ते योजनीया जयादिषु ।

घृतकम्बलविष्णवादेस्त्वभिषेकश्च वत्सरे । राज्ञोऽभिषेकः कर्त्तव्यो दैवज्ञेन पुरोधसा ॥
इत्यादिमहापुराणेआग्नेयेछत्रादिमन्त्राद्यकथनंनामोनसप्तत्यधिकद्विशततमोऽध्यायः ।

---

# सप्तत्यधिकद्विशततमोऽध्यायः

## विष्णुपञ्जरम् ।

पुष्कर उवाच ।

त्रिपुरञ्जघ्नुषः पूर्वं ब्रह्मणा विष्णुपञ्जरम् । शङ्करस्य द्विजश्रेष्ठ ! रक्षणाय निरूपितम् ॥

वागीशेन च शक्रस्य बलं हन्तुं प्रयास्यतः ।
तस्य स्वरूपं वक्ष्यामि तत्त्वं शृणु जयादिमत् ॥ २ ॥
विष्णुः प्राच्यां स्थितश्चक्री हरिर्दक्षिणतो गदी ।
प्रतीच्यां शार्ङ्गधृग् विष्णुर्जिष्णुः खड्गी ममोत्तरे ॥ ३ ॥

हृषीकेशो विकोणेषु तच्छिद्रेषु जनार्दनः । क्रोडरूपी हरिर्भूमौ नरसिंहोऽम्बरे मम ॥
क्षुरान्तममलं चक्रं भ्रमत्येतत् सुदर्शनम् । अस्यांशुमाला दुष्प्रेक्ष्यो हन्तुं प्रेतनिशाचरान्
गदा चेयं सहस्रार्चिःप्रदीप्तपावकोज्ज्वला । रक्षोभूतपिशाचानां डाकिनीनाञ्च नाशनी

शार्ङ्गविशस्फूर्जितश्चैव वासुदेवस्य मद्रिपून् ।
तिर्य्यङ्मनुष्यकुष्माण्ड प्रेतादीन् हन्त्वशेषतः ॥७॥
खड्गधारोज्ज्वलज्ज्योत्स्नानिर्द्धूता ये समाहिताः ।
ते यान्तु शाम्यतां सद्यो गरुडेनेव पन्नगाः ॥ ८ ॥
ये कुष्माण्डास्तथा यक्षा ये दैत्या ये निशाचराः ।
प्रेता विनायकाः क्रूरा मनुष्या जम्भगाः खगाः ॥ ६ ॥

सिंहादयश्च पशवो दन्दशूकाश्च पन्नगाः । सर्वे भवन्तु ते सौम्याः कृष्णशङ्खरवाहताः ॥
चित्तवृत्तिहरा ये मे ये जनाः स्मृतिहारकाः । बलौजसाञ्च हर्त्तारश्छायाविभ्रंशकाश्च ये

ये चोपभोगहर्त्तारो ये च लक्षणनाशकाः ।
कुष्माण्डास्ते प्रणश्यन्तु विष्णुश्चक्ररवाहताः ॥ १२ ॥
बुद्धिस्वास्थ्यं मनःस्वास्थ्यं स्वास्थ्यमैन्द्रियकं तथा ।

स्तम्भास्तु देवदेवस्य वासुदेवस्य कीर्त्तनात् ॥ १३ ॥
पृष्ठे पुरस्तान् मम दक्षिणोत्तरे विकोणतश्चास्तु जनार्दनो हरिः ।
तमीड्यमीशानमनन्तमच्युतं जनार्दनं प्रणिपतितो न सीदति ॥ १४ ॥
यथा परं ब्रह्म हरिस्तथा परो जगत्स्वरूपश्च स एव केशवः ।
सत्येन तेनाच्युतनामकीर्त्तनात् प्रणाशयेत् तु त्रिविधं ममाशुभम् ॥ १५ ॥
इत्यादिमहापुराणेआग्नेये विष्णुपञ्जरकथनंनामसप्तत्यधिकद्विशततमोऽध्यायः ।

---

# एकसप्तत्यधिकद्विशततमोऽध्यायः

## वेदशाखादिकीर्त्तनम् ।

पुष्कर उवाच ।

सर्वानुग्राहका मन्त्राश्चतुर्वर्गप्रसाधकाः ।
ऋगथर्व तथा साम यजुः संख्या तु लक्षकम् ॥ १ ॥
भेदः साङ्ख्यायनश्चैक आश्वलायनो द्वितीयकः ।
शतानि दश मन्त्राणां ब्राह्मणा द्विसहस्रकम् ॥ २ ॥
ऋग्वेदो हि प्रमाणेन स्मृतो द्वैपायनादिभिः । एकोनद्विसहस्रन्तु मन्त्राणां यजुषस्तथा
शतानि दश विप्राणां षड़शीतिश्च शाखिकाः ।
काण्वमाध्यन्दिनी संज्ञा कठी माध्यकठी तथा ॥ ४ ॥
मैत्रायणी च संज्ञा च तैत्तिरीयाभिधानिका ।
वैशम्पायनिकेताद्याः शाखा यजुषि संस्थिताः ॥ ५ ॥
साम्नः कौथुमसंज्ञैका द्वितीयाथर्वणायनी ।
गानान्यपि च चत्वारि वेद आरण्यकं तथा ॥ ६ ॥
उक्था ऊहचतुर्थश्च मन्त्रा नवसहस्रकाः । सचतुःशतकाश्चैव ब्रह्मसङ्घटकाः स्मृताः ॥७॥

पञ्चविंशतिरेवात्र साममानं प्रकीर्त्तितम्। सुमन्तुर्जाजलिश्चैव श्लोकायनिरथर्वके॥
शौनकः पिप्पलादश्च मुञ्जकेशादयोऽपरे। मन्त्राणामयुतं षष्टिशतश्चोपनिषच्छतम्॥

व्यासरूपी स भगवान् शाखाभेदाद्यकारयत्।
शाखाभेदादयो विष्णुरितिहासः पुराणकम्॥ १०॥
प्राप्य व्यासात् पुराणादि सूतो वै लोमहर्षणः।
सुमतिश्चाग्निवर्चाश्च मित्रयुः शिंशपायनः॥ ११॥
कृतव्रतोऽथ सावर्णिः षट्शिष्यास्तस्य चाभवन्।
शांशपायनादयश्चक्रुः पुराणानान्तु संहिताः॥ १२॥

ब्राह्मादीनि पुराणानि हरिविद्या दशाष्ट च। महापुराणे ह्याग्नेये विद्यारूपो हरिः स्थितः

सप्रपञ्चो निष्प्रपञ्चो मूर्त्तामूर्त्तस्वरूपधृक्।
तं ज्ञात्वाभ्यर्च्य संस्तूय भुक्ति मुक्तिमवाप्नुयात्॥ १४॥
विष्णुर्जिष्णुर्भविष्णुश्च अग्निसूर्य्यादिरूपवान्।
अग्निरूपेण देवादेर्मुखं विष्णुः परा गतिः॥ १५॥

वेदेषु सपुराणेषु यज्ञमूर्त्तिश्च गीयते। आग्नेयाख्यं पुराणन्तु रूपं विष्णोर्महत्तरम्॥
आग्नेयाख्यपुराणस्य कर्त्ता श्रोता जनार्दनः। तस्मात् पुराणमाग्नेयं सर्ववेदमयं महत्
सर्वं विद्यामयं पुण्यं सर्वज्ञानमयं वरम्। सर्वात्म हरिरूपं हि पठतां शृण्वतां नृणाम्
विद्यार्थिनाञ्च विद्यादमर्थिनां श्रीधनप्रदम्। राज्यार्थिनां राज्यदञ्च धर्मदं धर्मकामिनाम्

स्वर्गार्थिनां स्वर्गदञ्च पुत्रदं पुत्रकामिनाम्।
गवादिकामिनां गोदं ग्रामदं ग्रामकामिनाम्॥ २०॥

कामार्थिनां कामदञ्च सर्वं सौभाग्यसम्प्रदम्। गुणकीर्त्तिप्रदं नृणां जयदं जयकामिनाम्
सर्वेप्सूनां सर्वदन्तु मुक्तिदं मुक्तिकामिनाम्। पापघ्नं पापकर्तॄणामाग्नेयं हि पुराणकम्

इत्यादिमहापुराणेआग्नेयेवेदशाखादिकीर्त्तनवर्णनं नामैकसप्तत्यधिक-
द्विशततमोऽध्यायः।

---

# द्विसप्तत्यधिकद्विशततमोऽध्यायः

## दानादिमाहात्म्यम् ।

पुष्कर उवाच ।

ब्रह्मणाभिहितं पूर्वं यावन् मात्रं मरीचये ।
लक्षार्द्धार्द्धन्तु तद् ब्राह्मं लिखित्वा सम्प्रदापयेत् ॥ १ ॥
वैशाख्यां पौर्णमास्याञ्च स्वर्गार्थी जलधेनुमत् ।
पाद्मं द्वादशसाहस्रं ज्येष्ठे दद्याच्च धेनुमत् ॥ २ ॥
वराहकल्पवृत्तान्तमधिकृत्य पराशरः । त्रयोविंशतिसाहस्रं वैष्णवं प्राह चार्पयेत् ॥३॥
जलधेनुमदाषाढ्यां विष्णोः पदमवाप्नुयात् । चतुर्दशसहस्राणि वायवीयं हरिप्रियम् ॥
श्वेतकल्पप्रसङ्गेन धर्मान् वायुरिहाब्रवीत् ।
तद्यालिखित्वा तद् विप्रे श्रावण्यां गुड़धेनुमत् ॥ ५ ॥
यत्राधिकृत्य गायत्रीं कीर्त्यते धर्मविस्तरः । वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥६॥
सारस्वतस्य कल्पस्य प्रोष्ठपद्यान्तु तद् ददेत् । अष्टादशसहस्राणि हेमसिंहसमन्वितम्
यत्राह नारदो धर्मान् वृहत्कल्पाश्रितानिह ।
पञ्चविंशसहस्राणि नारदीयं तदुच्यते ॥ ८ ॥
सधेनुञ्चाश्विने दद्यात् सिद्धिमात्यन्तिकीं लभेत् ।
यत्राधिकृत्य शत्रूणां धर्माधर्मे विचारणा ॥ ९ ॥
कार्त्तिक्यां नवसाहस्रं मार्कण्डेयमथार्पयेत् ।
अग्निना यद् वशिष्ठाय प्रोक्तञ्चाग्नेयमेव तत् ॥ १० ॥
लिखित्वा पुस्तकं दद्यान् मार्गशीर्ष्यां स सर्वदः ।
द्वादशैव सहस्राणि सर्वविद्यावबोधनम् ॥ ११ ॥
चतुर्दशसहस्राणि भविष्यं सूर्य्यसम्भवम् । भवस्तु मनवे प्राह दद्यात् पौष्यां गुड़ादिमत्

सावर्णिना नारदाय ब्रह्मवैवर्त्तमीरितम्। रथान्तरस्य वृत्तान्तमष्टादशसहस्रकम् ॥१३॥

माघ्यां दद्याद् वराहस्य चरितं ब्रह्मलोकभाक्।

यत्राग्निलिङ्गमध्यस्थो धर्मान् प्राह महेश्वरः ॥ १४ ॥

आग्नेयकल्पे तल्लिङ्गमेकादशसहस्रकम्। तद् दत्त्वा शिवमाप्नोति फाल्गुन्यां तिलधेनुमत्
चतुर्दशसहस्राणि वाराहं विष्णुनेरितम्। भूमौ वराहचरितं मानवस्य प्रवृत्तितः॥
सहेमगरुडञ्चैत्र्यां पदमाप्नोति वैष्णवम्। चतुरशीतिसाहस्रं स्कान्दं स्कन्देरितं महत्॥

अधिकृत्य सधर्मांश्च कल्पे तत् पुरुषेऽर्पयेत्।

वामनं दशसाहस्रं धौमकल्पे हरेः कथाम् ॥ १८ ॥

दद्यात् शरदि विषुवे धर्मार्थादि निबोधनम्। कूर्मञ्चाष्टसहस्रञ्च कूर्मोतञ्च रसातले॥
इन्द्रद्युम्नप्रसङ्गेन दद्याद् तद्धेमकूर्मवत्। त्रयोदशसहस्राणि मात्स्यं कल्पादितोऽब्रवीत्
मत्स्यो हि मनवे दद्याद् विषुवे हेममत्स्यवत्। गारुड़ञ्चाष्टसाहस्रं विष्णूक्तं तार्क्ष्यकल्पके

विश्वाण्डाद् गरुड़ोत्पत्तिं तद् दद्याद्धेम हंसवत्।

ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्वाब्रवीत् तु यत् ॥ २२ ॥

तच्च द्वादशसाहस्रं ब्रह्माण्डं तद् द्विजेऽर्पयेत्। भारते पर्वसमाप्तौ वस्त्रगन्धस्रगादिभिः
वाचकं पूजयेदादौ भोजयेत् पायसैर्द्विजान्। गोभूग्रामसुवर्णादि दद्यात् पर्वणि पर्वणि

समाप्ते भारते चिप्रं संहितापुस्तकान् यजेत्।

शुभे देशे निवेश्याथ क्षौमवस्त्रादिनावृतान् ॥ २५ ॥

नरनारायणौ पूज्यौ पुस्तकाः कुसुमादिभिः।

गोऽन्नभूहेम दत्त्वाथ भोजयित्वा क्षमापयेत् ॥ २६ ॥

महादानानि देयानि रत्नानि विविधानि च। मासकौ द्वौ त्रयश्चैवमासे मासे प्रदापयेत्
अयनादौ श्रावकस्य दानमादौ विधीयते। श्रोतृभिः सकलैः कार्य्यं श्रावके पूजनं द्विज
इतिहासपुराणानां पुस्तकानि प्रयच्छति। पूजयित्वायुरारोग्यं स्वर्गमोक्षमवाप्नुयात्
इत्यादिमहापुराणे आग्नेये दानादिमाहात्म्यकथनंनाम द्विसप्तत्यधिकद्विशततमोऽध्यायः।

———

# त्रिसप्तत्यधिकद्विशततमोऽध्यायः

## सूर्य्यवंशकीर्त्तनम् ।

अग्निरुवाच ।

सूर्य्यवंशं सोमवंशं राज्ञां वंशं वदामि ते । हरेर्ब्रह्मा पद्मगोभून् मरीचिर्ब्रह्मणः सुतः ॥

मरीचेः कश्यपस्तस्माद् विवश्वांस्तस्य पत्न्यपि ।

संज्ञा राज्ञी प्रभा तिस्रो राज्ञी रैवतपुत्रिका ॥ २ ॥

रैवन्तं सुषुवे पुत्रं प्रभातञ्च प्रभा रवेः । त्वाष्ट्री संज्ञा मनुं पुत्रं यमलौ यमुनां यमम् ॥

छाया संज्ञा च सावर्णि मनुं वैवस्वतं सुतम् ।

शनिञ्च तपतीं विष्टिं संज्ञायाञ्चाश्विनौ पुनः ॥ ४ ॥

मनोर्वैवस्वतस्यासन् पुत्रा वै न च तत्समाः । इक्ष्वाकुश्चैव नाभागो धृष्टः शर्य्यातिरेव च

नरिष्यन्तस्तथा प्रांशुर्नाभागादिष्टसत्तमाः । करुषश्च पृषध्रश्च अयोध्यायां महाबलाः ॥

कन्येला च मनोरासीद् बुधात् तस्यां पुरूरवाः ।

पुरूरवसमुत्पाद्य सेला सुद्युम्नतां गता ॥ ७

सुद्युम्नादुत्कलगयो वितताश्वस्त्रयो नृपाः । उत्कलस्योत्कलं राष्ट्रं विनताश्वस्य पश्चिमा

दिक् सर्वा राजवर्य्यस्य गयस्य तु गयापुरी । वशिष्ठवाक्यात् सुद्युम्नः प्रतिष्ठानमवापह

तत् पुरूरवसे प्रादात् सुदुम्नो राज्यमाप्य तु ।

नरिष्यतः शकाः पुत्रा नाभागस्य च वैष्णवः ।। १० ॥

अम्बरीषः प्रजापालो धार्ष्टकं धृष्टतः कुलम् । सुकल्पानर्त्तौ शर्य्यातेर्वैरोह्यनर्त्ततो नृपः

आनर्त्तविषयश्चासीत् पुरी चासीत् कुशस्थली ।

रैवस्य दैवतः पुत्रः ककुद्मी नामधार्मिकः ॥ १२ ॥

ज्येष्ठः पुत्रशतस्यासीद्राज्यं प्राप्य कुशस्थलीम् ।

सकन्यासहितः श्रुत्वा गान्धर्वं ब्रह्मणोऽन्तिके ॥ १३ ॥

मूहूर्त्तभूतं देवस्य मर्त्ये बहुयुगं गतम् । आजगाम जवेनाथ स्वां पुरीं यादवैर्वृताम् ॥
कृतां द्वारवतीं नाम बहुद्वारां मनोरमाम् । भोजवृष्ण्यन्धकैर्गुप्तां वासुदेवपुरोगमैः ॥
रैवतीं बलदेवाय ददौ ज्ञात्वाह्यनिन्दिताम् । तपः सुमेरुशिखरे तप्त्वा विष्णवालयंगतः

नाभागस्य च पुत्रौ द्वौ वैश्यौ ब्राह्मणतां गतौ ।
करूषस्य तु कारूषाः क्षत्रिया युद्धदुर्मदाः ॥ १७ ॥

शूद्रत्वञ्च पृषध्रोऽगाधिंसयित्वा गुरोश्च गाम् । मनुपुत्रादथेक्ष्वाकोर्विकुक्षिर्देवराड्भूत

विकुक्षेस्तु ककुत्स्थोऽभूत् तस्य पुत्रः सुयोधनः ।
तस्य पुत्रः पृथुर्नाम विश्वगश्वः पृथोः सुतः ॥ १९ ॥
आयुषस्तस्य च पुत्रोऽभूद् युवनाश्वस्तथा सुतः ।
युवनाश्वाच्च श्रावन्तः पूर्वेश्रावन्तिका पुरी ॥ २० ॥
श्रावन्ताद् बृहदश्वोभूत् कुवलाश्वस्ततो नृपः ।
धुन्धुमारत्वमगमद् धुन्धोर्नाम्ना च वै पुरा ॥ २१ ॥
धुन्धुमारास्त्रयो भूपा दृढाश्वो दण्ड एव च ।
कपिलोऽथ दृढाश्वात् तु हर्य्यश्व· प्रमोदकः ॥ २२ ॥
हर्य्यश्वाच्च निकुम्भोऽभूत् संहताश्वनिकुम्भतः ।
अकृशाश्वो रणाश्वश्च संहताश्वसुतावुभौ ॥ २३ ॥
युवनाश्वो रणाश्वस्य मान्धाता युवनाश्वतः ।
मान्धातुः पुरुकुत्सोभूत् मुचुकुन्दो द्वितीयकः ॥ २४ ॥

पुरुकुत्सादसस्युश्च सम्भूतो नर्मदाभवः । सम्भूतस्य सुधन्वाभूत् त्रिधन्वाथसुधन्वनः
त्रिधन्वनस्तु तरुणस्तस्य सत्यव्रतः सुतः । सत्यव्रतात् सत्यरथो हरिश्चन्द्रश्च तत्सुतः

हरिश्चन्द्राद्रोहिताश्वो रोहिताश्वाद् वृकोऽभवत् ।
वृकाद् बाहुश्च बाहोश्च सगरस्तस्य च प्रिया ॥ २७ ॥

प्रभा षष्टिसहस्राणां सुतानां जननी ह्यऽभूत् । तुष्टादौर्वान् नृपादेकं भानुमत्यसमञ्जसम्

खनन्तः पृथिवीं दग्धा विष्णुना बहुसागराः ।

अस्मञ्जसोऽशुमांश्च दिलीपोऽशुमतोऽभवत् ॥ २९ ॥
भगीरथो दिलीपात् तु येन गङ्गावतारिता । भगीरथात् तु नाभागो नाभागदम्बरीषकः
सिन्धुद्वीपोऽम्बरीषात् तु श्रुतायुस्तत्सुतः स्मृतः ।
श्रुतायोर्ऋतपर्णोऽभूत् तस्य कल्माषपादकः ॥ ३१ ॥
कल्माषाङ्घ्रेः सर्वकर्मा ह्यनरण्यस्ततोऽभवत् । अनरण्यात् तु निघ्नोऽथ अनमित्रस्ततोरघुः
रघोरभूद् दिलीपस्तु दिलीपाच्चाप्यजो नृपः ।
दीर्घबाहुरजात् कालस्त्वजापालस्ततोऽभवत् ॥ ३३ ॥
तथा दशरथो जातस्तस्य पुत्रचतुष्टयम् । नारायणात्मकाः सर्वे रामस्तस्याग्रजोऽभवत्
रावणान्तकरो राजा ह्ययोध्यायां रघूत्तमः । वाल्मीकिर्यस्य चरितं चक्रे तन्नारदश्रवात्
रामपुत्रौ कुशलवौ सीतायां कुलवर्धनौ । अतिथिश्च कुशाज्जज्ञे निषधस्तस्य चात्मजः
निषधात् तु नलो जज्ञे नभोऽजायत वै नलात् ।
नभसः पुण्डरीकोऽभूत् सुधन्वा च ततोऽभवत् ॥ ३७ ॥
सुधन्वनो देवानीको ह्यहीनाश्वश्च तत्सुतः ।
अहीनाश्वात् सहस्राश्वश्चन्द्रालोकस्ततोऽभवत् ॥ ३८ ॥
चन्द्रावलोकतस्तारापीडोऽस्माच्चन्द्रपर्वतः । चन्द्रगिरेर्भानुरथः श्रुतायुस्तस्य चात्मजः
इक्ष्वाकुवंशप्रभवाः सूर्य्यवंशधराः स्मृताः ॥ ३९ ॥

इत्यादिमहापुराणेआग्नेयेसूर्य्यवंशकीर्त्तनकथनंनामत्रिसप्तत्यधिकद्विशततमोऽध्यायः ।

---

## चतुःसप्तत्यधिकद्विशततमोऽध्यायः

### सोमवंशवर्णनम् ।

अग्निरुवाच ।

सोमवंशं प्रवक्ष्यामि पठितं पापनाशनम् । विष्णुनाभ्यब्जजो ब्रह्मा ब्रह्मपुत्रोऽत्रिरत्रितः ॥

सोमश्चक्रे राजसूयं त्रैलोक्यं दक्षिणां ददौ । समाप्तेऽवभृथे सोमं तद्रूपालोकनेच्छवः
कामवाणाभितप्ताङ्ग्यो नरदेव्यः सिषेविरे ।
लक्ष्मीर्नारायणं त्यक्त्वा सिनीवाली च कर्दमम् ॥ ३ ॥
द्युतिं विभावसुं त्यक्त्वा पुष्टिर्धातारमव्ययम् ।
प्रभा प्रभाकरं त्यक्त्वा हविष्मन्तं कुहुः स्वयम् ॥ ४ ॥
कीर्त्तिर्जयन्तं भर्त्तारं वसुर्मारीच् कश्यपम् ।
धृतिस्त्यक्त्वा पतिं नन्दीं सोममेवाभजत् तदा ॥ ५ ॥
स्वकीया इव सोमोऽपि कामयामास तास्तदा । एवं कृतापचारस्य तासां भर्तृगणस्तदा
न शशाकापचाराय शापैः शस्त्रादिभिः पुनः । सप्तलोकैकनाथत्वमवाप्तस्तपसा ह्युत ॥
विबभ्राम मतिस्तस्य विनयादनया हता ।
वृहस्पतेः स वै भार्य्यां तारां नाम यशश्विनीम् ॥ ८ ॥
जहार तरसा सोमो ह्यवन्याङ्गिरःसुतम् । ततस्तद्युद्धमभवत् प्रख्यातं तारकामयम् ॥
देवानां दानवानाञ्च लोकक्षयकरं महत् । ब्रह्मा निवार्य्योशनसं तारामङ्गिरसे ददौ ॥
तामन्तःप्रसवां दृष्ट्वा गर्भं त्यज्याब्रवीद् गुरुः ।
गर्भस्त्यक्तः प्रदीप्तोऽथ प्राहाहं सोमसम्भवः ॥ ११ ॥
एवं सोमाद् वुधः पुत्रः पुत्रस्तस्य पुरूरवाः ।
स्वर्गं त्यक्त्वोर्वशी सा तं वरयामास चाप्सराः ॥ १२ ॥
तया सहावरद्राजा दशवर्षाणि पञ्च च । पञ्च षट् सप्त चाष्टौ च दश चाष्टौ महामुने!
एकोऽग्निरभवत् पूर्वं तेन त्रेता प्रवर्त्तिता । पुरूरवा योगशीलो गन्धर्वलोकमीयिवान्
आयुर्दृढ़ायुरश्वायुर्धनायुर्धृतिमान् वसुः । दिविजातः शतायुश्च सुषुवे चोर्वशी नृपान्
आयुषो नहुषः पुत्रो वृद्धशर्मा रजिस्तथा ।
दर्भो विपाप्मा पञ्चाग्न्यं रजेः पुत्रशतं ह्यभूत् ॥ १६ ॥
राजेया इति विख्याता विष्णुदत्तवरो रजिः । देवासुरे रणे दैत्यानवधीत् सुरयाचितः
गतायेन्द्राय पुत्रत्वं दत्त्वा राज्यं दिवं गतः । रजेः पुत्रैर्हृतं राज्यं शक्रस्याथ सुदुर्मतः

ग्रहशान्त्यादि विधिना गुरुरिन्द्राय तद् ददौ। मोहयित्वा रजिसुतानासंस्ते निजधर्मगाः
नहुषस्य सुताः सप्त यतिर्य्ययातिरुत्तमः। उद्धवः पञ्चकश्चैव शर्य्यातिमेघपालकौ ॥२०॥

यतिः कुमारभावेऽपि विष्णुं ध्यात्वा हरिं गतः।
देवयानि शुक्रकन्या ययातेः पत्न्यऽभूत् तदा ॥ २१ ॥

वृषपर्वजा शर्मिष्ठा ययातेः पञ्च तत्सुताः। यदुश्च तुर्वसुश्चैव देवयानी व्यजायत ॥२२॥
द्रुह्युश्चानूश्च पूरुश्च शर्मिष्ठा वार्षपर्वणी। यदुः पूरुश्चाभवतां तेषां वंशविवर्धनौ ॥ २३ ॥

इत्यादिमहापुराणेआग्नेयेसोमवंशवर्णनंनामचतुःसप्तत्यधिकद्विशततमोऽध्यायः।

---

# पञ्चसप्तत्यधिकद्विशततमोऽध्यायः

## यदुवंशवर्णनम् ।

अग्निरुवाच।

यदोरासन् पञ्च पुत्रा ज्येष्ठस्तेषु सहस्रजित्।
नीलाञ्जिको रघुः क्रोष्टुः शतजिच्च सहस्रजित् ॥ १ ॥

शतजिद्धैहयो रेणुहयो हय इति त्रयः। धर्मनेत्रो हैहयस्य धर्मनेत्रस्य संहनः ॥ २ ॥

महिमा संहनस्यासीन् महिम्नो भद्रसेनकः।
भद्रसेनाद् दुर्गमोऽभूद् दुर्गमात् कनकोऽभवत् ॥ ३ ॥

कनकात् कृतवीर्य्यस्तु कृताग्निः करवीरकः।
कृतौजाश्च चतुर्थोऽभूत् कृतवीर्य्यात् तु सोऽर्जुनः ॥ ४ ॥

दत्तोऽर्जुनाय तपते सप्तद्वीपमहीशताम्। ददौ बाहुसहस्रञ्च अजेयत्वं रणेऽरिणा ॥
अधर्मे वर्तमानस्य विष्णुहस्तान् मृतिध्रुवा। दश यज्ञसहस्राणि सोऽर्जुनः कृतवान् नृपः

अनष्टद्रव्यता राष्ट्रे तस्य संस्मरणादभूत्।
न न्यूनं कार्त्तवीर्य्यस्य गतिं यास्यन्ति वै नृपाः ॥ ७ ॥

यज्ञैर्दानैस्तपोभिश्च विक्रमेण श्रुतेन च। कार्त्तवीर्य्यस्य च शतं पुत्राणां पञ्च वै पराः
सूरसेनश्च सूरश्च धृष्टोक्तः कृष्ण एव च। जयध्वजश्च नामासीदावन्त्यो नृपतिर्महान्॥

जयध्वजात् तालजङ्घस्तालजङ्घात् ततः सुताः।
हैहयानां कुलाः पञ्च भोजाश्चावन्तयस्तथा॥ १०॥
वीतिहोत्राः स्वयं जाताः शौण्डिकेयास्तथैव च।
वीतिहोत्रोदनन्तोऽभूदनन्ताद् दुर्जयो नृपः॥ ११॥
क्रोष्टोर्वंशं प्रवक्ष्यामि यत्र जातो हरिः स्वयम्।
क्रोष्टोस्तु वृजिनीवांश्च स्वाहाऽभूद् वृजिनीवतः॥ १२॥

स्वाहापुत्रो रुषद्गुश्च तस्य चित्ररथः सुतः। शशविन्दुश्चित्ररथाच्चक्रवर्त्ती हरौ रतः॥
शशविन्दोश्च पुत्राणां शतानामभवच्छतम्। धीमतां चारुरूपाणां भूरिद्रविणतेजसाम्
पृथुश्रवाः प्रधानोऽभूत् तस्य पुत्रः सुयज्ञकः। सुयज्ञस्योशनाः पुत्रस्तितिक्षुरुशनः सुतः

तितिक्षोस्तु मरुत्तोऽभूत् तस्मात् कम्बलबर्हिषः।
पञ्चाशद्रुक्मकवचाद्रुक्मेषुः पृथुरुक्मकः॥ १६॥
हविर्ज्यामघः पापघ्नो ज्यामघः स्त्रीजितोऽभवत्।
सैव्यायां ज्यामघादासीद् विदर्भस्तस्य कौशिकः॥ १७॥
लोमपादः क्रथः श्रेष्ठात् कृतिः स्याल्लोमपादतः।
कौशिकस्य चिदिः पुत्रस्तस्माच्चैद्या नृपाः स्मृताः॥ १८॥

क्रथाद्विदर्भपुत्राच्च कुन्तिः कुन्तेस्तु धृष्टकः। धृष्टस्य निधृतिस्तस्य उदर्काख्यो विदूरथः
दशार्हपुत्रो व्योमस्तु व्योमाज्जीमूत उच्यते। जीमूतपुत्रो विकलस्तस्य भीमरथः सुतः
भीमरथान् नवरथस्ततो दृढरथोऽभवत्। शकुन्तिश्च दृढरथात् शकुन्तेश्च करम्भकः
करम्भाद् देवरातोऽभूत् देवक्षेत्रश्च तत्सुतः। देवक्षेत्रान् मधुर्नाम् मधोर्द्रवरसोऽभवत्

द्रवरसात् पुरुहूतोऽभूज्जन्तुरासीत् तु तत्सुतः।
गुणी तु यादवो राजा जन्तुपुत्रस्तु सात्वतः॥ २३॥

सात्त्वताद् भजमानस्तु वृष्णिरन्धक एव च। देवावृधश्च चत्वारस्तेषां वंशास्तु विश्रुताः

भजमानस्य बाह्योऽभूद् वृष्टिः क्रमिर्निमिस्तथा ।
देवावृधाद् बभ्रुरासीत् तस्य श्लोकोऽत्र गीयते ॥ २५ ॥
यथैव शृणुमो दूरात् गुणांस्तद्वत् समन्तिकात् ॥
बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः ॥ २६ ॥

चत्वारश्च सुता बभ्रोर्वासुदेवपरा नृपाः । कुहुरो भजमानस्तु शिनिः कम्बलबर्हिषः

कुहुरस्य सुतो धृष्णुर्धृष्णोस्तु तनयो धृतिः ।
धृतेः कपोतरोमाभूत् तस्य पुत्रस्तु तित्तिरिः ॥ २८ ॥

तित्तिरेस्तु नरः पुत्रस्तस्य चन्दनदुन्दुभिः । पुनर्वसुस्तस्य पुत्र आहुकश्चाहुकीसुतः ॥
आहुकाद् देवको जज्ञे उग्रसेनस्ततोऽभवत् । देववानुपदेवश्च देवकस्य सुताः स्मृताः
तेषां स्वसारः सप्तासन् वसुदेवाय ता ददौ । देवकी श्रुतदेवी च मित्रदेवी यशोधरा ॥
श्रीदेवी सत्यदेवी च सुरापी चेति सप्तमी । नवोग्रसेनस्य सुताः कंसस्तेषाञ्च पूर्वजः
न्यग्रोधश्च सुनामा च कङ्कः शङ्कुश्च भूमिपः । सुतनूराष्ट्रपालश्च युद्धमुष्टिः सुमुष्टिकः ॥
भजमानस्य पुत्रोऽथ रथमुख्यो विदूरथः । राजाधिदेवः शूरश्च विदूरथसुतोऽभवत् ॥

राजाधिदेवपुत्रौ द्वौ शोणाश्वः श्वेतवाहनः ।
शोणास्वस्य सुताः पञ्च शमी शत्रुजिदादयः ॥ ३५ ॥

शमीपुत्रः प्रतिक्षेत्रः प्रतिक्षेत्रस्य भोजकः । भोजस्य हृदिकः पुत्रो हृदिकस्य दशात्मजाः
कृतवर्मा शतधन्वा देवार्हो भीषणादयः । देवार्हात् कम्बलबर्हिरसमौजास्ततोऽभवत् ॥
सुदंष्ट्रश्च सुवासश्च धृष्टोऽभूदसमौजसः । गान्धारी चैव माद्री च धृष्टभार्य्ये बभूवतुः

सुमित्रोऽभूच्च गान्धार्य्यां माद्री जज्ञे युधाजितम् ।
अनमित्रः शिनिर्धृष्टात् ततो वै देवमीढुषः ॥ ३९ ॥
अनमित्रसुतो निघ्नो निघ्नस्यापि प्रसेनकः ।
सत्राजितः प्रसेनोऽथ मणिं सूर्य्यात् स्यमन्तकम् ॥ ४० ॥
प्राप्यारण्ये चरन्तन्तु सिंहो हत्वाग्रहीन् मणिम् ।
हतो जाम्बवतासिंहो जाम्बवान् हरिणा जितः ॥ ४१ ॥

तस्मान् मणिं जाम्बवतीं प्राप्यागाद् द्वारकां पुरीम् ।
सत्राजिताय प्रददौ शतधन्वा जघान तम् ॥ ४२ ॥
हत्वा शतधनुं कृष्णो मणिमादाय कीर्त्तिभाक् ।
वलयादवमुख्याग्रे अक्रूरान् मणिमर्पयेत् ॥ ४३ ॥
मिथ्याभिशस्तिं कृष्णस्य त्यक्त्वा स्वर्गी च सम्पठन् ।
सत्राजितो भङ्गकारः सत्यभामा हरिः प्रिया ॥ ४४ ॥
अनमित्राच्छिनिर्जज्ञे सत्यकस्तु शिनेः सुतः ।
सत्यकात् सात्यकिर्जज्ञे युयुधानाद् धुनिर्ह्यभूत् ॥ ४५ ॥
धुनेर्युगन्धरः पुत्रः स्वाह्योऽभूत् स युधाजितः ।
ऋषभक्षेत्रको तस्य ह्यृषभाच्च स्वफल्ककः ॥ ४६ ॥
स्वफल्कपुत्रो ह्यक्रूरः अक्रूराच्च सुधन्वकः ।
शूरात् तु वसुदेवाद्याः पृथा पाण्डोः प्रियाऽभवत् ॥ ४७ ॥
धर्माद् युधिष्ठिरः पाण्डोर्वायोः कुन्त्यां वृकोदरः ।
इन्द्राद् धनंज्जयो माद्र्यां नकुलः सहदेवकः ॥ ४८ ॥
वसुदेवाच्च रोहिण्यां रामः सारणदुर्गमौ । वसुदेवाच्च देवक्यामादौ जातः सुसेनकः
कीर्त्तिमान् भद्रसेनश्च जारुख्यो विष्णुदासकः ।
भद्रदेहः कंश एतान् षड्गर्भान् निजघान ह ॥ ५० ॥
ततो बलस्ततः कृष्णः सुभद्रा भद्रभाषिणी ।
चारुदेष्णश्च शाम्बाद्याः कृष्णाज्जाम्बवतीसुताः ॥ ५१ ॥
इत्यादिमहापुराणेआग्नेयेयदुवंशवर्णनंनामपञ्चसप्तत्यधिकद्विशततमोऽध्यायः ।

———

# षट्सप्तत्यधिकद्विशततमोऽध्यायः

## द्वादशसंग्रामः ।

अग्निरुवाच ।

कश्यपो वसुदेवोऽभूद्‌ देवकी चादितिर्वरा ।
देवक्यां वसुदेवात् तु कृष्णोऽभूत् तपसान्वितः ॥ १ ॥
धर्मसंरक्षणार्थाय ह्यधर्महरणाय च । सुरादेः पालनार्थञ्च दैत्यादेर्मथनाय च ॥ २ ॥
रुक्मिणी सत्यभामा च सत्या नग्नजिती प्रिया ।
सत्यभामा हरेः सेव्या गान्धारी लक्ष्मणा तथा ॥ ३ ॥
मित्रविन्दा च कालिन्दी देवी जाम्बवती तथा ।
सुशीला च तथा माद्री कौशल्या विजया जया ॥ ४ ॥
एवमादीनि देवीनां सहस्राणि तु षोड़श ।
प्रद्युम्नाद्याश्च रुक्मिण्यां भीमाद्याः सत्यभामया ॥ ५ ॥
जाम्बवत्याञ्च शाम्बाद्याः कृष्णस्यासंस्तथापरे । शतं शतसहस्राणां पुत्राणां तस्य धीमतः
अशीतिश्च सहस्राणि यादवाः कृष्णरक्षिताः । प्रद्युम्नस्य तु वैदर्भ्यामनिरुद्धो रणप्रियः
अनिरुद्धस्य वज्राद्या यादवाः सुमहाबलाः ।
तिस्रः कोट्यो यादवानां षष्टिर्लक्षाणि दानवाः ॥ ८ ॥
मनुष्ये बाधका ये तु तन्नाशाय बभूव सः । कर्त्तुं कर्मव्यवस्थानं मनुष्यो जायते हरिः
देवासुराणां संग्रामादायार्थं द्वादशाभवन् । प्रथमो नारसिंहस्तु द्वितीयो वामनो रणः
संग्रामस्त्वथ वाराहश्चतुर्थोऽमृतमन्थनः । तारकामयसंग्रामः षष्ठो ह्याजीवको रणः ॥
त्रैपुरश्चान्धकवधो नवमो वृत्रघातकः । जितो हालाहलश्चाथ घोरः कोलाहलो रणः ॥
हिरण्यकशिपोश्चोरो विदार्य्य च नखैः पुरा । नारसिंहो देवपालः प्रह्लादं कृतवान् नृपम्
देवासुरे वामनश्च छलित्वा बलिमूर्जितम् । महेन्द्राय ददौ राज्यं काश्यपोऽदितिसम्भवः

वराहस्तु हिरण्याक्षं हत्वादेवानपालयत्। उज्जहार भुवं मग्नां देवदेवैरभिष्टुतः॥
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकीम्। सुरासुरैश्च मथितं देवेभ्यश्चामृतंददौ
तारकामयसंग्रामे तदा देवाश्च पालिताः।
निवार्य्यैन्द्रं गुरून् देवान् दानवान् सोमवंशकृत्॥ १७॥
विश्वामित्रवशिष्ठात्रिकवयश्च रणे सुरान्। अपालयन्ते निर्वार्य्य रागद्वेषादि दानवान्॥
पृथ्वीरथे ब्रह्मयन्तुरीशस्य शरणो हरिः। ददाह त्रिपुरं देवपालको दैत्यमर्दनः॥ १९॥
गौरीं जिहीर्षुणा रुद्रमन्धकेनार्दितं हरिः। अनुरक्तश्च रेवत्यां चक्रे चान्धासुरार्दनम्॥
अपां फेनमयो भूत्वा देवासुररणे हरन्। वृत्रं देवहरं विष्णुर्देवधर्मानपालयत्॥ २१॥
शाल्वादीन् दानवान् जित्वा हरिः परशुरामकः।
अपालयत् सुरादींश्च दुष्टक्षत्रं निहत्य च॥ २२॥
हालाहलं विषं दैत्यं निराकृत्य महेश्वरात्। भयं निर्णाशयामास देवानां मधुसूदनः॥
देवासुरे रणे यश्च दैत्यः कोलाहलो जितः।
पालिताश्च सुराः सर्वे विष्णुनाधर्मपालनात्॥ २४॥
राजानो राजपुत्राश्च मुनयो देवता हरिः। यदुक्तं यच्च नैवोक्तमवतारा हरेरिमे॥२५॥
इत्यादिमहापुराणेआग्नेयेद्वादशसंग्रामकथनंनामषट्सप्तत्यधिकद्विशततमोऽध्यायः।

---

## सप्तसप्तत्यधिकद्विशततमोऽध्यायः

### राजवंशवर्णनम्।

अग्निरुवाच।

तुर्वसोश्च सुतो वर्गो गोभानुस्तस्य चात्मजः।
गोभानोरासीत् त्रैशानिस्त्रैशानेस्तु करन्धमः॥ १॥
करन्धमान् मरुतोऽभूद् दुष्मन्तस्तस्य चात्मजः।

दुष्मन्तस्य वरूथोभूद् गाण्डीरस्तु वरूथतः ॥ २ ॥
गाण्डीराच्चैव गान्धारः पञ्च जानपदास्ततः ।
गान्धाराः केरलाश्चोरा पाण्ड्याः कोला महावलाः ॥ ३ ॥
द्रुह्यस्तु वभ्रुसेतुश्च वभ्रुसेतोः पुरोवसुः ।
ततो गान्धारा गान्धारैर्धर्मो धर्माद् घृतोऽभवत् ॥ ४ ॥

घृतात् तु विदुषस्तस्मात् प्रचेतास्तस्य वै शतम् । आनद्रश्च सभानरश्चाक्षुषः परमेषुकः
सभानरात् कालानलः कालानलजसृञ्जयः । पुरञ्जयः सृञ्जयस्य तत्पुत्रो जनमेजयः ॥
तत्पुत्रस्तुमहाशालस्तत्पुत्रोऽभून् महामनाः । तस्मादुशीनरोब्रह्मन् ! नृगायान्तुनृगस्ततः

नरायान्तु नरश्चासीत् कृमिस्तु कृमितः सुतः ।
दशायां सुव्रतौ जज्ञे दृशद्वत्यां शिविस्तथा ॥ ८ ॥

शिवेः पुत्रास्तु चत्वारः पृथुदर्भश्च वीरकः । कैकेयो भद्रकस्तेषां नाम्ना जनपदाःशुभाः
तितिक्षुरुशीनरजस्तितिक्षोश्च रुषद्रथः । रुषद्रथादभूत् पैलः पैलाच्च सुतपाः सुतः ॥

महायोगी वलिस्तस्मादङ्गा वङ्गश्च मुख्यकः ।
पुण्ड्रः कलिङ्गो वालेयो वलिर्योगी वलान्वितः ॥ ११ ॥
अङ्गाद् दधिवाहनोऽभूत् तस्माद् दिविरथो नृपः ।
दिविरथाद् धर्मरथस्तस्य चित्ररथः सुतः ॥ १२ ॥

चित्ररथात् सत्यरथो लोमपादश्च तत्सुतः । लोमपादाच्चतुरङ्गः पृथुलाक्षश्चतत्सुतः

पृथुलाक्षाच्च चम्पोभूच्चम्पाद्धर्य्यङ्गकोऽभवत् ।
हर्य्यङ्गाच्च भद्ररथो वृहत्कर्मा च तत् सुतः ॥ १४ ॥

तस्मादभूद् वृहद्भानुर्वृहद्भानोर्वृहात्मवान् । तस्माज् जयद्रथोह्यासीज् जयद्रथाद् वृहद्रथः

वृहद्रथाद् विश्वजिच्च कर्णो विश्वजितोऽभवत् ।

कर्णस्य वृषसेनस्तु पृथुसेनस्तदात्मजः । एतेऽङ्गवंशजा भूपाः पुरोर्वंशं निबोध मे ॥

इत्यादिमहापुराणेआग्नेयेराजवंशवर्णनंनामसप्तसप्तत्यधिकद्विशततमोऽध्यायः ।

———

# अष्टसप्तत्यधिकद्विशततमोऽध्यायः

## पुरुवंशवर्णनम् ।

### अग्निरुवाच ।

पुरोर्जनमेजयोऽभूत् प्राचीन्नन्तस्तु तत्सुतः ।
प्राचीन्नन्तान् मनस्युस्तु तस्माद्वीतमयो नृपः ॥ १ ॥
शुन्धुर्वीतमयाच्चाऽभूच्छुन्धोर्बहुविधः सुतः । बहुविधाच्चसंयातिरहोवादी च तत्सुतः
तस्य पुत्रोऽथ भद्राश्वो भद्राश्वस्य दशात्मजाः । ऋत्तेयुश्च कृषेयुश्च सन्नदेयुस्तथात्मजः
घृतेयुश्च चितेयुश्च स्थण्डिलेयुश्च सत्तमः । धर्मेयुः सन्नतेयुश्च कृतेयुर्मतिनारकः ॥
तं सुरोधः प्रतिरथः पुरस्तो मतिनारजाः ।
आसीत् प्रतिरथात् कण्वः कण्वान् मेधातिथिस्त्वभूत् ॥ ५ ॥
तं सुरोधाच्च चत्वारो दुष्मन्तोऽथ प्रवीरकः ।
सुमन्तश्चानयो वीरो दुष्मन्ताद् भरतोऽभवत् ॥ ६ ॥
शकुन्तलायान्तु वली यस्य नाम्ना तु भारताः । सुतेषु मातृकोपेन नष्टेषु भरतस्य व
ततोमरुद्भिरानीय पुत्रः स तु वृहस्पतेः ! संक्रामितो भरद्वाजः क्रतुभिर्वितथोऽभवत्
स चापि वितथः पुत्रान् जनयामास पञ्च वै । सुहोत्रश्च सुहोतारं गयं गर्भं तथैव च ।
कपिलश्च महात्मानं सुकेतुश्च सुतद्वयम् ।
कोशिकश्च गृत्सपतिं तथा गृत्सपतेः सुताः ॥ १० ॥
व्राह्मणाः क्षत्रियाः वैश्या काशे दीर्घतमाः सुताः ।
ततो धन्वन्तरिश्चासीत् तत्सुतोऽभूच्च केतुमान् ॥ ११ ॥
केतुमतो हेमरथो दिवोदास इतिश्रुतः । प्रतर्दनो दिवोदासाद् भर्गवत्सौ प्रतर्दनाव
वत्साद्नर्क आसीच्च अनर्कात् क्षेमकोऽभवत् ।
क्षेमकाद् वर्षकेतुश्च वर्षकेतोर्विभुः स्मृतः ॥ १३ ॥

विभोरानर्त्तः पुत्रोऽभूद्द विभोश्च सुकुमारकः ।
सुकुमारात् सत्यकेतुर्वत्सभूमिस्तु वत्सकात् ॥ १४ ॥

सुहोत्रस्य बृहत्पुत्रो बृहतस्तनयास्त्रयः । अजमीढो द्विमीढश्च पुरुमीढश्च वीर्य्यवान् ॥

अजमीढस्य केशिन्यां जज्ञे जह्नुः प्रतापवान् ।
जह्नोरभूदजकाश्वो वलाकाश्वस्तदात्मजः ॥ १६ ॥

वलाकाश्वस्य कुशिकः कुशिकात् गाधिरिन्द्रकः ।
गाधेः सत्यवती कन्या विश्वामित्रः सुतोत्तमः ॥ १७ ॥

देवरातः कतिमुखा विश्वामित्रस्य ते सुताः ।
शुनःशेफोऽष्टकश्चान्यो ह्यजमीढ़ात् सुतोऽभवत् ॥ १८ ॥

नीलिन्यां शान्तिरपरः पुरुजातिः सुशान्तितः ।
पुरुजातेस्तु वाह्याश्वो वाह्याश्वात् पञ्च पार्थिवाः ॥ १९ ॥

मुकुलः सृञ्जयश्चैव राजा बृहदिषुस्तथा । यवीनरश्च कृमिलः पाञ्चाला इति विश्रताः ।

मुकुलस्य तु मौकुल्याः क्षेत्रोपेता द्विजातयः ।
चञ्चाश्वो मुकुलाज् जज्ञे चञ्चश्वान्मिथुनं ह्यभूत् ॥ २१ ॥

दिवोदास ह्यहल्या च अहल्यायां शरद्वतात् । शतानन्दः शतानन्दात् सत्यधृन् मिथुनं ततः
कृपः कृपी दिवोदासान् मैत्रेयः सोमपस्ततः । सृञ्जयात् पञ्चधनुषः सोमदत्तश्च तत्सुतः

सहदेवः सोमदत्तात् सहदेवात् तु सोमकः ।
आसीच्च सोमकाज् जन्तुर्जन्तोश्च पृषतः सुतः ॥ २४ ॥

पृषताद् द्रुपदस्तस्माद् धृष्टद्युम्नोऽथ तत्सुतः । धृष्टकेतुश्च धूमिन्यामृक्षोऽभूदजमीढ़तः ॥
ऋक्षात् संवरणो जज्ञे कुरुः संवरणात् ततः । यः प्रयागादपाक्रम्य कुरुक्षेत्रञ्चकार ह

कुरोः सुधन्वा सुधनुःपरिक्षिच्चारिमेजयः ।
सुधन्वनः सुहोत्रोऽभूत् सुहोत्राच्च्यवनो ह्यभूत् ॥ २७ ॥

वशिष्ठपरिचाराभ्यां सप्तासन् गिरिकासुताः । बृहद्रथः कुशो वीरो यदुः प्रत्यग्रहोबलः

मत्स्यकाली कुशाग्रोऽत्तो ह्यासीद्राज्ञो बृहद्रथात् ।

कुशाग्राद् वृषभो जज्ञे तस्य सत्यहितः सुतः ॥ २६ ॥
सुधन्वा तत्सुतश्चोर्ज ऊर्जादासीच्च सम्भवः। सम्भवाच्च जरासन्धः सहदेवश्च तत्सुतः
सहदेवादुदापिश्च उदापेः श्रुतकर्मकः । परिक्षितस्य दायादो धार्मिकः जनमेजयः॥
जनमेजयात् त्रसदस्युर्जह्नोस्तु सुरथः सुतः । श्रुतसेनोग्रसेनौ च भीमसेनश्च नामतः॥

जनमेजयस्य पुत्रौ तु सुरथो महिमांस्तथा ।
सुरथाद् विदूरथोऽभूद्दृक्ष आसीद् विदूरथात् ॥ ३३ ॥
ऋक्षस्य तु द्वितीयस्य भीमसेनोऽभवत् सुतः ।
प्रतीपो भीमसेनात् तु प्रतीपस्य तु शान्तनुः ॥ ३४ ॥
देवापिर्वाह्लिकश्चैव सोमदत्तस्तु शान्तनोः ।
वाह्लिकात् सोमदत्तोऽभूद् भूरिर्भूरिस्रवाः शलः ॥ ३५ ॥
गङ्गायां शान्तनोर्भीष्मः काल्यायां विचित्रवीर्य्यकः ।
कृष्णद्वैपायनश्चैव क्षेत्रे वैचित्रवीर्य्यके ॥ ३६ ॥

धृतराष्ट्रश्च पाण्डुश्च विदुरश्चाप्यजीजनत् । पाण्डोर्युधिष्ठिरः कुन्त्यां भीमश्चैवार्जुनस्त्रयः
नकुलः सहदेवश्च पाण्डोर्माद्र्याश्च दैवतः । अर्जुनस्य च सौभद्रः परिक्षिदभिमन्युतः॥

द्रौपदी पाण्डवानाञ्च प्रिया तस्यां युधिष्ठिरात् ।
प्रतिविन्ध्यो भीमसेनाच् श्रुतकीर्त्तिर्धनञ्जयात् ॥ ३९ ॥
सहदेवात् श्रुतकर्मा शतानीकस्तु नाकुलिः ।
भीमसेनाद्धिड़म्बायामन्य आसीद् घटोत्कच ॥ ४० ॥
एते भूता भविष्याश्च नृपाः संख्या न विद्यते ।
गताः कालेन कालो हि हरिस्तं पूजयेद् द्विज ! ।
होममग्नौ समुद्दिश्य कुरु सर्वप्रदं यतः ॥ ४१ ॥

इत्यादिमहापुराणेआग्नेयेपुरुवंशवर्णनंनामाष्टसप्तत्यधिकद्विशततमोऽध्यायः ।

———

# ऊनाशीत्यधिकद्विशततमोऽध्यायः

## सिद्धौषधानि ।

अग्निरुवाच ।

आयुर्वेदं प्रवक्ष्यामि सुश्रुताय यमब्रवीत् । देवो धन्वन्तरिः सारं मृतसञ्जीवनीकरम् ॥

सुश्रुत उवाच ।

आयुर्वेदं मम ब्रूहि नराश्वेभरुगर्दनम् । सिद्धयोगान् सिद्धमन्त्रान् मृतसञ्जीवनीकरान्

धन्वन्तरिरुवाच ।

रक्षन् वलं हि ज्वरितं लङ्घितं भोजयेद्भिषक् ।
सविश्वं लाजमण्डन्तु तृड्ज्वरान्तं श्रृतं जलम् ॥ ३ ॥

मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः । षड़हे च व्यतिक्रान्ते तिक्तकं पाययेद् ध्रुवम् ॥
स्नेहयेत् त्यक्तदोषन्तु ततस्तञ्च विरेचयेत् । जीर्णाः षष्टिकनीवार रक्तशालिप्रमोदकाः

तद्विधास्ते ज्वरैष्विष्टा यवानां विकृतिस्तथा ।
मुद्गा मसूराश्चणकाः कुलत्थाश्च सकुष्ठकाः ॥ ६ ॥

आढ़क्यो नारकाद्याश्च कर्कोटककटोल्वकम् । पटोलं सफलं निम्बं पर्पटं दाड़िमं ज्वरे
अधोगे वमनं शस्तमूर्ध्वगे च विरेचनम् । रक्तपित्ते तथापानं षडङ्गं शुण्ठिवर्जितम् ॥
शक्तुगोधूमलाजाश्च यवशालिमसूरकाः । सकुष्ठचणका मुद्गा भक्ष्या गोधूमका हिताः

साधिता घृतदुग्धाभ्यां क्षौद्रं वृषरसो मधु ।
अतीसारे पुराणानां शालीनां भक्षणं हितम् ॥ १० ॥

अनभिष्यन्दि यच्चान्नं लोध्रवल्कलसंयुतम् । मारुतं वर्जयेद् यत्नः कार्य्यो गुल्मेषुसर्वथा

वाट्यं क्षीरेण चाश्नीयाद् वास्तूकं घृतसाधितम् ।
गोधूमशालयस्तिक्ता हिता जठरिणामथ ॥ १२ ॥

गोधूमशालयो मुद्गा ब्रह्मर्क्षखदिरोऽभया । पञ्चकोलं जाङ्गलाश्च निम्बधात्र्यः पटोलकाः

मातुलुङ्गरसाजातिशुष्कमूलकसैन्धवाः। कुष्ठिनाञ्च तथा शस्तं पानार्थे खदिरोदकम्
मसूरमुद्गौ पेयार्थे भोज्या जीर्णाश्च शालयः। निम्बपर्पटकैः शाकैर्जाङ्गलानां तथा रसः
विरङ्गं मरिचं मुस्तं कुष्ठं लोध्रं सुवर्चिका। मनः शिला च बालेयः कुष्ठहा मूत्रपेषितः
अपूपकुष्ठकुल्माष यवाद्या मेहिनां हिताः। यवान्नविकृतिर्मुद्गा कुलत्था जीर्णशालयः॥

तिक्तरुक्षाणि शाकानि तिक्तानि हरितानि च।
तैलानि तिलशिग्रुक विभीतकेङ्गुदानि च॥ १८॥
मुद्गाः सयवगोधूमा धान्यं वर्षस्थितञ्च यत्।
जाङ्गलस्य रसः शस्तो भोजने राजयक्ष्मिणाम्॥ १९॥

कौलत्थमौद्गको रास्नाशुष्कमूलकजाङ्गलैः। पूपैर्वा विस्किरैःसिद्धैर्दधिदाड़िमसाधितैः
मातुलुङ्गरसक्षौद्रद्राक्षाव्योषादिसंस्कृतैः। यवगोधूमशाल्यन्नैर्भोजयेच्छ्वासकासिनम्
दशमूलवलारास्नाकुलत्थैरुपसाधिताः। पेयाः पूपरसाः क्वाथाः श्वासहिक्कानिवारणाः
शुष्कमूलककौलत्थमूलजाङ्गलजैरसैः। यवगोधूमशाल्यन्नं जीर्णं सोशीरमाचरेत्॥

शोथवान् सगुड़ां पथ्यां खादेद् वा गुड़नागरम्।
तक्रञ्च चित्रकञ्चोभौ ग्रहणीरोगनाशनौ॥ २४॥

पुराणयवगोधूम शालयो जाङ्गलो रसः। मुद्गामलकखर्जूरमृद्वीकावदराणि च॥ २५॥
मधु सर्पिः पयः शक्रं निम्बपर्पटकौ वृषम्। तक्रारिष्टाश्च शस्यन्ते सततं वातरोगिणाम्

हृद्रोगिणो विरेच्यास्तु पिप्पल्यो हिक्किनां हिताः।
तक्रावलालसिन्धूनि मुक्तानि शिशिराम्भसा॥ २७॥
मुक्ताः सौवर्चलाजादि मद्यं शस्तं मदात्यये।
सक्षौद्रपयसा लाक्षां पिवेच्च क्षतवान् नरः॥ २८॥

क्षयं मांसरसाहारो वह्निसंरक्षणाज्जयेत्। शालयो भोजने रक्ता नीवारकलमादयः॥

यवान्न विकृतिर्मांसं शाकं सौवर्चलं शटी।
पथ्या तथैवार्शसां यन मंण्डं तक्रञ्च वारिणा॥ ३०॥

मुस्ताभ्यासस्तथा लेपश्चित्रकेण हरिद्रया। यवान्नविकृतिः शालिर्वास्तूकं ससुवर्चलम्

त्रपुषवारुगोधूमाः क्षीरैक्षुघृतसंयुताः। मूत्रकृच्छ्रे च शस्ताः स्युः पाने मण्डसुरादयः

लाजाः शक्तुस्तथा क्षौद्रं शून्यं मांसंपरूषकम्।
वार्त्ताकुलावशिखिनश्छर्दिघ्नः पानकानि च ॥ ३३ ॥
शाल्यन्नं तोयपयसी केवलोष्णे शृतेऽपि वा।
तृष्णाघ्ने मुस्तगुड़योर्गुटिका वा मुखे धृता ॥ ३४ ॥

यवान्नविकृतिः पूपं शुष्कमूलकजं तथा। शाकं पटोलवेत्राग्रमुरुस्तम्भ विनाशनम् ॥
मुद्गाढ़कमसूराणां सतिलैर्जाङ्गलैरसैः। ससैन्धवघृतद्राक्षासुण्ठ्यामलककोलजैः ॥३६॥
यूषैः पुराणगोधूमयवशाल्यन्नमभ्यसेत्। विसर्पी ससिताक्षौद्रमृद्वीकादाड़िमोदकम् ॥
रक्तयष्टिकगोधूमयवमुद्गादिकं लघु। काकमारी च वेत्राग्रं वास्तुकञ्च सुवर्चला ॥३८॥
वातशोणितनाशाय तोयं शस्तं सितं मधु। नासारोगेषु च हितं घृतं दूर्वाप्रसाधितम्
भृङ्गराजरसे सिद्धं तैलं धात्रीरसेऽपि वा। नश्यं सर्वामयेष्विष्टं मूर्ध्वजं तृद्भवेषु च ॥

शीततोयान्नपानञ्च तिलानां विप्र ! भक्षणम्।
द्विजदार्ढ्यकरं प्रोक्तं तथा तुष्टिकरं परम् ॥ ४१ ॥

गण्डूषं तिलतैलेन द्विजदार्ढ्यकरं परम्। विडङ्गचूर्णं गोमूत्रं सर्वत्र कृमिनाशने ॥ ४२ ॥

धात्रीफलान्यथाज्याञ्च शिरोलेपनमुत्तमम्।
शिरोरोगविनाशाय स्निग्धमुष्णञ्च भोजनम् ॥ ४३ ॥

तैलं वा वस्तमूत्रञ्च कर्णपूरणमुत्तमम्। कर्णशूलविनाशाय सर्वशुक्तानि वा द्विज ! ॥

गिरिमृच्चन्दनं लाक्षा मालती कलिता तथा।
संयोज्या या कृता वर्त्तिः क्षतशुक्रहरी तु सा ॥ ४५ ॥

व्योषं त्रिफलया युक्तं तुच्छकञ्च तथा जलम्। सर्वाक्षिरोगशमनं तथा चैव रसाञ्जनम्
आज्यभृष्टं शिलापिष्टं लोध्रकाञ्जिकसैन्धवैः। आश्च्योतनाविनाशाय सर्वनेत्रामये हितम्
गिरिमृच्चन्दनैर्लेपो वहिर्नेत्रस्य शस्यते। नेत्रामयविघातार्थं त्रिफलां शीलयेत् सदा॥

रात्रौ तु मधुसर्पिर्भ्यां दीर्घमायुर्जिजीविषुः !
शतावरीरसे सिद्धौ वृष्यौ क्षीर घृतौ स्मृतौ ॥ ४६ ॥

कलम्बिकानि माषाश्च वृष्यौ क्षीरघृतौ तथा ।
आयुष्या त्रिफला ज्ञेया पूर्ववन् मधुकान्विता ॥ ५० ॥
मधुकादिरसोपेता वलीपलितनाशिनी । वचासिद्धघृतं विप्र ! भूतदोषविनाशनम् ॥
कव्यं बुद्धिप्रदश्चैव तथा सर्वार्थसाधनम् । बलाकल्ककषायेण सिद्धमभ्यञ्जने हितम् ॥
रास्नासहचरैर्वापि तैलं वातविकारिणाम् ।
अनभिष्यन्दि यच्चान्नं तद् व्रणेषु प्रशस्यते ॥ ५३ ॥
शक्तुपिण्डी तथैवाम्ला पाचनाय प्रशस्यते । पक्वस्य च तथा भेदे निम्बचूर्णञ्च रोपणे
तथा शूच्युपचारश्च बलिकर्म विशेषतः । सूतिका च तथा रक्षा प्राणिनान्तु सदा हिता
भक्षणं निम्बपत्राणां सर्पदष्टस्य भेषजम् ।
तालनिम्बदलं केश्यं जीर्णं तैलं यवाघृतम् ॥ ५६ ॥
धूपो वृश्चिकदष्टस्य शिखिपत्रघृतेन वा । अर्कक्षीरेण संपिष्टं लोपा वीजं पलाशजम् ॥
वृश्चिकार्त्तस्य कृष्णा वा शिवा च फलसंयुता ।
अर्कक्षीरं तिलं तैलं पललञ्च गुडं समम् ॥ ५८ ॥
पानाज्जयति दुर्वारं श्वविषं शीघ्रमेव तु ।
पीत्वा मूलं त्रिवृत्तुल्यं तण्डुलीयस्य सर्पिषा ॥ ५९ ॥
सर्पकीटविषाण्याशु जयत्यतिबलान्यपि । चन्दनं पद्मकं कुष्ठं लताम्बूशीरपाटलाः ॥
निर्गुण्डी शारिवा सेलुर्लूताविषहरो गदः । शिरोविरेचनं शस्तं गुड़नागरकं द्विज !
स्नेहपाने तथा वस्तौ तैलं घृतमनुत्तमम् । स्वेदनीयः परो वह्निः शीताम्भःस्तम्भनं परम्
त्रिवृद्धि रेचने श्रेष्ठा वमने मदनं तथा । वस्तिर्विरेको वमनं तैलं सर्पिस्तथा मधु ।
वातपित्तबलाशानां क्रमेण परमौषधम् ॥ ६३ ॥
इत्यादिमहापुराणेआग्नयेसिद्धौषधादिकथनंनामोनशीत्यधिकद्विशततमोऽध्यायः ।

---

# अशीत्यधिकद्विशततमोऽध्यायः

## सर्वरोगहराण्यौषधानि।

धन्वन्तरिरुवाच।

शारीरमानसागन्तु सहजा व्याधयो मताः।
शारीरा ज्वरकुष्ठाद्याः क्रोधाद्या मानसा मताः॥ १॥

आगन्तवो विघातोत्था सहजाः क्षुज्जरादयः। शरीरागन्तुनाशाय सूर्य्यवारे घृतं गुड़म्

लवणं सहिरण्यञ्च विप्रायापूपमर्पयेत्।
चन्द्रे चाभ्यङ्गदो विप्रे सर्वरोगैः प्रमुच्यते॥ ३॥

तैलं शनैश्चरे दद्यादाश्विने गोरसान्नदः। घृतेन पयसा लिङ्गं संस्नाप्यस्याद्रुगुज्झितः

गायत्र्या हावयेद् वह्नौ दूर्वां त्रिमधुराप्लुताम्।
यस्मिन् भे व्याधिमाप्नोति तस्मिन् स्नानं बलिः शुभे॥ ५॥

मनसानां रुजादीनां विष्णोः स्तोत्रं हरं भवेत्।
वातपित्तकफा दोषा धातवश्च तथा शृणु॥ ६॥

भुक्तं पक्वाशयादन्नं द्विधा याति च सुश्रुत!। अंशनैकेन किट्टत्वं रसताञ्चापरेण च॥

किट्टभागो मलस्तत्र विण्मूत्रस्वेददूषिकाः। नासामलं कर्णमलं तथा देहमलञ्चयत्॥

रसभागाद्रसस्तत्र समाच्छोणिततां व्रजेत्।
मांसं रक्तात् ततो मेदो मेदसोऽस्थनश्च सम्भवः॥ ६॥

अस्थ्नो मज्जा ततः शुक्रं शुक्रादागस्तथौजसः।
देशमार्त्ति बलं शक्तिं कालं प्रकृतिमेव च॥ १०॥

ज्ञात्वा चिकित्सितं कुर्य्याद् भेषजस्य तथा बलम्।
तिथिं रिक्तान् त्यजेद् भौमं मन्दभं दारुणोग्रकम्॥ ११॥

हरिंगोद्विजचन्द्रार्कसुरादीन् प्रतिपूज्य च। शृणु मन्त्रमिमं विद्वन्! भेषजारम्भमाचरेत्

ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्काऽनिलानलाः । ऋषयश्चौषधिग्रामा भूतसङ्घाश्च पान्तु ते
रसायनमिवर्षीणां देवानाममृतं यथा । सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥१४॥
वातश्लेष्मातको देशो बहुवृक्षो बहूदकः । अनूप इति विख्यातो जाङ्गलस्तद्विवर्जितः

किञ्चिद्वृक्षोदको देवस्तथा साधारणः स्मृतः ।
जाङ्गलः पित्तबहुलो मध्यः साधारणः स्मृतः ॥ १६ ॥

रूक्षः शीतश्चलो वायुः पित्तमुष्णं कटुत्रयम् । स्थिराम्लस्निग्धमधुरं बलाशश्च प्रचक्षते
वृद्धिः समग्नैरेतेषां विपरीतैर्विपर्य्ययः । रसाः स्वादम्ललवणाः श्लेष्मला वायुनाशनाः
कटुतिक्तकषायाश्च वातलाः श्लेष्मनाशना । कट्वम्ललवणा ज्ञेयास्तथा पित्तविवर्धना
तिक्तस्वादुकषायाश्च तथा पित्तविनाशनाः । रसस्यैतद् गुणंनास्तिविपाकस्यैतदिष्यते

वीर्य्योष्णाः कफवातघ्नाः शीताः पित्तविनाशनाः ।
प्रभावतस्तथा कर्म ते कुर्वन्ति च सुश्रुत ! ॥ २१ ॥
शिशिरे च वसन्ते च निदाघे च तथा क्रमात् ।
चयप्रकोपप्रशमाः कफस्य तु प्रकीर्तिताः ॥ २२ ॥

निदाघवर्षारात्रौ च तथा शरदि सुश्रुत ! । चयप्रकोपप्रशमाः पवनस्य प्रकीर्तिताः॥
मेघकाले च शरदि हेमन्ते च यथाक्रमात् । चयप्रकोपप्रशमास्तथा पित्तस्य कीर्तिताः
वर्षादयो विसर्गास्तु हेमन्ताद्यास्तथा त्रयः । शिशिराद्यातथादानं ग्रीष्मान्ताऋतवस्त्रयः

सौम्यो विसर्गस्त्वादानमाग्नेयं परिकीर्तितम् ।
वर्षादींस्त्रीनृतून् सोमश्चरन् पर्य्यायशो रसान् ॥ २६ ॥

जनयत्यम्ललवणमधुरांस्त्रीन् यथाक्रमम् । शिशिरादीनृतूनर्कश्चरन् पर्य्यायशो रसान्

विवर्धयेत् तथा तिक्तकषायकटुकान् क्रमात् ।
यथा रजन्यो वर्धन्ते बलमेकं हि वर्धते ॥ २८ ॥

क्रमशोऽथ मनुष्याणां हीयमानासु हीयते । रात्रिभुक्तदिनानाञ्च वयसश्च तथैव च ।

आदिमध्यावसानेषु कफपित्तसमीरणाः ।
प्रकोपं यान्ति कोपादौ काले तेषाञ्चयः स्मृतः ॥ ३० ॥

प्रकोपोत्तरके काले शमस्तेषां प्रकीर्तितः । अतिभोजनतो विप्र ! तथा चाभोजनेन च
रोगा हि सर्वे जायन्ते वेगोदीरणधारणैः । अन्नेन कुक्षेर्द्वावंशावेकं पानेन पूरयेत् ॥
आश्रयं पवनादीनां तथैकमवशेषयेत् । व्याधेर्निदानस्य तथा विपरीतमथौषधम् ॥३३॥
कर्त्तव्यमेतदेवात्र मयासारं प्रकीर्तितम् । नाभेरूर्ध्वमधश्चैव गुदश्रोण्योस्तथैव च ॥

वलाशपित्तवातानां देहे स्थानं प्रकीर्तितम् ।
तथापि सर्वगाश्चैते देहे वायुर्विशेषतः ॥ ३५ ॥
देहस्य मध्ये हृदयं स्थानं तन्मयसः स्मृतम् ।
कृशोऽपकेशश्चपलो वहुवाग् विषमानलः ॥ ३६ ॥

व्योमगश्च तथास्वप्ने वातप्रकृतिरुच्यते । अकालपलितः क्रोधी प्रस्वेदी मधुरप्रियः ॥
स्वप्ने च दीप्तिमत्प्रेक्षी पित्तप्रकृतिरुच्यते । दृढाङ्गः स्थिरचित्तश्च सुप्रभः स्निग्धमूर्द्धजः

शुद्धाम्बुदर्शी स्वप्ने च कफप्रकृतिको नरः ।
तामसा राजसाश्चैव सात्विकाश्च तथास्मृताः ॥ ३९ ॥

मनुष्या मुनिशार्दूल ! वातपित्तकफात्मकाः । रक्तपित्तं व्यवायाच्च गुरुकर्मप्रवर्त्तनैः

कदन्नभोजनाद् वायुर्देहे शोकाच्च कुप्यति ।
विदाहिनां तथोल्कानामुष्णान्नध्वनिसेविनाम् ॥ ४१ ॥

पित्तं प्रकोपमायाति भयेन च तथा द्विज ! । अत्यम्बुपानगुर्वन्नभोजिनां भुक्तशायिनाम्

श्लेष्मा प्रकोपमायाति तथा ये चालसा जनाः ।
वाताद्युत्थानि रोगाणि ज्ञात्वा शाम्यानि लक्षणैः ॥ ४३ ॥
अस्थिभङ्गः कषायत्वमास्ये शुष्कास्यता तथा ।
जृम्भणं लोमहर्षश्च वातिकव्याधिलक्षणम् ॥ ४४ ॥
नखनेत्रशिराणान्तु पीतत्वं कटुता मुखे ।
तृष्णा दाहोष्णता चैव पित्तव्याधिनिदर्शनम् ॥ ४५ ॥
आलस्यञ्च प्रसेकश्च गुरुता मधुरास्यता ।
उष्णाभिलाषिता चेति श्लैष्मिकव्याधिलक्षणम् ॥ ४६ ॥

स्निग्धोष्णमन्नमभ्यङ्गस्तैलपानादि वातनुत् ।
आज्यं क्षीरं सिताद्यञ्च चन्द्ररश्म्यादि पित्तनुत् ॥ ४७ ॥
सक्षौद्रं त्रिफलातैलं व्यायामादि कफापहम् ।
सर्वरोगप्रशान्त्यै स्याद् विष्णोर्ध्यानञ्च पूजनम् ॥ ४८ ॥
इत्यादिमहापुराणेआग्नेयेसर्वरोगहरौषधकथनंनामाशीत्यधिकद्विशततमोऽध्यायः ।

---

# एकाशीत्यधिकद्विशततमोऽध्यायः

## रसादिलक्षणम् ।

धन्वन्तरिरुवाच ।

रसादिलक्षणं वक्ष्ये भेषजानां गुणं श्रृणु ।
रसवीर्य्यविपाकज्ञो नृपादीन् रक्षयेन्नरः ॥ १ ॥
रसाः स्वाद्वम्ललवणाः सोमजाः परिकीर्त्तिताः ।
कटुतिक्तकषायाणि तथाग्नेया महाभुज ! ॥ २ ॥
त्रिधा विपाको द्रव्यस्य कट्वम्ललवणात्मकः ।
द्विधा वीर्य्यं समुद्दिष्टमुष्णं शीतं तथैव च ॥ ३ ॥
अनिर्देश्यप्रभावश्च औषधीनां द्विजोत्तम ! । मधुरश्च कषायश्च तिक्तश्चैव तथा रसः ॥
शीतवीर्य्याः समुद्दिष्टाः शेषास्तूष्णाः प्रकीर्त्तिताः ।
गुडुची तत्र तिक्तापि भवत्युष्णातिवीर्य्यतः ॥ ५ ॥
उष्णा कषायापि तथा पथ्या भवति मानद ! ।
मधुरोऽपि तथा मांस उष्ण एव प्रकीर्त्तितः ॥ ६ ॥
लवणो मधुरश्चैव विपाकमधुरौ स्मृतौ । अम्लोष्णश्च तथा प्रोक्तः शेषाः कटुविपाकिन
वीर्य्यं पाके विपर्य्यस्त प्रभावात् तत्र निश्चयः ।

मधुरोऽपि कटुः पाके यच्च क्षौद्रं प्रकीर्त्तितम् ॥ ८ ॥
क्वाथयेत् षोड़शगुणं पिवेद् द्रव्याच्चतुर्गुणम् ।
कल्पनैषा कषायस्य यत्र नोक्तो विधिर्भवेत् ॥ ९ ॥
कषायन्तु भवेत् तोयं स्नेहपाके चतुर्गुणम् ।
द्रव्यतुल्यं समुद्धृत्य द्रव्यं स्नेहं क्षिपेद्‌बुधः ॥ १० ॥

तावत्प्रमाणं द्रव्यस्य स्नेहपादं ततः क्षिपेत् । तोयवर्जन्तु यद् द्रव्यं स्नेहद्रव्यं तथाभवेत् संवर्त्तितौषधः पाकः स्नेहानां परिकीर्त्तितः । तत्तुल्यता ते लेह्यस्य तथा भवति सुश्रुत !

स्वच्छमल्पौषधं क्वाथं कषायश्चोक्तवद् भवेत् ।
अक्षं चूर्णस्य निर्दिष्टं काषायस्य चतुष्पलम् ॥ १३ ॥
मध्यमैषा स्मृता मात्रा नास्ति मात्राविकल्पना ।
वयः कालं बलं वह्निं देशं द्रव्यं रुजं तथा ॥ १४ ॥
समवेक्ष्य महाभाग ! मात्रायाः कल्पना भवेत् ।
सौम्यास्तत्र रसाः प्राज्ञो विज्ञेया धातुवर्धनाः ॥ १५ ॥

मधुरास्तु विशेषेण विज्ञेया धातुवर्धनाः । दोषाणाञ्चैव धातूनां द्रव्यं समगुणन्तु यत् तदेव वृद्धये ज्ञेयं विपरीतं क्षमावहम् । उभस्तम्भत्रयं प्रोक्तं देहेऽस्मिन् मनुजोत्तम ! ॥

आहारो मैथुनं निन्द्रा तेषु यत्नः सदा भवेत् ।
असेवनात् सेवनाच्च अत्यन्तं नाशमाप्नुयात् ॥ १८ ॥

क्षयस्य वृंहणं कार्य्यं स्थूलदेहस्य कर्षणम् । रक्षणं मध्यकायस्य देहभेदास्त्रयो मताः

उपक्रमद्वयं प्रोक्तं तर्पणं वाप्यतर्पणम् ।
हिताशी च मिताशी च जीर्णाशी च तथा भवेत् ॥ २० ॥
औषधीनां पञ्चविधा तथा भवति कल्पना ।
रसः कल्कः शृतः शीतः फाण्टश्च मनुजोत्तम ! ॥ २१ ॥
रसश्च पीड़को ज्ञेयः कल्क आलोरिताद् भवेत् ।
क्वथितश्च शृतो ज्ञेयः शीतः पर्य्युषितो निशाम् ॥ २२ ॥

सद्योऽभिश्रृतपूतं यत् तत् फाण्टमभिधीयते। करणानां शतञ्चैव षष्टिश्चैवाधिकास्मृता

यो वेत्ति स ह्यजेयः स्यात् सम्बन्धे बाहुशौण्डिकः।
आहारशुद्धिरग्न्यर्थमग्निमूलं बलं नृणाम्॥ २४॥
ससिन्धु त्रिफलाश्चाद्यात् सुराश्नि अभिवर्णदाम्।
जाङ्गलञ्च रसं सिन्धुयुक्तं दधि पयःकणाम्॥ २५॥
रसाधिकं समं कुर्य्यान्नरो वाताधिकोऽपि वा।
निदाघे मर्दनं प्रोक्तं शिशिरे च समं बहु॥ २६॥

वसन्ते मध्यमं ज्ञेयं निदाघे मर्दनोल्वणम्। त्वचन्तु प्रथमं मर्द्यमङ्गञ्च तदनन्तरम्॥
स्नायुरुधिरदेहेषु अस्थि भातीव मांसलम्। स्कन्धौ बाहू तथैवेह तथा जङ्घे सजानुनी
अरविन् मर्दयेत् प्राज्ञो जत्रु वक्षश्च पूर्ववत्। अङ्गसन्धिषु सर्वेषु निष्पीड्य बहुलं तथा

प्रसारयेदङ्गसन्धीन् न च क्षेपेण चाक्रमात्।
नाजीर्णे तु श्रमं कुर्य्यान्न भुक्त्वा पीतवान् नरः॥ ३०॥
दिनस्य तु चतुर्भाग ऊर्ध्वन्तु प्रहरार्द्धके।
व्यायामं नैव कर्त्तव्यं स्नायाच्छीताम्बुना सकृत्॥ ३१॥
वाय्युष्णञ्च श्रमं जह्याद्धृदा श्वासं न धारयेत्।
व्यायामश्च कफं हन्यात् वातं हन्याच्च मर्दनम्॥ ३२॥
स्नानं पित्ताधिकं हन्यात् तस्यान्ते चातपाः प्रियाः।
आतपक्लेशकर्मादौ क्षेमव्यायामिनो नराः॥ ३३॥

इत्यादिमहापुराणेआग्नेये रसादिलक्षणवर्णनंनामैकाशीत्यधिकद्विशततमोऽध्यायः।

---

# द्व्याशीत्यधिकद्विशततमोऽध्यायः

## वृक्षायुर्वेदः ।

धन्वन्तरिरुवाच ।

वृक्षायुर्वेदमाख्यास्ये प्लक्षश्चोत्तरतः शुभः ।
प्राग्वटो याम्यतस्त्वाम्र आप्येऽश्वत्थः क्रमेण तु ॥ १ ॥
दक्षिणां दिशमुत्पन्नाः समीपे कण्टकद्रुमाः ।
उद्यानं गृहवासे स्यात् तिलान् वाप्यथ पुष्पितान् ॥ २ ॥
गृह्णीयाद्रोपयेद् वृक्षान् द्विजंश्चन्द्रं प्रपूज्य च ।
ध्रुवाणि पञ्च वायव्यं हस्तं प्राजेशवैष्णवम् ॥ ३ ॥

नक्षत्राणि तथा मूलं शस्यन्ते द्रुमरोपणे । प्रवेशयेन्नदीवाहान् पुष्करिण्यान्तु कारयेत्
हस्ता मघा तथा मैत्रमाद्यं पुष्पं सवासवम् । जलाशयसमारम्भे वारुणञ्चोत्तरात्रयम् ॥
संपूज्य वरुणं विष्णुं पर्जन्यं तत् समाचरेत् । अरिष्टाशोकपुन्नागशिरीषाः सप्रियङ्गवः

अशोकः कदली जम्बुस्तथा वकुलदाड़िमाः ।
सायं प्रातस्तु घर्मार्त्तौ शीतकाले दिनान्तरे ॥ ७ ॥
वर्षारात्रौ भुवः शोषे सेक्तव्या रोपिता द्रुमाः ।
उत्तमं विंशतिर्हस्ता मध्यमं षोड़शान्तरम् ॥ ८ ॥
स्थानात् स्थानान्तरं कार्य्यं वृक्षाणां द्वादशावरम् ।
विफलाः स्युर्घनाः वृक्षाः शस्त्रेणादौ हि शोधनम् ॥ ६ ॥

विड़ङ्गघृतपङ्काक्तान् सेचयेच्छीतवारिणा । फलनाशे कुलत्थैश्च मासैर्मुद्गैर्यवैस्तिलैः ॥
घृतशीतपयःसेकः फलपुष्पाय सर्वदा । अविकाजशकृच्चूर्णं यवच्चूर्णं तिलानि च ॥
गोमांसमुदकञ्चैव सप्तरात्रं निधापयेत् । उत्सेकः सर्ववृक्षाणां फलपुष्पादिवृद्धिदः ॥

मत्स्याम्भसा तु सेकेन वृद्धिर्भवति शाखिनः ।

विरङ्गतण्डुलोपेतं मत्स्यं मांसं हि दोहदम्। सर्वेषामविशेषेण वृक्षाणां रोगमर्दनम्॥

इत्यादिमहापुराआग्नेयेवृक्षायुर्वेदकथनंनामद्व्यशीत्यधिकद्विशततमोध्यायः।

---

# त्र्यशीत्यधिकद्विशततमोऽध्यायः

## नानारोगहराण्यौषधानि।

धन्वन्तरिरुवाच।

सिंही शटी निशायुग्मं वत्सकं क्वाथसेवनम्। शिशोः सर्वातिसारेषु स्तन्यदोषेषु शस्यते

शृङ्गीं सकृष्णातिविषां चूर्णितां मधुना लिहेत्।
एका चातिविषा काशच्छर्दिज्वरहरी शिशोः॥ २॥
बालैः सेव्या वचा साज्या सदुग्धा वाथ तैलयुक्।
यष्टिकां शङ्खपुष्पीं वा बालः क्षीरान्वितां पिबेत्॥ ३॥
वाग्रूपसम्पद्युक्तायुर्मेधाश्रीर्वर्धते शिशोः।
वचाद्यग्निशिखावासाशुण्डीकृष्णानिशागदम्॥ ४॥

सयष्टिसैन्धवं बालः प्रातर्मेधाकरं पिबेत्। वेददारुमहाशिग्रुफलत्रयपयोमुचाम्॥ ५॥

क्वाथः सकृष्णा मृद्वीका कल्कः सर्वान् कृमीन् हरेत्।
त्रिफलाभृङ्गविश्वानां रसेषु मधुसर्पिषोः॥ ६॥

मेषीक्षीरे च गोमूत्रे सिक्तं रोगे हितं शिशोः। नाशारक्तहरो नस्याद् दूर्वारस इहोत्तमः

लशुनार्द्रकशिग्रूणां रसः कर्णस्य पूरणम्। तैलमार्द्रकजात्यं वा शूलहा चौष्ठरोगनुत्॥

जातीपत्रं फलं व्योषं कवलं मूत्रकं निशा।
दुग्धक्वाथेऽभयाकल्के सिद्धं तैलं द्विजार्त्तिनुत्॥ ९॥
धान्याम्बु नारिकेलं गोमूत्रं क्रमूकविश्वयुक्।
क्वथितं कवलं कार्य्यमधिजिह्वाधिशान्तये॥ १०॥

साधितं लाङ्गलीकल्के तैलं निर्गुण्डिकारसैः ।
गण्डमालागलगण्डौ नाशयेन् नस्यकर्मणा ॥ ११ ॥

पल्लवैरर्कपूतीकस्नुहीरुग्घातजातिकैः । उद्वर्त्तयेत् सगोमूत्रैः सर्वत्वग्दोषनाशनैः ॥१२॥

बाकुची सतिला भुक्ता वत्सरात् कुष्ठनाशनी ।
पथ्या भल्लातकी तैलगुड़पिण्डी तु कुष्ठजित् ॥ १३ ॥

यूतीकवह्निरजनी त्रिफलाव्योषचूर्णयुक् । तक्रं गदाङ्कुरे पेयं भक्ष्या वा सगुड़ाऽभया ॥

फलदार्वीविषाणान्तु क्वाथो धात्रीरसोऽथवा ।
पातव्यो रजनीकल्कः क्षौद्राक्षौद्रप्रमेहिणा ॥ १५ ॥
वासागर्भो व्याधिघात क्वाथ एरण्डतैलयुक् ।
वातशोणितहृत् पानात् पिप्पली स्यात् प्लीहाहरी ॥ १६ ॥
सेव्या जठरिणा कृष्णा स्नुक्षीरबहुभाविता ।
पयो वा रुच्यदन्त्याग्नि विड़ङ्गव्योषकल्कयुक् ॥ १७ ॥
ग्रन्थिकोग्राभया कृष्णा विडङ्गाक्ता घृते स्थिता ।
मासं तक्रं ग्रहण्यर्शःपाण्डुगुल्मकृमीन् हरेत् ॥ १८ ॥
फलत्रयामृता वासा तिक्तभूनिम्बजस्तथा ।
क्वाथः समाक्षिको हन्यात् पाण्डुरोगं सकामलम् ॥ १६ ॥

रक्तपित्ती पिबेद् वासासुरसं ससितं मधु । वरीद्राक्षाबलाशुण्ठीसाधितं वा पयः पृथक्

वरी विदारी पथ्या च बलात्रयं सवासकम् ।
श्वदंष्ट्रामधुसर्पिर्भ्यामालिहेत् क्षयरोगवान् ॥ २१ ॥

पथ्याशिग्रुकरञ्जार्कत्वक्सारं मधुसिन्धुमत् । समूत्रं विद्रधिं हन्ति परिपाकाय तन्त्रजित्
त्रिवृता जीवती दन्ती मञ्जिष्ठा शर्वरीद्वयम् । तार्क्ष्यजं निम्बपत्रञ्च लेपः शस्तो भगन्दरे
रुग्घातरजनीलाक्षा चूर्णाजक्षौद्रसंयुता । वासोवर्त्तिर्व्रणे योज्या शोधनीगतिनाशनी ॥
श्यामायष्टिनिशालोध्र पद्मकोत्पलचन्दनैः । समरीचैः श्रृतं तैलं क्षीरे स्याद् व्रणरोहणम्

श्रीकार्पासदलैर्भस्म फलोपलवणा निशा ।

तत्पिण्डीस्वेदनं ताम्रे तत्तैलं स्यात् क्षतौषधम् ॥ २६ ॥
कुम्भीसारं पयोयुक्तं वह्निदग्धं व्रणे लिपेत् ।
तदेव नाशयेत् सेकान् नारिकेलरजोघृतम् ॥ २७ ॥
विश्वाजमोदसिन्धूत्थचिञ्चात्वग्भिः समाऽभया ।
तक्रेणोष्णाम्बुना वाथ पीतातीसारनाशनी ॥ २८ ॥
वत्सकातिविषाविश्वबिल्वमुस्तश्रृतं जलम् ।
सामे पुराणेऽतीसारे सासृक्शूले च पाययेत् ॥ २९ ॥

अङ्गारदग्धं सुगतं सिन्धुमुष्णाम्बुना पिवेत् । शूलवानथ वा तद्धि सिन्धुहिङ्गुकणाभया

कटुरोहोत्कणातङ्क लाजचूर्णं मधुप्लुतम् ।
वस्त्रच्छिद्रगतं वक्त्रे न्यस्तं तृष्णां विनाशयेत् ॥ ३१ ॥

पाठादार्वीजातिदलं द्राक्षामूलफलत्रयैः । साधितं समधु क्वाथं कवलं मुखपापहृत् ॥
कृष्णातिविषतिक्तेन्द्रदारूपाठापयोमुचाम् । क्काथो मूत्रे श्रृतः क्षौद्री सर्वकण्ठगदापहः
पथ्यागोक्षुरदुस्पर्शा राजवृक्षशिलाभिदाम् । कषायः समधुः पीतो मूत्रकृच्छ्रं व्यपोहति
वंशत्वग्वरुणक्काथः शर्कराश्मविघातनः । शाखोटक्काथसक्षौद्रक्षीराशी श्लीपदी भवेत्
मासार्कत्वक्पयस्तैलं मधुसिक्तञ्च सैन्धवम् । पादरोगं हरेत् सर्पिर्जालकुक्कुटजं तथा
शुण्ठी सौवर्चलाहिङ्गुचूर्णं शुण्ठीरसैर्युतम् । रुजं हरेदथ क्काथो विद्धि बद्धाग्निसाधने

सौवर्चलाग्निहिङ्गूनां सदीप्यानां रसैर्युतम् ।
विड्दीप्यकयुक्तं वा तक्रं गुल्मातुरः पिवेत् ॥ ३८ ॥
धात्रीपटोलमुद्गानां क्काथः साज्यो विसर्पहा ।
शुण्ठीदारुणवाक्षीरक्काथो मूत्रान्वितोऽपरः ॥ ३९ ॥

सव्योषायोरजःक्षारः फलक्काथश्च शोथहृत् । गुडशिग्रुत्रिवृद्भिश्च सैन्धवानां रजोयुतः
त्रिवृताफलकक्काथः सगुडः स्याद् विरेचनः । वचाफलकषायोत्थं पयो वमनकृद् भवेत्
त्रिफलायाः पलशतं पृथग्भृङ्गजभावितम् । विडङ्गं लोहचूर्णञ्च दशभागसमन्वितम् ॥
शतावरीगुडूच्यग्निपलानां शतविंशतिः । मध्वाज्यतिलजैर्लिह्याद् बलीपलितवर्जितः

शतमब्दं हि जीवेत सर्वरोगविवर्जितः । त्रिफला सर्वरोगघ्नी समधुः शर्करान्विता ॥
सितामध्वाज्यगुग्गुलुतैर्युक्ता सकृष्णा त्रिफला तथा । पथ्याचित्रकशुण्ठ्यश्च गुडूचीमुषलीरजः
सगुडं भक्षितं रोगहरं त्रिशतवर्षकृत् । किञ्चिच्चूर्णं जवापुष्पं पिण्डितं विसृजेज्जले ॥
तैलं भवेद् घृताकारं किञ्चच्चूर्णं जलान्वितम् । धूपार्थं दृश्यते चित्रं वृषदंशजरायुणा॥
पुनर्माक्षिकधूपेन दृश्यते तद् यथा पुरा । कर्पूरजलकाभेक तैलं पाटलिमूलयुक् ॥४८॥
पिष्ट्वा लिप्य पदे द्वे च चरेदङ्गारके नरः । तृणौत्थानादिकं व्यूह्य दर्शयन् वै कुतूहलम्
विषग्रहरुजध्वंसक्षुद्रनर्म च कामिकम् । तत् ते षट्कर्मकं प्रोक्तं सिद्धिद्वयसमाश्रयम्
मन्त्रध्यानौषधिकथामुद्रेज्या यत्रमुष्टयः । चतुर्वर्गफलं प्रोक्तं यःपठेत् स दिवं व्रजेत् ॥

इत्यादिमहापुराणेआग्नेयेनानारोगहराणामौषधानांकथनंनाम
त्र्यशीत्यधिकद्विशततमोऽध्यायः ।

---

# चतुरशीत्यधिकद्विशततमोऽध्यायः

## मन्त्ररूपौषधकथनम्

धन्वन्तरिरुवाच ।

आयुरारोग्यकर्त्तार ओंकाराद्याश्च नाकदाः ।
ओंकारः परमो मन्त्रस्तं जप्त्वा चामरो भवेत् ॥ १ ॥
गायत्री परमो मन्त्रस्तं जप्त्वा भुक्तिमुक्तिभाक् ।
ओं नमो नारायणाय मन्त्रः सर्वार्थसाधकः ॥ २ ॥
ओं नमो वासुदेवाय सर्वदः । ओं हूं नमो विष्णवे मन्त्रोऽयश्चौषधं परम् ॥ ३ ॥
अनेन देवा ह्यसुराः सश्रियो नीरुजोऽभवन् । भूतानामुपकारश्च तथा धर्मो महौषधम्
धर्मः सद्धर्मकृद्धर्मी एतैर्धर्मैश्च निर्मलः । श्रीदः श्रीशः श्रीनिवासः श्रीधरः श्रीनिकेतनः
श्रियः पतिः श्रीपरमएतैः श्रियमवाप्नुयात् ।

कामी कामप्रदः कामः कामपालस्तथाहरिः ॥ ६ ॥
आनन्दो माधवश्चैव नामकामाय वै हरेः । रामः परशुरामश्च नृसिंहो विष्णुरेव च ॥
त्रिविक्रमश्च नामानि जप्तव्यानि जिगीषुभिः । विद्यामभ्यस्यतांनित्यं जप्तव्यःपुरुषोत्तमः
दामोदरो बन्धहरः पुष्कराक्षोऽक्षिरोगनुत् । हृषीकेशो भयहरो जपेदौषधकर्मणि ॥६॥
अच्युतश्चा मृतं मन्त्रं संग्रामे चापराजितः । जलतारे नारसिंहं पूर्वादौ क्षेमकामवान् ॥
चक्रिणं गदिनश्चैवं शार्ङ्गिणं खड्गिनं स्मरेत् । नारायणं सर्वकाले नृसिंहोऽखिलभीतिनुत्
गरुडध्वजश्चविषहृत् वासुदेवं सदाजपेत् । धान्यादिस्थापनेस्वप्ने अनन्ताच्युतमीरयेत्
नारायणश्च दुःस्वप्ने दाहादौ जलशायिनम् । हयग्रीवश्च विद्यार्थी जगत्सूतिं सुताप्तये
बलभद्रं शौरकार्य्ये एकं नामार्थसाधकम् ॥ १३ ॥
इत्यादिमहापुराणे आग्नेये मन्त्ररूपौषधकथनंनामचतुरशीत्यधिकद्विशततमोऽध्यायः ।

---

## पञ्चाशीत्यधिकद्विशततमोऽध्यायः

### मृतसञ्जीवनीकरसिद्धयोगः ।

धन्वन्तरिरुवाच ।

सिद्धयोगान् पुनर्वक्ष्ये मृतसञ्जीवनीकरान् ।
आत्रेयभाषितान् दिव्यान् सर्वव्याधिविमर्दनान् ॥ १ ॥

आत्रेय उवाच ।

बिल्वादिपञ्चमूलस्य क्वाथःस्याद् वातिकेज्वरे ।
पावनं पिप्पलीमूलं गुडूचीविश्वजोऽथवा ॥ २ ॥
आमलक्यभया कृष्णा वह्निः सर्वज्वरान्तकः ।
बिल्वाग्निमन्थश्योनाककाश्मर्य्यः पारला स्थिरा ॥ ३ ॥
त्रिकण्टकं पृश्निपर्णी बृहती कण्टकारिकाः । ज्वराविपाकपार्श्वार्त्तिकाशनुत्कुशमूलकम्

गुडूची पर्पटी मुस्तं किरातं विश्वभेषजम्। वातपित्तज्वरे देयं पञ्चभद्रमिदं स्मृतम्॥
त्रिवृद्विशालकटुका त्रिफलारग्वधैः कृतः। संस्कारो भेदनकाथः पेयः सर्वज्वरापहः
देवदारुबलावासात्रिफलाव्योषपद्मकैः। सविडङ्गैः सितातुल्यं तच्चूर्णं पञ्चकाशजित्
दशमूलीशटीरास्ना पिप्पलीविल्वपौष्करैः। शृङ्गीतामलकीभार्गी गुडूचीनागवल्लिभिः॥
यवाग्रं विधिनासिद्धं कषायं वा पिबेन् नरः। काशहृद् ग्रहणीपार्श्व हिक्काश्वासप्रशान्तये
मधुकं मधुना युक्तं पिप्पलीं शर्करान्विताम्। नागरं गुड़संयुक्तं हिक्काघ्नं लावणत्रयम्
कारव्ययाजीमरिचं द्राक्षा वृक्षाम्लदाड़िमम्। सौवर्चलं गुड़ं क्षौद्रं सर्वारोचननाशनम्
शृङ्गवेररसश्चैव मधुना सह पाययेत्। अरुचिश्वासकाशघ्नं प्रतिश्यायकफान्तकम्॥
वटंशृङ्गी शिलालोध्र दाड़िमं मधुकं मधु। पिबेत् तण्डूलतोयेन छर्दितृष्णानिवारणम्
गुडूची वासकं लोध्रं पिप्पलीक्षौद्रसंयुतम्। कफान्वितञ्जयेद्रक्तं तृष्णाकासज्वरापहम्
वासकस्य रसस्तद्वत् समधुस्ताम्रजो रसः। शिरीषपुष्पसुरसभावितं मरिचं हितम्
सर्वार्त्तिनुन्मसूरोऽथ पित्तमुक्तण्डुलीयकम्। निर्गुण्डी शारिवा शेलु रङ्कोलश्चविषापह
महौषधं मृतां क्षुद्रां पुष्करं ग्रन्थिकोद्भवम्। पिवेत्कणायुतं क्वाथं मूर्च्छायाञ्च मदेषु च
हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृ ताढकम्। चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम्॥
शङ्खपुष्पीवचाकुष्ठैः सिद्धं ब्राह्मीरसैर्यु तम्। पुराणं हन्त्यपस्मारं सोन्मादं मेध्यमुत्तमम्
पञ्चगव्यं घृतं तद्वत् कुष्ठनुच्चाभयायुतम्। पटोलत्रिफलानिम्बगुडूचीधावनीवृषैः॥
सकरञ्जैर्घृ तं सिद्धं कुष्ठनुद् वज्रकं स्मृतम्। निम्बं पटोलं व्याघ्री च गुडूचीवासकं तथा

कुर्य्याद् दशपलान् भागान् एकैकस्य सकुट्टितान्।
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम्॥ २२॥

घृतप्रस्थं पचेत् तेन त्रिफलागर्भसंयुतम्। पञ्चतिक्तमिति ख्यातं सर्पिः कुष्ठविनाशनम्

अशीतिं वातजान् रोगान् चत्वारिंशच्च पैत्तिकान्।
विंशतिं श्लैष्मिकान् कासपीनसार्शोव्रणादिकान्॥ २४॥

हन्त्यन्यान् योगराजोऽयं यथार्कस्तिमिरं खलु। त्रिफलायाः कषायेण भृङ्गराजरसेन च
व्रणप्रक्षालनं कुर्य्यादुपदंशप्रशान्तये। पटोलदलचूर्णेन दाड़िमत्वग्रजोऽथवा॥ २६

गुडयेच्च गजेनापि त्रिफलाचूर्णकेन च । त्रिफलायोरजोयष्टिमार्कवोत्पलमारिचैः ॥
सत्सैन्धवैः पचेत् तैलमभ्यङ्गाच्छर्दिकापहम् ।
सक्षीरान् मार्कवरसान् द्विप्रस्थमधुकोत्पलैः ॥ २८ ॥
पचेत्तु तैलगुड़वं तन्नस्यं पलितापहम् । निम्बं पटोलं त्रिफला गुडूची खदिरं वृषम् ॥
भूनिम्बपाठात्रिफलागुडूचीरक्तचन्दनम् । योगद्वयं ज्वरं हन्ति कुष्ठविस्फोटकादिकम्
पटोलामृतभूनिम्बवासारिष्टकपर्पटैः । खदिरान्तयुतैः क्वाथो विस्फोटज्वरशान्तिकृत्
दशमूली छिन्नरुहा पथ्या दारु पुनर्नवा । ज्वरविद्रधिशोथेषु शिग्रुविश्वजिता हिताः
मधूकं निम्बपत्राणि लेपः स्याद् व्रणशोधनः ।
त्रिफला खदिरो दार्वी न्यग्रोधातिबलाकुशाः ॥ ३३ ॥
निम्बमूलकपत्राणां कषायाः शोधने हिताः ।
करञ्जारिष्टनिर्गुण्डीरसो हन्याद् व्रणक्रमीन् ॥ ३४ ॥
धातकीचन्दनबलासमङ्गामधुकोत्पलैः । दार्वीमेदोऽन्वितैर्लेपः ससर्पिर्व्रणरोपणः॥३५॥
गुग्गुलुत्रिफलाव्योषसमांशैर्घृतयोगतः । नाड़ी दुष्टव्रणं शूलं भगन्दरमुखं हरेत् ॥
हरीतकीं मूत्रसिद्धां सतैललवणान्विताम् । प्रातः प्रातश्च सेवेत कफवातामयापहाम्
त्रिकटुत्रिफलाक्वाथं सक्षारलवणं पिबेत् । कफवातात्मकेष्वेव विरेकः कफवृद्धिनुत्
पिप्पलीपिप्पलीमूलवचाचित्रकनागरैः । क्वथितं वा पिबेत् पेयमामवातविनाशनम् ॥
रास्नां गुडूचीमेरण्डदेवदारुमहौषधम् । पिबेत् सर्वाङ्गिके वाते सामे सन्ध्यस्थिमज्जगे
दशमूलकषायं वा पिबेद् वा नागरम्भसा । शुण्ठीगोक्षुरकक्वाथः प्रातः प्रातर्निषेवितः ॥
सामवातकटीशूलपाचनो रुक्प्रणाशनः । समूलपत्रशाखायाः प्रसारण्याश्च तैलकम् ॥
गुडूच्याः सुरसः कल्कः चूर्णं वा क्वाथमेव च ।
प्रभूतकालमासेव्य मुच्यते वातशोणितात् ॥ ४३ ॥
पिप्पली वर्द्धमानं वा सेव्यं पथ्या गुडेन वा । पटोलत्रिफलातीव्रकटुकामृतसाधितम्
पक्वं पीत्वा जयत्याशु सदाहं वातशोणितम् ।
गुग्गुलुं कोष्णशीते तु गुडूची त्रिफलाम्भसा ॥ ४५ ॥

बलापुनर्नवैरण्डबृहतीद्वयगोक्षुरैः। सहिङ्गुलवणैः पीतं सद्यो वातरुजापहम् ॥ ४६ ॥

कार्षिकं पिप्पलीमूलं पञ्चैव लवणानि च।

पिप्पलीचित्रकं शुण्ठी त्रिफला त्रिवृता वचा ॥ ४७ ॥

द्वौ क्षारौ शाद्वला दन्ती स्वर्णक्षीरी विषाणिका।

कोलप्रमाणां गुटिकां पिबेत् सौवीरकायुताम् ॥ ४८ ॥

शोथावपाके त्रिवृता प्रवृद्धे चोदरादिके। क्षीरं शोथहरं दारु वर्षाभूर्नागरैः शुभम् ॥

सेकस्तथार्कवर्षाभूनिम्बक्काथेन शोथजित्। व्योषगर्भपलाशस्य त्रिगुणे भस्मवारिणि

साधितं पिबतः सर्पिः पतत्यर्शो न संशयः।

विश्वक्सेनावनिर्गुण्डीसाधितं चापि लावणम् ॥ ५१ ॥

विड़ङ्गानलसिन्धूत्थरास्नाग्रक्षारदारुभिः। तैलश्चतुर्गुणं सिद्धं कटुद्रव्यं जलेन वा ॥

गण्डमालापहं तैलमभ्यङ्गात् गलगण्डनुत्। शटीकुनागवलयकाथः क्षीररसे युतम् ॥

पयस्यापिप्पलीवासा कल्कं सिद्धं क्षये हितम्।

वचाविड़भयाशुण्ठीहिङ्गुकुष्ठाग्निदीप्यकान् ॥ ५४ ॥

द्वित्रिषट्चतुरेकांशसप्तपञ्चाशिकाः क्रमात्। चूर्णं पीतं हन्ति गुल्मं उदरं शूलकासनुत्

पाठानिकुम्भत्रिकटुत्रिफलाग्निषु साधितम्। मूत्रेण चूर्णगुटिका गुल्मप्लीहादिमर्दनी

वासानिम्बपटोलानि त्रिफला वातपित्तनुत्।

लिह्यात् क्षौद्रेण विड़ङ्गं चूर्णं कृमिविनाशनम् ॥ ५७ ॥

विड़ङ्गसैन्धवक्षारमूत्रेणापि हरीतकी। शल्लकीवदरीजम्बुपियालाम्राजुर्नत्वचः ॥५८॥

पीताः क्षीरेण मध्वक्ताः पृथक्शोणितवारणाः।

बिल्वाम्रधातकीपाठाशुण्ठीमोचरसाः समाः ॥ ५९ ॥

पीता रुन्धन्त्यतीसारं गुड़तक्रेण दुर्जयम्। चाङ्गेरीकोलदध्यम्बु नागरक्षारसंयुतम् ॥

घृतयुक्काथितं पेयं गुदभ्रंसे(शे) रुजापहम्। विड़ङ्गातिविषामुस्तं दारुपाठाकलिङ्गकम्

मरीचेन समायुक्तं शोथातीसारनाशनम्। शर्करासिन्धुशुण्ठीभिः कृष्णामधुगुड़ेन वा

द्वे द्वे खादेद्धरीतक्यौ जीवेद् वर्षशतं सुखी।

त्रिफला पिप्पलीयुक्ता समध्वाज्या तथैव सा ॥ ६३ ॥
चूर्णमामलकं तेन सुरसेन तु भावितम् ।
मध्वाज्यशर्करायुक्तं लिढ्वा स्त्रीशः पयः पिबेत् ॥ ६४ ॥
मासपिप्पलिशालीनां यवगोधूमयोस्तथा ।
चूर्णभागैः समांशैश्च पचेत् पिप्पलिकां शुभाम् ॥ ६५ ॥
तां भक्षयित्वा च पिबेत् शर्करामधुरं पयः । नवश्वदंष्ट्रकवज्रभेद्‌ दशवारान् स्त्रियं ध्रुवम्
समङ्गाधातकीपुष्पलोध्रनीलोत्पलानि च । एतत् क्षीरेण दातव्यं स्त्रीणां प्रदरनाशनम्
वीजं कौरण्टकश्चापि मधुकं श्वेतचन्दनम् । पद्मोत्पलस्य मूलानि मधुकं शर्करातिलान्
द्रवमाणेषु गर्भेषु गर्भस्थापनमुत्तमम् । देवदारु नभः कुष्टं नलदं विश्वभेषजम् ॥ ६६ ॥
लेपः काञ्जिकसम्पिष्टस्तैलयुक्तः शिरोऽर्त्तिनुत् ।
वस्त्रपूतं क्षिपेत् कोष्णं सिन्धूत्थं कर्णशूलनुत् ॥ ७० ॥
लशुनार्द्रकशिग्रूणां कदल्या वा रसः पृथक् । बलाशतावरीरास्नामृताः सैरीयकैःपिबेत्
त्रिफलासहितं सर्पिस्तिमिरघ्नमनुत्तमम् । त्रिफलाव्योषसिन्धूत्थैर्घृतं सिद्धं पिबेन्नरः
चाक्षुष्यं भेदनं हृद्यं दीपनं कफरोगनुत् । नीलोत्पलस्य किञ्जल्कं गोशकृद्रससंयुतम् ॥
गुटिकाञ्जनमेतत् स्यात् दिनरात्र्यन्धयोर्हितम् ।
यष्टीमधुवचाकृष्णावीजानां कुटजस्य च ॥ ७४ ॥
कल्केनालोड्यनिम्बस्य कषायोवमनाय सः । स्निग्धस्विन्नयवंतोयं प्रदातव्यंविरेचनम्
अन्यथा योजितं कुर्य्यात् मन्दाग्निं गौरवारुचिम् ।
पथ्यासैन्धवकृष्णानां चूर्णमुष्णाम्बुना पिबेत् ॥ ७६ ॥
विरेकः सर्वरोगघ्नः श्रेष्ठो नाराचसंज्ञकः । सिद्धयोगा मुनिभ्यो ये आत्रेयेण प्रदर्शिताः
सर्वरोगहराः सर्वयोगाग्र्याः सुश्रुतेन हि ॥ ७७ ॥
इत्यादिमहापुराणेआग्नेयेमृतसञ्जीवनीकरसिद्धयोगवर्णनंनाम
पञ्चाशीत्यधिकद्विशततमोऽध्यायः ।

———

# षड़शीत्यधिकद्विशततमोऽध्यायः

## कल्पसागरः

धन्वन्तरिरुवाच ।

कल्पान् मृत्युञ्जयान् वक्ष्ये ह्यायुर्दान् रोगमर्दनान् ।
त्रिशती रोगहा सेव्या मध्वाज्यत्रिफलामृता ॥ १ ॥

पलं पलार्द्धं कर्षं वा त्रिफलां सकलां तथा । विल्वतैलस्य नस्यञ्चमासं पञ्चशती कविः
रोगापमृत्युवलिजित् तिलं भल्लातकं तथा । पञ्चाङ्गं वाकूचीचूर्णं षण्मासं खदिरोदकैः

क्वाथैः कुष्ठं जयेत् सेव्यं चूर्णं नीलकुरुण्टजम् ।
क्षीरेण मधुना वापि शतायुः खण्डदुग्धभुक् ॥ ४ ॥
मध्वाज्यशुण्ठीं संसेव्य पलं प्रातः स मृत्युजित् ।
बलीपलितजिज्जीवेन्माण्डकीचूर्णदुग्धपाः ॥ ५ ॥
उच्चटामधुना कर्षं पयःपा मृत्युजिन्नरः ।
मध्वाज्यैः पयसा वापि निर्गुण्डी रोगमृत्युजित् ॥ ६ ॥

पलाशतैलं कर्षैकं षण्मासं मधुना पिबेत् । दुग्धभोजी पञ्चशती सहस्रायुर्भवेन्नरः ॥

ज्योतिष्मतीपत्ररसं पयसा त्रिफलां पिबेत् ।
मधुनाज्यं ततस्तद्वत् शतावर्य्या रजः फलम् ॥ ८ ॥
क्षौद्राज्यैः पयसा वापि निर्गुण्डी रोगमृत्युजित् ।
पञ्चाङ्गं निम्बचूर्णस्य खदिरक्वाथभावितम् ॥ ९ ॥
कर्षं भृङ्गरसेनापि रोगजिच्चामरो भवेत् ।
रुदन्तिकाज्यमधुभुक् दुग्धभोजी च मृत्युजित् ॥ १० ॥

कर्षचूर्णं हरीतक्या भावितं भृङ्गराड्रसैः । घृतेन मधुना सेव्यस्त्रिशतायुश्च रोगजित्
वाराहिका भृङ्गरसं लौहचूर्णं शतावरी । साज्यं कर्षं पञ्चशती कार्त्तचूर्णं शतावरी ॥

भावितं भृङ्गराजेन मध्वाज्यं त्रिशतिं भवेत्। ताम्रं मृतं घृततुल्यं गन्धकश्च कुमारिका
रसैर्विमृज्य द्वे गुञ्जे साज्यं पञ्चशताब्दवान्।
अश्वगन्धा पलं तैलं साज्यं खण्डं शताब्दवान् ॥ १४ ॥
पलं पुनर्नवाचूर्णं मध्वाज्यपयसा पिबन्।
अशोक चूर्णस्य पलं मध्वाज्यं पयसार्त्तिनुत् ॥ १५ ॥
तिलस्य तैलं समधु नस्यात् कृष्णकचः शती।
कर्षमक्षं समध्वाज्यं शतायुः पयसा पिबन् ॥ १६ ॥
अभयं सगुडं जग्ध्वा घृतेन मधुरादिभिः।
दुग्धान्नभुक् कृष्णकेशोऽरोगी पञ्चशताब्दवान् ॥ १७ ॥
पलं कुष्माण्डिकाचूर्णं मध्वाज्यपयसा पिबन्।
मासं दुग्धान्नभोजी च सहस्रायुर्विरोगवान् ॥ १८ ॥
शालूकचूर्णं भृङ्गाज्यं समध्वाज्यं शताब्दकृत्। कटुतुम्बीतैलनस्यं कर्षं शतद्वयाब्दवान्
त्रिफला पिप्पली शुण्ठी सेविता त्रिशताब्दकृत्।
शतावर्य्याः पूर्वयोगः सहस्रायुर्वलातिकृत् ॥ २० ॥
चित्रकेण तथा पूर्वस्तथा शुण्ठीविडङ्गतः। लोहेन भृङ्गराजेन बलया निम्बपञ्चकैः॥
खदिरेण च निर्गुण्ड्या कण्टकार्य्याथ वासकात्।
वर्षाभुवा तद्रसैर्वा भावितो वटिकाकृतः ॥ २२ ॥
चूर्णं घृतैर्वा मधुना गुडाद्यैर्वारिणा तथा। ओं हूं स इति मन्त्रेण मन्त्रितो योगराजकः
मृतसञ्जीवनीकल्पो रोगमृत्युञ्जयी भवेत्। सुरासुरैश्च मुनिभिः सेविताः कल्पसागराः
गजायुर्वेदं प्रोवाच पालकाप्योऽङ्गराजकम् ॥ २४ ॥
इत्यादिमहापुराणेआग्नेयेकल्पसागरकथनंनामषड्शीत्यधिकद्विशततमोऽध्यायः।

———

# सप्ताशीत्यधिकद्विशततमोऽध्यायः

## गजचिकित्सा ।

पालकाप्य उवाच ।

गजलक्ष्म चिकित्साञ्च लोमपाद ! वदामि ते ।
दीर्घहस्ता महोच्छ्वासाः प्रशस्तास्ते सहिष्णवः ॥ १ ॥
विंशत्यष्टादशनखाः शीतकालमदाश्च ये । दक्षिणश्चोन्नतं दन्तं बृंहित जलदोपमम् ॥
कर्णौ च विपुलौ येषां सूक्ष्मविन्द्वन्वितत्वचौ ।
ते धार्य्या न तथा धार्य्या वामना ये च सङ्कशाः ॥ ३ ॥
हस्तिन्यः पार्श्वगर्भिण्यो ये च मूढा मतङ्गजाः ।
वर्णं सत्वं बलं रूपं कान्तिः संहननं जवः ॥ ४ ॥
सप्तस्थितो गजश्चेद्रक् संग्रामेऽरीन् जयेत् स च ।
कुञ्जराः परमाः शोभा शिविरस्य बलस्य च ॥ ५ ॥
आयत्तं कुञ्जरैश्चैव विजयं पृथिवीक्षिताम् । पाकलेषु च सर्वेषु कर्त्तव्यमनुवासनम् ॥
घृततैलपरीपाकं स्थानं वातविवर्जितम् ।
स्कन्धेषु च क्रिया कार्य्या तथा पालकवन् नृपाः ॥ ७ ।
गोमूत्रं पाण्डुरोगेषु रजनीभ्यां घृतं द्विज ! । अनाहे तैलसिक्तस्य निषेकस्तस्य शस्यते
लवणैः पञ्चभिर्मिश्रा प्रतिपानाय वारुणी । विड़ङ्गत्रिफलाव्योषसैन्धवैः कवलान् कृतान्
मूर्च्छासु भोजयन् नागं क्षौद्रं तोयञ्च पाययेत् ।
अभ्यङ्गः शिरसः शूले नस्यञ्चैव प्रशस्यते ॥ १० ॥
नागानां स्नेहपुटकः पादरोगानुपक्रमेत् । पश्चात् कल्ककषायेण शोधनञ्च विधीयते ॥
शिखितित्तिरिलावानां पिप्पलीमरिचान्वितैः ।
रसैः सम्भोजयेन् नागं वेपथुर्यस्य जायते ॥ १२ ॥

बालबिल्वं तथा लोध्रं धातकी सितयासह । अतीसारविनाशाय पिण्डीं भुञ्जीत कुञ्जरः
नस्यं करग्रहे देयं घृतं लवणसंयुतम् । मागधीनागराजाजीयवागूर्मुस्तसाधिता ॥१४॥
उत्कर्णके तु दातव्या वाराहञ्च तथा रसम् । दशमूलकुलत्थाम्लकाकमाचीविपाचितम्
तैलभूषणसंयुक्तं गलग्रहगदापहम् । अष्टभिर्लवणैः पिष्टैः प्रसन्नाः पाययेद् घृतम् ॥ १६॥
मूत्रभङ्गेऽथवा वीजं क्वथितं त्रपूषस्य च । त्वग्दोषेषु पिबेन् निम्बं वृषं वा क्वथितं द्विपः
गवां भूत्रं विड़ङ्गानि क्रमिकोष्ठेषु शस्यते । शृङ्गवेरकणाद्राक्षा शर्कराभिः शृतं पयः ॥
क्षतक्षयकरं पानं तथा मांसरसः शुभः । मुद्गोदनं व्योषयुतमरुचौ तु प्रशस्यते ॥ १६॥
त्रिवृद्व्योषाग्निदन्त्यर्क श्यामाक्षीरेभपिप्पली । एतैर्गुल्महरः स्नेहः कृतश्चैव तथापरः ॥
भेदनद्रावणाभ्यङ्गस्नेहपानानुवासनैः । सर्वानेव समुत्पन्नान् विद्रवान् समुपाहरेत् ॥
यष्टिकं मुद्गसूपेन शारदेन तथा पिवेत् । बालिबिल्वैस्तथा लेपः कटुरोगेषु शस्यते ॥
विड़ङ्गेन्द्रयवौ हिङ्गु सरलं रजनीद्वयम् । पूर्वाह्णे पाययेत् पिण्डान् सर्वशूलोपशान्तये

प्रधान भोजने तेषां यष्टिकव्रीहिशालयः ।
मध्यमौ यवगोधूमौ शेषा दन्तिनि चाधमाः ॥ २४ ॥

यवश्चैव तथैवेक्षुर्नागानां बलवर्धनः । नागानां यवसं शुष्कं तथा धातुप्रकोपनम् ॥
मदक्षीणस्य नागस्य पयःपानं प्रशस्यते । दीपनीयैस्तथा द्रव्यैः शृतो मांसरसः शुभः

वायसः कुक्कुरश्चोभौ काकोलूककुलो हरिः ।
भवेत् क्षौद्रेण संयुक्तः पिण्डो युद्धे महापदि ॥ २७ ॥

कटुमत्स्यविड़ङ्गानि क्षारः कोषातकी पयः । हरिद्रा चेति धूपोऽयं कुञ्जरस्य जयावहः

पिप्पलीतण्डुलास्तैलं माध्वीकं माक्षिकस्तथा ।
नेत्रयोः परिषेकोऽयं दीपनीयः प्रशस्यते ॥ २६ ॥

पूरीषं चटकायाश्च तथा पारावतस्य च । क्षीरवृक्षकरीषाश्च प्रसन्नायेष्टमञ्जनम् ॥
अनेनाञ्जितनेत्रस्तु करोति कदनं रणे । उत्पलानि च नीलानि मुस्तं तगरमेव च ॥
तण्डुलोदकपिष्टानि नेत्रनिर्वापणं परम् । नखवृद्धौ नखच्छेदस्तैलसेकश्च मास्यपि ॥

शय्यास्थानं भवेच्चास्य करीषैः पांशुभिस्तथा ।

शरन्निदाघयोः सेकः सर्पिषा च तथेष्यते ॥ ३३ ॥
इत्यादिमहापुराणेआग्नेयेगजचिकित्सावर्णनंनामसप्ताशीत्यधिकद्विशततमोऽध्यायः ।

---

# अष्टाशीत्यधिकद्विशततमोऽध्यायः

## अश्ववाहनसारः ।

धन्वन्तरिरुवाच ।

अश्ववाहनसारञ्च वक्ष्ये चाश्वचिकित्सनम् । वाजिनां संग्रहः कार्य्यो धर्मकामार्थसिद्धये
अश्विणी श्रवणं हस्तम् उत्तरात्रितयं तथा । नक्षत्राणि प्रशस्तानि हयानामादिवाहने
हेमन्तः शिशिरश्चैव वसन्तश्चाश्ववाहने । ग्रीष्मे शरदि वर्षासु निषिद्धं वाहनं हये ॥३॥
तीव्रैर्न च पयैर्दण्डैरदेशे न च ताड़येत् । कीलास्थिसंकुले चैव विषमे कण्टकान्विते
वालुकापङ्कसच्छन्नेगर्त्तागर्त्त प्रदूषिते । अचितज्ञो विनोपायैर्वाहनं कुरुते तु यः ॥ ५ ॥

स वाह्यते हयेनैव पृष्ठस्थः कटिकां विना ।
छन्दं विज्ञापयेत् कोऽपि सुकृती धीमतां वरः ॥ ६ ॥
अभ्यासादभियोगाच्च विनाशास्त्रं स्ववाहकः ।
स्नातस्य प्राङ्मुखस्याथ देवान् वपुषि योजयेत् ॥ ७ ॥

प्रणवादिनमोऽन्तेन स्ववीजेन यथाक्रमम् । ब्रह्मा चित्ते बले विष्णुर्वैनतेयः पराक्रमे ॥
पार्श्वे रुद्रा गुरुर्बुद्धौ विश्वेदेवाश्च मर्मसु । दृगावर्त्ते दृशीन्द्रकौं कर्णयोरश्विनौ तथा

जठरेऽग्निः स्वधा स्वेदे वाग् जिह्वायां जवेऽनिलः ।
पृष्ठतो नाकपृष्ठस्तु खुराग्रे सर्वपर्वताः ॥ १० ॥
ताराश्च रोमकूपेषु हृदी चान्द्रमसी कला ।
तेजस्यग्निरतिः श्रोण्यां ललाटे च जगत्पतिः ॥ ११ ॥

ग्रहाश्च हेषिते चैव तथैवोरसि वासुकिः । उपोषितोऽर्चयेत् सादी हयं दक्षश्रुतौ जपेत्

हय ! गन्धर्वराजस्त्वं श्रृणुष्व वचनं मम । गन्धर्वकुलजातस्त्वं माभूस्त्वं कुलदूषतः ॥
द्विजानां सत्यवाक्येन सोमस्य गरुड़स्य च । रुद्रस्य वरुणस्यैव पवनस्य बलेन च ॥

हुताशनस्य दीप्त्या च स्मर जातिं तुरङ्गम ! ।
स्मर राजेन्द्रपुत्रस्त्वं सत्यवाक्यमनुस्मर ॥ १५ ॥
स्मर त्वं वारुणीं कन्या स्मर त्वं कौस्तुभं मणिम् ।
क्षीरोदसागरे चैव मथ्यमाने सुरासुरैः ॥ १६ ॥

तत्र देवकुले जातः स्ववाक्यं परिपालय । कुले जातस्त्वमश्वानां मित्रं मे भव शाश्वतम्
सूश्रृणु मित्र! त्वमेतच्च सिद्धो मे भव वाहन! । विजयं रक्ष माञ्चैव समरे सिद्धिमावह

तव पृष्ठं समारुह्य हता दैत्याः सुरैः पुरा ।
अधुना त्वां समारुह्य जेष्यामि रिपुवाहिनीम् ॥ १९ ॥
कर्णजापं ततः कृत्वा विमुह्य च तथाप्यरीन् ।
पर्य्यानयेद्धयं सादी वाहयेद् युद्धतो जयः ॥ २० ॥
सञ्जाताः स्वशरीरेण दोषाः प्रायेण वाजिनाम् ।
हन्यन्तेऽतिप्रयत्नेन गुणाः सादिवरैः पुनः ॥ २१ ॥

सहजा इव दृश्यन्ते गुणाः सारिवरोद्भवः । नाशयन्ति गुणानन्ये सादिनः सहजानपि

गुणानेको विजानाति वेत्ति दोषांस्तथाऽपरः ।
धन्यो धीमान् हयं वेत्ति नोभयं वेत्ति मन्दधीः ॥ २३ ॥

अकर्मज्ञोऽनुपायज्ञो वेगासक्तोऽतिकोपनः । घनदण्डरतिच्छिद्रे यः समोऽपि न शस्यते
उपायज्ञोऽथ चित्तज्ञो विशुद्धो दोषनाशनः । गुणार्जनपरो नित्यं सर्वकर्मविशारदः ॥
प्रग्रहेण गृहीत्वाऽथ प्रविष्टो वाहभूतलम् । सव्यापसव्यभेदेन वाहनीयः स्वसादिना ॥

आरुह्य सहसा नैव ताड़नीयो हयोत्तमः ।
ताड़नाद् भयमाप्नोति भयान् मोहश्च जायते ॥ २७ ॥
प्रातः शादी प्लुतेनैव, वलामुद्धृत्य चालयेत ।
मन्दं मन्दं विना नालं धृतवलो दिनान्तरे ॥ २८ ॥

प्रोक्तमाश्वसनं सामभेदोऽश्वेन नियोज्यते। कषादिताड़नं दण्डो दानं कालसहिष्णुता
पूर्वपूर्वविशुद्धौ तु विदध्यादुत्तरोत्तरम्। जिह्वातले विनायोगं विदध्याद् वाहने हये॥

गुणेतरसतां वल्गां सृक्कण्या सह गाहयेत्।
विस्मार्य्य वाहनं गुर्य्याच्छिथिलानां शनैः शनैः॥ ३१॥
हयं जिह्वाङ्गमाहीने जिह्वाग्रन्थि विमोचयेत्।
गाटतां मोचयेत् तावत् यावत् स्तोभं न मुञ्चति॥ ३२॥
कुर्य्याच्छतमुरस्त्राणमविलालञ्च मुञ्चति।
ऊर्ध्वाननः स्वभावाद् यस्तस्योरस्त्राणमश्लथम्॥ ३३॥

विधाय वाहयेद् दृष्ट्या लीलया सादिसत्तमः। तस्य सव्येन पूर्वेण संयुक्तं सव्यवल्गया
यः कुर्य्यात् पश्चिमं पादं गृहीतस्तेन दक्षिणः। क्रमेणानेन यो सेवां कुरुते वामवल्गया

पादौ तेनापि पादः स्याद् गृहीतो वाम एव हि।
अग्रे चेच्चरणे त्यक्त जायते सुदृढ़ासनम्॥ ३६॥

यौ हृतौ दुष्करे चैव मोटके नाटकायनम्। सव्यहीनं खलीकारो हनने गुणने तथा॥
स्वभावं हि तुरङ्गस्य मुखव्यावर्त्तनं पुनः। न चैवेत्थं तुरङ्गाणां पादग्रहणहेतवः॥३८॥

विश्वस्तं हयमालोक्य गाढ़मापीड्य चासनम्।
रोकयित्वा मुखे पादं ग्राह्यतो लोकनं हितम्॥ ३९॥

गाढ़मापीड्य रागाभ्यां वल्गामाकृष्य गृह्यते। तद्बन्धनाद् युग्मपादं तद्वद् वक्रनमुच्यते

संयोज्य वल्गया पादान् वल्गामामोच्य वाञ्छितम्।
बाह्यपार्ष्णिप्रयोगात् तु यत्र तत् ताड़नं मतम्॥ ४१॥

प्रलयाविप्लवे ज्ञात्वा क्रमेणानेन बुद्धिमान्। मोटनेन चतुर्थेन विधिरेष विधीयते॥

नाधत्तेऽधश्च यः पादं योऽश्वो लघुनि मण्डले।
मोटनोद्वक्रनाभ्यान्तु ग्राहयेत् पादमीशितम्॥ ४३॥

चटयित्वासने गाटं मन्दमादाय यो व्रजेत्। ग्राह्यते संग्रहाद् यत्र तत् संग्रहणमुच्यते
हत्वा पार्श्वे प्रहारेण स्थानस्थो व्यग्रमानसम्। वल्गामाकृष्यपादेन ग्राह्यकण्टकपायनम्

उत्थितो योऽङ्घ्रिणानेन पार्ष्णिपादान् तुरङ्गमः ।
गृह्यते यत् खलीकृत्य खलीकारः स चेष्यते ॥ ४६ ॥
गतित्रये प्रियः पादमादत्ते नैव वाञ्छितः । हत्वा तु यत्र दण्डे न ग्राह्यते गहनं हि तत्
खलीकृत्य चतुष्केण तुरङ्गो वल्गयान्यया ।
उच्छ्वस्य ग्राह्यतेऽन्यत्र तत् स्यादुच्छ्वासनं पुनः ॥ ४८ ॥
स्वभावं बहिरस्यन्तं तस्यां दिशि पदायनम् ।
नियोज्य ग्राहयेत् तत् तु मुखव्यावर्त्तनं मतम् ॥ ४९ ॥
ग्राहयित्वा ततः पादं त्रिविधासु यथाक्रमम् । साधयेत्पञ्चधारासु क्रमशोमण्डलादिषु
आजानूर्ध्वाननं वाहं शिथिलं वाहयेत् सुधीः ।
अङ्गेषु लाघवं यावत् तावत् तं वाहयेद्धयम् ॥ ५१ ॥
मृदुः स्कन्धे लघुर्वक्त्रे शिथिलः सर्वसन्धिषु ।
यदा स सादिनो वश्यः संगृह्णीयात् तदा हयम् ॥ ५२ ॥
न त्यजेत् पश्चिमंपादं यदा साधुर्भवेत् तदा । तदाकृष्टिर्विधातव्या पाणिभ्यामिहवल्गया
तत्र त्रिको यथा तिष्ठेदुद्ग्रीवोऽश्वः समाननः ।
धरायां पश्चिमौ पादौ अन्तरीक्षे यदाश्रयौ ॥ ५४ ॥
तदासन्धारणं कुर्य्याद् गाढवाहं च मुष्टिना । सहसैवं समाकृष्टो यस्तुरङ्गो न तिष्ठति
शरीरं विक्षिपन्तश्च साधयेन्मण्डलभ्रमैः ।
क्षिपेत् स्कन्धश्च यो वाहं स च स्थाप्यो हि वल्गया ॥ ५६ ॥
गोमयं लवणं मूत्रं क्वथितं मृत्समन्वितम् । अङ्गलेपो मक्षिकादि दंशश्रमविनाशनः ॥
मध्ये भद्रादिजातीनां मण्डो देयो हि सादिना ।
दर्शनं भीततीक्ष्णस्य निरुत्साहः क्षुधाः हयः ॥ ५८ ॥
यथा वश्यस्तथा शिक्षा विनश्यन्त्यतिवाहिताः ।
अवाहिता न सिध्यन्ति तुङ्गवक्त्रांश्च वाहयेत् ॥ ५९ ॥
सम्पीड्य जानुयुग्मेन स्थिरमुष्टिस्तुरङ्गमम् । गोमूत्राकुटिला वेणी पद्ममण्डलमालिका

पञ्चोलूखलिका कार्य्या गर्वितास्तेऽतिकीर्त्तिताः ।
संक्षिप्तश्चैव विक्षिप्तं कुञ्चितञ्च यथाचितम् ॥ ६१ ॥
वल्गितावल्गितौ चैव षोष्टा चेत्थमुदाहृतम् । वीथीधनुःशतं यावदशीतिर्नवतिस्तथा
भद्रः सुसाध्यो वाजी स्यान्मन्दो दण्डैकमानसः ।
मृगजङ्घो मृगो वाजी सङ्कीर्णस्तत्समन्वयात् ॥ ६३ ॥
शर्करामधुलाजादः सुगन्धोऽश्वः शुचिर्द्विजः ।
तेजस्वी क्षत्रियश्चाश्वो विनीतो बुद्धिमांश्च यः ॥ ६४ ॥
शूद्रोऽशुचिश्चलो मन्दो विरूपो विमतिः खलः ।
वल्गया धार्य्यमाणोऽश्वो लालकं यश्च दर्शयेत् ॥ ६५ ॥
धारासु योजनीयोऽसौ प्रग्रहग्रहमोक्षणैः । अश्वादिलक्षणं वक्ष्ये शालिहोत्रो यथावदत्
इत्यादिमहापुराणेआग्नेये अश्ववाहनसारकथनंनामाष्टाशीत्यधिकद्विशततमोऽध्यायः ।

---

## ऊननवत्यधिकद्विशततमोऽध्यायः

### अश्वचिकित्सा ।

शालिहोत्र उवाच ।

अश्वानां लक्षणं वक्ष्ये चिकित्साञ्चैव सुश्रुत ।
हीनदन्तो विदन्तश्च कराली कृष्णतालुकः ॥ १ ॥
कृष्णजिह्वश्च यमजोऽजातमुष्कश्च यस्तथा ।
द्विशफश्च तथा शृङ्गी त्रिवर्णो व्याघ्रवर्णकः ॥ २ ॥
खरवर्णो भस्मवर्णो जातवर्णश्च काकुदी । श्वित्री च काकसादी च खरसारस्तथैव च
वानराक्षः कृष्णशटः कृष्णगुह्यस्तथैव च । कृष्णप्रोथश्च शूकश्च यश्च तित्तिरिसन्निभः
विषमां श्वेतपादश्च ध्रुवावर्त्तविवर्जितः । अशुभावर्त्तसंयुक्तो वर्जनीयस्तुरङ्गमः ॥ ५ ॥

रन्ध्रीपरन्ध्रयोर्द्वौ द्वौ द्वौ द्वौ मस्तकवक्षसोः। प्रयाणे च ललाटे च कण्ठावर्त्ताःशुभादश
सृक्कण्याञ्च ललाटे च कर्णमूले निगालके। बाहुमूले गले श्रेष्ठा आवर्त्तास्त्वशुभाः परे
शुकेन्द्रगोपचन्द्राभा ये च वायससन्निभाः। सुवर्णवर्णाः स्निग्धाश्च प्रशस्यास्तु सदैवहि
दीर्घग्रीवाक्षिकूटाश्च ह्रस्वकर्णाश्च शोभनाः। राज्ञां तुरङ्गमा यत्र विजयं वर्जयेत् ततः

पालितस्तु हयो दन्ती शुभदो दुःखदोऽन्यथा।
श्रियः पुत्रास्तु गन्धर्वा वाजिनो रत्नमुत्तमम् ॥ १० ॥

अश्वमेधे तु तुरगः पवित्रत्वात् तु हूयते। वृषो निम्बवृहत्यौ च गुडूची च समाक्षिका
सिंहा गन्धकरी पिण्डी स्वेदश्च शिरसस्तथा। हिङ्गुपुष्करमूलञ्च नागरं साम्लवेतसम्

पिप्पलीसैन्धवयुतं शूलघ्नं चोष्णवारिणा।
नागरातिविषा मुस्ता सानन्ता विल्व मालिका ॥ १३ ॥

क्वथमेषां पिवेद् वाजी सर्वातीसारनाशनम्। प्रियङ्गुसारिवाभ्याञ्च युक्तमाजं श्रृतं पयः

पर्य्याप्तशर्करं पीत्वा श्रमाद् वाजी विमुच्यते।
द्रोणिकायान्तु दातव्या तैलवस्तिस्तुरङ्गमे ॥ १५ ॥
कोष्ठजा च शिरा वेध्या तेन तस्य सुखं भवेत्।
दाड़िमं त्रिफला व्योषं गुड़ञ्च समभावेकम् ॥ १६ ॥

पिण्डमेतत् प्रदातव्यमश्वानां काशनाशनम्। प्रियङ्गुलोध्नमधुभिः पिवेद् वृषरसं हयः
क्षीरं वा पञ्चकोलाद्यं काशनाद्धि प्रमुच्यते। प्रस्कन्धेषुच सर्वेषु श्रेयआदौ विशोधनम्
अभ्यङ्गोद्वर्त्तनैः स्नेहं नस्यवर्त्तिक्रमः स्मृतः। ज्वरितानां तुरङ्गणां पयसैव क्रियाक्रमः
लोध्रकन्धरयोर्मूलं मातुलुङ्गाग्निनागराः। कुष्ठहिङ्गुवचारास्ना लेपोयं शोथनाशनः॥
मञ्जीष्ठा मधुकं द्राक्षावृहत्यौ रक्तचन्दनम्। त्रपुषीवीजमूलानि श्रृङ्गाटककशेरुकम्॥
अजापयःश्रृतमिदं सुशीतं शर्करान्वितम्। पीत्वा निरशनो वाजी रक्तमेहात् प्रमुच्यते
मन्याहनुनिगालस्थ शिराशोथो गलग्रहः। अभ्यङ्गः कटुतैलेन तत्र तेष्वेव शस्यते॥
गलग्रहगदो शोथः प्रायशो गलदेशके। प्रत्यक्पुष्पी तथावह्निः सैन्धवं सौरसो रसः

कृष्णाहिङ्गुयुतैरेभिः कृत्वा नस्यं न सीदति।

निशे ज्योतिष्मती पाठा कृष्णाकुष्ठं वचा मधु ॥ २५ ॥

जिह्वास्तम्भे च लेपोयं गुड़मूत्रयुतोहितः । तिलैर्यष्ट्या रजन्या च निम्बपत्रैश्च योजिता क्षौद्रेण शोधनी पिण्डी सर्पिषा व्रणरोपणी । अभिघातेन खञ्जन्ति ये ह्यश्वास्तीव्रवेदना परिषेकक्रिया तेषां तैलेनाशु रुजापहा । दोषकोपाभिघाताभ्यां पक्वभिन्ने व्रणक्रमः ॥

अश्वत्थोडुम्बरप्लक्षमधूकवटकल्कनैः ॥ २६ ॥

प्रभूतसलिलः क्वाथः सुपोष्णः व्रणशोधनः । शताह्वा नागरंरास्ना मञ्जिष्ठाकुष्ठसैन्धवैः देवदारुवचायुग्म रजनीरक्तचन्दनैः । तैलसिद्धं कषायेण गुडुच्याः पयसा सह ॥ ३१ ॥

म्रक्षणे वस्तिनश्ये च योज्यं सर्वत्र लिङ्गिने ।

रक्तस्रावो जलौकाभिर्नेत्रान्ते नेत्ररोगिणः ॥ ३२ ॥

खादिरोडुम्बराश्वत्थ कषायेण च साधनम् ।

धात्रीदुरालभातिक्ता प्रियङ्गुकुङ्कुमैः समैः ॥ ३३ ॥

गुडूच्या च कृतः कल्को हितो युक्तावलम्बिने ।

उत्पाते च शिले श्राव्ये शुष्कशेफे तथैव च ॥ ३४ ॥

क्षिप्रकारिणी दोषे च सद्यः विदलमिष्यते । गोशकृन् मञ्जिकाकुष्ठ रजनीतिलसर्षपैः ॥

गवां मूत्रेण पिष्टैश्च मर्दनं कण्डुनाशनम् ।

शीतो मधुयुतः क्वाथो नासिकायां सशर्करः ॥ ३६ ॥

रक्तपित्तहरः पानादश्वकर्णैस्तथैव च । सप्तमे सप्तमे देयमश्वानां लवणं दिने ॥ ३७ ॥ तथा भुक्तवतां देया अतिपाने तु वारुणी । जीवनीयैः समधुरैर्मृद्वीकाशर्करायुतैः ॥ सपिप्पलीकैः शरदि प्रतिपानं सपद्मकैः । विड़ङ्गापिप्पलीधान्य शताह्वालोध्रसैन्धवैः ॥ सचित्रकैस्तुरङ्गाणां प्रतिपानं हिमागमे । लोध्रं प्रियङ्गुका मुस्ता पिप्पलीविश्वभेषजैः

सक्षौद्रैः प्रतिपानं स्याद् वमन्ते कफनाशनम् ।

प्रियङ्गु पिप्पलीलोध्र यष्ट्याक्षैः समहौषधैः ॥ ४१ ॥

निदाघे सगुड़ा देया मदिरा प्रतिपानके । लोध्रकाष्ठं सलवणं पिप्पल्यो विश्वभेषजम् भवेत् तैलयुतैरेभिः प्रतिपानं घनागमे । निदाघोद्धृतपित्तार्त्ता शरत्सु पुष्टशोणिताः

प्रावृड्भिन्नपुरीषाश्च पिबेयुर्वाजिनो घृतम्। पिबेयुर्वाजिनस्तैलं कफवाय्वधिकास्तु ये

स्नेहव्यापद्भवो येषां कार्य्यं तेषां विरूक्षणम्।

त्र्यहं यवागूरूक्षा स्याद् भोजनं तक्रसंयुतम्॥ ४५॥

शरन्निदाघयोः सर्पिस्तैलं शीतवसन्तयोः। वर्षासु शिशिरे चैव वस्त्रौ यमकमिष्यते

गुर्वभिष्यन्दिभक्तानि व्यायामं स्नानमातपम्।

वायुवर्जश्च वाहस्य स्नेहपीतस्य वर्जितम्॥ ४७॥

स्नानं पानं शकृत्कृष्टमश्वानां सलिलागमे। अत्यर्थं दुर्दिने काले पानमेकं प्रशस्यते॥

युक्तशीतातपे काले द्विःपानं स्नपनं सकृत्।

ग्रीष्मे त्रिस्नानपानं स्याच्चिरं तस्यावगाहनम्॥ ४६॥

निस्तूषाणां प्रदातव्या यवानां चतुराढ़की। चणकव्रीहिमौद्गानि कलाय वापि दापयेत्

अहोरात्रेण चार्द्रस्य यवसस्य तुलादश। अष्टौ शुष्कस्य दातव्याश्चतस्रोऽथ वुषस्य वा

दूर्वा पित्तं यवः कासं वुषश्च श्लेष्मसञ्चयम्।

नाशयत्यर्जुनः श्वासं तथा मानो बलक्षयम्॥ ५२॥

वातिकाः पैत्तकाश्चैव श्लेष्मजाः सान्निपातिकाः।

न रोगाः पीड़यिष्यन्ति दूर्वाहारं तुरङ्गमम्॥ ५३॥

द्वौ रज्जुबन्धौ दुष्टानां पक्षयोरुभयोरपि। पश्चाद्बन्धश्च कर्त्तव्यौ दूरकीलव्यपाश्रयः

वासेयुस्त्वास्तृते स्थाने कृतधूपनभूमयः। यत्नोपन्यस्तयवसाः सप्रदीपाः सुरक्षिताः।

कृकवाकजकपयो धार्य्याश्चाश्वगृहे मृगाः॥ ५५॥

इत्यादिमहापुराणेआग्नेयेअश्वचिकित्साकथनंनामोननवत्यधिकद्विशततमोऽध्यायः।

# नवत्यधिकद्विशततमोऽध्यायः

## अश्वशान्तिः ।

शालिहोत्र उवाच ।

अश्वशान्तिं प्रवक्ष्यामि वाजिरोगविमर्द्दनीम् ।
नित्यां नैमित्तिकीं काम्यां त्रिविधां शृणु सुश्रुत ! ॥ १ ॥
शुभे दिने श्रीधरञ्च श्रियमुच्चैःश्रवाश्च तम् । हयराजं समभ्यर्च्य सावित्रैर्जुहुयाद् घृतम्
द्विजेभ्यो दक्षिणां दद्यादश्ववृद्धिस्तथा भवेत् ।
अश्वयुक् शुक्लपक्षस्य पञ्चदश्याञ्च शान्तिकम् ॥ ३ ॥
वहिः कुर्य्याद्‌ विशेषेण नाशत्यौ वरुणं यजेत् ।
समुल्लिख्य ततो देवीं शाखाभिः परिवारयेत् ॥ ४ ॥
घटान् सर्वरसैः पूर्वान् दिक्षु दद्यात् सवस्त्रकान् ।
यवाज्यं जुहुयात् प्राच्र्य यजेतश्वांश्च साश्वितान् ॥ ५ ॥
विप्रेभ्यो दक्षिणां दद्यान्नैमित्तिकमतः शृणु ।
मकरादौ हयानाञ्च पद्मैर्विष्णुं श्रियं यजेत् ॥ ६ ॥
ब्रह्माणं शङ्करं सोममादित्यञ्च तथाश्विनौ । रैवन्तमुच्चैःश्रवसं दिक्पालांश्च दलेष्वपि
प्रत्येकं पूर्णकुम्भैश्च वेद्यां तत्सौम्यतः स्थले ।
तिलाक्षताज्यसिद्धार्थान् देवतानां शतं शतम् ।
उपोषितेन कर्त्तव्यं कर्म चाश्वरुजापहम् ॥ ८ ॥
इत्यादिमहापुराणेआग्नेयेअश्वशान्तिकथनंनाम नवत्यधिकद्विशततमोऽध्यायः ।

---

# एकनवत्यधिकद्विशततमोऽध्यायः

## गजशान्तिः ।

शालिहोत्र उवाच ।

गजशान्तिं प्रवक्ष्यामि गजरोगविमर्दनीम् । विष्णुं श्रियञ्च पञ्चम्यां नागमैरावतं यजेत्

ब्रह्माणं शङ्करं विष्णुं शक्रं वैश्रवणं यमम् ।

चन्द्रार्कौ वरुणं वायुमग्निं पृथ्वीं तथा च खम् ॥ २ ॥

शेषं शैलान् कुञ्जरांश्च ये तेऽष्टौ देवयोनयः । विरुपाक्षं महापद्मं भद्रं सुमनसं तथा॥

कुमुदैरावणः पद्मः पुष्पदन्तोऽथ वामनः ।

सुप्रीतिकोऽञ्जनो नागा अष्टौ होमोऽथ दक्षिणाम् ॥ ४ ॥

गजाः शान्त्युदकासिक्ता वृद्धौ नैमित्तिकं शृणु ।

गजानां मकरादौ च ऐशान्यां नगराद् वहिः ॥ ५ ॥

स्थण्डिले कमले मध्ये विष्णुं लक्ष्मीञ्च केशरे ।

ब्रह्माणं भास्करं पृथ्वीं यजेत् स्कन्दं ह्यनन्तकम् ॥ ६ ॥

खं शिवं सोममिन्द्रादींस्तदस्त्राणि दलेक्रमात् ।

वज्रं शक्तिञ्च दण्डञ्च तोमरं पाशकं गदाम् ॥ ७ ॥

शूलं पद्मं वहिर्वृन्ते चक्रे सूर्य्यं तथाश्विनी ।

वसूनष्टौ तथा साध्यान् याम्येऽथ नैर्ऋते दले ॥ ८ ॥

देवानामङ्गिरसश्चाश्विभृगवो मरुतोऽनिले । विश्वेदेवांस्तथा दक्षे रुद्रा रौद्रेऽथ मण्डले

वृत्तया रेखया तत्र देवान् वै वाह्यतो यजेत् ।

सूत्रकारानृषीन् वाणीं पूर्वादौ सरितो गिरीन् ॥ १० ॥

महाभूतानि कोणेषु ऐशान्यादिषु संयजेत् । पद्मं चक्रं गदां शङ्खं चतुरश्रन्तु मण्डलम्

चतुर्द्वारं ततः कुम्भाः अग्न्यादौ च पताकिकाः ।

चत्वारस्तोरणा द्वारि नागानैरावतादिकान् ॥ १२ ॥

पूर्वादौ चौषधीभिश्च देवानां भाजनं पृथक् । पृथक्शताहुतीश्चाज्यैर्गजानर्च्य प्रदक्षिणम्

नागं वह्निं देवतादीन् वाद्यैर्जग्मुः स्वकं गृहम् ।

द्विजेभ्यो दक्षिणां दद्यात् हयवैद्यादिकस्तथा ॥ १४ ॥

करिणीं तु समारुह्य वदेत् कर्णन्तु कालवित् ।

नागराजेऽमृते शान्ति कृत्वाऽमुस्मिन् जपेन् मनुम् ॥ १५ ॥

श्रीगजस्त्वं कृतो राज्ञा भवानस्य गजाग्रणीः ।

प्रभूर्माल्याग्रभक्तैस्त्वां पूजयिष्यति पार्थिवः ॥ १६ ॥

लोकस्तदाज्ञया पूजां करिष्यति तदा तव । पालनीयस्त्वया राजा युद्धेऽध्वनि तथा गृहे

तिर्य्यग्भावं समुत्सृज्य दिव्यं भावमनुस्मर । देवासुरे पुरा युद्धे श्रीगजस्त्रिदशैः कृतः

ऐरावतसुतः श्रीमानरिष्टो नाम वारणः । श्रीगजानान्तु तत् तेजः सर्वमेवोपतिष्ठते ॥

तत्तेजस्तव नागेन्द्र ! दिव्यभावसमन्वितम् । उपतिष्ठतु भद्रं ते रक्ष राजानमाहवे ॥

इत्येवमभिषिक्तश्चमारोहेत शुभे नृपः । तस्यानुगमनं कुर्युः सशस्त्रनवसद्गजाः ॥ २१ ॥

शालास्वसौ स्थण्डिलेऽब्जे दिक्पालादीन् यजेद् वहिः ।

केशरेषु बलं नागं भुवश्चैव सरस्वतीम् ॥ २२ ॥

मध्येषु डिण्डिमं प्राच्यं गन्धमाल्यानुलेपनैः !

हुत्वा देयस्तु कलसो रसपूर्णो द्विजाय च ॥ २३ ॥

गजाध्यक्षं हस्तिपञ्च गणितज्ञश्च पूजयेत् ।

गजाध्यक्षाय तं दद्यात् डिण्डिमं सोऽपि वादयेत् ।

शुभगम्भीरशब्दैः स्याज्जघनस्थोऽभिवादयेत् ॥ २४ ॥

इत्यादिमहापुराणेआग्नेयेगजशान्तिकथनंनामैकनवत्यधिकद्विशततमोऽध्यायः ।

---

# द्विनवत्यधिकद्विशततमोऽध्यायः

## शान्त्यायुर्वेदः ।

धन्वन्तरिरुवाच ।

गोविप्रपालनं कार्य्यं राज्ञा गोशान्तिमावदे ।
गावः पवित्रा माङ्गल्या गोषु लोकाः प्रतिष्ठिताः ॥ १ ॥
शकृन्मूत्रं परं तासामलक्ष्मीनाशनं परम् । गवां कण्डूयनं वारि श्रृङ्गस्याघौघमर्दनम्
गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च रोचना । षड़ङ्गं परमं पाने दुःस्वप्नाद्यादिवारणम् ॥
रोचना विषरक्षोघ्नी ग्रासदः स्वर्गगो गवाम् ।
यद्गृहे दुःखिता गावः स याति नरकं नरः ॥ ४ ॥
परगोग्रासदः स्वर्गी गोहितो ब्रह्मलोकभाक् ।
गोदानात् कीर्त्तनाद्रक्षां कृत्वा चोद्धरते कुलम् ॥ ५ ॥
गवांश्वासात् पवित्रा भूः स्पर्शनात् किल्विषक्षयः ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ ६ ॥
एकरात्रोपवासश्च श्वपाकमपि शोधयेत् । सर्वाशुभ विनाशाय पुराचरितमीश्वरैः ॥
प्रत्येकञ्च त्र्यहाभ्यस्त महासान्तपनं स्मृतम् । सर्वकामप्रदञ्चैतत् सर्वाशुभविमर्दनम् ॥
कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिम् ।
निर्मलाः सर्वकामाप्त्या स्वर्गगाः स्युर्नरोत्तमाः ॥ ९ ॥
त्र्यहमुष्णं पिवेन् मूत्रं त्र्यहमुष्णं घृतं पिवेत् ।
त्र्यहमुष्णं पयः पीत्वा वायुभक्षः परं त्र्यहम् ॥ १० ॥
तप्तकृच्छ्रव्रतं सर्वपापघ्नं ब्रह्मलोकदम् । शीतैस्तु शीतकृच्छ्रं स्याद् ब्रह्मोक्तं ब्रह्मलोकदम्
गोमूत्रेनाचरेत् स्नानं वृत्तिं कुर्य्याच्च गोरसैः ।
गोभिर्व्रजेच्च भुक्तासु भुञ्जीताथ च गोव्रती ॥ १२ ॥

मासेनैकेन निष्पापो गोलोकी स्वर्गगो भवेत् ।
विद्याश्च गोमतीं जप्त्वा गोलोकं परमं व्रजेत् ॥ १३ ॥

गीतैर्नृत्यैरप्सरोभिर्विमाने तत्र मोदते । गावः सुरभयो नित्यं गावो गुग्गुलगन्धिकाः
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं परम् । अन्नमेव परं गावो देवानां हविरुत्तमम्
पावनं सर्वभूतानां क्षरन्ति च वदन्ति च ! हविषा मन्त्रपूतेन तर्पयन्त्यमरान् दिवि ॥
ऋषीणामग्निहोत्रेषु गावो होमेषु योजिताः । सर्वेषामेव भूतानां गावः शरणमुत्तमम्

गावः पवित्रं परमं गावो माङ्गल्यमुत्तमम् ।
गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः ॥ १८ ॥
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ।
नमो ब्रह्मसुतभ्यश्च पवित्राभ्यो नमो नमः ॥ १९ ॥

ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति

देवब्राह्मणगोसाधुसाध्वीभिः सकलं जगत् ।
धार्य्यते वै सदा तस्मात् सर्वे पूज्यतमा मताः ॥ २१ ॥
पिबन्ति यत्र तत् तीर्थं गङ्गाद्या गाव एव हि ।
गवां महात्म्यमुक्तं हि चिकित्साञ्च तथा शृणु ॥ २२ ॥

शृङ्गामयेषु धेनूनां तैलं दद्यात् ससैन्धवम् । शृङ्गवेरबलामांसकल्कसिद्धं समाक्षिकम्
कर्णशूलेषु सर्वेषु मञ्जिष्ठाहिङ्गुसैन्धवैः । सिद्धं तैलं प्रदातव्यं रसोनेनाथ वा पुनः ॥
बिल्वमूलमपामार्गं धातकी च सपाटला । कुटजं दन्तमूलेषु लेपात तच्छूलनाशनम् ॥
दन्तशूलहरैर्द्रव्यैर्घृतं राम ! विपाचितम् । मुखरोगहरं ज्ञेयं जिह्वारोगेषु सैन्धवम् ॥२६॥
शृङ्गवेरं हरिद्रे द्वे त्रिफला च गलग्रहे । हृच्छूले वस्तिशूले च वातरोगे क्षये तथा ॥
त्रिफला घृतमिश्रा च गवां पाने प्रशस्यते । अतीसारे हरिद्रे द्वे पाठाञ्चैव प्रदापयेत् ॥
सर्वेषु कोष्ठरोगेषु तथा शाखागदेषु च । शृङ्गवेरञ्च भार्गीञ्च कासे श्वासे प्रदापयेत् ॥
दातव्या भग्नसन्धाने प्रियङ्गुर्लवणान्विता । तैलं वातहरं पित्ते मधुयष्टीविपाचितम् ॥
कफे व्योषञ्च समधु सपुष्करजोऽस्रजे । तैलाज्यं हरितालञ्च भग्नक्षतिश्रुतं ददेत् ॥

मासास्तिलाः सगोधूमाः पशुक्षीरं घृतं तथा ।
एषां पिण्डी सलवणा वत्सानां पुष्टिदा त्वियम् ॥ ३२ ॥

वलप्रदा विषाणां स्याद् ग्रहनाशाय धूपकः । देवदारु वचा मांसी गुग्गुलुर्हिङ्गुसर्षपाः
ग्रहादिगदनाशाय एष धूपो गवां हितः । घण्टा चैव गवां कार्य्या धूपेनानेन धूपिता ॥

अश्वगन्धातिलैः शुक्लं तेन गौः क्षीरिणी भवेत् ।
रसायनञ्च पिण्याकं मत्तो यो धार्य्यते गृहे ॥ ३५ ॥

गवां पुरीषे पञ्चम्यां नित्यं शान्त्यै श्रियं यजेत् । वासुदेवञ्च गन्धाद्यैरपरा शान्तिरुच्यते
अशुयुक्शुक्लपक्षस्य पञ्चदश्यां यजेद्धरिन् । हरिरुद्रमजं सूर्य्यं श्रियमग्निं घृतेन च ॥३७॥

दधि सम्प्राश्य गाः पूज्य कार्य्यं वह्निप्रदक्षिणम् ।
वृषाणां योजयेद् युद्धं गीतवाद्यरवैर्वहिः ॥ ३८ ॥
गवान्तु लवणं देयं ब्राह्मणानाञ्च दक्षिणा ।
नैमित्तिके माकरादौ यजेद् विष्णुं सह श्रिया ॥ ३६ ॥
स्थण्डिलेऽब्जे मध्यगते दिक्षु केशरगान् सुरान् ।
सुभद्राजो रविः पूज्यो बहुरूपो वलिर्वहिः ॥ ४० ॥
ख विश्वरूपा सिद्धिश्च ऋद्धिः शान्तिश्च रोहिणी ।
दिग्धेनवो हि पूर्वाद्याः कृशरैश्चन्द्र ईश्वरः ॥ ४१ ॥
दिक्पालाः पद्मपत्रेषु कुम्भेष्वग्नौ च होमयेत् ।
क्षीरवृक्षस्य समिधः सर्षपाक्षततण्डुलान् ॥ ४२ ॥
शतं शतं सुवर्णञ्च कांस्यादिकं द्विजे ददेत् ।
गावः पूज्या विमोक्तव्याः शान्त्यै क्षीरादिसंयुताः ॥ ४३ ॥

अग्निरुवाच ।

शालिहोत्रः सुश्रुताय हयायुर्वेदमुक्तवान् । पालकाप्योऽङ्गराजाय गजायुर्वेदमब्रवीत् ॥

इत्यादि महापुराणेआग्नेयेशान्त्यायुर्वेदकथनंनामद्विनवत्यधिकद्विशततमोऽध्यायः ।

---

# त्रिनवत्यधिकद्विशततमोऽध्यायः

## मन्त्रपरिभाषा ।

अग्निरुवाच ।

मन्त्रविद्याहरिं वक्ष्ये भुक्तिमुक्तिप्रदं शृणु ।
विंशत्यर्णाधिका मन्त्रा मालामन्त्राः स्मृता द्विज ! ॥ १ ॥
दशाक्षराधिका मन्त्रास्तदर्वाग्वीजसंज्ञिताः ।
वार्द्धक्ये सिद्धिता ह्येते मालामन्त्रास्तु यौवने ॥ २ ॥
पञ्चाक्षराधिका मन्त्राः सिद्धिदाः सर्वदापरे ।
स्त्रीपुंनपुंसकत्वेन त्रिधाः स्युर्मन्त्रजातयः ॥ ३ ॥
स्त्रीमन्त्रा वह्निजायान्ता नमोऽन्ताश्च नपुंसकाः ।
शेषाः पुमांसस्ते शस्ता वश्योच्चाटविशेषु च ॥ ४ ॥
क्षुद्रक्रियामयध्वंसे स्त्रियोऽन्यत्र नपुंसकाः ।
मन्त्रावाग्ने सौम्याख्यौ ताराद्यन्तार्द्धयोर्जपेत् ॥ ५ ॥
तारान्त्याग्निवियत्प्रायो मन्त्र आग्नेय इष्यते ।
शिष्टः सौम्यः प्रशस्तौ तौ कर्मणोः क्रूरसौम्ययोः ॥ ६ ॥
आग्नेयमन्त्रः सौम्यः स्यात् प्रायशोऽन्ते नमोऽन्वितः ।
सौम्यमन्त्रस्तथाग्नेयः फट्कारेणान्ततो युतः ॥ ७ ॥
सुप्तः प्रबुद्धमात्रो वा मन्त्रः सिद्धिं न यच्छति। स्वापकालो महावाहो जागरो दक्षिणावहः
आग्नेयस्य मनोः सौम्यमन्त्रस्यैतद् विपर्य्ययात् । प्रबोधकालं जानीयादुभयोरुभयोरहः
दुष्टर्क्षराशिविद्वेषि वर्णादीन् वर्जयेन् मनून् ।
राज्यलाभोपकाराय प्रारभ्यारिः स्वरः कुरून् ॥ १० ॥
गोपालककुटीं प्रायात् पूर्णामित्युदिता लिपिः ।

नक्षत्रेक्षक्रमाद् योज्या स्वरान्त्यौ रेवतीयुजौ ॥ ११ ॥
वेला गुरुः स्वराः शोणः कर्मणैवेति भेदिताः ।
लिप्यर्णा वशिषु ज्ञेया षष्ठेशादींश्च योजयेत् ॥ १२ ॥
लिपौ चतुष्पथस्थायामाख्यवर्णपदान्तराः ।
सिद्धाः साध्या द्वितीयस्थाः सुसिद्धा वैरिणः परे ॥ १३ ॥
सिद्धादीन् कल्पयेदेवं सिद्धात्यन्तगुणैरपि ।
सिद्धे सिद्धो जपात् साध्यो जपपूजाहुतादिना ॥ १४ ॥
सुसिद्धो ध्यानमात्रेण साधकं नाशयेदरिः ।
दुष्टार्णप्रचुरो यः स्यान् मन्त्रः सर्वविनिन्दितः ॥ १५ ॥
प्रविश्य विधिवद् दीक्षामभिषेकावसानिकाम् ।
श्रुत्वा तन्त्रं गुरोर्लब्धं साधयेदीप्सितं मनुम् ॥ १६ ॥
धीरो दक्षः शुचिर्भक्तो जपध्यानादितत्परः । सिद्धस्तपस्वी कुशलस्तन्त्रज्ञः सत्यभाषणः
निग्रहानुग्रहे शक्तो गुरुरित्यभिधीयते ।
शान्तो दान्तः पटुश्चीर्ण ब्रह्मचर्य्यो हविष्यभुक् ॥ १८ ॥
कुर्वन्नाचार्य्यशुश्रूषां सिद्धोत्साही स शिष्यकः ।
स तूपदेश्यः पुत्रश्च विनयी वसुदस्तथा ॥ १६ ॥
मन्त्रं दद्यात् सुसिद्धौ तु सहस्रं देशिकं जपेत् ।
यदृच्छया श्रुतं मन्त्रं छलेनाथ बलेन वा ॥ २० ॥
पत्रे स्थितञ्च गाथाञ्च जनयेद् यद्यनर्थकम् । मन्त्रं यः साधयेदेकं जपहोमार्चनादिभिः
क्रियाभिर्भूरिभिस्तस्य सिध्यन्ते स्वल्पसाधनात् ।
सम्यक्सिद्धैकमन्त्रस्य नासाध्यमिह किञ्चन ॥ २२ ॥
बहुमन्त्रवतः पुंसः का कथा शिव एव सः । दशलक्षजपादेकवर्णो मन्त्रः प्रसिध्यति
वर्णवृद्ध्या जपह्रासस्ते नान्येषां समूहयेत् ।
वीजाद् द्वित्रिगुणान् मन्त्रान् मालामन्त्रे जपक्रिया ॥ २४ ॥

सङ्ख्यानुक्तौ शतं साष्टं सहस्रं वा जपादिषु ।
जपाद् दशांशं सर्वत्र साभिषेकं हुतं विदुः ॥ २५ ॥
द्रव्यानुक्तौ घृतं होमे जपोऽशक्तस्य सर्वतः ।
मूलमन्त्राद् दशांशः स्यादङ्गादीनां जपादिकम् ॥ २६ ॥
जपात् सशक्तिमन्त्रस्य कामदा मन्त्रदेवताः ।
साधकस्य भवेत् तृप्ता ध्यानहोमार्चनादिना ॥ २७ ॥
उच्चैर्जपाद् विशिष्टः स्यादुपांशुर्दशभिर्गुणैः । जिह्वाजपे शतगुणः सहस्रो मानसः स्मृतः
प्राङ्मुखोऽवाङ्मुखो वापि मन्त्रकर्म समारभेत् ।
प्रणवाद्यः सर्वमन्त्रा वाग्यतो विहिताशनः ॥ २९ ॥
आसीनस्तु जपेन् मन्त्रान् देवताचार्य्यतुल्यदृक् ।
कुटिविविक्ता देशाः स्युर्देवालय नदीह्रदाः ॥ ३० ॥
सिद्धौ यवागूपूपैर्वा पयो भक्ष्यं हविष्यकम् ।
मन्त्रस्य देवता तावत् तिथिवारेषु वै जपेत् ॥ ३१ ॥
कृष्णाष्टमीचतुर्दश्योर्ग्रहणादौ च साधकः । दस्रो यमोऽनलो धाता शशी रुद्रो गुरुर्दितिः
सर्पाः पितरोऽथ भगोऽर्यमा शीतेतरद्युतिः ।
त्वष्टा मरुत इन्द्राग्नी मित्रेन्द्रौ निर्ऋतिर्जलम् ॥ ३३ ॥
विश्वेदेवा हृषीकेशो वायवः सलिलाधिपः । अजैकपादहिर्बुध्नः पूषाश्विन्यादिदेवताः
अग्निदस्रावुमा निघ्नो नागश्चन्द्रो दिवाकरः ।
मातृदुर्गा दिशामीशः कृष्णो वैवस्वतः शिवः ॥ ३५ ॥
पञ्चदश्याः शशाङ्कस्तु पितरस्तिथिदेवताः । हरो दुर्गा गुरुर्विष्णुर्ब्रह्मा लक्ष्मीर्धनेश्वरः
एते सूर्य्यादिवारेशा लिपिन्यासोऽथ कथ्यते । केशान्तेषु च वृद्धेषु चक्षुषोः श्रवणद्वये
नासागण्डौष्ठदन्तानां द्वे द्वे मूर्द्धास्ययोः क्रमात् ।
वर्णान् पञ्चसुवर्गाणां बाहुचरणसन्धिषु ॥ ३८
पार्श्वयोः पृष्ठतो नाभौ हृदये च क्रमान् न्यसेत् ।

यादींश्च हृदये न्यस्येदेषां स्युः सप्तधातवः ॥ ३९ ॥
त्वगसृङ्मांसकस्नायुमेदोमज्जाशुक्राणि धातवः ।
वसाः पयो वासको लिख्यन्ते चैव लिपीश्वराः ॥ ४० ॥
श्रीकण्ठोऽनन्तसूक्ष्मौ च त्रिमूर्त्तिरमरेश्वरः ।
अग्नीशो भावभूतिश्च तिथीशः स्थाणुको हरः ॥ ४१ ॥
दण्डीशो भौतिकः सद्यो जातश्चानुग्रहेश्वरः । अक्रूरश्च महासेनः शरण्या देवता अमूः
ततः क्रोधीशचण्डौ च पञ्चान्तकशिवोत्तमौ । तथैव रुद्रकूर्मौ च त्रिनेत्रौ चतुराननः
अजेशः शर्मसोमेशौ तथा लाङ्गलिदारुकौ । अर्द्धनारीश्वरश्चोमा कान्तश्चाषाढिदण्डिनौ
अत्रिर्मीनश्च मेषश्च लोहितश्च शिखी तथा । छगलण्डद्विरण्डौ द्वौ समहाकालबालिनौ
भुजङ्गश्च पिनाकी च खड्गीशश्च वकः पुनः । श्वेतो भृगुर्लगुडीशाक्षश्च संवर्त्तकः स्मृतः
रुद्रात्मशक्तान् लिख्यादीन् नमोऽन्तान् विन्यसेत् क्रमात् ।
अङ्गानि विन्यसेत् सर्वे मन्त्राः साङ्गास्तु सिद्धिदाः ॥ ४७ ॥
हृल्लेखाव्योमसपूर्वाण्येतान्यङ्गानि विन्यसेत् । हृदादीन्यङ्गमन्त्रान्तैर्यो जपेद्धृदये नमः
स्वाहा शिरस्यथ वषट् शिखायां कवचे च हूम् ।
वौषट् नेत्रेऽस्त्राय फट् स्यात् पञ्चाङ्गं नेत्रवर्जितम् ॥ ४९ ॥
निरङ्गस्यात्मना चाङ्गं न्यस्येमां नियुतं जपेत् ।
क्रमाभ्यां देवीं वागीशीं यथोक्तांस्तु तिलान् हुनेत् ॥ ५० ॥
लिपिदेवी साक्षसूत्रकुम्भपुस्तकपद्मधृक् । कवित्वादि प्रयच्छेत कर्मादौ सिद्धये न्यसेत्
निष्कविर्निर्मलः सर्वे मन्त्राः सिद्ध्यन्ति मातृभिः ॥ ५१ ॥
इत्यादिमहापुराणेआग्नेये मन्त्रपरिभाषाकथनंनामत्रिनवत्यधिकद्विशततमोऽध्यायः ।

———

# चतुर्नवत्यधिकद्विशततमोऽध्यायः

## नागलक्षणानि ।

अग्निरुवाच ।

नागाद्योऽथ भावादि दशस्थानानि कर्म च । सूतकं दष्टचेष्टेति सप्तलक्षणमुच्यते ॥१॥

शेषवासुकितक्षाख्याः कर्कटोब्जो महाम्बुजः । शङ्खपालश्च कुलिक इत्यष्टौ नागवर्य्यकाः

दशाष्टपञ्चत्रिगुणशतमूर्द्धान्वितौ क्रमात् ।

विप्रौ नृपौ विशौ शूद्रौ द्वौ द्वौ नागेषु कीर्त्तितौ ॥ ३ ॥

तदन्वयाः पञ्चशतं तेभ्यो जाता असंख्यकाः ।

फणिमण्डलिराजीलवातपित्तकफात्मकाः ॥ ४ ॥

व्यन्तरादोषमिश्रास्ते सर्पा दर्वीकराः स्मृताः ।

रथाङ्गलाङ्गलच्छत्र स्वस्तिकाङ्कुशधारिणः ॥ ५ ॥

गोनसा मन्दगा दीर्घा मण्डलैर्विविधैश्चिताः ।

राजीलाश्चित्रिताः स्निग्धास्तिर्य्यगूर्ध्वञ्च वाजिभिः ॥ ६ ॥

व्यन्तरा मिश्रचिह्नाश्च भूवर्षाग्नेयवायवः । चतुर्विधास्ते षड्विंशभेदाः षोड़श गोनसाः

त्रयोदश च राजीला व्यन्तरा एकविंशतिः ।

येऽनुक्तकाले जायन्ते सर्पास्ते व्यन्तराः स्मृताः ॥ ८ ॥

आषाढ़ादित्रिमासैः स्याद् गर्भो मासचतुष्टये ।

अण्डकाना शते द्वे च चत्वारिंशत् प्रसूयते ॥ ९ ॥

सर्पा ग्रसन्ति सूतौघान् विना स्त्रीपुन्नपुंसकान् ।

उन्मीलतेऽक्षि सप्ताहात् कृष्णो मासाद् भवेद् वहिः ॥ १० ॥

द्वादशाहात् सुबोधः स्यात् दन्ताः स्युः सूर्य्यदर्शनात् ।

द्वात्रिंशद्दिनविंशत्या चतस्रस्तेषु दंष्ट्रिकाः ॥ ११ ॥

कराली मकरी कालरात्री च यमदूतिका । एतास्ताः सविषा दंष्ट्रा वामदक्षिणपार्श्वगाः

षण्मासान् मुच्यते कृत्ति जीवेत् षष्टिसमाह्वयम् ।
नागाः सूर्य्यादिवारेशाः सप्त उक्ता दिवा निशि ॥ १३ ॥

स्वेषां षट् प्रतिवारेषु कुलिकः सर्वसन्धिषु । शङ्खेण वा महाब्जेन सह तस्योदयोऽथवा
द्वयोर्वा नाड़िकामन्त्रमन्त्रकं कुलिकोदयः । दुष्टः स कालः सर्वत्र सर्पदंशे विशेषतः ॥

कृत्तिका भरणी स्वाती मूलं पूर्वत्रयाश्विनी ।
विशाखार्द्रा मघाश्लेषा चित्रा श्रवणरोहिणी ॥ १६ ॥
हस्ता मन्दकुजौ वारी पञ्चमी चाष्टमी तिथिः ।
षष्ठी रिक्ता शिशा निन्द्या पञ्चमी च चतुर्दशी ॥ १७ ॥

सन्ध्याचतुष्टयं दुष्टं दग्धयोगाश्च राशयः । एकद्विबहवो दंशा दष्टविद्धञ्च खण्डितम् ॥
अदंशमवगुप्तं स्याद् दंशमेवं चतुर्विधम् । त्रयो द्व्येकक्षता दंशा वेदना रुधिरोल्वणा

नक्तन्त्वेकाङ्घ्रिकूर्माभा दंशाश्च यमचोदिताः ।
दीहीपिपीलिकास्पर्शी कण्ठशोथरुजान्वितः ॥ २० ॥

सतोदो ग्रन्थितो दंशः सविषो न्यस्तनिर्विषः । देशालयै शून्यगृहे वल्मीकोद्यानकोटरे
रथ्यासन्धौ श्मशाने च नद्याञ्च सिन्धुसङ्गमे । द्वीपे चतुष्पथे सौधे गृहेऽब्जे पर्वताग्रतः
विलद्वारे जीर्णकूपे जीर्णवेश्मनि कुड्यके । शिग्रुश्लेष्मातकाक्षेषु जम्बूडुम्बरणेषु च ॥

वटे च जीर्णप्राकारे खास्यहृत् कक्षजत्रुणि ।
तालौशङ्खे गले मूर्ध्नि चिबुके नाभिपादयोः ॥ २४ ॥
दंशोऽशुभः शुभोदूतः पुष्पहस्तः सुवाक् सुधीः ।
लिङ्गवर्णसमानश्च शुक्लवस्त्रोऽमलः शुचिः ॥ २५ ॥

अपद्वारगतःशस्त्री प्रमादी भूगतेक्षणः । विवर्णवासाः पाशादिहस्तो गद्गदवर्णभाक् ॥
शुष्ककाष्ठाश्रितः खिन्नस्तिलाक्तककरांशुकः । आर्द्रवासाः कृष्णरक्तपुष्पयुक्तशिरोरुहः
कुचमर्दी नखच्छेदी गुदस्पृक् पादलेखकः । केशमुञ्ची तृणच्छेदी दुष्टा दूतास्तथैकशः

इड़ान्या वा वहेद् द्वेधा यदिदूतस्य चात्मनः ।

आभ्यां द्वाभ्यां पुष्टयास्मान् विद्यास्त्रीपुन्नपुंसकान् ॥ २६ ॥
दूतः स्पृशति यद्गात्रं तस्मिन् दंशमुदाहरेत् । दूताङ्घ्रिचलनं दुष्टमुत्थितिर्निश्चला शुभा
जीवपार्श्वे शुभो दूतो दुष्टोऽन्यत्र समागतः । जीवो गतागतैर्दुष्टः शुभो दूतनिवेदने ॥
दूतस्य वाक् प्रदुष्टा सा पूर्वामजार्द्धनिन्दिता ।
विभक्तैस्तस्य वाक्यान्तैर्विषर्निर्विपकालता ॥ ३२ ॥
आद्यैः स्वरैश्च काद्यैश्च वर्गैर्भिन्नलिपिर्द्विधा ।
स्वरजो वसुमान् वर्गी इतिक्षेपा च मातृका ॥ ३३ ॥
वाताग्नीन्द्रजलात्मानो वर्गेषु च चतुष्टयम् ।
नपुंसकाः पञ्चमाः स्युः स्वराः शक्रास्तु योनयः ॥ ३४ ॥
दुष्टौ दूतस्य वाक्पादौ वाताग्नी मध्यमो हरिः ।
प्रशस्ता वारुणा वर्णा अतिदुष्टा नपुंसकाः ॥ ३५ ॥
प्रस्थाने मङ्गलं वाक्यं गर्जितं मेघहस्तिनोः । प्रदक्षिणं फले वृक्षे वामस्य च रुतं जितम्
शुभा गीतादिशब्दाः स्युरीदृशं स्यादसिद्धये । अनर्थगीरथाक्रन्दो दक्षिणे विरुतं क्षुतम्
वेश्या क्षुतो नृपः कन्या गौर्दन्ती मुरजध्वजौ ।
क्षीराज्यदधिशङ्खाम्बु छत्रं भेरी फलं सुराः ॥ ३८ ॥
तण्डुला हेम रूप्यञ्च सिद्धयेऽभिमुखाअमी । सकाष्ठः सानलः कारुर्मलिनाम्बरभावभृत्
गलस्थटङ्को गोमायुगृध्रोलूककपर्दिकाः । तैलं कपालकार्पासा निषेधे भस्म नष्टये ॥
विषरोगाश्च सप्तस्युर्धातोर्धात्वन्तराप्तितः । विषदंशो ललाटं यात्यतो नेत्रं ततो मुखम्
आस्याच्च वचनीनाड्यौ धातून् प्राप्नोति हि क्रमात् ॥ ४१ ॥
इत्यादिमहापुराणेआग्नेयेनागलक्षणादिकथनंनामचतुर्नवत्यधिकद्विशततमोऽध्यायः ।

———

# पञ्चनवत्यधिकद्विशततमोऽध्यायः

## दष्टचिकित्सा ।

अग्निरुवाच ।

मन्त्रध्यानौषधैर्दष्ट चिकित्सां प्रवदामि ते । ओं नमो भगवते नीलकण्ठायेति

जपनाद् विषहानिः स्यादौषधं जीवरक्षणम् ॥ १ ॥

साज्यं सक्रद्रसं पेयं द्विविधं विषमुच्यते । जङ्गमं सर्पमूषादि शृङ्गादि स्थावरं विषम्

शान्तस्वरान्वितो ब्रह्मा लोहितं तारकं शिवः ।

वियतेर्नाममन्त्रोऽयं तार्क्ष्यः शब्दमयः स्मृतः ॥ ३ ॥

ओं ज्वल महामते ! हृदयाय गरुड़विड़ालशिरसे गरुड़शिखायै गरुड़ ! विषभञ्जन ! प्रभेदन ! प्रभेदन ! वित्रासय वित्रासय विमर्दय विमर्दय कवचाय अप्रतिहतशासनं वं हूं फट् अस्त्राय उग्ररूपधारक ! सर्वभयङ्कर ! भीषय सर्वं दह दह भस्मीकुरु कुरु स्वाहा नेत्राय । सप्तवर्गान्तुयुग्माष्टदिग्दलंस्वर ! केशरादिवर्णरुद्धं वह्निं राभूतकर्णिकं मातृकाम्बुजम् ।

कृत्वा हृदिस्थं तन्मन्त्री वामहस्ततले स्मरेत् ।

अङ्गुष्ठादौ न्यसेद् वर्णान् वियतेर्भेदिताः कलाः ॥ ४ ॥

पीतं वज्रचतुष्कोणं पार्थिवं शक्रदैवतम् । वृत्रार्द्धमाप्यपद्माद्धं शुक्लं वरुणदैवतम् । त्र्यस्त्रं स्वस्तिकयुक्तश्च तैजसं वह्निदैवतम् । वृत्तं विन्दुवृतं वायुदैवतं कृष्णमालिनम् अङ्गुष्ठाद्यङ्गुलीमध्ये पर्य्यस्तेषु स्ववेश्मसु । सुवर्णनागवाहेन वेष्टितेषु न्यसेत् क्रमात् वियतेश्चतुरो वर्णान् सुमण्डलसमत्विषः । अरूपे रवतन्मात्रे आकाशे शिवदैवते ।

कनिष्ठामध्यपर्वस्थे न्यसेत् तस्याद्यमक्षरम् ।

नागानामादिवर्णांश्च स्वमण्डलगतान् न्यसेत् ॥ ६ ॥

भूतादिवर्णान् विन्यसेदङ्गुष्ठाद्यन्तपर्वसु ।

तन्मात्रादिगुणाभ्यर्णानङ्गुलीषु न्यसेद् बुधः ॥ १० ॥
स्पर्शनादेव तार्क्ष्येण हस्ते हन्याद् विषद्वयम् ।
मण्डलादिषु तान् वर्णान् वियतेः कवयो जितान् ॥ ११ ॥
श्रेष्ठद्वयङ्गुलिभिर्देह नाभिस्थानेषु पर्वसु । आजानुतः सुवर्णाभ मानाभेस्तु हिनप्रभम्
कुङ्कुमारुणमाकण्ठादाकेशान्तात् सितेतरम् । ब्रह्माण्डव्यापिनं तार्क्षश्चन्द्राख्यंनागभूषणम्
नीलोग्रनासमात्मानं महापक्षं स्मरेद् बुधः ।
एवं तार्क्षात्मनो वाक्यान्मन्त्रः स्यान्मन्त्रिणो विषे ॥ १४ ॥
मुष्टिस्तार्क्षकरस्यान्तः स्थिताङ्गुष्ठविषापहा ।
तार्क्षं हस्तं समुद्यम्य तत्पश्चाङ्गुलिचालनात् ॥ १५ ॥
कुर्य्याद् विषस्य स्तम्भादींस्तदुक्तमदवीषया । आकाशादेश भूवीजः पञ्चार्णाधिपतिर्मनुः
संस्तम्भयेतिविषतो भाषया स्तम्भयेद् विषम् ।
व्यत्यस्तभूषया वीजो मन्त्रोऽयं साधुसाधितः ॥ १७ ॥
संप्लवः प्लावय यमः शब्दाद्यः संहरेद् विषम् । दण्डमुत्थापयेदेष सुजप्ताम्भोऽभिषेकतः
सुजप्तशङ्खभेर्य्यादि निस्वनश्रवणेन वा । संदहत्येव संयुक्तो भूतेजोव्यत्ययात् स्थितः॥
भूवायुव्यत्ययान्मन्त्रो विषं संक्रामयत्यसौ ।
अन्तस्थो निजवेश्मस्थो वीजाग्नीन्दुजलात्मभिः ॥ २० ॥
एतत् कर्म नयेन्मन्त्री गरुड़ाकृतिविग्रहः । तार्क्षवरुणगेहस्थस्तज्जपान् नाशयेद् विषम् ॥
जानुदण्डीदमुदितं स्वधा श्रीवीज लाञ्छितम् ।
स्नानपानात् सर्वविषं ज्वरारोगापमृत्युजित् ॥ २२ ॥
पक्षि पक्षि महापक्षि महापक्षि विधि स्वाहा ।
पक्षि पक्षि महापक्षि महापक्षि क्षि क्षि स्वाहा ।
द्वावेतौ पक्षिराड्मन्त्रौ विषघ्नावभिमन्त्रणात् । पक्षिराजाय विद्महे पक्षिदेवाय धीमहि तन्नो गरुड़ ! प्रचोदयात् ।
वह्निस्थौ पार्श्व तत्पूर्वौ दन्तश्रीकौ च दण्डिनौ ॥ २३ ॥

सकालो लाङ्गली चेति नीलकण्ठाद्यमीरितम् ।
वक्षःकण्ठशिखाश्चेतं न्यसेत् स्तम्भे सुसंस्कृतौ ॥ २४ ॥

हर हर हृदयाय नमः कपर्दिने च शिरसे नीलकण्ठाय वै शिखां कालकूटविषभक्षणाय स्वाहा अथ वर्म च कण्ठेनेत्रं कृत्तिवासास्त्रिनेत्रं पूर्वाद्यैराननैर्यु क्तंश्वेतपीतारुणासितैः । अभयं वरदं चापं वासुकिञ्च दधद् भुजैः । यस्योपरीतपार्श्वस्थगौरीरुद्रोऽस्य देवता ॥ पादजानुगुह्यनाभि हृत्कण्ठाननमूर्द्धसु । मन्त्रार्णान् न्यस्य करयोरङ्गुष्ठाद्यङ्गुलीषु च तर्जन्यादितदन्तासु सर्वमङ्गुष्ठयोर्न्यसेत् । ध्यात्वैवं संहरेत् क्षिप्रं बद्ध्वा शूलमुद्रया ॥

कनिष्ठा ज्येष्ठया बद्धा तिस्रोऽन्याः प्रसृतेर्जवाः ।
विषनाशे वामहस्तमन्यस्मिन् दक्षिणं करम् ॥ २८ ॥

ओं नमो भगवते नीलकण्ठाय चिः अमलकण्ठाय चिः ।
सर्वज्ञकण्ठाय चिः क्षिपः ॐ स्वाहा । अमलनीलकण्ठायनैकसर्वविषापहाय । नमस्ते रुद्रमन्यव इतिसंमार्जनाद् विषं विनश्यति न सन्देहः कर्णजाप्या उपानहा वा । यजेद्रुद्रविधानेन नीलग्रीवं महेश्वरं ।
विषव्याधिविनाशः स्यात् कृत्वा रुद्रविधानकम् ॥ २९ ॥

इत्यादिमहापुराणेआग्नेये दष्टचिकित्साकथनंनामपञ्चनवत्यधिकद्विशततमोऽध्यायः

---

## षणवत्यधिकद्विशततमोऽध्यायः

### पञ्चाङ्गरुद्रविधानम्

अग्निरुवाच ।

वक्ष्ये रुद्रविधानन्तु पञ्चाङ्गं सर्वदं परम् । हृदयं शिवसङ्कल्पः शिवः सूक्तन्तु पौरुषम् ॥ शिखाभ्यः सम्भृतं सूक्तमाशुः कवचमेव च । शतरुद्रीयमस्त्रञ्च रुद्रस्याङ्गानि पञ्च हि ॥

पञ्चाङ्गान् न्यस्य तं ध्यात्वा जपेद्रुद्रांस्ततः क्रमात् ।

यज्जाग्रत इतिसूक्तं यद्दृचं मानसं विदुः ॥ ३ ॥
ऋषिः स्याच्छिवसङ्कल्पश्छन्दस्त्रिष्टुबुदाहृतम् ।
शिवः सहस्रशीर्षेति तस्य नारयणोऽप्यृषिः ॥ ४ ॥
देवता पुरुषोऽनुष्टुप्छन्दो ज्ञेयश्च त्रैष्टुभम् । अभ्यश्चसम्भृतं सूक्तमृषिरुत्तरगो नरः ॥
आद्यानां तिसृणां त्रिष्टुप्छन्दोऽनुष्टुब्द्वयोरपि ।
चन्द्रस्त्रैष्टुभमन्त्यायाः पुरुषोऽस्यापि देवता ॥ ६ ॥
आशुरिन्द्रो द्वादशानां छन्दस्त्रिष्टुबुदाहृतम् । ऋषिः प्रोक्तः प्रतिरथः सूक्ते सप्तदशार्चिके
पृथक् पृथक् देवताः स्यूः पुरुविदङ्गदेवता । अवशिष्ट दैवतेषु छन्दोऽनुष्टुबुदाहृतम् ॥
असौ यमो भवित्रीन्द्रः पुरुलिङ्गोक्तदेवताः ।
पङ्क्तिच्छन्दोऽथ मर्माणि त्वपलिङ्गोक्तदेवताः ॥ ९ ॥
रौद्राध्याये च सर्वस्मिन्नार्षं स्यात् परमेष्वपि ।
प्रजापतिर्वा देवानां कुत्सस्य तिसृणां पुनः ॥ १० ॥
मनोद्वयोरुमैका स्याद्रुद्रो रुद्राश्च देवताः । आद्योनुवाकोऽथ पूर्वं एकरुद्राख्यदैवतः ॥
छन्दो गायत्र्यामाद्याया अनुष्टुप् तिसृणामृचाम् ।
तिसृणाञ्च तथा पङ्क्तिरनुष्टुवथ संस्मृतम् ॥ १२ ॥
द्वयोश्च जगतीच्छन्दो रुद्राणामप्यशीतयः । हिरण्यवाहवस्तिस्रो नमो वः किरिकाय च
पञ्चर्चो रुद्रदेवाः स्युर्मन्त्रे रुद्रानुवाककः । विंशके रुद्रदेवास्ताः प्रथमा वृहती स्मृता
ऋग्द्वितीया त्रिजगती तृतीया त्रिष्टुवेव च ।
अनुष्टुभो यजुस्तिस्र आर्घ्यादिज्ञः सुसिद्धिभाक् ॥ १५ ॥
त्रैलोक्यमोहनेनापि विषव्याध्यरिमर्दनम् ।
इं श्रीं ह्रीं हूं त्रैलोक्यमोहनाय विष्णवे नमः ।
अनुष्टुभं नृसिंहेन विषव्याधिविनाशनम् ॥ १६ ॥
ओं इं इं उग्रवीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्युं मृत्युं नमाम्यहम् ॥ १७ ॥

अयमेव तु पञ्चाङ्गो मन्त्रः सर्वार्थ साधकः। द्वादशाष्टाक्षरौ मन्त्रौ विषव्याधिविमर्दिनी
कुब्जिका त्रिपुरा गौरी चन्द्रिका विषहारिणी।
प्रसादमन्त्रो विषहृदायुरारोग्यवर्धनः। सौरो विनायकस्तद्वद्रुद्रमन्त्राः सदाखिला॥
इत्यादिमहापुराणेआग्नेयेपञ्चाङ्गरुद्रविधानकथनंनामषणवत्यधिकद्विशततमोऽध्यायः।

---

## सप्तनवत्यधिकद्विशततमोऽध्यायः

### विषहृन्मन्त्रौषधम्।

अग्निरुवाच।

ओं नमो भगवते रुद्राय छिन्न २ विषं ज्वलितपरशुपाणये च। नमो भगवते पक्षि-रुद्रायदष्टकम् उत्थापय २ दष्टकं कम्पय २ जल्पय २ सर्पदष्टमुत्थापयलल २ बन्ध २ मोचय २ वररुद्र! गच्छ २ बध २ त्रुट २ बुक २ भीषय २ मुष्टिना संहर विषं ठ ठ।

पक्षिरुद्रेण हृ विषं नाशमायाति मन्त्रणात्।

ओं नमो भगवते रुद्र! नाशयविषं स्थावरजङ्गमं कृत्रिमाकृत्रिमविष-मुपविषं नाशय नानाविषं दष्टकविषं नाशय धम २ दम २ वम २ मेघान्धकारधारा-कर्षनिर्विषीभव संहर २ गच्छ मच्छ आवेशय २ विषोत्थापनरूपं मन्त्रान्ताद्व विष-धारणम्। ओं क्षिप ओं क्षिप स्वाहा।

ओं ह्रां ह्रीं खीं सः ठन्द्रौं ह्रीं ठः। जपादिना साधितस्तु सर्पान् बध्नाति नित्यशः॥
एक द्वित्रिचतुर्वीजः कृष्णचक्राङ्गपञ्चकः। गोपीजनवल्लभाय स्वाहा सर्वार्थसाधकः॥

ओं नमो भगवते रुद्राय प्रेताधिपतये गुत्त्व २ गर्ज २ भ्रामय २ मुञ्च २ मुह्य २ कट २ आविश २ सुवर्णपतङ्ग! रुद्रो ज्ञापयति ठ २।

पातालक्षोभमन्त्रोऽयं मन्त्रणाद्व विषनाशनः। दंशकाहिदंशे सद्योदष्टः काष्ठशिलादिना
विषशान्त्यै दहेद्व दंशं ज्वालकोकनदादिना। शिरीषवीजपुष्पार्क क्षीरवीज कटुत्रयम्॥

विषं विनाशयेत् पानलेपनेनाञ्जनादिना । शिरीषपुष्पस्य रसभावितं मरिचं सितम् ॥
पाननस्याञ्जनाद्यैश्च विषं हन्यान्न संशयः । कोषातकी वचा हिङ्गु शिरीसार्कपयोयुतम्
कटुत्रयं समेषाम्भो हरेत् नस्यादिना विषम् ।
रामठेक्ष्वाकुसर्वाङ्ग चूर्णं नस्याद् विषापहम् ॥ ७ ॥
इन्द्रवलाग्निकं द्रोणं तुलसी देविका सहा । तद्रसाक्तं त्रिकटुकं चूर्णं भक्ष्य विषापहम्
पञ्चाङ्गं कृष्णपञ्चम्यां शिरीषस्य विषापहम् ॥ ८ ॥
इत्यादिमहापुराणेआग्नेयेविषहृन्मन्त्रौषधकथनंनामसप्तनवत्यधिकद्विशततमोऽध्यायः ।

---

# अष्टनवत्यधिकद्विशततमोऽध्यायः

## गोनसादिचिकित्सा ।

### अग्निरुवाच ।

गोनसादि चिकित्साञ्च वशिष्ठ ! शृणु वच्मिते । ह्रीं ह्रीं अमलपक्षि स्वाहा ।
ताम्बूलखादनान् मन्त्री हरेन्मण्डलिनो विषम् ॥ १ ॥
लशुनं रामठफलं कुष्ठाग्निव्योषकं विषे । स्नुहीक्षीरं गव्यघृतं पक्षं पीत्वाऽहिजे विषे ॥
अथ राजिलदष्टे च पेया कृष्णा ससैन्धवा । आज्याक्षौद्रशकृत्तोयं पुरीतत्या विषापहम्
सकृष्णाखण्डदुग्धाज्यं पातव्यं तेन माक्षिकम् ।
व्योषं पिच्छं विड़ालास्थि नकुलाङ्गरुहैः समैः ॥ ४ ॥
चूर्णितैर्मेषदुग्धाक्तैर्धूपः सर्वविषापह । रोमनिर्गुण्डिकाकोल वर्णैर्वा लशुनं समम् ॥
मुनिपत्रैः कृतश्वेदं दष्टं काञ्जिकपाचितैः । मूषिकाः षोड़श प्रोक्ता रसं कार्पासजं पिवेत्
सतैलं मूषिकार्त्तिघ्नं फलिनीकुसुमं तथा । सनागरगुड़ं भक्ष्यं तद्विषारोचकापहम् ॥
चिकित्सा विंशतिर्भूता लूताविषहरो गणः । पद्मकं पाटली कुष्ठं नतमूशीरचन्दनम् ॥
निर्गुण्डी शारिवा शेलु लूतार्त्तं सेचयेज्जलैः ।

गुञ्जानिर्गुण्डिकङ्कोलपर्णं शुण्ठी निशाद्वयम् ॥ ६ ॥
करञ्जास्थि च तत्पङ्कैः वृश्चिकार्तिहरं शृणु। मञ्जिष्ठा चन्दनं व्योष पुष्पं शिरीषकौमुदम्
संयोज्याश्चतुरो योगा लेपादौ वृश्चिकापहाः।
ओं नमो भगवते रुद्राय चिवि २ छिन्द २ किरि २ भिन्द २ खड्गेन छेदय २ शूलेन भेदय २ चक्रेण दारय २ ओं हूं फट्।
मन्त्रेण मन्त्रितो देयो गर्द्धभादीन् निकृन्तति ॥ ११ ॥
त्रिफलोशीरमुस्ताम्बु मांसीपद्मकचन्दनम्। अजाक्षीरेण पानादेर्गर्द्धभादेर्विषं हरेत्॥
हरेत् शिरीषपञ्चाङ्गं व्योषं शतपदीविषम्। सकन्धरं शिरीषास्थि हरेदुन्दूरजं विषम्॥
व्योषं ससर्पिः पिण्डीत मूलमस्य विषं हरेत्।
क्षारव्योषवचाहिङ्गु विडङ्गं सैन्धवं नतम् ॥ १४ ॥
अम्बष्ठातिवलाकुष्ठं सर्वकीटविषं हरेत्। यष्टिव्योष गुड़क्षीर योगः शूनो विषापहः॥
ओं सुभद्रायै नमः ओं सुप्रभायै नमः। यान्यौषधानि गृह्यन्ते विधानेन विना जनैः॥
तेषां वीजं त्वया ग्राह्यमिति ब्रह्माऽब्रवीच्च ताम्।
तां प्रणम्यौषधीं पश्चात् यवान् प्रक्षिप्य मुष्टिना ॥ १७ ॥
दश जप्त्वा मन्त्रमिदं नमस्कुर्य्यात् तदौषधम्। त्वामुद्धराम्यूर्ध्वनेत्रामनेनैव च भक्षयेत्
नमः पुरुषसिंहाय नमो गोपालकाय च। आत्मनैवाभिजानाति रणे कृष्णपराजयम्॥
एतेन सत्यवाक्येन अगदो मेऽस्तु सिद्ध्यतु।
नमोवैदूर्य्यमात्रे तन्न रक्ष २ मां सर्वं विषेभ्यो गौरि!
गान्धारि! चाण्डालि! मातङ्गिनी! स्वाहा हरिमाये!।
औषधादौ प्रयोक्तव्यो मन्त्रोऽयं स्थावरे विषे ॥ २० ॥
भुक्तमात्रे स्थिते ज्वाले पद्मं शीताम्बुसेवितम्।
पाययेत् सघृतं क्षौद्रं विषश्चेत् तदनन्तरम ॥ २१ ॥
इत्यादिमहापुराणेआग्नेयेगोनसादिचिकित्सावर्णनंनामाष्टनवत्यधिकद्विशततमोऽध्यायः

---

# नवनवत्यधिकद्विशततमोऽध्यायः

## बालग्रहहरबालतन्त्रम् ।

अग्निरुवाच ।

बालतन्त्रं प्रवक्ष्यामि बालादिग्रहमर्दनम् । अथ जात दिने वत्सं ग्रही गृह्णाति पापिनी

गात्रोद्वेगो निराहारो नानाग्रीवाविवर्त्तनम् ॥

तच्चेष्टितमिदं तत् स्यान् मातृणाञ्च बलं हरेत् ॥ २ ॥

मत्स्यमांस सुराभक्ष्य गन्धस्रग्धूपदीपकैः ।

लिम्पेच्च धातकीलोध्र मञ्जिष्ठा तालचन्दनैः ॥ ३ ॥

महिषाक्षेण धूपश्च द्विरात्रे भीषणी ग्रही । तच्चेष्टा कासनिश्वासौ गात्रसङ्कोचनं मुहुः

आजमूत्रैर्लिपेत् कृष्णासेव्यापामार्गचन्दनैः । गोश्रृङ्गदन्तकेशैश्च धूपयेत् पूर्ववद् बलिः

ग्रही त्रिरात्रे घण्टाली तच्चेष्टा क्रन्दनं मुहुः ।

जृम्भणं स्वनितं त्रासो गात्रोद्वेगमरोचनम् ॥ ६ ॥

केशराञ्जनगोहस्ति दन्तं साजपयो लिपेत् । नखराजीविल्वदलै धूपयेच्च बलिं हरेत् ॥७॥

ग्रही चतुर्थी काकोली गात्रोद्वेगप्ररोचनम् ।

फेनोद्गारो दिशो दृष्टिः कुल्माषैः सासवैर्बलिः ॥ ८ ॥

गजदन्ताहिनिर्मोकवाजिमूत्रप्रलेपनम् । सराजीनिम्बपत्रेण धूतकेशेन धूपयेत् ॥ ६ ॥

हंसाधिका पञ्चमी स्याज्जृम्भाश्वासोर्ध्वधारिणी ।

मुष्टिबन्धश्च तच्चेष्टा बलि मत्स्यादिना हरेत् ॥ १० ॥

मेषश्रृङ्गबलालोध्र शिलातालैः शिशुं लिपेत् । फट्कारी तु ग्रही षष्ठीं भयमोहप्ररोदनम्

निराहारोऽङ्गविक्षेपो हरेन्मत्स्यादिना बलिम् । राजीगुग्गुलुकुष्ठेभ दन्ताद्यैर्धूपलेपनैः ॥

सप्तमे मुक्तकेश्यार्त्तः पूतिगन्धो विजृम्भणम् ।

सादः प्ररोदनं कासो धूपो व्याघ्रनखैर्लिपेत् ॥ १३ ॥

वचागोमयगोमूत्रैः श्रीदण्डी चाष्टमे ग्रही। दिशो निरीक्षणं जिह्वाचालनं कासरोदनम्
वलिः पूर्वैव मत्स्याद्यैर्धूपलेपे च हिङ्गुला। वचासिद्धार्थलशुनैश्चोर्ध्वग्राही महाग्रही
उद्वेजनोर्ध्वनिःश्वासः स्वमुष्टिद्वयखादनम्। रक्तचन्दनकुष्ठाद्यैर्धूपयेल्लेपयेच्छिशुम्॥
कपिरोमनखैर्धूपो दशमी रोदनी ग्रही। तच्चेष्टा रोदनं शश्वत् सुगन्धो नीलवर्णता॥
धूपोनिम्बेन भूतोग्रराजी सर्जरसैर्लिपेत्। वलिं वहिर्हरेल्लाज कुल्माषकवकोदनम् ॥१८॥

यावत् त्रयोदशाहं स्यादेवं धूपादिका क्रिया।
गृह्णाति मासिकं वत्सं पूतनासङ्कुली ग्रही ॥ १६ ॥

काकवद्रोदनं श्वासो मूत्रगन्धोऽक्षिमीलनम्। गोमूत्रस्नपनं तस्य गोदन्तेन च धूपनम्
पीतवस्त्रं दद्देद्रक्तस्रग्गन्धौ तैलदीपकः। त्रिविधं पायसं मद्यं तिलमांसं चतुर्विधम्॥
करञ्जाधो यमदिशि सप्ताहं तैर्बलिं हरेत्। द्विमासिकञ्च मुकुटा वपुः शीतञ्च शीतलम्

छर्दिः स्यान् मुखशोषादि पुष्पगन्धांशुकानि च।
अपूपमोदनं दीपः कृष्णं नीरादि धूपकम् ॥ २३ ॥

तृतीये गोमुखी निद्रा सविण्मूत्रप्ररोदनम्। यवाः प्रियङ्गुः पलनं कुल्माषं शाकमोदनम्
क्षीरं पूर्वे दद्देन्मध्येऽहनि धूपश्च सर्पिषा। पञ्चभङ्गेन तत् स्नानं चतुर्थे पिङ्गलाप्तिहत

तनुः शीता पूतिगन्धः शोषः स मृयते ध्रुवम्।
पञ्चमी ललना गात्रसादः स्यान् मुखशोणितम् ॥ २६ ॥

अपानः पीतवर्णश्च मत्स्याद्यैर्दक्षिणे बलिः। षण्मासे पङ्कजा चेष्टा रोदनं विकृतः स्वरः
मत्स्यमांससुराभक्त पुष्पगन्धादिभिर्बलिः। सप्तमे तु निराहारा पूतिगन्धादिदन्तरुक्॥

पिष्टमांससुरामांसैर्बलिः स्याद् यमुनाष्टमे।
विस्फोटशोषणाद्यं स्यात् तच्चिकित्सां न कारयेत् ॥ २६ ॥

नवमे कुम्भकर्ण्यार्त्तो ज्वरी छर्दति पालकम्। रोदनं मांसकुल्माष मद्याद्यैश्चके बलिः

दशमे तापसी चेष्टा निराहारोऽक्षिमीलनम्।
घण्टा पताका पिष्टोक्ता सुरामांसबलिः समे ॥ ३१ ॥
राक्षस्येकादशी पीड़ा नेत्राद्यं न चिकित्सनम्।

चञ्चला द्वादशे श्वासः त्रासादिकविचेष्टितम् ॥ ३२ ॥
बलिः पूर्वेऽथ मध्याह्ने कुल्माषाद्यैस्तिलादिभिः ।
यातना तु द्वितीयेऽब्दे यातनं रोदनादिकम् ॥ ३३ ॥

तिलमांसमद्यमांसैर्बलिः स्नानादि पूर्ववत् । तृतीये रोदनी कम्पो रोदनं रक्तमूत्रकम् ॥
गुड़ौदनं तिलापूपः प्रतिमा तिलपिष्टजा । तिलस्नानं पञ्चपत्रैर्धूपो राजफलत्वा च ॥
चतुर्थे चटकाशोफो ज्वरः सर्वाङ्गसादनम् । मत्स्यमांसतिलाद्यैश्च बलिःस्नानञ्च धूपनम्

चञ्चला पञ्चमेऽब्दे तु ज्वरस्त्रासोऽङ्गसादनम् ।
मांसौदनाद्यैश्च बलिर्मेषशृङ्गेण धूपनम् ॥ ३७ ॥

पलाशोदुम्बराश्वत्थवटबिल्वदलाम्बुधृक् । षष्ठेऽब्दे धावनीशोषो वैरस्यं गात्रसादनम् ॥
सप्ताहोभिर्बलिः पूर्वैर्धूपस्नानञ्च भङ्गकैः । सप्तमे यमुनाच्छर्दिरवचोहासरोदनम् ॥३९॥
मांसपायसमद्याद्यैर्बलिः स्नानञ्च धूपनम । अष्टमे वा जातवेदा निराहारं प्ररोदनम् ॥
कृशरापूपदध्याद्यैर्बलिः स्नानञ्च धूपनम् । कालाब्दे नवमे बाह्वोरास्फोटो गर्जनं भयम् ॥

बलिः स्यात् कृशरापूप शक्तु कुल्माषपायसैः ।
दशमेऽब्दे कलहंसी दाहोऽङ्गकृशता ज्वरः ॥ ४२ ॥

पौलिकापूपदध्यन्नैः पञ्चरात्रं बलिं हरेत् । निम्बधूपकुष्ठलेप एकादशमके ग्रही ॥ ४३ ॥
देवदूती निष्ठुरवाक् बलिर्लेपादि पूर्ववत् । बलिका द्वादशे श्वासो बलिर्लेपादि पूर्ववत्
त्रयोदशे वायवी च मुखवाह्याङ्गसादनम् । रक्तान्नगन्धमाल्याद्यैर्बलिः पञ्चदलैः स्नपेत्
राजीनिम्बदलैर्धूपो यक्षिणी च चतुर्दशे । चेष्टाशूलं ज्वरो दाहो मांसभक्षादिकैर्बलिः

स्नानादि पूर्ववच्छान्त्यै मुण्डिकार्त्तिस्त्रिपञ्चके ।
तच्चेष्टासृक्स्रवः शश्वत् कुर्य्यान् मातृचिकित्सनम् ॥ ४७ ॥
वानरी षोड़शी भूमौ पतेन्निद्रा सदा ज्वरः ।
पायसाद्यैस्त्रिरात्रञ्च बलिः स्नानादि पूर्ववत् ॥ ४८ ॥

गन्धवती सप्तदशे गात्रोद्वेगः प्ररोदनम् । कुल्माषाद्यैर्बलिः स्नानधूपलेपादि पूर्ववत् ॥

दिनेशाः पूतना नाम वर्षेशाः सुकुमारिकाः ।

ओं नमः सर्वमातृभ्यो बालपीड़ासंयोगं भुञ्ज भुञ्ज चुट चुट स्फोटय २ स्फुर स्फुर गृह्ण गृह्ण आकट्टय आकट्टय एवं सिद्धरूपो ज्ञापयति। हर हर निर्दोषं कुरु कुरु बालिकां बालं स्त्रियं पुरुषं वा सर्वग्रहाणामुपक्रमात्।

चामुण्डे! नमो देव्यै हूं हूं ह्रीं अपसर अपसर दुष्टग्रहान् हूं तद् यथा गच्छन्तु गृह्यकाः अन्यत्र पन्थानं रुद्रो ज्ञापयति।

सर्वबालग्रहेषु स्यान्मन्त्रोऽयं सर्वकामिकः ॥ ५० ॥

ओं नमो भगवति! चामुण्डे! मुञ्च मुञ्च बलिं बालिकां वा बलिं गृह्ण गृह्ण जय जय वस वस।

सर्वत्र बलिदानेऽयं रक्षाकृत् पठ्यते मनुः।
ब्रह्मा विष्णुः शिवः स्कन्दो गौरी लक्ष्मीर्गणादयः।
रक्षन्तु च ज्वराभ्यां तं मुञ्चन्तु च कुमारकम् ॥ ५१ ॥

इत्याग्नेये महापुराणे आग्नेये बालग्रहहरबालमन्त्रकथनं नाम नवनवत्यधिकद्विशततमोऽध्यायः

---

# त्रिशततमोऽध्यायः

## ग्रहहृन्मन्त्रादिकम्।

अग्निरुवाच।

ग्रहापहारमन्त्रादीन् वक्ष्ये ग्रहविमर्दनान्। हर्षेच्छाभयशोकादि विरुद्धाशुचिभोजनात् ॥
गुरुदेवादिकोपाच्च पञ्चोन्मादा भवन्त्यथ।
त्रिदोषजाः सन्निपाता आगन्तुरिति ते स्मृताः ॥ २ ॥
देवादयो ग्रहा जाता रुद्रक्रोधादनेकधा। सरित्सरस्तड़ागादौ शैलोपवनसेतुषु ॥ ३ ॥
नदीसङ्गे शून्यगृहे विलद्वार्य्येकवृक्षके। ग्रहा गृह्णन्ति पुंसश्च स्त्रियः सुप्ताश्च गर्भिणीम्
आसन्नपुष्पां नग्नाश्च ऋतुस्नानं करोति या।

अवमानं नृणां वैरं विघ्नं भाग्यविपर्य्ययः ॥ ५ ॥
देवतागुरुधर्मादि सदाचारादि लङ्घनम् । पतनं शैलवृक्षादेर्विधुन्वन्मूर्द्धजं मुहुः ॥ ६ ॥
रुदन् नृत्यति रक्ताक्षो ह्रूरूपोऽनुग्रही नरः ।
उद्विग्नः शूलदाहार्त्तः क्षुत्तृष्णार्त्तः शिरोर्त्तिमान् ॥ ७ ॥
देहि देहीति याचेत बलिकामग्रही नरः । स्त्रीमालाभोगस्नानेच्छूरतिकामग्रही नरः ॥
महासुदर्शनो व्योमव्यापी विटपनासिकः । पातालनारसिंहाद्या चण्डीमन्त्रा ग्रहार्दनाः
पृथ्वीहिङ्गुवचाचक्रशिरीषदयितं परम् । पाशाङ्कुशधरं देवमक्षमालाकपालिनम् ॥ १० ॥
खट्वाङ्गाब्जादिशक्तिञ्च दधानं चतुराननम् । अन्तर्वाह्यादिखट्वाङ्ग पद्मस्थं रविमण्डले ॥
आदित्यादियुतं प्रार्च्य उदितेऽर्केर्ध्यं कं ददेत् ।
श्वासविषाग्निविप्रकुण्डीहल्लेखासकलो भृगुः ॥ १२ ॥
अर्काय भूर्भुवः स्वश्च ज्वालिनीं कुलमुद्गरम् । पद्मासनोऽरुणो रक्तवस्त्र सद्युतिविश्वकः
उदारः पद्मधृग्दोर्भ्यां सौम्यः सर्वाङ्गभूषितः ।
रक्ता हृदादयः सौम्या वरदाः पद्मधारिणः ॥ १४ ॥
विद्युत्पुञ्जनिभं वस्त्रं श्वेतः सौम्योऽरुणः कुजः ।
बुधस्तद्वद् गुरुः पीतः शुक्लः शुक्लः शनैश्चरः ॥ १५ ॥
कृष्णाङ्गारनिभो राहुर्धूम्रः केतुरुदाहृतः । वामोरुवामहस्तान्ते दक्षहस्ताभयप्रदा ॥
स्वनामाद्यन्तु बीजास्ते हस्तौसंशोध्य चास्त्रतः ।
अङ्गुष्ठादौ तले नेत्रे हृदाद्यं व्यापकं न्यसेत् ॥ १७ ॥
मूलबीजैस्त्रिभिः प्राण ध्यायकं न्यस्य साङ्गकम् ।
प्रक्षाल्य पात्रमन्त्रेण मूलेनापूर्य्य वारिणा ॥ १८ ॥
गन्धपुष्पाक्षतं न्यस्य दूर्वामध्यञ्च मन्त्रयेत् । आत्मानं तेन सम्प्रोक्ष्य पूजाद्रव्यञ्च वैध्रुवम्
प्रभूतं विमलं सारमाराध्यं परमं सुखम् । पीठाद्यान् कल्पयेदेतान् हृदा मध्येविदिक्षु च
पीठोपरि हृदा मध्ये दिक्षु चैव विदिक्षु च । पीठोपरि हृदाब्जञ्च केशवेष्वष्टशक्तयः ॥
वां दीप्ता वीं तथा सूक्ष्माम्बुञ्जयांबुञ्च भाद्रेकाम् ।

वें विभूतीं वैं विमलां वोमसिग्रातविद्युताम् ॥ २२ ॥

वौं सर्वतोमुखीं वं पीठं वः प्राच्यं रविं यजेत् ।

आवाह्य दद्यात् पाद्यादि हृत्षड्ङ्गेन सुव्रत ! ॥ २३ ॥

खकारौ दण्डिनौ चण्डौ मज्जा दशनसंयुता । मांसदीर्घा जरद्वाग्यु हृदैतत् सर्वदं खेः

वह्नीशरक्षो मरुतां दिक्षु पूज्या हृदादयः ।

स्वमन्त्रैः कर्णिकान्तस्था दिक्ष्वस्त्रं पुरतः सदृक् ॥ २५ ॥

पूर्वादिदिक्षु सम्पूज्याश्चन्द्रज्ञ गुरुभार्गवाः । नस्याञ्जनादि कुर्वीत साजमूत्रैर्ग्रहापहैः ॥

पाठापथ्यावचाशिग्रु सिन्धूव्योषैः पृथक्पलैः । अजाक्षीराढके पक्वसर्पिः सर्वग्रहान्हरेत्

वृश्चिकालीफलीकुष्ठं लवणानि च शार्ङ्गकम् ।

अपस्मारविनाशाय तज्जलं त्वभिभोजयेत् ॥ २८ ॥

विदारीकुशकाशेक्षु क्वाथजं पाययेत् पयः । द्रोणे सयष्टिकुष्माण्डरसे सर्पिश्च संस्कृतौ

पञ्चगव्यं घृतं तद्वद् योगं ज्वरहरं शृणु ।

ओं भस्मास्त्राय विद्महे एकदंष्ट्राय धीमहि तन्नो ज्वरः प्रचोदयात् ।

कृष्णोषणनिशारास्ना द्राक्षातैलं गुडं लिहेत् ॥ ३१ ॥

श्वासवानथ वा भार्गीं सयष्टिमधुसर्पिषा ।

पाठा तिक्ता कणा भार्गी अथवा मधुना लिहेत् ॥ ३२ ॥

धात्री विश्वसिता कृष्ण मुस्ताखर्जूर मागधी ।

पिवरश्चेति हिक्काघ्नं तत्त्रयं मधुनालिहेत् ॥ ३३ ॥

कामली जीरमाण्डूकी निशाधात्रीरसं पिवेत् । व्योषपद्मकत्रिफलाविड़ङ्गदेवदाड़वः ॥

रास्नाचूर्णं समं खण्डैर्जग्ध्वा कासहरं ध्रुवम् ॥ ३४ ॥

इत्यादिमहापुराणेआग्नेयेग्रहहृन्मन्त्रादिकथनंनामत्रिशततमोऽध्यायः ।

———

# एकाधिकत्रिशततमोऽध्यायः

## सूर्य्यार्चनम् ।

अग्निरुवाच ।

शय्या तु दण्डिसाजेश पावकश्चतुराननः । सर्वार्थसाधकमिदं वीजं पिण्डार्थमुच्यते ॥
स्वयं दीर्घस्वराद्यञ्च वीजेष्वङ्गानि सर्वशः । खातं साधु विषश्चैव सविन्दुं सकलं तथा
गणस्य पञ्चवीजानि पृथग्दृष्टफलं महत् ।
गणं जयाय नमः एकदंष्ट्राय अचलकर्णिने गजवक्त्राय महोदरहस्ताय ।
पञ्चाङ्गं सर्वसामान्यं सिद्धिः स्याल्लक्षजाप्यतः ॥ ३ ॥
गणाधिपतये गणेश्वराय गणनायकाय गणक्रीड़ाय ।
दिग्दले पूजयेन् मूर्त्तीः पुरावच्चाङ्गपञ्चकम् ।
वक्रतुण्डाय एकदंष्ट्राय महोदराय गजवक्त्राय ।
विकटाय विघ्नराजाय धूम्रवर्णाय । दिग्विदिक्षु यजेदेताल्लोकांशांश्चैव मुद्रया ॥ ४ ॥
मध्यमातर्जनीमध्यगताङ्गुष्ठौ समुष्टिकौ । चतुर्भुजो मोदकाढ्यो दण्डपाशाङ्कुशान्वितः
दन्तभक्षधरं रक्तं साव्जं पाशाङ्कुशैर्वृतम् । पूजयेत् तं चतुर्थ्याञ्च विशेषेणाथ नित्यशः
श्वेतार्कमूलेन कृतं सर्वाप्तिः स्यात् तिलैर्घृतैः ।
तण्डुलैर्दधिमध्वाज्यैः सौभाग्यं वश्यता भवेत् ॥ ७ ॥
घोषासृक्प्राणधात्वर्दी दण्डीमार्त्तण्डभैरवः । धर्मार्थकाममोक्षाणां कर्त्ता विम्बपुटावृतः
ह्रस्वाः स्युर्मूर्त्तयः पञ्च दीर्घा अङ्गानि तस्य च ।
सिन्दूरारुणमीशाने वामार्द्धदयितं रविम् ॥ ६ ॥
आग्नेयादिषु कोणेषु कुजमन्दाहिकेतवः । स्नात्वा विधिवदादित्यमाराध्यार्घ्यपुरःसरम्
कृतान्तभैरो निर्माल्यं तेजश्चण्डाय दीपितम् । रोचना कुङ्कुमंवारि रक्तगन्धाक्षताङ्कुरा
वेणुवीज यवाशालि श्यामाक तिलराजिकाः ।

जवापुष्पान्वितां दत्त्वा पात्रैः शिरसि धारयेत्तत् ॥ १२ ॥
जानुभ्यामवनीं गत्वा सूर्य्यायार्घ्यं निवेदयेत् ।
स्वविद्यामन्त्रितैः कुम्भैर्नवभिः प्रार्च्य वै ग्रहान् ॥ १३ ॥
ग्रहादिशान्तये स्नानं जप्त्वार्कं सर्वमाप्नुयात् ।
संग्राममविजयं साग्नि वीजदोषं सविन्दुकम् ॥ १४ ॥
न्यस्य मूर्द्धादि पादान्तं मूलं पूज्य तु मुद्रया ।
स्वाङ्गानि च यथान्यासमात्मानं भावयेद्रविम् ॥ १५ ॥
ध्यानञ्च मारणस्तम्भे पीतमाप्यायने सितम् । रिपुघातविधौ कृष्णं मोहयेच्छक्रचापवत्
योभिषेकजपध्यानपूजाहोमपरः सदा । तेजस्वी ह्यजयः श्रीमान् समुद्रादौ जयं लभेत्
ताम्बूलादाविदं न्यस्य जप्त्वा दद्यादुशीरकम् ।
न्यस्तवीजेन हस्तेन स्पर्शनं तद्वशे स्मृतम् ॥ १८ ॥
इत्यादिमहापुराणेआग्नेयेसूर्य्यार्चनकथनंनामैकाधिकत्रिशततमोऽध्यायः ।

---

# द्व्यधिकत्रिशततमोऽध्यायः

## नानामन्त्राः ।

अग्निरुवाच ।

वाक्कर्मपार्श्वयुक्शुक्रतोकक्रते मतो प्लवः । हुतान्ता देशवर्णेयं विद्या मुख्या सरस्वती ॥
अक्षाराशी वर्णलक्षं जपेत् स मतिमान् भवेत् ।
अत्रिः सवह्निर्वामाक्षि विन्दुरिन्द्राय हृत्परः ॥ २ ॥
वज्रपद्मधरं शक्रं पीतमावाह्य पूजयेत् । नियुतं होमयेदाज्यतिलांस्तेनाभिषेचयेत् ॥ ३ ॥
नृपादिभ्रष्टराज्यादिन् राज्यपुत्रादिमाप्नुयात् ।
हृल्लेखा शक्तिदेवाख्या दोषाग्निर्दण्डि दण्डवान् ॥ ४ ॥

शिवमिष्ट्वा जपेच्छक्तिमष्टम्यादिचतुर्दशीम् ।
चक्रपाशाङ्कुशधरां साभयां वरदायिकाम् ॥ ५ ॥
होमादिना च सौभाग्यं कवित्वं पुत्रवान् भवेत् ।

ओं ह्रीं ओं नमः कामाय सर्वजनहिताय सर्वजनमोहनाय प्रज्वलिताय सर्वजनहृदयं ममात्मगतं कुरु २ ओं

एतज्जपादिना मन्त्री वशयेत् सकलं जगत् ॥ ६ ॥
ओं ह्रीं चामुण्डे ! अमुकं दह २ पच २ ममवशमानय २ ठठ ।

वशीकरणकृन्मन्त्रश्चामुण्डायाः प्रकीर्त्तितः । फलत्रयकषायेण वराङ्गं क्षालयेद् वशे ॥

अश्वगन्धायवैः स्त्री तु निशाकर्पूरकादिना ।
पिप्पलीतण्डुलान्यष्टौ मरिचानि च विंशतिः ॥ ८ ॥

बृहती रसलेपश्च वशे स्यान् मरणान्तिकम् । कटीरमूलत्रिकटुक्षौद्रलेपस्तथा भवेत् ॥ हिमं कपित्थकरभं मागधी मधुकं मधु । तेषां लेपः प्रयुक्तस्तु दम्पत्योः स्वस्तिमावहेत् सशर्करयोनिलेपात् कदम्बरसको मधु । सहदेवी महालक्ष्मीः पुत्रजीवी कृताञ्जलिः ॥ एतच्चूर्णं शिरःक्षिप्तं लोकस्य वशमुत्तमम् । त्रिफलाचन्दनक्वाथप्रस्था द्विकुड़वं पृथक्

भृङ्गहेमरसं दोषा तावती चुञ्चुकं मधु ।
घृतैः पक्वा निशा छाया शुष्का लेप्या तु रञ्जनी ॥ १३ ॥
विदारीं सोच्चटामाष चूर्णीभूतां सशर्कराम् ।
मथितां यः पिवेत् क्षीरैर्नित्यं स्त्रीशतकं व्रजेत् ॥ १४ ॥

गुल्ममाषतिलव्रीहिचूर्णक्षीरशितान्वितम् । अश्वत्थवंशदर्भाणां मूलं वै वैष्णवीश्रियोः

मूलं दूर्वाश्वगन्धोत्थं पिवेत् क्षीरैः सुतार्थिनी ।
कौन्तीलक्ष्म्याः शिफा धात्री वज्रं लोध्रं वटाङ्कुरम् ॥ १६ ॥
आज्यक्षीरमृतौ पेयं पुत्रार्थं त्रिदिशं स्त्रिया ।
पुत्रार्थिनी पिवेत् क्षीरं श्रीमूलं सवटाङ्कुरम् ॥ १७ ॥

श्रीवटाङ्कुरदेवीनां रसं नस्ये पिवेच्च सा । श्रीपद्ममूलमुत्क्षीरमश्वत्थोत्तरमूलयुक्

तरलं पयसा युक्तं कार्पासफलपल्लवम् । अपामार्गस्य पुष्पाग्रं नवं समहिषीपयः ॥२१॥
पुत्रार्थश्चार्द्धषट्शाकैर्योगाश्चत्वार ईरिताः । शर्करोत्पलपुष्पाक्षलोध्रचन्दनसारिवाः ॥

स्रवमाणे स्त्रिया गर्भे दातव्यास्तण्डुलाम्भसा ।
लाजा यष्टिसिताद्राक्षा क्षौद्रसर्पि षि वा लिहेत् ॥ २२ ॥
अटरुषकलाङ्गुल्यः काकमाच्याः शिफा पृथक् ।
नाभेरधः समालिप्य प्रसूते प्रमदा सुखम् ॥ २२ ॥

रक्तं शुक्लं जवापुष्पं रक्तशुक्लस्रुतौ पिबेत् । केशरं वृहतीमूलं गोपीयष्टितृणोत्पलम् ॥
साक्षक्षीरं सतैलं तद्भक्षणं रोमजन्मकृत् । शीर्य्यमाणेषु केशेषु स्थापनञ्च भवेदिदम् ॥

धात्रीभृङ्गरसप्रस्थतैलञ्च क्षीरमाढकम् ।

ओं नमो भगवते त्र्यम्बकाय उपशमय २ चुलु २ मिलि २ भिद २ गोमानिनि चक्रिणि हूं फट् ।

अस्मिन् ग्रामे गोकुलस्य रक्षां कुरु २ शान्ति कुरु २ ।
घण्टाकर्णो महासेनो वीरः प्रोक्तो महाबलः ॥ २५ ॥
मारीनिर्नाशनकरः स मां पातु जगत्पति. ।
श्लोकौ चैव न्यसेदेतौ मन्त्रौ गोरक्षकौ पृथक् ॥ २६ ॥

इत्यादिमहापुराणेआग्नेयेनानामन्त्रकथनंनामद्व्यधिकत्रिशततमोऽध्यायः ।

---

## त्र्यधिकत्रिशततमोऽध्यायः

### अङ्गाक्षरार्चनम् ।

अग्निरुवाच ।

यदा जन्मर्क्षगमश्चन्द्रो भानुः सप्तमराशिगः ।
पौष्णः कालः स विज्ञेयस्तदा ग्रास परीक्षयेत् ॥ १ ॥

कण्ठोष्ठौ चलतः स्थानाद् यस्य वक्रा च नासिका ।
कृष्णा च जिह्वा सप्ताहं जीवितं तस्य वै भवेत् ॥ २ ॥
तारो मेषो विषं दन्ती नरो दीर्घा घना रसः ।
क्रुद्धोल्काय महोल्काय वीरोल्काय शिखा भवेत् ॥ ३ ॥
द्युल्काय सहस्रोल्काय वैष्णवोऽष्टाक्षरो मनुः । कनिष्ठादितदष्टानामङ्गुलीनाञ्च पर्वसु
ज्येष्ठाग्रेण क्रमात् तावन् मूर्द्धन्यष्टाक्षरं न्यसेत् ।
तर्जन्यां तारमङ्गुष्ठे लग्ने मध्यमया च तत् ॥ ५ ॥
तलेऽङ्गुष्ठे तदुत्तारं वीजोत्तारं ततो न्यसेत् । रक्तगौरधूम्रहरिज्जातरूपाः सितास्त्रयः
एवंरुपानिमान् वर्णान् भावबुद्धान् न्यसेत् क्रमात् ।
हृदास्यनेत्रमूर्द्धाङ्घ्रि तालुगुह्यकरादिषु ॥ ७ ॥
अङ्गानि च न्यसेद् वीजान् न्यस्याथ करदेहयोः ।
यथात्मनि तथा देवे न्यासः कार्य्यः करं विना ॥ ८ ॥
हृदादिस्थानगान् वर्णान् गन्धपुष्पैः समर्चयेत् ।
धर्माद्यग्न्याद्यधर्मादि गात्रे पीठेऽम्बुजे न्यसेत् ॥ ९ ॥
यत्र केशरकिञ्जल्क व्यापिसूर्य्येन्दुदाहिनाम् ।
मण्डलं त्रितयं तावद् भेदैस्तत्र न्यसेत् क्रमात् ॥ १० ॥
गुणाश्च तन्त्रसत्वाद्याः केशरस्थाश्च शक्तयः ।
विमलोत्कर्षणीज्ञान क्रियायोगाश्च वै क्रमात् ॥ ११ ॥
प्रह्वी सत्या तथेशानानुग्रहा मध्यतस्ततः । योगपीठं समभ्यर्च्य समावाह्य हरिं यजेत् ॥
पाद्यार्घ्याचमनीयञ्च पीतवस्त्रविभूषणम् । एतत् पञ्चोपचारञ्च सर्वं मूलेन दीयते ॥
वासुदेवादयः पूज्याश्चत्वारो दिक्षु मूर्त्तयः ।
विदिक्षु श्रीसरस्वत्यै रतिशान्त्यै च पूजयेत् ॥ १४ ॥
शङ्खं चक्रं गदां पद्मं मुषलं खड्गशार्ङ्गिके । वनमालान्वितं दिक्षु विदिक्षु च यजेत् क्रमात् ॥
अभ्यर्च्य च वहिस्तार्क्ष्यं देवस्य पुरतोऽर्चयेत् ।

विश्वक्सेनञ्च सोमेशं मध्ये आवरणाद् वहिः । इन्द्रादिपरिचारेण पूज्य सर्वमवाप्नुयात्
इत्यादिमहापुराणेआग्नेयेअङ्गाक्षरार्चनकथनंनामत्र्यधिकत्रिशततमोऽध्यायः ।

---

## चतुरधिकत्रिशततमोऽध्यायः

### पञ्चाक्षरादिपूजामन्त्राः ।

अग्निरुवाच ।

मेषः संज्ञा विषं साज्यमस्ति दीर्घोदकं रसः ।
एतत् पञ्चाक्षरं मन्त्रं शिवदञ्च शिवात्मकम् ॥ १ ॥
तारकादि समभ्यर्च्य देवत्वादि समाप्नुयात् । ज्ञानात्मकं परं ब्रह्म परं बुद्धिः शिवोहृदि
तच्छक्तिभूतः सर्वेशो भिन्नो ब्रह्मादिमूर्त्तिभिः ।
मन्त्रार्णाः पञ्चभूतानि तन्मन्त्रा विषयास्तथा ॥ ३ ॥
प्राणादिवायवः पञ्च ज्ञानकर्मेन्द्रियाणि च । सर्वं पञ्चाक्षरं ब्रह्म तद्वदष्टाक्षरान्तकः ॥
गव्येन प्रक्षयेद् दीक्षास्थानं मन्त्रेण चोदितम् ।
तन्त्रसम्भूतसम्भावः शिवमिष्ट्वा विधानतः ॥ ५ ॥
मूलमूर्त्यङ्गविद्याभिस्तण्डुलक्षेपणादिकम् ।
कृत्वा चरुञ्च यत् क्षीरं पुनस्तद् विभजेत् त्रिधा ॥ ६ ॥
निवेद्यैकं परं हुत्वा सशिष्योऽन्यद् भजेद् गुरुः ।
आचम्य सकलीकृत्य दद्याच्छिष्याय देशिकः ॥ ७ ॥
दन्तकाष्ठं हृदा जप्तं क्षीरवृक्षादिसम्भवम् ।
संशोध्य दन्तान् संक्षिप्त्वा प्रक्षाल्यैतत् क्षिपेद् भुवि ॥ ८ ॥
पूर्वेण सौम्यवारीश गतं शुभमतौ शुभम् । पुनस्तं शिष्यमायान्तं शिखाबन्धादिरक्षितम्
कृत्वा वेद्यां सहानेन स्वपेद् दर्भास्तरे बुधः ।

सुषुप्तं वीक्ष्य तं शिष्य प्रभाते श्रावयेद् गुरुम् ॥ १० ॥

शुभैः सिद्धिपदैर्भक्तिस्तैः पुनर्मण्डलार्चनम् । मण्डलं भद्रकाद्युक्तं पूजयेत् सर्वसिद्धिदम्
स्नात्वाचम्य मृदा देहं मन्त्रैरालिप्य कल्प्यते । शिवतीर्थे नरः स्नायादघमर्षणपूर्वकम्

हस्ताभिषेकं कृत्वाथ प्रायात् पूजादिकं बुधः ।
मूलेनाब्जासनं कुर्य्यात् तेन पूरककुम्भकान् ॥ १३ ॥
आत्मानं योजयित्वोर्ध्वं शिखान्ते द्वादशाङ्गुले ।
संशोष्य दग्ध्वा स्वतनुं प्लावयेदमृतेन च ॥ १४ ॥
ध्यात्वा दिव्यं वपुस्तस्मिन्नात्मानञ्च पुनर्नयेत् ।
कृत्वैवं चात्मशुद्धिः स्याद् विन्यस्यार्चनमारभेत् ॥ १५ ॥

क्रमात् कृष्णसितश्यामरक्तपीता नगादयः । मन्त्राणां दण्डिनाङ्गानि तेषु सर्वास्तुमूर्त्तयः

अङ्गुष्ठादिकनिष्ठान्तं विन्यस्याङ्गानि सर्वतः ।
न्यसेन् मन्त्राक्षर पादगुह्यहृद्वक्त्रमूर्ध्वसु ॥ १७ ॥
व्यापकं न्यस्य मूर्द्धादि मूलमङ्गानि विन्यसेत् ।
रक्तपीतश्यामसितान् पीठपादान् स्वकालजान् ॥ १८ ॥
स्वाङ्गान् मन्त्रैर्न्यसेद् गात्राण्यधर्मादीनि दिक्षु च ।
तत्र पद्मञ्च सूर्य्यादिमण्डले त्रितयं गुणान् ॥ १९ ॥

पूर्वादिपत्रे कामाद्यानवकं कर्णिकोपरि । वामाज्येष्ठा क्रमाद्रौद्री काली कलविकारिणी
बलविकारिणी चाथ बलप्रमथनी तथा । सर्वभूतदमनि च नवमी च मनोन्मनी ॥२१॥

श्वेता रक्ता सिता पिता श्यामा वह्निनिभाषिता ।
कृष्णारुणाश्चताः शक्तीर्ज्वालारूपाः स्मरेत् क्रमात् ॥ २२ ॥

अनन्तयोगपीठाय आवाह्याथ हृदब्जतः । स्फटिकाभं चतुर्बाहुं फलशूलधरं शिवम् ॥
साभयं वरदं पञ्चवदनञ्च त्रिलोचनम् । पत्रेषु मूर्त्तयः पञ्च स्थाप्यास्तत्पुरुषादयः ॥
पूर्वे तत्पुरुषः श्वेतोः अघोरोऽष्टभुजोऽसितः । चतुर्बाहुमुखः पीतः सद्योजातश्च पश्चिमे
वामदेवः स्त्रीविलासी चतुर्वक्त्रभुजोऽरुणः। सौम्ये पञ्चास्य ईशाने ईशानः सर्वदः सितः

इष्टाङ्गानि यथान्यायमनन्तं सूक्ष्ममर्चयेत् । सिद्धेश्वरं त्वेकनेत्रं पूर्वादौ दिशि पूजयेत्

एकरुद्रं त्रिनेत्रञ्च श्रीकण्ठञ्च शिखण्डिनम् ।

ऐशान्यादि विदिक्ष्वेते विद्येशाः कमलासनाः ॥ २८ ॥

श्वेतः पीतः सितो रक्तो धूम्रो रक्तोऽरुणः सितः । शूलाशनिशरेश्वासबाहवश्चतुराननाः

उमा चण्डेशनन्दीशौ महाकालो गणेश्वरः । वृषो भृङ्गिरिटिस्कन्दानुत्तरादौ प्रपूजयेत् ॥

कुलिशं शक्तिदण्डौ च खड्गपाशध्वजौ गदाम् ।

शूलं चक्रं यजेत् पद्मं पूर्वादौ देवमर्च्य च ॥ ३१ ॥

ततोऽधिवासितं शिष्यं पाययेद् गव्यपञ्चकम् ।

आचान्तं प्रोक्ष्य नेत्रान्तैर्नेत्रे नेत्रेण बन्धयेत् ॥ ३२ ॥

द्वारं प्रवेशयेच्छिष्यं मण्डपस्याथ दक्षिणे । सासनादि कुशासीनं तत्र संशोधयेद् गुरुः

आदित्यत्त्वानि संहृत्य परमार्थे लयः क्रमात् । पुनरुत्पादयेच्छिष्यं सृष्टिमार्गेण देशिकः

न्यासं शिष्ये ततः कृत्वा तंप्रदक्षिणमानयेत् । पश्चिमद्वारमानीय क्षेपयेत् कुसुमाञ्जलिम्

यस्मिन् पतन्ति पुष्पाणि तन्नामाद्यं विनिर्दिशेत् ।

पार्श्वे यागभुवः खाते कुण्डे सन्नाभिमेखले ॥ ३६ ॥

शिवाग्निं जनयित्वेष्ट्वा पुनः शिष्येण चार्चयेत् ।

ध्यानेनात्मनिग्रं शिष्यं संहृत्य प्रलयः क्रमात् ॥ ३७ ॥

पुनरुत्पाद्य तत्पानौ दद्याद् दर्भांश्च मन्त्रितान् ।

पृथिव्यादीनि तत्त्वानि जुहुयाद्धृदयादिभिः ॥ ३८ ॥

एकैकस्य शतं हुत्वा व्योममूलेन होमयेत् । हुत्वा पूर्णाहुतिं कुर्यादस्त्रेणाष्टाहुतीर्हुनेत्

प्रायश्चित्तं विशुद्ध्यर्थं ततः शेषं समापयेत् ।

कुम्भं समन्त्रितं प्राच्यं शिशुं पीठेऽभिषेचयेत् ॥ ४० ॥

शिष्ये तु समयं दत्त्वा स्वर्णाद्यैः स्वगुरुंयजेत् । दीक्षापञ्चाक्षरस्योक्ता विष्णादेरेवमेव हि

इत्यादिमहापुराणेआग्नेयेपञ्चाक्षरादिपूजामन्त्रकथनंनामचतुरधिकत्रिशततमोऽध्यायः ।

---

# पञ्चाधिकत्रिशततमोऽध्यायः

## पञ्चपञ्चाशद् विष्णुनामानि ।

अग्निरुवाच ।

जपन् वै पञ्चपञ्चाशद् विष्णुनामानि यो नरः ।
मन्त्रजप्यादिफलभाक् तीर्थेष्वर्चादिचाक्षयम् ॥ १ ॥
पुष्करे पुण्डरीकाक्षं गयायाञ्च गदाधरम् ।
राघवञ्चित्रकूटे तु प्रभासे दैत्यसूदनम् ॥ २ ॥
जयं जयन्त्यां तद्वच्च जयन्तं हस्तिनापुरे । वाराहं वर्द्धमाने च काश्मीरे चक्रपाणिनम्
जनार्दनञ्च कुब्जाम्रे मथुरायाञ्च केशवम् । कुब्जाम्रके हृषीकेशं गङ्गाद्वारे जटाधरम् ॥
शालग्रामे महायोगं हरिं गोवर्धनाचले । पिण्डारके चतुर्बाहुं शङ्खद्वारे च शङ्खिनम्
वामनञ्च कुरुक्षेत्रे यमुनायां त्रिविक्रमम् । विश्वेश्वरं तथाशोणे कपिलं पूर्वसागरे ॥
विष्णुं महोदधौ विद्याद् गङ्गासागरसङ्गमे ।
वनमालञ्च किष्किन्ध्यां देवं रैवतकंविदुः ॥ ७ ॥
काशीतटे महायोगं विरजायां रिपुञ्जयम् ।
विशाखयूपे ह्यजितं नेपाले लोकभावनम् ॥ ८ ॥
द्वारकायां विद्धिकृष्णं मन्दरे मधुसूदनम् । लोकाकुले रिपुहरं शालग्रामे हरिं स्मरेत्
पुरुषं पूरुषवटे विमले च जगत्प्रभुम् । अनन्तं सैन्धवारण्ये दण्डके शार्ङ्गधारिणम् ॥
उत्पलावर्तके सौरिं नर्मदायां श्रियः पतिम् ।
दामोदरं रैवतके नन्दायां जलशायिनम् ॥ ११ ॥
गोपीश्वरञ्च सिन्धव्धौ माहेन्द्रे चाच्युतं विदुः ।
सह्याद्रौ देवदेवेशं वैकुण्ठं मागधे वने ॥ १२ ॥
सर्वपापहरं विन्ध्ये औड्रे तु पुरुषोत्तमम् ।

आत्मानं हृदये विद्धि जपतां भुक्तिमुक्तिदम् ॥ १३ ॥

वटे वटे वैश्रवणं चत्वरे चत्वरे शिवम् । पर्वते पर्वते रामं सर्वत्र मधुसूदनम् ॥ १४ ॥

नरं भूमौ तथा व्योम्नि वशिष्ठे गरुड़ध्वजम् ।
वासुदेवञ्च सर्वत्र संस्मरन् भुक्तिमुक्तिभाक् ॥ १५ ॥
नामान्येतानि विष्णोश्च जप्त्वा सर्वमवाप्नुयात् ।
क्षेत्रेष्वेतेषु यत् श्राद्धं दानं जप्यञ्च तर्पणम् ॥ १६ ॥
तत् सर्वं कोटि गुणितं मृतो ब्रह्ममयो भवेत् ।
यः पठेत् शृणुयाद् वापि निर्मलः स्वर्गमाप्नुयात् ॥ १७ ॥

इत्यादिमहापुराणेआग्नेयेपञ्चपञ्चाशद्विष्णुनामकथनंनामपञ्चाधिकत्रिशततमोऽध्यायः

---

# षड़धिकत्रिशततमोऽध्यायः

## नारसिंहादिमन्त्राः

अग्निरुवाच ।

स्तम्भो विद्वेषणोच्चाट उत्सादो भ्रममारणे ।
व्याधिश्चेति स्मृतं क्षुद्रं तन्मोक्षो वक्ष्यते शृणु ॥ १ ॥

ओं नमो भगवते उन्मत्तरुद्राय भ्रम २ भ्रामय २ अमुकं वित्रासय उद्भ्रामय २ रौद्रेण हूं फट् ठ २ ।

श्मशाने निशिजप्तेन त्रिलक्षं मधुना हुनेत् ।
चिताग्नौ धूर्त्त समिद्भिर्भ्राम्यते सततं रिपुः ॥ २ ॥
हेमगौरिकया कृष्णा प्रतिमा हैमसूचिभिः ।
जप्त्वा विध्येच्चतत्कण्डे हृदि वा म्रियतेरिपुः ॥ ३ ॥

खरवालचिताभस्म ब्रह्मदण्डी च मर्कटी । गृहेवा मूर्ध्नि तच्चूर्णं जप्तमुत्सादकृत् क्षिपेत्

भृग्वाकाशौ सदीप्ताग्निर्भृगुर्वह्निश्च वर्म फट् ।
एवं सहस्रारे हूं फट् आचक्राय स्वाहा हृदयं विचक्राय शिवः ।
शिखाचक्रायाथ कवचं विचक्राया च नेत्रकम् ॥ ५ ॥
सञ्चक्रायास्त्रमुद्दिष्टं ज्वालाचक्राय पूर्ववत् । शार्ङ्गं सुदर्शनं क्षुद्रग्रहहृत् सर्वसाधनम्
मूर्द्धाक्षिमुखहृद्गुह्य पादे ह्यस्याक्षरान् न्यसेत् ।
चक्राब्जासनमग्न्याभं दंष्ट्रिणञ्च चतुर्भुजम् ॥ ७ ॥
शङ्खचक्रगदापद्मशलाकाङ्कुशपाणिनम् । चापिनं पिङ्गकेशाक्ष नरव्याप्तत्रिपिष्टपम् ॥८॥
नाभिस्तेनाग्निजा विद्धा नश्यन्ते व्याधयो ग्रहाः :
पीतचक्रं गदा रक्ता स्वराः श्याममवान्तरम् ॥ ६ ॥
नेमिः श्वेता वहिः कृष्णवर्णरेखा च पार्थिवी । मध्येतरैमरैवर्णानेवं चक्रद्वयं लिखेत्
आदावानीय कुम्भोदं गोचरे सन्निधाय च ।
दत्त्वा सुदर्शनं तत्र याम्ये चक्रे हुनेत् क्रमात् ॥ ११ ॥
आज्यापामार्गसमिधो ऽक्षतं तिलसर्षपौ । पायसं गव्यमाज्यञ्च सहस्राष्टकसंख्यया
हुतशेषं क्षिपेत् कुम्भे प्रतिद्रव्यं विधानवित् ।
प्रस्थानेन कृतं पिण्डं कुम्भे तस्मिन् निवेशयेत् ॥१३॥
विष्णादि सर्वं तत्रैव न्यसेत् तत्रैव दक्षिणे ।
नमो विष्णुजनेभ्यः सर्वशान्तिकरेभ्यः प्रतिगृह्णन्तु शान्तये नमः ।
दद्यादनेन मन्त्रेण हुतशेषाम्भसा बलिम् ॥ १४
फलके कल्पिते पात्रे पलाशं क्षीरशाखिनः । गव्यपूर्णे निवेश्यैव दिक्ष्वेवं होमयेद्द्विजैः
सदक्षिणमिदं होम द्वयं भूतादिनाशनम् । गव्याक्तिपत्रलिखितैर्निष्पर्णैः क्षुद्रमुद्धृतम् ॥
दूर्वाभिरायुषे पद्मैः श्रिये पुत्रा उडुम्बरैः । गोसिद्ध्यै सर्पिषा गोष्ठे मेधायै सर्वशाखिना
ओं क्ष्रौं नमो भगवते नारसिंहाय ज्वालामालिने दीप्तदंष्ट्रायाग्निनेत्राय सर्वरक्षोघ्नाय
सर्वभूतविनाशाय सर्वज्वरविनाशाय दह २ पच २ रक्ष २ हूं फट् ।
मन्त्रोऽयं नारसिंहस्य सकलाघनिवारणः । जप्यादिनाहरेत् क्षुद्र ग्रहमारी विषामयान्

चूर्णमण्डूकवयसा जलाग्निस्तम्भकृद् भवेत् ॥ १८ ॥

इत्यादिमहापुराणेआग्नेयेनारसिंहादिमन्त्रकथनंनामषड्धिकत्रिशततमोऽध्यायः

---

# सप्ताधिकत्रिशततमोऽध्यायः

## त्रैलोक्यमोहनमन्त्राः ।

अग्निरुवाच ।

वक्ष्ये मन्त्रं चतुर्वर्ग सिद्ध्यै त्रैलोक्यमोहनम् ।

ओं श्रीं ह्रीं हूं ओं नमः पुरुषोत्तम ! पुरुषोत्तमप्रतिरूप ! लक्ष्मीनिवास ! सकलजगत्क्षोभण ! सर्वस्त्रीहृदयदारण ! त्रिभुवनमदोन्मादकर ! सुरमनुजसुन्दरीजनमनांसि तापय २ दीपय २ शोषय २ मारय २ स्तम्भय २ द्रावय २ आकर्षय २ परमसुभग ! सर्वसौभाग्यकर ! कामप्रद ! अमुकं हन २ चक्रेण गदया खड्गेन सर्ववाणैर्भिद २ पाशेन हट्ट २ अङ्कुशेन ताड़य २ तुरु २ किं तिष्ठसि यावत् तावत् समीहितं मे सिद्धं भवति हूं फट् नमः ।

ओं पुरुषोत्तम ! त्रिभुवनमदोन्मादकर ! हूं फट् हृदयाय नमः कर्षय-महाबल ! हूं फट् अस्त्राय त्रिभुवनेश्वरसर्वजनमनांसि हन २ दारय २ मम वशमानय २ हूं फट् ।

नेत्राय त्रैलोक्यमोहन ! हृषीकेशाप्रतिरूप ! सर्वस्त्रीहृदयाकर्षण ! आगच्छ २ नमः ।

सङ्गाक्षिण्यायकेन न्यासं मूलवदीरितम् ॥ १ ॥

इष्ट्वा सज्ञप्य पञ्चाशत्सहस्रमभिषिच्य च ।

कुण्डेऽग्नी देविके वह्नौ चरुं कृत्वा शतं हुनेत् ॥ २ ॥

पृथग् दधि घृतं क्षीरं चरुं साज्यं पयः श्रृतम् । द्वादशाहुतिमूलेन सहस्राञ्चाक्षतांस्तिलान्

यवं मधुत्रयं पुष्पं फलं दधि समिच्छतम् ।

हुत्वा पूर्णाहुतिं शिष्टं प्राशयेत् सघृतं चरुम् ॥ ४ ॥
सम्भोज्य विप्रानाचार्य्यं तोषयेत् सिध्यते मनुः ।
स्नात्वा यथावदाचम्य वाग्यतो यागमन्दिरम् ॥ ५ ॥
गत्वा पद्मासनं बद्ध्वा शोषयेद् विधिना वपुः ।
रक्षोघ्न विघ्नकृद् दिक्षु न्यसेदादौ सुदर्शनम् ॥ ६ ॥
पञ्चबीजं नाभिमध्यस्थं धूम्रं चण्डानिलात्मकम् ।
अशेषं कल्मषं देहाद् विश्लेषयदनुस्मरेत् ॥ ७ ॥
रबीजं हृदयाब्जस्थं स्मृत्वा ज्वालाभिरादहेत् ।
ऊर्ध्वाधस्तिर्य्यगाभिस्तु मूर्ध्नि संप्लावयेद् वपुः ॥ ८ ॥
ध्यात्वामृतैर्बहिश्चान्तःसुषुम्नामार्गगामिभिः । एवं शुद्धवपुः प्राणानायम्य मनुना त्रिधा
विन्यसेन्न्यस्तहस्तान्तः शक्ति मस्तकचक्रयोः ।
गुह्ये गले दिक्षु हृदि कुक्षौ देहे च सर्वतः ॥ १० ॥
आवाह्य ब्रह्मरन्ध्रेण हृत्पद्मे सूर्य्यमण्डलात् ।
तारेण सम्परात्मानं स्मरेत् तं सर्वलक्षणम् ॥ ११ ॥
त्रैलोक्यमोहनाय विद्महे स्मराय धीमहि तन्नो विष्णुः प्रचोदयात् ।
आत्मार्च्चनात् क्रतुद्रव्यं प्रोक्षयेच्छुद्धपात्रकम् ।
कृत्वात्मपूजां विधिना स्थण्डिले तं समर्चयेत् ॥ १२ ॥
कर्मादिकल्पिते पीठे पद्मस्थं गरुडोपरि । सर्वाङ्गसुन्दरं प्राप्त वयोलावण्ययौवनम् ॥
मदाघूर्णिततात्राक्षमुदारं स्मरविह्वलम् । दिव्यमाल्याम्बरलेप भूषितं सस्मिताननम् ॥
विष्णुं नानाविधानेक परिवारपरिच्छदम् । लोकानुग्रहणं सौम्यं सहस्रादित्यतेजसम् ॥
पञ्चबाणधरं प्राप्तकामैक्षं द्विचतुर्भुजम् । देवस्त्रीभिर्वृतं देवी मुखासक्तेक्षणं जपेत् ॥
चक्रं शङ्खं धनुः खड्गं गदां मुषलमङ्कुशम् । पाशञ्च बिभ्रतं चार्चेदावाहादि विसर्गतः ॥
श्रियं वामोरुजङ्घास्थां श्लिष्यन्ति पाणिना पतिम् ।
साब्जचामरकरां पीनां श्रीवत्सकौस्तुभान्विताम् ॥ १८ ॥

मालिनं पीतवस्त्रञ्च चक्राद्याढ्यं हरिं यजेत् ।

ओं सुदर्शन ! महाचक्रराज ! दुष्टभयङ्कर ! छिद् २ छिन्द २ विदारय २ परममन्त्रान् ग्रस २ भक्षय २ भूतानि चाशप २ हूं फट् ओं जलचराय स्वाहा । खड्गतीक्ष्ण ! छिन्द खड्गाय नमः । शारङ्गाय सशराय हूं फट् । भूतग्रामाय विद्महे चतुर्विधाय धीमहि तन्नो ब्रह्म प्रचोदयात् संवर्त्तक ! श्वसन ! पोथय २ हूं फट् स्वाहा । पाश ! बन्ध २ आकर्षय २ हूं फट् । अङ्कुशेन कट्ट हूं फट् ।

क्रमाद् भुजेषु मन्त्रैः स्वैरेभिरस्त्राणि पूजयेत् ॥ १९ ॥

ओं पक्षिराजाय हूं फट् । तार्क्ष्यं यजेत् कर्णिकायामङ्गदेवान् यथाविधि ।

शक्तिरिन्द्रादि यन्त्रेषु तार्क्ष्याद्या धृतचामराः ॥ २० ॥

शक्तयोऽन्ते प्रयोज्यादौ सुरेशाद्याश्च दण्डिना ।

पीते लक्ष्मीसरस्वत्यौ रतिप्रीतिजयाः सिताः ॥ २१ ॥

कीर्त्तिकान्त्यौ सिते श्यामे तुष्टिपुष्ट्यौ स्मरोदिते ।

लोकेशान्तं यजेद् देवं विष्णुमिष्टार्थसिद्धये ॥ २२ ॥

ध्यायेन् मन्त्रं जपित्वैनं जुहुयात् त्वभिषेचयेत् ।

ओं श्रीं क्रीं ह्रीं हूं त्रैलोक्यमोहनाय विष्णवे नमः ।

एतत्पूजादिना सर्वान् कामानाप्नोति पूर्ववत् ॥ २३ ॥

तोयैः सम्मोहनी पुष्पैर्नित्यं तेनच तर्पयेत् । ब्रह्मा सशक्रश्रीदण्डी बीजं त्रैलोक्यमोहनम्

जप्त्वा त्रिलक्ष हुत्वा च लक्षं बिल्वैश्च साज्यकैः ।

तण्डुलैः फलगन्धाद्यैः दूर्वाभिस्त्वायुराप्नुयात् ॥ २५ ॥

तयाभिषेकहोमादि क्रियातुष्टो ह्यभीष्टदः ।

ओं नमो भगवते वराहाय भुर्भुवः स्वःपतये भूपतित्वं मे देहि हृदयाय स्वाहा ।

पञ्चाङ्गं नित्यमयुतं जप्त्वायूराज्यमाप्नुयात् ॥ २६ ॥

इत्यादिमहापुराणे आग्नेये त्रैलोक्यमोहनमन्त्रवर्णनंनामसप्ताधिकत्रिशततमोऽध्यायः ।

---

# अष्टाधिकत्रिशततमोऽध्यायः

## त्रैलोक्यमोहनीलक्ष्म्यादिपूजा ।

अग्निरुवाच ।

वक्षः सवह्निर्वामाक्षौ दण्डी श्रीः सर्वसिद्धिदा ।
महाश्रिये महासिद्धे ! महाविद्युत्प्रभे ! नमः ॥ १ ॥

श्रिये देवि ! विजये ! नमः । महाबले बन्ध २ नमः । ह्रूं महाकाये ! पद्महस्ते ! ह्रूं फट् श्रियै नमः । श्रियै फट् श्रीं नमः । श्रीये श्रीद ! नमः । स्वाहा श्रीफट् ॥

अस्याङ्गानि नवोक्तानि तेष्वेकञ्च समाश्रयेत् ।
त्रिलक्षमेकलक्षं वा जप्त्वाक्षाञ्जैश्च भूतिदः ॥ २ ॥
श्रीगेहे विष्णुगेहे वा श्रियं पूज्य धनं लभेत् ।
आज्याक्तैस्तण्डुलैर्लक्षं जुहुयात् खादिरानले ॥ ३ ॥
राजा वश्यो भवेद् वृद्धिः श्रीश्च स्यादुत्तरोत्तरम् ।
सर्षपाम्भोऽभिषेकेण नश्यन्ते सकला ग्रहाः ॥ ४ ॥

बिल्वलक्षहुता लक्ष्मीर्वित्तवृद्धिश्च जायते । शक्रवेश्म चतुर्द्वारं हृदये चिन्तयेदथ ॥ ५ ॥

बलाकां वामनां श्यामां श्वेतशङ्खजधारिणिम् ।
ऊर्ध्वबाहुद्वयं ध्यायेत् क्रीड़न्तीं द्वारि पूर्ववत् ॥ ६ ॥
ऊर्ध्वीकृतेन हस्तेन रक्तपङ्कजधारिणीम् ।
श्वेताङ्गीं दक्षिणे द्वारि चिन्तयेद् वनमालिनीम् ॥ ७ ॥
हरितां दोर्द्वयेनोर्ध्वमुद्वहन्तीं सिताम्बुजम् ।
ध्यायेद् विभीषिकां नाम श्री दूतीं द्वारि पश्चिमे ॥ ८ ॥

शाङ्करीमुत्तरे द्वारि तन्मध्येऽष्टदलपङ्कजम् । वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥
ध्येयास्ते पद्मपत्रेषु शङ्खचक्रगदाधराः । अञ्जनक्षीरकाश्मीर हेमाभास्ते सुवाससः ॥

आग्नेयादिषु पत्रेषु गुग्गुलुश्च कुरुण्टकः ।

दमकः सलिलश्चेति हस्तिनो रजतप्रभाः ॥ ११ ॥

हेमकुम्भधराश्चैते कर्णिकायां श्रियं स्मरेत् । चतुर्भुजां सुवर्णाभां सपद्मोर्ध्व भुजद्वयाम्
दक्षिणाभयहस्ताभ्यां वामहस्तवरप्रदाम् । श्वेतगन्धांशुकाभेक सौम्यमालास्त्रधारिणीम्

ध्यात्वा सपरिवारां तामभ्यर्च्य सकलं लभेत् ।

द्रोणाब्जपुष्पश्रीवृक्षपर्णं मूर्ध्नि न धारयेत् ॥ १४ ॥

लवणामलकं वर्ज्यं नागादित्यतिथौ क्रमात् ।

पायसाशी जपेत् सूक्तं श्रियस्तेनाभिषेचयेत् ॥ १५ ॥

आवाहादिविसर्गान्तां मूर्ध्नि ध्यात्वार्चयेत् श्रियम् ।

बिल्वाज्याब्जपायसेन पृथग् योगः श्रिये भवेत् ॥ १६ ॥

विषं महिषकालाग्नि रुद्रज्योतिर्वकद्वयम् ।

ओं ह्रीं महामहिषमर्दिनि ! ठ ठ मूलमन्त्रं महिषसिंहके नमः । महिषशत्रुं भ्रामय२ ह्रूं
फट् ठ ठ महिषं हेषय२ ह्रूं महिषं हन२ देवि ! ह्रूं महिषानिसूदनि ! फट् ।

दुर्गाहृदयमित्युक्तं साङ्गं सर्वार्थसाधकम् ॥ १७ ॥

यजेद् यथोक्तं तां देवीं पीठञ्चैवाङ्गमध्यगम् ।

ओं ह्रीं दुर्गे ! दुर्गे ! रक्षणि ! स्वाहा चेति दुर्गायै नमः । वरवर्ण्यै नमः । आर्यायै
कनकप्रभायै कृत्तिकायै अभयप्रदायै कन्यकायै सुरूपायै ।

पत्रस्थाः पूजयेदेता मूर्तीराद्यैः स्वरैः क्रमात् ॥ १८ ॥

चक्राय शङ्खाय गदायै खड्गाय धनुर्बाणाय ।

अष्टम्याद्यैरिमां दुर्गां लोकेशान्तां जयेदिति ।

दुर्गायोगः समायुःश्रीस्वामिरक्षाजयादिकृत् ॥ १८ ॥

ससाध्येशानमन्त्रेण तिलहोमो वशीकरः ।

जयः पद्मैस्तु दूर्वाभिः शान्तिः कामः पलाशजैः ॥ २० ॥

पुष्टिः स्यात् काकपक्षेण मृतिद्वेषादिकं भवेत् । ग्रहक्षुद्रभयापत्ति सर्वमेव मनुर्हरेत् ॥

ओं दुर्गे ! दुर्गे ! रक्षणि ! स्वाहा । रक्षाकरीयमुदिता जयदुर्गाङ्गसंयुता ।
श्यामां त्रिलोचनां देवीं ध्यात्वात्मानं चतुर्भुजम् ॥ २२ ॥
शङ्खचक्राब्जशूलादित्रिशूलां रौद्ररूपिणीम् । युद्धादौ सञ्जयेदेतां यजेत् खड्गादिके जये

इत्यादिमहापुराणेआग्नेयेत्रैलोक्यमोहनीलक्ष्म्यादिपूजाकथनंनामा
अष्टाधिकत्रिशततमोऽध्यायः ।

---

# नवाधिकत्रिशततमोऽध्यायः

## त्वरितापूजा ।

अग्निरुवाच ।

त्वरिताङ्गान् समाख्यास्ये भुक्तिमुक्तिप्रदायकान् ।
ओं आधारशक्त्यै नमः । ओंह्रीं पुरु२ महासिंहाय नमः । ओं पद्माय नमः । ओं ह्रीं हूं खेच-छेक्षः । स्त्रीं ओं हं क्षैं हूं फट् त्वरितायै नमः । खे च हृदयाय नमः । चछे शिरसे नमः । छेक्षः शिखायै नमः । क्षस्त्री कवचाय नमः । स्त्रीं हूं नेत्राय नमः । हूं खे अस्त्राय फट् नमः । ओं त्वरिताविद्यां विद्महे तूर्णविद्याञ्च धीमहि तन्नो देवी प्रचोदयात् । श्रीप्रणीतायै नमः । हूं कारायै नमः । ओं खेच हृदयाय नमः । खेचर्य्यै नमः । ओं चण्डायै नमः । छेदन्यै नमः क्षेपण्यै नमः । स्त्रियै हूं कार्य्यै नमः । क्षेमङ्कर्य्यै जयायै किङ्कराय रक्ष । ओं त्वरिताज्ञया स्थिरो भव वषट् ।
तोतला त्वरिता तूर्णेत्येवं विद्यैमीरिता ॥ १ ॥
शिभ्र मस्तके कण्ठे हृदि नाभौ च गुह्यके । उर्वोश्च जानुजङ्घोरुद्वये चरणयोः क्रमात्
न्यस्ताङ्गो न्यस्तमन्त्रस्तु समस्तं व्यापकं न्यसेत् ।
पार्वती शवरी चेशा वरदाभयहस्तिका ॥ ३ ॥
मयूरवलया पिच्छमौलिः किसलयांशुका । सिंहासनस्था मायूरवर्हच्छत्रसमन्विता ॥

त्रिनेत्रा श्यामला देवी वनमालाविभूषणा । विप्राहिकर्णाभरणा क्षत्रकेयूरभूषणा ॥
वैश्यनागकटीबन्धा वृषलाहिकृतनूपुरा । एवं रूपात्मिका भूत्वा तन्मन्त्रं नियुतं जपेत्

ईशः किरातरूपोऽभूत् पुरा गौरी च तादृशी ।
जपेद् ध्यायेत् पूजयेत् तां सर्वसिद्ध्यै विषादिहृत् ॥ ७ ॥

अष्टसिंहासने पूज्या दले पूर्वादिके क्रमात् । अङ्गगायत्री प्रणीता हृङ्काराद्या दलाग्रके॥

फट्कारी चाग्रतो देव्याः श्रीबीजेनार्चयेदिमाः ।
लोकेशायुधवर्णास्ताः फट्कारी तु धनुर्धरा ॥ ६ ॥

जया च विजया द्वास्थे पूज्ये सौवर्णयष्टिके । किङ्करा वर्वरी मुण्डी लगुड़ीच तयोर्बहि

इष्ट्वैवं सिद्धयेद् द्रव्यैः कुण्डे योन्याकृतौ हुनेत् ।
हेमलाभोऽर्जुनैर्द्धान्यैर्गोधूमैः पुष्टिसम्पदः ॥ ११ ॥
यवैर्धान्यैस्तिलैः सर्वसिद्धिरीति विनाशनम् ।
अक्षैरुन्मत्तता शत्रोः शाल्मलीभिश्च मारणम् ॥ १२ ॥

जम्बुभिर्धनधान्याप्तिस्तुष्टिर्नीलोत्पलैरपि । रक्तोत्पलैर्महापुष्टिः कुन्दपुष्पैर्महोदयः॥१३॥

मल्लिकाभिः पुरक्षोभः कुमुदैर्जनवल्लभः ।
अशोकैः पुत्रलाभः स्यात् पाटलाभिः शुभाङ्गना ॥ १४ ॥
आम्रैरायुस्तिलैर्लक्ष्मीर्बिल्वैः श्रीश्चम्पकैर्धनम् ।
इष्टं मधुकपुष्पैश्च बिल्वैः सर्वज्ञतां लभेत् ॥ १५ ॥
त्रिलक्षजप्यात् सर्वाप्तिर्होमाद् ध्यानात् तथेज्यया ।
मण्डलेऽभ्यर्च्य गायत्र्या आहुतीः पञ्चविंशतिम् ॥ १६ ॥

दद्याच्छतत्रयं मूलात् पल्लवैर्दीक्षितो भवेत् । पञ्चगव्यं पुरा पीत्वा चरुकं प्राशयेत् सदा

इत्यादिमहापुराणेआग्नेयेत्वरितापूजाकथनंनामनवाधिकत्रिशततमोऽध्यायः ।

———

# दशाधिकत्रिशततमोऽध्यायः

## त्वरितामन्त्रादिः ।

अग्निरुवाच ।

अपरां त्वरिताविद्यां वक्ष्येऽहं भुक्तिमुक्तिदाम् ।
पुरे वज्राकुले देवीं रजोभिर्लिखिते यजेत् ॥ १ ॥
पद्मगर्भे दिग्विदिक्षु चाष्टौ वज्राणि वीथिकाम् ।
द्वारशोभोपशोभाश्च लिखेच्छीघ्रं स्मरेन्नरः ॥ २ ॥
अष्टादशभुजां सिंहे वामजङ्घा प्रतिष्ठिता । दक्षिणा द्विगुणा तस्याः पादपीठे समर्पिता
नागभूषां वज्रकुण्डे खड्गं चक्रं गदां क्रमात् । शूलं शरं तथा शक्तिं वरदं दक्षिणैःकरैः
धनुः पाशं शरं घण्टां तर्जनीं शङ्खमङ्कुशम् ।
अभयञ्च तथावज्रं वामपार्श्वे धृतायुधम् ॥ ५ ॥
पूजनाच्छत्रुनाशः स्याद्राष्ट्रं जयति लीलया ।
दीर्घायूराष्ट्रभूतिः स्याद् दिव्या दिव्यादि सिद्धिभाक् ॥ ६ ॥
तलेति सप्तपातालाः कालाग्निभुवनान्तकाः ।
ओंकारादिस्वरारम्य यावद् ब्रह्माण्डवाचकम् ॥ ७ ॥
ओंकाराद् भ्रामयेत् तोयन्तोतला त्वरिता ततः ।
प्रस्तावं सम्प्रवक्ष्यामि स्वरवर्गं लिखेद् भुवि ॥ ८ ॥
तालुवर्गः कवर्गः स्यात् तृतीयो जिह्वतालुकः ।
चतुर्थस्तालु जिह्वाग्रो जिह्वादन्तस्तु पञ्चमः ॥ ९ ॥
षष्ठोऽष्ठपुटसम्पन्नो मिश्रवर्गस्तु सप्तमः । ऊष्माणः स्याच्छवर्गस्तु उद्धरेच्च मनुं ततः
षष्ठस्वरसमारूढम् ऊष्मणान्तं सबिन्दुकम् । तालुवर्गद्वितीयान्ते स्वरैकादशयोजितम्
जिह्वातालुसमायोगः प्रथमं केवलं भवेत् ।

तद्वेव च द्वितीयन्तु अधस्ताद् विनियोजयेत् ॥ १२ ॥
एकादशस्वरैर्युक्तं प्रथमं तालुवर्गतः ।
ऊष्माणस्य द्वितीयन्तु अधस्ताद् दृश्य योजयेत् ॥ १३ ॥
षोड़शस्वरसंयुक्तमूष्माणस्य द्वितीयकम् । जिह्वादन्तसमायोगे प्रथमं योजयेदधः ॥
मिश्रवर्गाद् द्वितीयन्तु अधस्तात् पुनरेव तु । चतुर्थस्वरसम्भिन्नं तालुवर्गादिसंयुतम्
ऊष्मणश्च द्वितीयन्तु अधस्ताद् विनियोजयेत् ।
स्वरैकादशभिन्नन्तु ऊष्मणान्तं सविन्दुकम् ॥ १६ ॥
पञ्चस्वरसमारूढम् ओष्ठसम्पुटयोगतः । द्वितीयमक्षरञ्चान्यज्जिह्वाग्रे तालुयोगतः ॥
प्रथमं पञ्चमे योज्यं स्वरार्द्धेनाद्भृता इमे ।
ओंकाराद्या नमोऽन्ताश्च जपेत् स्वाहाग्निकार्य्यके ॥ १८ ॥
ओं ह्रीं हूं हः हृदयं हां हश्चेति शिरः । ह्रीं ज्वलज्वलशिखा स्यात् कवचं-
हनुद्वयम् । ह्रीं श्रीं क्षून्नेत्रत्रयाय विद्यानेत्रं प्रकीर्त्तितम् क्षौं हं खौं हूं फड़स्त्रायगुह्या-
ङ्गानि पुरान्यसेत् ।
त्वरिताङ्गानि वक्ष्यामि विद्याङ्गानि शृणुष्व मे । आदिद्विहृदयं प्रोक्तं त्रिचतुःशिर इष्यते
पञ्चषष्ठ शिखाप्रोक्ता कवचं सप्तमाष्टमम् । तारकन्तु भवेन्नेत्रं नवार्द्धाक्षरलक्षणम् ॥
तोतलेति समाख्याता वज्रतुण्डे ततो भवेत् ।
ख ख हूं दशवीजा स्याद् वज्रतुण्डेन्द्रदूतिका ॥ २१ ॥
खेचरि ज्वालिनीज्वाले खखेति ज्वालिनीदश ।
वच्चें शरविभीषणि खखेति च शवर्य्यपि ॥ २२ ॥
छे छेदनि करालिनि खखेति च करालयपि । वक्षः श्रवद्रवप्लवनी ख ख दूतीप्लवंख्यपि
स्त्रीकालकारे धूननि शास्त्री वसन वेगिका ।
क्षेपक्षेकपिले हस हस कपिला नाम दूतिका ॥ २४ ॥
हूं तेजोवति रौद्री च मातङ्गरौद्रिदूतिका । पुटे पुटे ख ख खड्गे फट् ब्रह्मकदूतिका ॥
वैतालिनि दशार्णा स्युस्त्यजान्यहि पलालवत् ।

हृदादिक न्यासादौ स्यान् मध्ये नेत्रे न्यसेत् सुधीः ॥ २६ ॥
पादादारभ्य मूर्द्धान्तं शिर आरभ्य पादयोः। अङ्घ्रिजानूरुगुह्ये च नाभिहृत्कण्ठदेशतः
वज्रमण्डलमूर्ध्वे च अधोर्ध्वे चादिवीजतः। सोमरूपं ततोगावं धारामृतसुवर्षिणम् ॥
विशन्तं ब्रह्मरन्ध्रेण साधकस्तु विचिन्तयेत्। मूर्ध्वास्यकण्ठहृन्नाभौ गुह्योरुजानुपादयोः

आदिवीजं न्यसेन् मन्त्री तर्जन्यादि पुनः पुनः।
ऊर्ध्वं सोममधः पद्मं शरीरं वीजविग्रहम् ॥ ३० ॥
यो जानाति न मृत्युः स्यात् तस्य न व्याधयो ज्वरा।
यजेज्जपेत् तां विन्यस्य ध्यायेद् देवीं शताष्टकम् ॥ ३१ ॥
मुद्रा वक्ष्ये प्रणीताद्याः प्रणीताः पञ्चधा स्मृताः।
ग्रथितौ तु करौ कृत्वा मध्येऽङ्गुष्ठौ निपातयेत् ॥ ३२ ॥
तर्जनीं मूर्ध्निसंलग्नां विन्यसेत् तां शिरोपरि।
प्रणीतेयं समाख्याता हृद्देशे तां समानयेत् ॥ ३३ ॥
ऊर्ध्वन्तु कन्यसामध्ये सवीजान्तां विदुर्द्विजाः।
नियोज्य तर्जनीमध्येऽनेकलग्नां परस्परम् ॥ ३४ ॥
ज्येष्ठाग्रं निक्षिपेन् मध्ये भेदनी सा प्रकीर्त्तिता।
नाभिदेशे तु तां बद्ध्वा अङ्गुष्ठावुत् क्षिपेत् ततः ॥ ३५ ॥

कराली तु महामुद्रा हृदयेयोज्य मन्त्रिणः। पुनस्तु पूर्ववद् वद्धलग्नां ज्येष्ठां समुत्क्षिपेत्

वज्रतुण्डा समाख्याता वज्रदेशे तु बन्धयेत्।
उभाभ्याञ्चैव हस्ताभ्यां मणिबन्धन्तु वन्धयेत् ॥ ३७ ॥
त्रीणि त्रीणि प्रसार्येति वज्रमुद्रा प्रकीर्त्तिता।
दण्डः खड्गश्चक्रगदा मुद्राद्याकारतः स्मृताः ॥ ३८ ॥
अङ्गुष्ठेनाक्रमेत् त्रीणि त्रिशूलश्चोर्ध्वतो भवेत्।
एका तु मध्यमोर्ध्वातु शक्तिरेवविधीयते ॥ ३९ ॥

शरश्च वरदश्चापं पाशं भारश्च घण्टया। शङ्खमङ्कुशमभयं पद्ममष्ट च विंशतिः ॥

मोहनी मोक्षणी चैव ज्वालिनी चाऽमृताभया ।
प्रणीताः पञ्चमुद्रास्ते पूजाहोमे च योजयेत् । ४१ ॥

इत्यादिमहापुराणे आग्नेये त्वरितामन्त्रादिकथनं नाम दशाधिकत्रिशततमोऽध्यायः ।

---

## एकादशाधिकत्रिशततमोऽध्यायः

### त्वरितामूलमन्त्रादिः ।

अग्निरुवाच ।

दीक्षादि वक्ष्ये विन्यस्य सिंहवज्राकुलेऽब्जके ।
हे हे हुति ! वज्रदन्त ! पुरु पुरु लुलु लुलु गर्ज गर्ज इहसिंहासनाय नमः ।
तिर्य्यगूर्ध्वगता रेखा चत्वारोश्चतुरो भवेत् ॥ १ ॥
नवभागविभागेन कोष्ठकान् कारयेद् बुधः ।
ग्राह्या दिशागताः कोष्ठा विदिशासु विनाशयेत् ॥ २ ॥
वाह्ये वै कोष्ठकोणेषु वाह्यरेखाष्टकं स्मृतम् ।
वाह्यकोष्ठस्य वाह्ये तु मध्ये यावत् समानयेत् ॥ ३ ॥
वज्रस्य मध्यमं श्रृङ्गं वाह्यरेखा द्विधार्द्धितः । वाह्यरेखा भवेद् वक्राद्विभङ्गाकारयेद् बुधः
मध्यकोष्ठं भवेत् पद्मं पीतकर्णिकमुज्ज्वलम् ।
कृष्णेन रजसा लिख्य कुलिशासिशिरोर्ध्वता ॥ ५ ॥
वाह्यतश्चतुरस्त्रन्तु वज्रसम्पुटलाञ्छितम् । द्वारेप्रदापयेन् मन्त्री चतुरो वज्रसम्पुटान्
पद्मनाम भवेद् वाम वीथी चैव समा भवेत् ।
गर्भं रक्तं केशराणि मण्डले दीक्षिताः स्त्रियः ॥ ७ ॥
जयेच्च परराष्ट्राणि क्षिप्रं राज्यमवाप्नुयात् ।
मूर्त्तिं प्रणवसन्दीप्तां हुङ्कारेण नियोजयेत् ॥ ८ ॥

मूलविद्यां समुच्चार्य्य मरुद्व्योमगतां द्विज । प्रथमेन पुनश्चैव कर्णिकायां प्रपूजयेत् ॥
एवं प्रदक्षिणं पूज्य एकैकं वीजमादितः ।
दलमध्ये तु विद्याङ्गा आग्नेय्यां पञ्च नैर्ऋतम् ॥ १० ॥
मध्येनेत्रं दिशास्त्रञ्च गुह्यकाङ्गे तु रक्षणम् । हुतयः केशरस्थास्तु वामदक्षिणपार्श्वतः
पञ्च पञ्च प्रपूज्यास्तु स्वैः स्वैर्मन्त्रैः प्रपूजयेत् ।
लोकपालान् न्यसेदष्टौ वाह्यतो गर्भमण्डले ॥ १२ ॥
वर्णान्तमग्निमारूढं षष्ठस्वरविभेदितम् । पञ्चदशेन चाक्रान्तं स्वैः स्वैर्नामभियोजयेत्
शीघ्रं सिंहे कर्णिकायां यजेद् गन्धादिभिः श्रिये ।
अष्टाभिर्वेष्टयेत् कुम्भैर्मन्त्राष्टशतमन्त्रितैः ॥ १४ ॥
मन्त्रमष्टसहस्रन्तु जप्त्वाङ्गानां दशांशकम् । होमं कुर्य्यादग्निकुण्डे वह्निमन्त्रेण चालयेत्
निक्षिपेद् हृदयेनाग्निं शक्तिं मध्येऽग्निगां स्मरेत् ।
गर्भाधानं पुंसवनं जातकर्म च होमयेत् ॥ १६ ॥
हृदयेन शतं ह्येकं गुह्याङ्गे जनयेच्छिखिम् ।
पूर्णाहुत्या तु विद्यायाः शिवाग्निर्ज्वलितो भवेत् ॥ १७ ॥
होमयेन् मूलमन्त्रेण शतञ्चाङ्गं दशांशतः । निवेदयेत् ततो देव्यास्ततः शिष्यं प्रवेशयेत्
अस्त्रेण ताड़नं कृत्वा गुह्यङ्गानि ततो न्यसेत् ।
विद्याङ्गैश्चैव सन्नद्धं विद्याङ्गेषु नियोजयेत् ॥ १९ ॥
पुष्पं क्षिपाययेच्छिष्यमानयेदग्निकुण्डकम् । यवैर्धान्यैस्तिलैराज्यैर्मूलविद्याशतं हुनेत्
स्थावरत्वं पुरा होमं सरीसृपमतः परम् । पक्षिमृगपशुत्वञ्च मानुषं ब्राह्ममेव च ॥२१॥
विष्णुत्वञ्चैव रुद्रत्वमन्ते पूर्णाहुतिर्भवेत् ।
एकया चैव ह्याहुत्या शिष्यः स्याद् दीक्षितो भवेत् ॥ २२ ॥
अधिकारो भवेदेवं शृणु मोक्षमतःपरम् । सुमेरुस्थो यदा मन्त्री सदाशिवपदे स्थितः
परे च होमयेत् स्वस्थोऽकर्मकर्मशतान् दश । पूर्णाहुत्या तु तद्योगी धर्माधर्मैर्न लिप्यते
मोक्षं याति परं स्थानं यद् गत्वा न निवर्त्तते ।

यथा जले जलं क्षिप्तं जलं देही शिरस्तथा ॥ २५ ॥
कुम्भैः कुर्य्याच्चाभिषेकं जयराज्यादि सर्वभाक् ।
कुमारी ब्राह्मणी पूज्या गुर्वादेर्दक्षिणां ददेत् ॥ २६ ॥

यजेत् सहस्रमेकन्तु पूजां कृत्वा दिने दिने । तिलाज्यपुरहोमेन देवी श्रीः कामदा भवेत्
ददाति विपुलान् भोगान् यदन्यच्च समीहते । जप्त्वा ह्यक्षरलक्षन्तु निधानाधिपतिर्भवेत्
द्विगुणेन भवेद्राज्यं त्रिगुणेन च यक्षिणी । चतुर्गुणे च ब्रह्मत्वं ततो विष्णुपदं भवेत् ॥
षड्गुणेन महासिद्धिर्लक्षेणैकेन पापहा । दश जप्त्वा देहशुद्ध्यै तीर्थस्नानफलं शतात्

पटे वा प्रतिमायां वा शीघ्रां वै स्थण्डिले यजेत् ।
शतं सहस्रमयुतं जपे होमे प्रकीर्त्तितम् ॥ ३१ ॥

एवं विधानतो जप्त्वा लक्षमेकन्तु होमयेत् । महिषाजमेषमांसेन नरजेन पुरेण वा ॥
तिलैर्यवैस्तथा लाजैर्व्रीहिगोधूमकाम्रकैः । श्रीफलैराज्यसंयुक्तैर्होमयित्वा व्रतञ्चरेत् ॥
अर्द्धरात्रेषु सन्नद्धः खड्गचापशरादिमान् । एकवासा विचित्रेण रक्तपीतासितेन वा ॥

नीलेन वाथ वस्त्रेण देवीं तैरेव चार्चयेत् ।
व्रजेद् दक्षिणदिग्भागं द्वारे दद्याद् बलिं बुधः ॥ ३५ ॥

दूतीमन्त्रेण द्वारादौ एकवृक्षे श्मशानके । एवञ्च सर्वकामाप्तिं भुङ्क्ते सर्वां महीं नृपः
इत्यादिमहापुराणेआग्नेयेत्वरितामूलमन्त्रादिकथनंनामैकादशाधिकत्रिशततमोऽध्यायः ।

---

## द्वादशाधिकत्रिशततमोऽध्यायः

### त्वरिताविद्या ।

अग्निरुवाच ।

विद्याप्रस्तावमाख्यास्ये धर्मकामादि सिद्धिदम् । नवकोष्ठविभागेन विद्याभेदश्च विन्दति
अनुलोमविलोमेन समस्तव्यस्तयोगतः । कर्णाविकर्णयोगेन अत ऊर्ध्वं विभागशः ॥

त्रित्रिकेण च योगेन देव्या सन्नद्धविग्रहः ।
जानाति सिद्धिदान् मन्त्रान् प्रस्तावान्निर्गतान् बहून् ॥ ३ ॥
शास्त्रे शास्त्रे स्मृता मन्त्राः प्रयोगास्तत्र दुर्लभाः ।
गुरुस्यात् प्रथमो वर्णः पूर्वैर्युर्न च वर्ण्यते ॥ ४ ॥
प्रस्तावे तत्र चैकार्णाद्व्यर्णास्त्र्यर्णादयोऽभवन् । तिर्य्यगूर्ध्वगता रेखाश्चतुरश्चतुरो भजेत्
नव कोष्ठा भवन्त्येवं मध्यदेशे तथा इमान् ।
प्रदक्षिणेन संस्थाप्य प्रस्तावं भेदयेत् ततः ॥ ६ ॥
प्रस्तावक्रमयोगेन प्रस्तावं यस्तु विन्दति । करमुष्टिस्थितास्तस्य साधकस्य हि सिद्धयः
त्रैलोक्यं पादमूले स्यान्नवखण्डां भुवं लभेत् ।
कपाले तु समालिख्य शिवतत्त्वं समन्ततः ॥ ८ ॥
श्मशानकर्पटे वाथ वाह्यं निष्क्रम्य मन्त्रवित् ।
तस्य मध्ये लिखेन्नाम कर्णिकोपरि संस्थितम् ॥ ६ ॥
तापयेत् खादिराङ्गारैर्भूर्जमाक्रम्य पादयोः । सप्ताहादानयेत् सर्वं त्रैलोक्यं सचराचरम्
वज्रसम्पुटगर्भे तु द्वादशारे तु लेखयेत् । मध्ये गर्भगतं नाम सदाशिवविदर्भितम् ॥
कुड्य फलकके वाथ शिलापट्टे हरिद्रया । मुखस्तभं गतिस्तम्भं सैन्यस्तम्भन्तु जायते
विषरक्तेन संलिख्य श्मशाने कर्परे बुधः ।
षट्कोणं दण्डमाक्रान्तं समन्ताच्छक्तियोजितम् ॥ १३ ॥
मारयेदचिरादेष श्मशाने निहतं रिपुम् । छेदं करोति राष्ट्रस्य चक्रमध्ये न्यसेद्रिपुम् ॥
चक्रधाराङ्कितां शक्तिं रिपुनाम्ना रिपुं हरेत् ।
तार्क्ष्येणैव तु वीजेन खड्गमध्ये तु लेखयेत् ॥ १५ ॥
विदर्भ रिपुनामाथ श्मशानाङ्गारलेखिताम् । सप्ताहात साधयेद् देशं ताड़येत् प्रेतभस्मना
भेदने छेदने चैव मारणेषु शिवो भवेत् ।
तारकं नेत्रमुद्दिष्टं शान्तिपुष्टौ नियोजयेत् ॥ १७ ॥
दहनादिप्रयोगोऽयं शाकिनीश्चैव कर्षयेत् । मध्यादिवारुणीं यावद् वक्रतुण्डसमन्वितः

कुष्ठाद्या व्याधयो ये तु नाशयेत् तान् न संशयः ।
मध्यादि उत्तरान्तन्तु करालीबन्धनात् जपेत् ॥ १९ ॥
रक्षयेदात्मनो विद्यां प्रतिवादी यदा शिवः ।
वारुण्यादि ततो न्यस्य ज्वरकाशविनाशनम् ॥ २० ॥
सौम्यादि मध्यमान्तन्तु तुरुत्वं जायते वटे ।
पूर्वादि मध्यमान्तन्तु लघुत्वं कुरुते क्षणात् ॥ २१ ॥
भूर्जे रोचनया लिख्य एतद्द वज्राकुलं पुरम् । क्रमस्थैर्मन्त्रवीजैस्तु रक्षां देहेषु कारयेत्
वेष्टिता भावहेम्ना च रक्षेयं मृत्युनाशिनी । विघ्नपापारिदमनी सौभाग्यायुप्रदा धृता
द्यूते रणे च जयदा शक्रसैन्ये न संशयः । बन्ध्यानां पुत्रदा ह्येषा चिन्तामणिरिवापरा
साधयेत् परराष्ट्राणि राज्यञ्च पृथिवीं जयेत् ।
फट् स्त्रीं क्षे ह्रूं लक्षजप्याद् यक्षादिर्वशगो भवेत् ॥ २५ ॥
इत्यादिमहापुराणेआग्नेयेत्वरिताविद्याकथनंनामद्वादशाधिकत्रिशततमोऽध्यायः ।

---

## त्रयोदशाधिकत्रिशततमोऽध्यायः

### नानामन्त्राः ।

अग्निरुवाच ।

ओं विनायकार्चनं वक्ष्ये यजेदाधारशक्तिकम् । धर्माद्यष्टककन्दञ्च नाले पद्मञ्च कर्णिकाम्
केशरं त्रिगुणं पद्मं तीव्रञ्च ज्वलिनीं यजेत् ।
नन्दाञ्च सुयशाञ्चोग्रां तेजोवतीं विन्ध्यवासिनीम् ॥ २ ॥
गणमूर्त्तिं गणपतिं हृदयं स्याद् गणं जयः । एकदन्तोत्कटशिरःशिखायाचलकर्णिने ॥
गजवक्त्राय कवचं ह्रूं फडन्तं तथाष्टकम् । महोदरो दण्डहस्तः पूर्वादौ मध्यतो यजेत्
जयो गणाधिपो गणनायकोऽथ गणेश्वरः । वक्रतुण्ड एकदन्तोत्कटलम्बोदरो गजः ॥

वक्त्रो विकटाननोऽथ हूं पूर्वो विघ्ननाशनः। धूम्रवर्णो महेन्द्राद्यो बाह्ये विघ्नेशपूजनम्
त्रिपुरापूजनं वक्ष्ये असिताङ्गो रुरुस्तथा।
चण्डः क्रोधस्तथोन्मत्तः कपाली भीषणः क्रमात् ॥ ७ ॥
संहारी भैरवो ब्राह्मीमुख्या ह्रस्वास्तु भैरवाः।
ब्रह्माणीषण्मुखा दीर्घा अग्न्यादौ वटुकाः क्रमात् ॥ ८ ॥
समयपुत्रो वटुको योगिनीपुत्रकस्तथा। सिद्धपुत्रश्च वटुकः कुलपुत्रश्चतुर्थकः ॥ ९ ॥
हेतुकः क्षेत्रपालश्च त्रिपुरान्ता द्वितीयकः। अग्निवेतालोऽग्निजिह्वः करालीकाललोचनः
एकपादश्च भीमाक्ष ऐं क्ष्रें प्रेतस्तथासनम्।
ऐं ह्रीं द्रौश्च त्रिपुरा पद्मासनसमास्थिता ॥ ११ ॥
बिभ्रत्यभयपुस्तश्च वामे वरदमालिकाम्। मूलेन हृदयादि स्याज्ज्वालपूर्णश्च कामकम्
गोमध्ये नाम संलिख्य चाष्टपत्रे च मध्यतः। श्मशानादिपटे श्मशानाङ्गारेण विलेखयेत्
चिताङ्गारपिष्टकेन मूर्त्तिं ध्यात्वा तु तस्य च।
क्षिप्त्वोदरे नीलसूत्रैर्वेष्ट्य चोच्चाटनं भवेत् ॥ १४ ॥
ओं नमो भगवति ! ज्वालामालिनि ! गृध्रगणपरिवृते ! स्वाहा।
युद्धेगच्छन् जपन् मन्त्रं पुमान् साक्षाज् जयी भवेत्।
ओं श्रीं ह्रीं क्लीं श्रियै नमः। उत्तरादौ च घृणिनी सूर्य्या पूज्या चतुर्दले ॥ १५ ॥
आदित्या प्रभावती च हेमाद्रिमधुराश्रियः। ओं ह्रीं गौर्य्यै नमः।
गौरीमन्त्रः सर्वकरः होमाद् ध्यानाज्जपार्चनात् ॥ १६ ॥
रक्ता चतुर्भुजा पाशवरदा दक्षिणे करे। अङ्कुशाभययुक्तान्तां प्रार्थ्य सिद्धात्मना पुमान्
जीवेद् वर्षशतं धीमान् न चौरारिभयं भवेत्
क्रुद्धः प्रसादी भवति युधि मन्त्राम्बुपानतः ॥ १८ ।
अञ्जनं तिलकं वश्ये जिह्वाग्रे कविता भवेत्।
तज्जापान्मैथुनं वश्ये तज्जपाद् योनिवीक्षणम् ॥ १९ ॥
स्पर्शाद् वशी तिलहोमात् सर्वश्चैव तु सिध्यति।

सप्ताभिमन्त्रितञ्चान्नं भुञ्जंस्तस्य श्रियः सदा ॥ २० ॥

अर्द्धनारीशरूपोऽयं लक्ष्म्यादि वैष्णवादिकः। अनङ्गरूपा शक्तिश्च द्वितीया मदनातुरा पवनवेगा भुवनपाला वै सर्वसिद्धिदा। अनङ्गमदनानङ्ग मेखलान्ताञ्जपेच्छिवे ॥ २२ ॥

पद्ममध्यदलेषु ह्रीं स्वरान् कादींस्ततः स्त्रियाः।

षट्कोणे वा घटे वाऽथ लिखित्वा स्याद् वशीकरम् ॥ २३ ॥

ओं ह्रीं छं नित्यक्लिन्ने मदद्रवे ओं ओं।

मूलमन्त्रः षड़ङ्गीयं रक्तवर्णे ! त्रिकोणके ! द्रावणी ह्लादकारिणी क्षोभिणी गुरुशक्तिका ईशानादौच मध्ये तां नित्यां पाशाङ्कुशौ तथा। कपालकल्पकतरुं वीणा रक्ताच तद्वती

नित्याभया मङ्गला च नववीरा च मङ्गला।

दुर्भगा मनोन्मनी पूज्या द्रावा पूर्वादितः स्थिता ॥ २६ ॥

ओं ह्रीं अनङ्गाय नमः ओं ह्रीं ह्रीं स्मरायनमः।

मन्मथाय च माराय कामायैवञ्च पञ्चधा।

कामाः पाशाङ्कुशी चापवाणः ध्येयाश्च विभ्रतः ॥ २७ ॥

रतिश्च विरतिः प्रीतिर्विप्रीतिश्च मतिर्धृतिः।

विधृतिः पुष्टिरेभिश्च क्रमात् कामादिकैर्युताः ॥।

ओं छं नित्यक्लिन्ने! मदद्रवे ! ओं ओं। अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः। क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह क्ष। ओं छं नित्यक्लिन्ने मदद्रवे स्वाहा।

आधारशक्ति पद्मञ्च सिंहेदेवीं हृदादिषु ॥ २८ ॥

ओं ह्रीं गौरि ! रुद्रदयिते ! योगेश्वरि ! हूं फट् स्वाहा।

इत्यादिमहापुराणेआग्नेयेनानामन्त्रकथनंनामत्रयोदशाधिकत्रिशततमोऽध्यायः।

———

# चतुर्दशाधिकत्रिशततमोऽध्यायः

## त्वरिताज्ञानम् ।

अग्निरुवाच ।

ओं ह्रीं हूं खे छे क्षः स्त्रीं हूं क्षे ह्रीं फट् त्वरितायै नमः ।

त्वरितां पूजयेन् न्यस्य द्विभुजाञ्चाष्टवाहुकाम् ।
आधारशक्तिं पद्मञ्च सिंहे देवीं हृदादिकम् ॥ १ ॥
पूर्वादौ गायत्रीं यजेन्मण्डले वै प्रणीतया ।
हुंकारां खेचरीं चण्डां छेदनीं क्षेपणीं स्त्रियाः ॥ २ ॥
हुंकारां क्षेमकारीञ्च फट्कारीं मध्यतो यजेत् ।
जयाञ्च विजया द्वारि किङ्करञ्च तदग्रतः ॥ ३ ॥
तिलैर्होमैश्च सर्वाप्त्यै नामव्याहृतिभिस्तथा ।
अनन्ताय नमः स्वाहा कुलिकाय नमः स्वधा ॥ ४ ॥

स्वाहावासुकिराजाय शङ्खपालाय वौषट् । तक्षकाय वषन्नित्यं महापद्माय वै नमः ॥
स्वाहाकर्कोटनागाय फट् पद्माय च वै नमः । लिखेन्निग्रहचक्रन्तु एकाशीतिपदैर्नरः ॥

वस्त्रे पटेतरौ भूर्ज्जे शिलायां यष्टिकासु च ।
मध्ये कोष्ठे साध्यनाम पूर्वादौ पङ्क्तिकासु च ॥ ७ ॥
ओं ह्रीं क्षूं छन्द छन्द चतुरः कण्ठकान् कालरात्रिकाम् ।

ऐशादावस्तु पार्श्वौ च यमराज्यञ्च वाह्यतः । कालीनारवमाली कालीनामाक्षमालिनी
मामोदेतत् तदोमोमा रक्षत स्वस्व भक्षवा । यमपाटटयामय मटमो टट मोटमा ॥६॥
वामो भूरिविभूमेया टट रीश्वश्वरी टट । यमराजाद्व वाह्यतो वं तं तोयंमारणात्मकम्

कज्जलं निम्बनिर्य्यास मज्जासृग्विषसंयुतम् ।
काकपक्षस्य लेखन्या श्मशाने वा चतुष्पथे ॥ ११ ॥

निधापयेत् कुम्भाधस्ताद् वल्मीके वाथ निक्षिपेत् ।
विभीतद्रुमशाखाधो यन्त्रं सर्वारिमर्दनम् ॥ १२ ॥
लिखेच्चानुग्रहश्चक्रं शुक्लपत्रेऽथ भूर्जके । लाक्षया कुङ्कुमेनाथ स्फटिकाचन्दनेन वा ॥
भुवि भित्तौ पूर्वकाले नाम मध्यमकोष्ठके ।
खण्डे तु वारिमध्यस्थं ओं हंसो वापि पट्टिशम् ॥ १४ ॥
लक्ष्मीश्लोकं शिवादौ च राक्षसादि क्रमाल्लिखेत् ।
श्रीः साममोमा सा श्रीः सानौ याज्ञे ज्ञेया नौसा ॥ १५ ॥
माया लीला लाली यामा याज्ञे ज्ञेया नौसा माया ।
यत्र ज्ञेया वहिः शीघ्रा दिक्षुरं कलसं वहिः ॥ १६ ॥
पद्मस्थ पद्मचक्रञ्च मृत्युजित् स्वर्गगं धृतिम् ।
शान्तीनां परमा शान्तिः सौभाग्यादि प्रदायकम् ॥ १७ ॥
रुद्रे रुद्रसमाः कार्य्याः कोष्ठकास्तत्र ता लिखेत् ।
ओमाद्याहूं फडन्ता च आदिवर्णमथानुतः ॥ १८ ॥
विद्यावर्णक्रमेणैव संज्ञाञ्च वषडन्तिकाम् । अधस्तात् प्रत्यङ्गिरैषा सर्वकामार्थसाधिका
एकाशीतिपदे सर्वामादिवर्णक्रमेण तु । आदिमं यावदन्तं स्याद् वषडन्तञ्च नाम वै ॥
एषाप्रत्यङ्गिरा चान्या सर्वकार्य्यादि साधिनी । निग्रहानुग्रहश्चक्रश्चतुःषष्टि पदैर्लिखेत्
अमृती सा च विद्या च क्रीं सः हूं नामाथ मध्यतः ।
फट्काराद्यां पत्रगतां त्रिह्रींकारेण वेष्टयेत् ॥ २२ ॥
कुम्भवद्धारिता सर्वशत्रुहृत् सर्वदायिका । विषन्नश्येत् कर्णजपादक्षराद्यैश्च दण्डकैः ।
इत्यादिमहापुराणेआग्नेयेत्वरितांज्ञानकथनंनामचतुर्दशाधिकत्रिशततमोऽध्यायः ।

---

# पञ्चदशाधिकत्रिशततमोऽध्यायः

## स्तम्भनादिमन्त्राः

अग्निरुवाच ।

स्तम्भनं मोहनं वश्यं विद्वेषोच्चाटनं वदे । विषव्याधिमरागश्च मारणं शमनं पुनः ॥
भूर्ज्जे कूर्मं समालिख्य ताड़नेन षड़ङ्गुलम् । मुखपादचतुष्केषु ततो मन्त्रं न्यसेद् द्विजः
चतुष्पादेषु क्रींकारं ह्रींकारं मुखमध्यतः । गर्भे विद्यां ततो लिख्य साधकं पृष्ठतोलिखेत्
मालामन्त्रैस्तु संवेष्ट्य इष्टकोपरि सन् न्यसेत् । पिधाय कूर्मपृष्ठेनकरालेनाभिसम्पठेत्
महाकूर्मं पूजयित्वा पादप्रोक्षन्तु निक्षिपेत् । ताड़येद् वामपादेन स्मृत्वा शत्रुश्चसप्तधा
ततः सञ्जायते शत्रोस्तम्भनं मुखरागतः । कृत्वा तु भैरवं रूपं मालामन्त्रं समालिखेत्

ओं शत्रुमुखस्तम्भनी कामरूपा आलीढकरी ।

ह्रीं फें फेत्कारिणी ममशत्रूणां देवदत्तानां मुखं स्तम्भय २ मम सर्वविद्वेषिणां मुखस्तम्भनं कुरु २ ओं ह्रूं फें फेत्कारिणि ! स्वाहा ।

फट् हेतुश्च समालिख्य तज्जपान्तं महाबलम् । वामेनैव नगं शूलं संलिखेद् दक्षिणे करे

लिखेन्मन्त्रमघोरस्य संग्रामे स्तम्भयेदरीन् ।

ओं नमो भगवत्यै भगमालिनि ! विस्फुर २ स्पन्द २ नित्यक्लिन्ने द्रव द्रव ह्रूं सः क्रींकाराक्षरे स्वाहा ।

एतेन रोचनाद्यैस्तु तिलकान्मोहयेज्जगत् ॥ ८ ॥

ओं फें ह्रूं फट् फेत्कारिणि ! ह्रीं ज्वल ज्वल त्रैलोक्यं मोहय मोहय गुह्यकालिके ! स्वाहा । अनेन तिलकं कृत्वा राजादीनां वशीकरम् ।

गर्द्दभस्य रजो गृह्य कुसुमं सूतकस्य च ॥ ९ ॥

नारी रजः क्षिपेद्रात्रौ शय्यादौ द्वेषकृद् भवेत् ।

गोखुरश्च तथा शृङ्गमश्वस्य च खुरं तथा ॥ १० ॥

शिरः सर्पस्य सङ्क्षिप्तं गृहेषूच्चाटनं भवेत्। करवीरशिफा पीता ससिद्धार्थाचमारणे
व्यालछुच्छुन्दरीरक्तं करवीरं तदर्थकृत्। सरटं षट्पदश्चापि तथाकर्कटवृश्चिकम्॥
चूर्णीकृत्य क्षिपेत्तैले तदभ्यङ्गश्च कुष्ठकृत्।

ओं नवग्रहाय सर्वशत्रून् मम साधय साधय मारय मारय आं सों मं बुं चुं ओं शं चां कें ओं स्वाहा।

अनेनार्कशतैरर्च्य श्मशाने तु निधापयेत्॥ १३॥
भूर्जे वा प्रतिमायां वा मारणाय रिपोर्ग्रहाः।

ओं कुञ्जरी ब्रह्माणी। ओं मञ्जरी माहेश्वरी। ओं वेताली कौमारी ओं काली वैष्णवी ओं अघोरा वाराही। ओं वेताली इन्द्राणी उर्वशी। ओं जयानी यक्षिणी। नवमातरो हे मम शत्रुं गृह्णत् गृह्णत्

भूर्ज्जे नाम रिपोर्लिख्य श्मशाने पूजिते म्रियेत्॥ १४॥

इत्यादिमहापुराणेआग्नेयेस्तम्भनादिमन्त्रकथनंनामपञ्चदशाधिकत्रिशततमोऽध्यायः।

---

# षोड़शाधिकत्रिशततमोऽध्यायः

## नानामन्त्राः।

### अग्निरुवाच।

आदौ ह्रूंकारसंयुक्ता खेचछे पदभूषिता। वर्गातीतविसर्गेण स्त्रीं ह्रूं क्षेपफड़न्तिका॥
सर्वदर्मकरी विद्या विषसन्धादिमर्दनी। ओं क्षेचछेतिप्रयोगश्च कालदष्टस्य जीवने॥
ओं ह्रूं केक्षः प्रयोगोऽयं विषशत्रु प्रमर्दनः।
स्त्रीं ह्रूं फडितियोगोऽयं पापारोगादिकं जयेत्॥ ३॥
खेछेति च प्रयोगोऽयं विघ्नदुष्टादि वारयेत्।
ह्रूं क्लीं ओमितियोगोऽयं योषिदादिवशीकरः॥ ४॥

खे स्त्रीं छ प्रयोगोऽयं वशाय विजयाय च ।

ऐं ह्रीं श्रीं स्फें क्षैं क्षौं भगवती ! अम्बिके ! कुब्जिके ! स्फें ओं भं तं वशनमो अघोराय मुखे व्रां व्रीं किलि किलि विच्चा स्फौं हें स्फ्रं श्रौं ह्रीं ऐं श्रीमिति कुब्जिकाविद्या सर्वकरा स्मृता ।

भूयः स्कन्दाय यानाह मन्त्रानीशश्च तान् वदे ॥ ५ ॥

इत्यादिमहापुराणेआग्नेयेनानामन्त्रकथनंनामषोड़शाधिकत्रिशततमोऽध्यायः ।

---

# सप्तदशाधिकत्रिशततमोऽध्यायः

## सकलादिमन्त्रोद्धारः ।

ईश्वर उवाच ।

सकलं निष्कलं शून्यं कालाढ्यं स्वमलङ्कृतम् ।
क्षपणं क्षयमन्तस्थं कण्ठोष्ठं चाष्टमं शिवम् ॥ १ ॥

प्रसादस्य पराख्यस्य स्मृतं रूपं गुहाष्टधा । सदाशिवस्य शब्दस्य रूपस्याखिलसिद्धये अमृतश्चांशुभांश्चेन्दुश्चेश्वरश्चोग्र ऊहकः । एकपादेन ओजाख्य औषधश्चांशुमान् वशी ॥ अकारादेः क्षकारश्च ककारादेः क्रमादिमे । कामदेवः शिखण्डी च गणेशः कालशङ्करौ एकनेत्रो द्विनेत्रश्च त्रिशिखो दीर्घबाहुकः । एकपादर्द्धचन्द्रस्य बलपो योगिनीप्रियः ॥

शक्तीश्वरो महाग्रन्थिस्तर्पकः स्थाणुदन्तुरौ ।
निधीशो नन्दी पद्मश्च तथान्यः शाकिनीप्रियः ॥ ६ ॥
मुखविम्बो भीषणश्च कृतान्तः प्राणसंज्ञकः ।
तेजस्वी शक्र उदधिः श्रीकण्ठः सिंह एव च ॥ ७ ॥
शशाङ्को विश्वरूपश्च क्षश्च स्यान् नरसिंहकः ।
सूर्य्यमात्रा समाक्रान्तं विश्वरूपन्तु कारयेत् ॥ ८ ॥

अंशुमत्संयुतं कृत्वा शशिवीजं विनायुतम्। ईशानमोजसाक्रान्तं प्रथमन्तु समुद्धरेत्॥
तृतीयं पुरुषं विद्धि दक्षिणं पञ्चमं तथा। सप्तमं वामदेवन्तु सद्योजातं ततःपरम्॥
रसयुक्तन्तु नवमं ब्रह्मपञ्चकमीरितम्। ओंकाराद्याश्चतुर्थ्यन्ता नमोऽन्ताः सर्वमन्त्रकाः
सद्योदेवा द्वितीयन्तु हृदयश्चाङ्गसंयुतम्। चतुर्थन्तु शिरो विद्धि ईश्वरन्नामनामतः॥
ऊहकन्तु शिखा ज्ञेया विश्वरूपसमन्विता। तन्मन्त्रमष्टमं ख्यातं नेत्रन्तु दशमं मतम्॥

अस्त्रं शशी समाख्यातं शिवसंज्ञं शिखिध्वजः।
नमः स्वाहा तथा वौषट् हुं च फट्क्रमेण तु॥ १४॥

जातिफट्कं हृदादीनां प्रासादं मन्त्रमावदे। ईशानाद्रुद्रसंख्यातं प्रोद्धरेच्चांशुरञ्जितम्
औषधाक्रान्तशिरसमूहकस्योपरिस्थितम्। अर्द्धचन्द्रोर्ध्वनादश्च विन्दुद्वितयमध्यगम्
तदन्ते विश्वरूपन्तु कुटिलन्तु त्रिधा ततः। एवं प्रासादमन्त्रश्च सर्वकर्म करो मनुः॥
शिखाविजं समुद्धृत्य फट्कारान्तन्तु चैव फट्। अर्द्धचन्द्रासनं ज्ञेयं कामदेवं ससर्पकम्
महापाशुपतास्त्रन्तु सर्वदुष्टप्रमर्दनम्। प्रसादः सकलः प्रोक्तो निष्कलः प्रोच्यतेऽधुना
औषधं विश्वरूपन्तु रुद्राख्यं सूर्य्यमण्डलम्। चन्द्रार्द्धं नादसंयोगं विसंज्ञं कुटिलन्ततः

निष्कलो भुक्तिमुक्तौ स्यात् पञ्चाङ्गाऽयं सदाशिवः।
अंशुमान् विश्वरूपश्च आवृतं शून्यरञ्जितम्॥ २१॥

ब्रह्माङ्गरहितः शून्यस्तस्य मूर्त्ति रसस्तरुः। विघ्ननाशाय भवति पूजितो बालबालिशैः

अंशुमान् विश्वरूपाख्यमूहकस्योपरि स्थितम्।
कलाढ्यं सकलस्यैव पूजाङ्गादि च सर्वतः॥ २३॥

नरसिंहं कृतान्तस्थं तेजस्विप्राणमूर्ध्वगम्। अंशुमानूहकाक्रान्तमधोर्ध्वं स्वमलङ्कृतम्॥
चन्द्रार्द्धनादनादान्तं ब्रह्माविणुविभूषितम्। उदधिं नरसिंहश्च सूर्य्यमात्राविभेदितम्॥
यदा कृतं तदा तस्य ब्रह्माण्यङ्गानि पूर्ववत्। ओजाख्यमंशुमद्युक्तं प्रथमं वर्णमुद्धरेत्
अंशुमच्चांशुनाक्रान्तं द्वितीयं वर्णनायकम्। अंशुमानीश्वरन्तद्वत् तृतीयं मुक्तिदायकम्
ऊहकाश्चांशुनाक्रान्तं वरुणप्राणतैजसम्। पञ्चमन्तु समाख्यातं कृतान्तन्तु ततः परम्॥
अंशुमानुदकप्राणः सप्तमं वर्णमुद्धृतम्। पद्ममिन्दुसमाक्रान्तं नन्दीशमेकपादधृक्॥२८॥

प्रथमश्चान्ततो योज्यं क्षपणं दशवीजकम् । अस्याद्यं तृतीयश्चैव पञ्चमं सप्तमं तथा ॥
सद्योजातन्तु नवमं द्वितीयाद्धृदयादिकम् । दशार्णप्रणवं यत्तु फडन्तश्चास्त्रमुद्धरेत् ॥
नमस्कारयुतान्यत्र ब्रह्माङ्गानि तु नान्यथा । द्वितीयादष्टमं यावदष्टौ विद्येश्वरा मताः
अनन्तेशश्च सूक्ष्मश्च तृतीयश्च शिवोत्तमः । एकमूर्त्त्येकरूपस्तु त्रिमूर्त्तिरपरस्तथा ॥३३॥
श्रीकण्ठश्च शिखण्डी च अष्टौ विद्येश्वराः स्मृताः ।
शिखण्डिनोऽप्यनन्तान्तं मन्त्रान्तं मूर्त्तिरीरिता ॥ ३४ ॥

इत्यादिमहापुराणेआग्नेयेसकलादिमन्त्रोद्धारकथनंनामसप्तदशाधिकत्रिशततमोऽध्यायः

---

## अष्टादशाधिकत्रिशततमोऽध्यायः

### गणपूजा ।

ईश्वर उवाच ।

विश्वरूपं समुद्धृत्य तेजस्युपरि संस्थितम् ।
नरसिंहं ततोऽधस्तात् कृतान्तं तदधो न्यसेत् ॥ १ ॥
प्रणवं तदधः कृत्वा ऊहकं तदधः पुनः ।
अंशुमान् विश्वमूर्त्तिस्थं कण्ठोष्ठप्रणवादिकम् ॥ २ ॥
नमोऽन्तःस्याच्चतुर्वर्णो विश्वरूपश्चकारणम् । सूर्य्यमान्त्राहतं ब्रह्मण्यङ्गानीह तु पूर्ववत्
उद्धरेत् प्रणवं पूर्वं प्रस्फुरद्वयमुच्चरेत् । घोरघोरतरं पश्चात् तत्र रूपमतः स्मरेत् ॥४॥
चटशब्दं द्विधा कृत्वा ततः प्रवरमुच्चरेत् ।
दहेति च द्विधा कार्य्यं वमेति च द्विधा मतम् ॥ ५ ॥
घातयेति द्विधाकृत्य हूं फड़न्तं समुच्चरेत् ।
अघोरास्त्रन्तु नेत्रं स्याद् गायत्री चोच्यतेऽधुना ॥ ६ ॥
तन्महेशाय विद्महे महादेवाय धीमहि तन्नः शिवः प्रचोदयात् । गायत्री सर्वसाधनी ॥

यात्रायां विजयादौ च यजेत् पूर्वङ्गणं श्रिये। तुर्य्यांशे तु पुरा क्षेत्रे समन्तादर्कभोजिते
चतुष्पदं त्रिकोणे तु त्रिदलं कमलं लिखेत्। तत्पृष्ठे पदिकावीथिभागि त्रिदलमब्जयुक्
वसुदेवसुतैः साब्जैस्त्रिदलैः पादपट्टिका। तदूर्ध्वं वेदिका देया भागमात्रप्रमाणतः॥
द्वारं पद्ममितं कोष्ठादुपद्वारं विवर्णितम्। द्वारोपद्वाररचितं मण्डलं विघ्नसूदनम्॥११॥

आरक्तं कमलं मध्ये वाह्यपद्मानि तद् बहिः।
सिता तु वीथिका कार्य्या द्वाराणि तु यथेच्छया॥ १२॥
कर्णिका पीतवर्णा स्यात् केशराणि तथा पुनः।
मण्डलं विघ्नमर्दाख्यं मध्ये गणपतिं यजेत्॥ १३॥
नामाद्यं सवराकं स्यादेवाच्छकसमन्वितम्।
शिरो हतं तत्पुरुषेण ओमाद्यञ्च नमोऽन्तकम्॥ १३॥

गजाख्यं गजशीर्षञ्च गाङ्गेयं गणनायकम्। त्रिरावर्त्तङ्गगनगंङ्गोपतिं पूर्वपङ्क्तिगम्॥
विचित्रांशं महाकायं लम्बोष्ठं लम्बकर्णकम्। लम्बोदरं महाभागं विकृतं पार्वतीप्रियम्
भयावहञ्च भद्रञ्च भगणं भयसूदनम्। द्वादशैते दशपङ्क्तौ देवत्रासञ्च पश्चिमे॥ १६॥
महानादं भास्वरञ्च विघ्नराजं गणाधिपम्। उद्भटस्वानभश्चण्डौ महाशुण्डञ्च भीमकम्
मन्मथं मधुसूदञ्च सुन्दरं भावपुष्टकम्। सौम्ये ब्रह्मेश्वरं ब्राह्मं मनोवृत्तिञ्च संलयम्।

लयं दूत्यप्रियं लौल्यं विकर्णं वत्सलं तथा।
कृतान्तं कालदण्डञ्च यजेत् कुम्भञ्च पूर्ववत्॥ १९॥

अयुतञ्च जपेन् मन्त्रं होमयेत् तु दशांशतः। शेषाणान्तु दशाहुत्या जपाद्धोमन्तुकारयेत्

पूर्णां दत्त्वाऽभिषेकन्तु कुर्य्यात् सर्वन्तु सिध्यति।
भुगोऽश्वगजवस्त्राद्यैर्गुरुपूजाञ्चरेन् नरः॥ २१॥

इत्यादिमहापुराणे आग्नेये गणपूजाकथनंनामाष्टादशाधिकत्रिशततमोऽध्यायः।

---

## ऊनविंशत्यधिकत्रिशततमोऽध्यायः

### वागीश्वरीपूजा ।

ईश्वर उवाच ।

वागीश्वरीपूजनञ्च प्रवदामि समण्डलम् । ऊहकं कालसंयुक्तं मनुं वर्णसमायुतम् ॥ १ ॥

निषाद ईश्वरं कार्य्यं मनुमाचन्द्रसूर्य्यवत् ।

अक्षरन्न हि देयं स्यात् ध्यायेत् कुन्देन्दुसन्निभाम् ॥ २ ॥

पञ्चाशद्व वर्णमालान्तु मुक्तास्रग्दामभूषिताम् । वरदाभयाक्षसूत्र पुस्तकाढ्यां त्रिलोचनाम्

लक्षं जपेन् मस्तकान्तं स्कन्धान्तं वर्णमालिकाम् ।

अकारादिक्षरान्तां विशन्तीं मानवत् स्मरेत् ॥ ४ ॥

कुर्य्याद्द गुरुश्च दीक्षार्थं मन्त्रग्राहे तु मण्डलम् ।

सूर्य्याग्रमिन्दुभक्तन्तु भागाभ्यां कमलं हितम् ॥ ५ ॥

वीथिका पदिका कार्य्या पद्मान्यष्टौ चतुष्पदे ।

वीथिका पदिका बाह्ये द्वाराणि द्विपदानि तु ॥ ६ ॥

उपद्वाराणि तद्वच्च कोणवन्धं द्विपट्टिकम् । सितानि नव पद्मानि कर्णिका कनकप्रभा

केशराणि विचित्राणि कोणान् रक्तेन् पूरयेत् ।

व्योमरेखान्तरं कृष्णं द्वाराणीन्द्रेभमानतः ॥ ८ ॥

मध्ये सरस्वती पद्मे वागीशी पूर्वपद्मके । हृल्लेखा चित्रवागीशी गायत्री विश्वरूपया ॥

शाङ्करी रतिर्धृतिश्च पूर्वाद्य ह्रीं स्ववीजिकाः ।

ध्येया सरस्वतीवच्च कपिलाज्येन होमकः ।

संस्कृतप्राकृतकविः काव्यशास्त्रादिविद्व भवेत् ॥ १० ॥

इत्यादिमहापुराणे आग्नेये वागीश्वरीपूजाकथनंनामोनविंशत्यधिकत्रिशततमोऽध्यायः ।

---

# त्रिंशत्यधिकत्रिशततमोऽध्यायः

## मण्डलानि ।

### ईश्वर उवाच ।

सर्वतो भद्रकान्यष्टमण्डलानि वदे गुह ! । शक्तिमासाधयेत् प्राचीमिष्टां विषुवे सुधीः
चित्रास्वात्यन्तरेणाऽथ दृष्टसूत्रेण वा पुनः । पूर्वापरायतं सूत्रमास्फाल्य मध्यतोऽङ्कयेत्

कोटिद्वयन्तु तन्मध्यादङ्कयेद् दक्षिणोत्तरम् ।
मध्ये द्वयं प्रकर्त्तव्यं स्फालयेद् दक्षिणोत्तरम् ॥ ३ ॥

शतक्षेत्रार्द्धमानेन कोणसम्पातमादिशेत् । एवं सूत्रचतुष्कस्य फालनाच्चतुरस्रकम् ॥
जायते तत्र कर्त्तव्यं भद्रस्वेदकरं शुभम् । वसुभक्तेन्दु द्विपदे क्षेत्रवीथौ च भागिका ॥
द्वारं द्विपदिकं पद्ममानाद् वै सकपोलकम् । कोणबन्धविचित्रन्तु द्विपदं तत्र वर्त्तयेत्

शुक्लं पद्मं कर्णिका तु पीता चित्रन्तु केशरम् ।
रक्ता वीथी तत्र कल्प्या द्वारं लोकेशरूपकम् ॥ ७ ॥
रक्तकोणं विधौ नित्ये नैमित्तिकेऽब्जकं शृणु ।
असंसक्तन्तु संसक्तं द्विधाब्जं भुक्तिमुक्तिकृत् ॥ ८ ॥
असंसक्तं मुमुक्षूणां संसक्तं तत् त्रिधा पृथक् ।
बालो युवा च वृद्धश्च नामतः फलसिद्धिदाः ॥ ६ ॥

पद्मक्षेत्रे तु सूत्राणि दिग्विदिक्षु विनिक्षिपेत् । वृत्तानि पञ्चकल्पानि पद्मक्षेत्रसमानितु
प्रथमे कर्णिका तत्र पुष्करैर्नवभिर्युता । केशराणि चतुर्विंश द्वितीयेऽथ तृतीयके॥११॥
दलसन्धिर्गजकुम्भ निभान्तर्यद् दलाग्रकम् । पञ्चमे व्योमरूपन्तु संसक्तं कमलं स्मृतम्
असंसक्ते दलाग्रे तु दिग्भागैर्विस्तराद् भजेत् । भागद्वयपरित्यागाद् वस्वंशैर्वर्त्तयेद्दलम्
सन्धिविस्तरसूत्रेण तन्मूलादङ्कयेद् दलम् । सव्यासव्यक्रमेणैव वृद्धमेतद् भवेत् तथा।
अथ वा सन्धिमध्यात् तु भ्रामयेदर्द्धचन्द्रवत् । सन्धिद्वयाग्रसूत्रं वा बालपद्मं तथा भवेद्

सन्धिसूत्रार्द्धमानेन पृष्ठतः परिवर्त्तयेत् । तीक्ष्णाग्रन्तु सुवातेन कमलं भुक्तिमुक्तिदम् ॥
मुक्तवृद्धौ च वश्यादौ वालं पद्मं समानकम् । नवनाभं नवहस्तं भागैर्मन्त्रात्मकैश्च तत्

मध्येऽब्जं पट्टिकावीजं द्वारेणाब्जस्य मानतः ।
कण्ठोपकण्ठमुक्तानि तद् वाह्ये वीथिका मता ॥ १८ ॥
पञ्चभागान्विता सा तु समन्ताद् दशभागिका ।
दिग्विदिक्ष्वष्ट पद्मानि द्वारपद्मं सवीथिकम् ॥ १९ ॥

तद् वाह्ये पञ्च पदिका वीथिका यत्र भूषिता । पद्मवद् द्वारकण्ठन्तु पदिकश्चौष्ठकण्ठकम्

कपोलं पदिकं कार्य्यं दिक्षु द्वारत्रयं स्फुटम् ।
कोणवन्धं त्रिपट्टन्तु द्विपट्टं वज्रवद् भवेत् ॥ २१

मध्यन्तु कमलं शुक्लं पीतं रक्तञ्च नीलकम् । पीतशुक्लञ्च धूम्रञ्च रक्तं पीतञ्च मुक्तिदम्

पूर्वादौ कमलान्यष्ट शिवविष्णवादिकं जपेत् ।
प्रासादमध्यतोऽभ्यर्च्य शक्रादीनब्जकादिषु ॥ २३ ॥
अस्त्राणि वाह्यवीथ्यान्तु विष्णवादीनश्वमेधभाक् ।
पवित्रारोहणादौ च महामण्डलमालिखेत् ॥ २४ ॥

अष्टहस्तं पुरा क्षेत्रं रसपक्षैर्विवर्त्तयेत् । द्विपदं कमलं मध्ये वीथिका पदिका ततः ॥

दिग्विदिक्षु ततोऽष्टौ च नीलाब्जानि विवर्त्तयेत् ।
मध्यपद्मप्रमाणेन त्रिंशत् पद्मानि तानि तु ॥ २६ ॥
दलसन्धिविहीनानि नीलेन्दीवरकाणि च ।
तत् पृष्ठे पदिका वीथी स्वस्तिकानि तदूर्ध्वतः ॥ २७ ॥
द्विपदानि तथा चाष्टौ कृतिभागकृतानि तु ।
वर्त्तयेत् स्वस्तिकांस्तत्र वीथिका पूर्ववद् वहिः ॥ २८ ॥

द्वाराणि कमलं यद्वदुपकण्ठयुतानि तु । रक्तं कोणं पीतवीथी नलं पद्मञ्च मण्डले

स्वस्तिकादि विचित्रञ्च सर्वकामप्रदं गुह ! ।
पञ्चाब्जं पञ्चहस्तं स्यात् समन्ताद् दशभाजितम् ॥ ३० ॥

द्विपदं कमलं वीथी पट्टिका दिक्षु पङ्कजम् । चतुष्कं पृष्ठतो वीथी पदिका द्विपदान्यथा

कण्ठोपकण्ठयुक्तानि द्वारान्यब्जन्तु मध्यतः ।
पञ्चाब्जमण्डले ह्यस्मिन् सितं पीतञ्च पूर्वकम् ॥ ३२ ॥
वैदूर्य्याभं दक्षिणाब्जं कुन्दाभं वारुणं कजम् ।
उत्तराब्जन्तु शङ्खाभमन्यत् सर्वं विचित्रकम् ॥ ३३ ॥

सर्वकामप्रदं वक्ष्ये दशहस्तन्तु मण्डलम् । विकारभक्तन्तुर्य्याश्च द्वारन्तु द्विपदं भवेत्
मध्ये पद्मं पूर्ववच्च विघ्नध्वंसं वदाम्यथ । चतुर्हस्तं पुरं कृत्वा वृत्तञ्चैव करद्वयम् ॥

वीथिका हस्तमात्रन्तु स्वस्तिकैर्बहुभिर्वृता ।
हस्तमात्राणि द्वाराणि दिक्षु वृत्तं सपद्मकम् ॥ ३६ ॥
पद्मानि पञ्च शुक्लानि मध्ये पूज्यश्च निष्कलः ।
हृदयादीनि पूर्वादौ विदिक्ष्वस्त्राणि वै यजेत् ॥ ३७ ॥

प्रागवच्च ब्रह्माणि बुध्याधारमतो वदे । शतभागे तिथिभागे पद्मं लिङ्गाष्टकं दिशि ।

मेखलाभागसंयुक्तं कण्ठं द्विपदिकं भवेत् ।
आचार्य्यो बुद्धिमाश्रित्य कल्पयेच्च लतादिकम् ॥ ३९ ॥
चतुःषट्पञ्चमाष्टादि खाछिखाद्यादि मण्डलम् ।
खाक्षीन्दुसूर्य्यगं सर्वं खाक्षि क्षैवेन्दुवर्णनात् ॥ ४० ॥
चत्वारिंशदधिकानि चतुर्दशशतानि हि ।
मण्डलानि हरेः शम्भोर्देव्याः सूर्य्यस्य सन्ति च ॥ ४१ ॥

दशसप्तविभक्ते तु लतालिङ्गोद्भवं शृणु । दिक्षु पञ्चत्रयञ्चैकं त्रयं पञ्च च लोमयेत् ॥४२॥
ऊर्ध्वगे द्विपदे लिङ्गमन्दिरं पार्श्वकोष्ठयोः । मध्येन द्विपदं पद्ममथ चैकञ्च पङ्कजम् ॥

लिङ्गस्य पार्श्वयोर्भद्रे पदद्वारमलोपनात् ।
तत्पार्श्वशोभाः षड् लोप्यलताः शेषास्तथा हरेः ॥ ४४ ॥

ऊर्ध्वं द्विपदिकं लोप्य हरेर्भद्राष्टकं स्मृतम् । रश्मिमानसमायुक्त वेदलोपाच्च शोभिकम्
पञ्चविंशतिकं पद्मं ततः पीठमपीठकम् । द्वयं द्वयं रक्षयित्वा उपशोभास्तथाष्ट च ॥

देव्यादिव्यापकं भद्रं बृहन्मध्ये परं लघु । मध्ये नवपदं पद्मं कोणे भद्रचतुष्टयम् ॥
त्रयोदशपदं शेषं बुद्ध्याधारन्तु मण्डलम् । शतपत्रं षष्ट्यधिकं बुद्ध्याधारं हरादिषु
इत्यादिमहापुराणे आग्नेये मण्डलकथनं नाम विंशत्यधिकत्रिशततमोऽध्यायः ।

———

# एकविंशत्यधिकत्रिशततमोऽध्यायः

## अघोरास्त्रादिशान्तिकल्पः ।

ईश्वर उवाच ।

अस्त्रयागः पुरा कार्य्यः सर्वकर्मसु सिद्धिदः ।
मध्ये पूज्यं शिवाद्यस्त्रं वज्रादीन् पूर्वतः क्रमात् ॥ १ ॥
पञ्चचक्रं दशकरं रणादौ पूजितं जये । ग्रहपूजा रविर्मध्ये पूर्वाद्याः सोमकादयः ॥ २ ॥
सर्वे एकादशस्थास्तु ग्रहाः स्युः ग्रहपूजनात् ।
अस्त्रशान्तिं प्रवक्ष्यामि सर्वोत्पातविनाशिनीम् ॥ ३ ॥
ग्रहरोगादिशमनीं मारीशत्रुविमर्दनीम् । विनायकोपतप्तिघ्नमघोरास्त्रं जपेन्नरः ॥ ४ ॥
लक्षं ग्रहादिनाशः स्यादुत्पाते तिलहोमनम् । दिव्ये लक्षं तदर्द्धेन व्योमजोत्पातनाशनम्
घृतेन लक्षपातेन उत्पाते भूमिजे हितम् । घृतगुग्गुलुहोमे च सर्वोत्पातादि मर्दनम् ॥
दूर्वाक्षताज्यहोमेन व्याधयोऽथ घृतेन च । सहस्रेण तु दुःस्वप्ना विनश्यन्ति न संशयः
अयुताद् ग्रहदोषघ्नो जवाघृतविमिश्रितात् । विनायकार्त्तिशमनमयुतेन घृतस्य च ॥ ८॥
भूतवेतालशान्तिस्तु गुग्गुलोरयुतेन च । महावृक्षस्य भङ्गे तु व्यालकङ्के गृहे स्थिते ॥
आरण्यानां प्रवेशे च दूर्वाज्याक्षतहावनात् ।
उल्कापाते भूमिकम्पे तिलाज्येनाहुताच्छिवम् ॥ १० ॥
रक्तस्रावे तु वृक्षाणामयुताद् गुग्गुलोः शिवम् ।
अकाले फलपुष्पाणां राष्ट्रभङ्गे च मारणे ॥ ११ ॥

द्विपदादेर्यदा मारी लक्षार्द्धाच्च तिलाज्यतः। हस्तिमारी प्रशान्त्यर्थं करिणीदन्तवर्धने हस्तिन्यां मददृष्टौ च अयुताच्छान्तिरिष्यते। अकाले गर्भपाते तु जातं यत्र विनश्यति विकृता यत्र जायन्ते यात्राकालेऽयुतं हुनेत्। तिलाज्यलक्षहोमन्तु उत्तमासिद्धिसाधने मध्यमायांतदर्द्धेन तत्पादादधमासु च। यथा जपस्तथा होमः संग्रामे विजयो भवेत्

अघोरास्त्रं जपेन् न्यस्य ध्यात्वा पञ्चास्यमूर्जितम् ॥ १५ ॥

इत्यादिमहापुराणेआग्नेयेअघोरास्त्रादिशान्तिकल्पकथनं नामै-

कविंशत्यधिकत्रिशततमोऽध्यायः।

---

# द्वाविंशत्यधिकत्रिशततमोऽध्यायः

## पाशुपतशान्तिः।

ईश्वर उवाच।

वक्ष्ये पाशुपतास्त्रेण शान्तिजापादि पूर्वतः।

पादतः पूर्वनाशो हि फडन्तं चापदादिनुत् ॥ १ ॥

ओं नमो भगवते! महापाशुपताय अतुलबलवीर्य्यपराक्रमाय त्रिपञ्चनयनाय नाना-रूपाय नानाप्रहरणोद्यताय सर्वाङ्गरक्ताय भिन्नाञ्जनचयप्रख्याय श्मशानवेतालप्रियाय सर्वविघ्ननिकृन्तनाय सर्वसिद्धिप्रदाय भक्तानुकम्पिने असंख्यवक्त्रभुजपादाय तस्मिन् सिद्धाय वेतालवित्रासिने शाकिनीक्षोभजनकाय व्याधिनिग्रहकारिणे पापभञ्जनाय सूर्य्यसोमाग्निनेत्राय विष्णुकवचाय खड्गवज्रहस्ताय यमदण्डवरुणपाशाय रुद्रशूलाय ज्वलज्जिह्वाय सर्वरोगविद्रावणाय ग्रहनिग्रहकारिणे दुष्टनागक्षयकारिणे ओं कृष्णपिङ्गलाय फट्। हूंकारास्त्राय फट्। वज्रहस्ताय फट्। शक्तये फट्। दण्डाय फट्। यमाय फट्। खड्गाय फट्। नैर्ऋत्याय फट्। वरुणाय फट्। पाशाय फट्। ध्वजाय फट्। अङ्कुशाय फट्। गदायै फट्। कुबेराय फट्। त्रिशूलाय फट्। मुद्गराय फट्। चक्राय फट्।

पद्माय फट्। नागास्त्राय फट्। ईशानाय फट्। खेटकास्त्राय फट्। मुण्डास्त्राय फट्। कङ्कालास्त्राय फट्। पिच्छिकास्त्राय फट्। क्षुरिकास्त्राय फट्। ब्रह्मास्त्राय फट्। शक्त्यस्त्राय फट्। गणास्त्राय फट्। पिलिपिच्छास्त्राय फट्। गन्धर्वास्त्राय फट्। पूर्वास्त्राय फट्। दक्षिणास्त्राय फट्। वामास्त्राय फट्। पश्चिमास्त्राय फट्। मन्त्रास्त्राय फट्। शाकिन्यस्त्राय फट्। योगिन्यस्त्राय फट्। दण्डास्त्रायफट्। महादण्डास्त्राय फट्। नागास्त्राय फट्। शिवास्त्राय फट्। ईशानास्त्राय फट्। पुरुषास्त्राय फट्। अघोरास्त्राय फट्। सद्योजातास्त्राय फट्। हृदयास्त्रायफट्। महास्त्राय फट्। गरुडास्त्राय फट्। राक्षसास्त्राय फट्। दानवास्त्राय फट्। क्षौं नरसिंहास्त्राय फट्। त्वष्ट्रस्त्राय फट्। सर्वास्त्राय फट्। नः फट्। वः फट्। पः फट्। फः फट्। मः फट्। श्रीः फट्। फेः फट्। भूः फट्। भुवः फट्। स्वः फट्। महः फट्। जनः फट्। तपः फट्। सर्वलोक फट्। सर्वपाताल फट्। सर्वतत्त्व फट्। सर्वप्राण फट्। सर्वनाड़ी फट्। सर्वकारण फट्। सर्वदेव फट्। ह्रीं फट् श्रीं फट्। हूं फट्। स्लुं फट्। स्वां फट्। लां फट्। वैराग्याय फट्। मायास्त्राय फट्। कामास्त्राय फट्। क्षेत्रपालास्त्राय फट्। हुंकारास्त्राय फट्। भास्करास्त्राय फट्। चन्द्रास्त्राय फट्। विघ्नेश्वरास्त्राय फट्। ख्रौं ख्रीं फट्। ह्रौं ह्रीं फट्। भ्रामय भ्रामय फट्। छादय छादय फट्। उन्मूलय उन्मूलय फट्। त्रासय त्रासय फट्। सञ्जीवय सञ्जीवय फट्। विद्रावय विद्रावय फट्। सर्वदुरितं नाशय२ फट्।

सकृदावर्त्तनादेव सर्वविघ्नान् विनाशयेत्।
शतावर्त्तेन चोत्पातान् रणादौ विजयो भवेत ॥ २ ॥
घृतगुग्गुलुहोमाच्च आसाध्यानपि साधयेत्!
पठनात् सर्वशान्तिः स्याच्छस्त्रपाशुपतस्य च ॥ ३ ॥

इत्यादिमहापुराणे आग्नेये पाशुपतशान्तिकथनंनामद्वाविंशत्यधिकत्रिशततमोऽध्यायः।

# त्रयोविंशत्यधिकत्रिशततमोऽध्यायः

## षड़ङ्गान्यघोरास्त्राणि ।

ईश्वर उवाच ।

ओं ह्रूं हंस इति मन्त्रेण मृत्युरोगादि शाम्यति ।
लक्षाहुतिभिर्दूर्वाभिः शान्ति पुष्टि प्रसाधयेत् ॥ १ ॥

अथवा प्रणवेनैव मायया वा षड़ानन ! । दिव्यान्तरीक्षभौमानां शान्तिरुत्पातवृक्षके
ओं नमो भगवति ! गङ्गे ! कालि कालि ! कहाकालि कहाकालि ! मांसशोणितभोजने ! रक्तकृष्णमुखि ! वशमानय मानुषान् स्वाहा ।

ओं लक्षं जप्त्वा दशांशेन हुत्वा स्यात् सर्वकर्मकृत् ।
वशं नयति शक्रादीन् मानुषेष्वेषु का कथा ॥ ३ ॥

अन्तर्धानकरी विद्या मोहनी जृम्भणी तथा । वशं नयति शत्रूणां शत्रुबुद्धिप्रमोहिनी॥
कामधेनुरियं विद्या सप्तधा परिकीर्तिता । मन्त्रराजं प्रवक्ष्यामि शत्रुचौरादिमोहनम्॥
महाभयेषु सर्वेषु स्मर्तव्यं हरपूजितम् । लक्षं जप्त्वा तिलैर्होमः सिद्ध्येदुद्धारकं शृणु
ओं हले शूले एहि ब्रह्मसत्येन विष्णुसत्येन रुद्रसत्येन रक्ष मां वाचेश्वराय स्वाहा।

दुर्गात् तारयते यस्मात् तेन दुर्गा शिवा मता ।

ओं चण्डकपालिनि ! दन्तान् किटि किटि क्षिटि क्षिटि गुह्ये फट् ह्रीं ।

अनेन मन्त्रराजेन क्षालयित्वा तु तण्डुलान् ॥ ७ ॥
त्रिंशद्वाराणि जप्तानि तच्चौरेषु प्रदापयेत् ।
दन्तैश्चूर्णानि शुक्लानि पतितानि हि शुद्धये ॥ ८ ॥

ओं ज्वलल्लोचन ! कपिलजटाभारभास्वर ! विद्रावण ! त्रैलोक्यडामर२ दर दर भ्रम भ्रम आकट्ट आकट्ट तोटय तोटय मोटय मोटय दह दह पच पच एवं सिद्धिरुद्रो ज्ञापयति यदि ग्रहोपगतः स्वर्गलोकं देवलोकं वा आरामविहाराचलं तथापि तमावर्तयि-

ष्यामि बलिं गृह्ण गृह्ण ददामि ते स्वाहेति ।
क्षेत्रपालबलिं दत्त्वा ग्रहो न्यासाद्व वशं व्रजेत् । शत्रवो नाशमायान्ति रणे वैरगणक्षयः
हंसबीजन्तु विन्यस्य विषन्तु त्रिविधं हरेत् । अगुरुश्चन्दनं कुष्ठं कुङ्कुमं नागकेशरम् ॥
नखं वै देवदारुञ्च समं कृत्वाऽथ धूपकः । माक्षिकेण समायुक्तो देववस्त्रादिधूपनात् ॥
विवादे मोहने स्त्रीणां मण्डने कलहे शुभः ।
कन्याया वरणे भाग्ये मायामन्त्रेण मन्त्रितः ॥ १२ ॥
ह्रीं रोचना नागपुष्पाणि कुङ्कुमञ्च मनःशिला ।
ललाटे तिलकं कृत्वा यं पश्येत् स वशी भवेत् ॥ १३ ॥
शतावर्य्यास्तु चूर्णन्तु दुग्धपीतञ्च पुत्रकृत् । नागकेशरचूर्णन्तु घृतपक्वन्तु पुत्रकृत् ॥
पालाशबीजपानेन लभेत पुत्रकं तथा ।
ओं उत्तिष्ठ चामुण्डे ! जम्भय२ मोहय मोहय अमुकं वशमानय वशमानय स्वाहा ।
षड्विंशा सिद्धविद्या सा नदीतीरमृदा स्त्रियम् ॥ १५ ॥
कृत्वोन्मत्तरसेनैव नामालिख्यार्कपत्रके ।
मूत्रोत्सर्गं ततः कृत्वा जपेत् तामानयेत् स्त्रियम् ॥ १६ ॥
ओं क्षुं सः वषट् । महामृत्युञ्जयो मन्त्रो जप्याद्धोमाच्च पुष्टिकृत् ।
ओं हंसः ह्रूं हं स ह्रः सौं । मृतसञ्जीवनीविद्या अष्टार्णा जयकृद्रणे ॥ १७ ॥
मन्त्रा ईशानमुख्याश्च धर्मकामादिदायकाः । ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्
ब्रह्मणश्चाधिपतिर्ब्रह्म शिवो मेऽस्तु सदाशिवः ।
ओं तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ।
ओं अघोरेभ्योऽथ घोरेभ्यो घोरघोरेभ्यस्तु सर्वतः ॥ १६ ॥
सर्वेभ्यो नमस्ते रूद्ररूपेभ्यः । ओं वामदेवाय नमो ज्येष्ठाय नमः रुद्राय नमः । कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलप्रमथनाय नमः । सर्वभूतदमनाय नमो मनोन्मनाय नमः ।
ओं सद्योजातं प्रवक्ष्यामि सद्योजाताय वै नमः ।

भवे भवेऽनादिभवे भजस्व मां भजस्व मां भवोद्भव ! ॥ २० ॥

पञ्चब्रह्माङ्ग षट्कञ्च वक्ष्येऽहं भुक्तिमुक्तिदम् ।

ओं नमः परमात्मने पराय कामदाय परमेश्वराय योगाय योगसम्भवाय सर्वकराय कुरु२ सत्य२ भव२ भवोद्भव ! वामदेव ! सर्वकार्य्यकर ! पापप्रशमन ! सदाशिव ! प्रसन्न ! नमोऽस्तु ते स्वाहा ।

हृदयं सर्वार्थदन्तु सप्तत्यक्षरसंयुतम् ।

ओं शिवः शिवाय नमः शिवः । ओं हृदये ज्वालिनि स्वाहा शिखा । ओं शिवात्मक ! महातेजः ! सर्वज्ञ ! प्रभुरावर्त्तय महाघोर ! कवचपिङ्गल ! नमः । महाकवच ! शिवाज्ञया हृदयं बन्ध२ घूर्णय२ चूर्णय२ सूक्ष्मवज्रधर ! वज्रपाश ! धनुर्वज्राशनिवज्रशरीर ! मम शरीरमनुप्रविश्य सर्वदुष्टान् स्तम्भय२ हूं ।

अक्षराणान्तु कवचं शतं पञ्चाक्षराधिकम् ॥ २१ ॥

ओं ओजसे नेत्रं ओं प्रस्फुर२ तनुरूप२ चट चट प्रचट प्रचट कट२ वम वम घातय२ हूँ फट् अघोरास्त्रम् ।

इत्यादिमहापुराणे आग्नेये षडङ्गान्यघोरास्त्रकथनंनाम त्रयोविंशत्यधिकत्रिशततमोऽध्यायः

---

# चतुर्विंशत्यधिकत्रिशततमोऽध्यायः

## रुद्रशान्तिः ।

ईश्वर उवाच ।

शिवशान्तिं प्रवक्ष्यामि कल्पाघोरप्रपूर्वकम् ।

सप्तकोट्यधिपो घोरो ब्रह्महत्याद्यघार्दनः ॥ १ ॥

उत्तमाधमसिद्धीनामालयोऽखिलरोगनुत् । दिव्यान्तरीक्षभौमानामुत्पातानां विमर्दनः विषग्रहपिशाचानां ग्रसनः सर्वकामकृत् । प्रायश्चित्तमघौघार्त्तौ दौर्भाग्यार्त्ति विनाशनम्

एकवीरन्तु विन्यस्य ध्येयः पञ्चमुखः सदा ।
शान्तिके पौष्टिके शुक्लो रक्तो वश्येऽथ पीतकः ॥ ४ ॥
स्तम्भने धूम्र उच्चाटमारणे कृष्णवर्णकः । कर्षणः कपिलो मोहे द्वात्रिंशद्वर्णमर्चयेत्
त्रिंशल्लक्षं जपेन् मन्त्रं होमं कुर्य्याद् दशांशतः ।
गुग्गुलाज्यतयुक्तेन सिद्धोऽसिद्धोऽथ सर्वकृत् ॥ ६ ॥
अघोरान्नापरो मन्त्रो विद्यते भुक्तिमुक्तिकृत् ।
अब्रह्मचारी ब्रह्मचारी अस्नातः स्नातको भवेत् ॥ ७ ॥
अघोरास्त्रमघोरन्तु द्वाविमौ मन्त्रराजकौ । जपहोमार्चनाद् युद्धे शत्रुसैन्यं विमर्दयेत्॥
रुद्रशान्तिं प्रवक्ष्यामि शिवां सर्वार्थसाधनीम् । पुत्रार्थं ग्रहनाशार्थं विषव्याधिविनष्टये
दुर्भिक्षमारीशान्त्यर्थे दुःस्वप्नहरणाय च । बलादिराज्यप्राप्त्यर्थं रिपूणां नाशनाय च
अकालफलिते वृक्षे सर्वग्रहविमर्दने । पूजने तु नमस्कारः स्वाहान्तो हवने तथा ॥११॥
आप्यायने वषट्कारं पुष्टौ वौषट्नियोजयेत् । चकारद्वितयस्थानेजातियोगन्तु कारयेत्
ओं रुद्राय च ते ओं वृषभाय नमः अविमुक्ताय असम्भवाय पुरुषाय च पूज्याय
ईशानाय पौरुषाय पञ्च चोत्तरे विश्वरूपाय करालाय विकृतरूपाय अविकृतरूपाय ।
निकृतौ चापरे काले अप्सुमाया च नैर्ऋते ।

एकपिङ्गलाय श्वेतपिङ्गलाय कृष्णपिङ्गलाय नमः । मधुपिङ्गलाय नमः मधुपिङ्गलाय नियतौ अनन्ताय आर्द्राय शुष्काय पयोगणाय । कालतत्त्वे । करालाय विकरालाय । द्वौ मायातत्त्वे । सहस्रशीर्षाय सहस्रवक्त्राय सहस्रकरचरणाय सहस्रलिङ्गाय । विद्यातत्त्वे । सहस्राक्षाद्विन्यसेद् दक्षिणे दले । एकजटाय द्विजटाय त्रिजटाय स्वाहा । काराय स्वधाकाराय वषट्काराय षड् रुद्राय । ईशतत्त्वे तु वह्निपत्रे स्थिता गुह । भूतपतये पशुपतये उमापतये कालाधिपतये । सदाशिवाध्यक्ष्यतत्त्वे षट् पूज्याः पूर्वदले स्थिताः । उमायै कुरूपधारिणि ओं कुरु २ रुहिणि २ रुद्रोऽसि देवानां देवदेवविशाख ! हन हन दह दह पच पच मथ मथ तुरु तुरु अरु अरु सुरु सुरु रुद्रशान्तिमनुस्मर कृष्णपिङ्गल ! अकालपिशाचाधिपतिविश्वेश्वराय नमः । शिवतत्त्वे

कर्णिकायां पूज्यौ ह्युमामहेश्वरौ । ओं व्योमव्यापिने व्योमरूपाय सर्वव्यापिने शिवाय अनन्ताय अनाथाय अनाश्रिताय शिवाय । शिवतत्त्वे नव पदानि व्योमव्याप्यभिधास्यहि । शाश्वताय योगपीठसंस्थिताय नित्यं योगिने ध्यानाहाराय नमः । ओं नमः शिवाय सर्वप्रभवे शिवाय ईशानमूर्धाय तत्पुरुषादिपञ्चवक्त्राय नवपदं पूर्वदले सदाख्ये पूजयेद् गुह । अघोरहृदयाय वामदेवगुह्याय सद्योजातमूर्त्तये । ओंनमो नमः । गुह्यातिगुह्याय गोप्त्रे अनिधनाय सर्वरोगाधिकृताय ज्योतीरूपाय अग्निपत्रे होमतत्त्वे विद्यातत्त्वे द्वेयाम्यगे परमेश्वराय चेतनाचेतन व्योमन व्यापिने प्रथम तेजस्तेजः मायातत्त्वे नैर्ऋते कालतत्त्वेऽथ वारुणे । ओं धृ धृ नाना वां वां अनिधान ! निधनोद्भव ! शिव ! सर्वपरमात्मन् ! महादेव ! सद्भावेश्वर ! महातेज ! योगाधिपते ! मुञ्च मुञ्च प्रमथ प्रमथ ओं सर्व ! सर्व ! ओं भव ! भव ! ओं भवोद्भव ! । सर्वभूतसुखप्रदवायुपत्रेऽथ नियतौ पुरुषे चोत्तरेण च । सर्वसान्निध्यकर ! ब्रह्मविष्णुरुद्रपर!अनर्चित ! अस्तुतस्तु च साक्षिण ! साक्षिण!२ तुरु तुरु पतङ्ग! पिङ्ग !२ ! ज्ञान !२ शब्द ! शब्द ! सूक्ष्म ! सूक्ष्म ! शिव ! शिव ! सर्वप्रद ! सर्वप्रद ! ओं नमः शिवाय ओं नमो नमःशिवाय ओं नमो नमः ।

ईशाने प्राकृते तत्त्वे पूजयेज्जुहुयाज्जपेत् । ग्रहरोगादिमायार्त्ति शमनी सर्वसिद्धिकृत्

इत्यादिमहापुराणे आग्नेये रुद्रशान्तिकथनं नामचतुर्विंशत्यधिकत्रिशततमोऽध्यायः ।

---

# पञ्चविंशत्यधिकत्रिशततमोऽध्यायः

## अंशुकादिः

### ईश्वर उवाच ।

रुद्राक्षकटकं धार्यं विषमं सुसमं दृढम् । एकत्रिपञ्चवदनं यथालाभन्तु धारयेत् ॥१॥
द्विचतुःषण्मुखं शस्तमव्रणं तीव्रकण्ठकम् । दक्षबाहौ शिखादौ च धारयेच्चतुराननम्

अब्रह्मचारी ब्रह्मचारी अस्नातः स्नातको भवेत् ।
हैमी वा मुद्रिका धार्य्या शिवमन्त्रेण चार्च्य तु ॥ ३ ॥
शिवः शिखा तथा ज्योतिः सवित्रश्चेतिगोचराः ।
गोचरन्तु कुलं ज्ञेयं तेन लक्ष्यस्तु दीक्षितः ॥ ४ ॥
प्राजापत्यो महीपालः कपोतो ग्रन्थिकः शिवे ।
कुटिलाश्चैव वेतालाः पद्महंसाः शिखाकुले ॥ ५ ॥
धृतराष्ट्रा वकाः काका गोपाला ज्योतिसंज्ञके ।
कुटिका सारठाश्चैव गुटिका दण्डिनोऽपरे ॥ ६ ॥
सावित्री गोचरे चैवमेकैकस्तु चतुर्विधः । सिद्धाद्यंशकमाख्यास्ये येन मन्त्रःसुसिद्धिदः
भूमौ तु मातृका लेख्याः कूटषण्डाववर्जिताः ।
मन्त्राक्षराणि विश्लिष्य अनुस्वारं नयेत् पृथक् ॥ ८ ॥
साधकस्य तु या संज्ञा तस्या विश्लेषणं चरेत् ।
मन्त्रस्याऽऽदौ तथा चान्ते साधकार्णानि योजयेत् ॥ ९ ॥
सिद्धः साध्यः सुसिद्धोऽरिः संज्ञातो गणयेत् क्रमात् ।
मन्त्रस्यादौ तथा चान्ते सिद्धिदः स्याच्छतांशतः ॥ १० ॥
सिद्धादिश्चान्तसिद्धिश्च तत्क्षणादेव सिद्ध्यति ।
सुसिद्धादिः सुसिद्धान्तः सिद्धवत् परिकल्पयेत् ॥ ११ ॥
अरिमादौ तथान्ते च दूरतः परिवर्जयेत् । सिद्धः सुसिद्धश्चैकार्थे अरिः साध्यस्तथैव च
आदौ सिद्धः स्थितो मन्त्रे तदन्ते तद्वदेव हि ।
मध्ये रिपुसहस्राणि न दोषाय भवन्ति हि ॥ १३ ॥
मायाप्रसादप्रणवेनांशकः ख्यातमन्त्रके । ब्रह्मांशको ब्रह्मविद्या विष्णवङ्गो वैष्णवःस्मृतः
रुद्रांशको भवेद्द वीर इन्द्रांशश्चेश्वरप्रियः । नागांशो नागस्तब्धाक्षोयक्षांशो भूषणप्रियः
गन्धर्वांशोऽतिगीतादि भीमांशो राक्षसांशकः ।
दैत्यांशः स्याद्द युद्धकार्य्यो मानी विद्याधरांशकः ॥ १६ ॥

पिशाचांशो मलाक्रान्तो मन्त्रं दद्यान्निरीक्ष्य च ।
मन्त्र एकात् फडन्तः स्यात् विद्यापञ्चाशतावधि ॥ १७ ॥
बाला विंशाक्षरान्ता च रुद्रा द्वाविंशगायुधा । तत ऊर्ध्वन्तु ये मन्त्रा वृद्धा यावच्छतत्रयम्
अकारादिहकारान्ताः क्रमात् पक्षौ सितासितौ ।
अनुस्वारविसर्गेण विना चैव स्वरा दश ॥ १८ ॥
ह्रस्वाः शुक्ला दीर्घाः श्यामास्तिथयः प्रतिपन्मुखाः ।
उदिते शान्तिकादीनि भ्रमिते वश्यकादिकम् ॥ २० ॥
भ्रामिते सन्ध्ययो द्वेषोच्चाटने स्तम्भनेऽस्तकम् ।
इडावाहे शान्तिकाद्यं पिङ्गले कर्षणादिकम् ॥ २१ ॥
मारणोच्चाटनादीनि विषुवे पञ्चधा पृथक् ।
अधरस्य गृहे पृथ्वी ऊर्ध्वे तेजोऽन्तरा द्रवः ॥ २२ ॥
रन्ध्रपार्श्वे बहिर्वायुः सर्वं व्याप्य महेश्वरः ।
स्तम्भनं पार्थिवे शान्तिर्जले वश्यादि तेजसे ।
वायौ स्याद् भ्रमणं शून्ये पुण्यं कालं समभ्यसेत् ॥ २३ ॥
इत्यादिमहापुराणेआग्नेयेअंशुकादिकथनंनामपञ्चविंशत्यधिकत्रिशततमोऽध्यायः ।

---

# षड्विंशत्यधिकत्रिशततमोऽध्यायः

## गौर्य्यादिपूजा ।

ईश्वर उवाच ।

सौभाग्यादेरुमापूजां वक्ष्येऽहं भुक्तिमुक्तिदाम् ।
मन्त्रध्यानं मण्डलञ्च मुद्रां होमादिसाधनम् ॥ १ ॥
चित्रभानुं शिवं कालं महाशक्तिसमन्वितम् । इडाद्यं परतोद्वृत्य सदेवः सविकारणम्

द्वितीयं द्वारकान्तं गौरीप्रीतिपदान्वितम् । चतुर्थ्यन्तं प्रकर्त्तव्यं गौर्य्या वै मूलवाचकम्

ओं ह्रीं सः शौं गौर्य्यै नमः । तत्रार्णत्रितयेनैव जातियुक्तं षडङ्गुलम् ।

आसनं प्रणवेनैव मूर्त्तिं वै हृदयेन तु ॥ ४ ॥

उदकञ्च तथा कालं शिववीजं समुद्धरेत् । प्राणं दीर्घस्वराक्रान्तं षड्ङ्गं जातिसंयुतम् ॥

आसनं प्रणवेनाऽत्र मूर्त्तिन्यासं हृदाचरेत् । यामलं कथितं वत्स ! एकवीरं वदाम्यथ

व्यापकं सृष्टिसंयुक्तं वह्निमायाकृशानुभिः । शिवशक्तिमयं बीजं हृदयादिविवर्जितम् ॥

गौरीं यजेद्धेमरूप्यां काष्ठजां शैलजादिकाम् ।

पञ्चपिण्डां तथाऽव्यक्तां कोणे मध्ये तु पञ्चमम् ॥ ८ ॥

ललिता शुभगा गौरी क्षोभणी चाग्नितः क्रमात् ।

वामा ज्येष्ठा क्रिया ज्ञाना वृत्ते पूर्वादितो यजेत् ॥ ६ ॥

सपीठे वामभागे तु शिवस्याव्यक्तरूपकम् ।

व्यक्ता द्विनेत्रा त्र्यक्षरा शुद्धा वा शङ्करान्विता ॥ १० ॥

पीठपद्मद्वयं तारा द्विभुजा वा चतुर्भुजा । सिंहस्था वा वृकस्था वा अष्टाष्टादशसत्करा

स्रगच्छसूत्रकलिका गलकोत्पलपिण्डिका । शरं धनुर्वा सव्येन पाणिनान्यतमं वहत्

वामेन पुस्तताम्बूल दण्डाभयकमण्डलुम् । गणेशदर्पणेष्वासां दद्यादेकैकशः क्रमात् ॥

व्यक्ताव्यक्ताऽथवा कार्य्या पद्ममुद्रा स्मृतासने ।

लिङ्गमुद्रा शिवस्योक्ता मुद्रा चावाहनी द्वयोः ॥ १४ ॥

शक्तिमुद्रा तु योन्याख्या चतुरस्रन्तु मण्डलम् । चतुरस्रं त्रिपत्राब्जं मध्यकोष्ठचतुष्टये

त्र्यश्रोद्ध्वेंचार्द्धचन्द्रस्तु द्विपदं द्विगुणं क्रमात् । द्विगुणं द्वारकण्ठन्तु द्विगुणादुपकण्ठतः

द्वारत्रयं त्रयं दिक्षु अथवा भद्रके यजेत् । स्थण्डिले वाऽथ संस्थाप्य पञ्चगव्यामृतादिना

रक्तपुष्पाणि देयानि पूजयित्वा ह्युदङ्मुखः ।

शतं हुत्वाऽमृताज्यञ्च पूर्णादः सर्वसिद्धिभाक् ॥ १८ ॥

बलिं दत्त्वा कुमारीश्च तिस्रो वा चाष्ट भोजयेत् ।

नैवेद्यं शिवभक्तेषु दद्यान्न स्वयमाचरेत् ॥ १६ ॥

कन्यार्थी लभते कन्याम् अपुत्रः पुत्रमाप्नुयात् ।
दुर्भगा चैव सौभाग्यं राजा राज्यं जयं रणे ॥ २० ॥
अष्टलक्षैश्च वाक्सिद्धिर्देवाद्या वशमाप्नुयुः ।
न निवेद्य न चाश्नीयाद् वामहस्तेन चार्चयेत् ॥ २१ ॥

अष्टम्याञ्च चतुर्दश्यां तृतीयायां विशेषतः । मृत्युञ्जयार्चनं वक्ष्ये पूजयेत् कलशोदरे ॥
हूयमानञ्च प्रणवो मूर्त्तिरोजस ईदृशम् । मूलञ्च वौषडन्तेन कुम्भमुद्रां प्रदर्शयेत् ॥२३॥
होमयेत् क्षीरदूर्वाज्यममृताञ्च पुनर्नवाम् । पायसञ्च पुरोडाशमयुतन्तु जपेन् मनुम् ॥
चतुर्मुखं चतुर्बाहुं द्वाभ्याञ्च कलशं दधत् । वरदाभयकं द्वाभ्यां स्नायाद् वै कुम्भमुद्रया

आरोग्यैश्वर्य्यदीर्घायुरौषधं मन्त्रितं शुभम् ।
अपमृत्युहरो ध्यातः पूजितोऽद्भुत एव सः ॥ २६ ॥

इत्यादिमहापुराणे आग्नेये गौर्य्यादिपूजाकथनं नामषड्विंशत्यधिकत्रिशततमोऽध्यायः।

---

# सप्तविंशत्यधिकत्रिशततमोऽध्यायः

## देवालयमाहात्म्यम् ।

### ईश्वर उवाच ।

व्रतेश्वरांश्च सत्यादीनिष्ट्वा व्रतसमर्पणम् । अरिष्टशमने शस्तमरिष्टं सूत्रनायकम् ॥
हेमरत्नमयं भूत्यै महाशङ्खञ्च मारणे । आप्यायने शङ्खसूत्रं मौक्तिकं पुत्रवर्द्धनम् ॥ २ ॥
स्फाटिकं भूतिदं कौशं मुक्तिदं रुद्रनेत्रजम् । धात्रीफलप्रमाणेन रुद्राक्षं चोत्तमं ततः ॥
समेरुं मेरुहीनं वा सूत्रं जप्यन्तु मानसम् । अनामाङ्गुष्ठमाक्रम्य जपं भाष्यन्तु कारयेत्
तर्जन्यङ्गुष्ठमाक्रम्य न मेरुं लङ्घयेज्जपे । प्रमादात् पतिते सूत्रे जप्तव्यन्तु शतद्वयम् ॥
सर्ववाद्यमयी घण्टा तस्या वादनमर्थकृत् । गोशकृन्मूत्रवल्मीकमृत्तिकाभस्मवारिभिः

वेश्मायतनलिङ्गादेः कार्य्यमेवं विशोधनम् ।

स्कन्दो नमः शिवायेति मन्त्रः सर्वार्थसाधकः ॥ ७ ॥

गीतः पञ्चाक्षरो वेदे लोके गीतः षड़क्षरः । ओमित्यन्ते स्थितः शम्भुर्मुद्रार्थं वटवीजवत्

क्रमान्नमः शिवायेति ईशान्याद्यानि वै विदुः ।

षड़क्षरस्य सूत्रस्य भाष्याद् विद्याकदम्बकम् ॥ ६ ॥

यदों नमः शिवायेति एतावत् परमं पदम् ।

अनेन पूजयेल्लिङ्गं लिङ्गे यस्मात् स्थितः शिवः ॥ १० ॥

अनुग्रहाय लोकानां धर्मकामार्थमुक्तिदः । यो न पूजयते लिङ्गं न स धर्मादिभाजनम् ॥

लिङ्गार्चनाद् भुक्तिमुक्तिर्यावज्जीवमतो यजेत् । वरं प्राणपरित्यागो भुञ्जीतापूज्य नैव तम्

रुद्रस्य पूजनाद्रुद्रो विष्णुः स्याद् विष्णुपूजनात् ।

सूर्य्यः स्यात् सूर्य्यपूजातः शक्त्यादिः शक्तिपूजनात् ॥ १३ ॥

सर्वयज्ञतपोदाने तीर्थे वेदेषु यत् फलम् । तत् फलं कोटिगुणितं स्थाप्य लिङ्गं लभेन्नरः

त्रिसन्ध्यं योऽर्चयेल्लिङ्गं कृत्वा बिल्वेन पार्थिवम् ॥

शतैकादशिकं यावत् कुलमुद्धृत्य नाकभाक् ॥ १५ ॥

भक्त्या वित्तानुसारेण कुर्य्यात् प्रासादसञ्चयम् ।

अल्पे महति वा तुल्यफलमाढ्यदरिद्रयोः ॥ १६ ॥

भागद्वयञ्च धर्मार्थं कल्पयेज्जीवनाय च । धनस्य भागमेकन्तु अनित्यं जीवितं यतः ॥

त्रिसप्तकुलमुद्धृत्य देवागारकृदर्थभाक् ।

मृतकाष्ठेष्टकशैलाद्यैः क्रमात् कोटिगुणं फलम् ॥ १८ ॥

अष्टेष्टकसुरागारकारी स्वर्गमवाप्नुयात् । पांशुना क्रीड़मानोऽपि देवागारकृदर्थभाक् ॥

इत्यादिमहापुराणेआग्नेयेदेवालयमाहात्म्यकथनंनामसप्तविंशत्यधिकत्रिशततमोऽध्यायः

———

## अष्टात्रिंशत्यधिकत्रिशततमोऽध्ययः

### छन्दःसारः ।

अग्निरुवाच ।

छन्दो वक्ष्ये मूलजैस्तैः पिङ्गलोक्तं यथाक्रमम् ।
सर्वादिमध्यान्तगणौ म्लौ द्वौ जौ स्तौ त्रिकौ गणाः ॥ १ ॥
ह्रस्वो गुरुर्वा पादान्ते पूर्वो योगाद् विसर्गतः ।
अनुस्वाराद् व्यञ्जनात् स्यात् जिह्वामूलीयतस्तथा ॥ २ ॥
उपध्मानीयतो दीर्घो गुरुर्ल्गौ नौ गणाविह ।
वसवोऽष्टौ च चत्वारो वेदादित्यादिलोपतः ॥ ३ ॥

इत्यादिमहापुराणे आग्नेये छन्दःसारकथनं नामाष्टात्रिंशत्यधिकत्रिशततमोऽध्यायः ।

---

## ऊनत्रिंशदधिकत्रिशततमोऽध्यायः

### छन्दःसारः ।

अग्निरुवाच ।

छन्दोऽधिकारे गायत्री देवी चैकाक्षरी भवेत् ।
पञ्चदशाक्षरी सा स्यात् प्राजापत्याष्टवर्णिका ॥ १ ॥
यजुषां षड़र्णा गायत्री साम्नां स्याद् द्वादशाक्षरा ।
ऋचामष्टादशर्णा स्यात् साम्नां वर्धेत च द्वयम् ॥ २ ॥
ऋचां तुर्य्यंश्च वर्धेत प्रजापत्या चतुष्टयम् । वर्धेदेकैककं शेषे आतुर्य्यादेकमुत्सृजेत् ॥
उष्णिगनुष्टुब् वृहती पङ्क्तिस्त्रिष्टुब्जगत्यपि ।

तानि ज्ञेयानि क्रमशो गायत्र्यो ब्रह्म एव ताः ॥ ४ ॥
तिस्रस्तिस्रः समान्यः स्युरेकैका आर्य्यं एव च ।
ऋग्यजुषां संज्ञा स्युःश्चतुःषष्टिपदे लिखेत् ॥ ५ ॥

इत्यादिमहापुराणे आग्नेये छन्दःसारकथनं नामोनत्रिंशदधिकत्रिशततमोऽध्यायः ।

---

## त्रिंशदधिकत्रिशततमोऽध्यायः

### छन्दःसारः ।

अग्निरुवाच ।

पाद आपादपूरणे गायत्र्यो वसवः स्मृताः ।
जगत्या आदित्याः पादो विराजो दिश ईरिताः ॥ १ ॥
विष्णुतो रुद्राः पादः स्याच्छन्द एकादिपादकम् ।
आद्यं चतुष्पाच्चतुर्भिस्त्रिपात् सप्ताक्षरैः क्वचित् ॥ २ ॥
सा गायत्री पदे नीवृत् तत्प्रतिष्ठादि षट् त्रिपात् ।
वर्धमाना षड्ष्टाष्टा त्रिपात् षड्वसुभूधरैः । ॥ ३ ॥
गायत्री त्रिपदा नीवृत् नागी नवनवर्त्तुभिः । वाराही रसद्विरसा छन्दश्चाथ तृतीयकम्
द्विपाद् द्वादशवस्वन्तैः त्रिपात् तु त्रैष्टुभैः स्मृतम् ।
उष्णिक् छन्दोऽष्टवसुकैः पादैर्वेदे प्रकीर्त्तितः ॥ ५ ॥
ककुबुष्णिगष्टसूर्य्यवस्वर्णा त्रिभिरेव सः । पुनरुष्णिक् सूर्य्यवसुवस्वर्णैश्च त्रिपाद् भवेत्
परोष्णिक् परतस्तस्माच्चतुष्पादात् त्रिभिर्भवेत् ।
साष्टाक्षरैरनुष्टुप् स्यात् चतुष्पाच्च त्रिपात् क्वचित् ॥ ७ ॥
अष्टार्कसूर्य्यवर्णैः स्यात् मध्येऽन्ते च क्वचिद् भवेत् ।
बृहती जगत्यस्त्रयो गायत्र्याः पूर्वको यदि ॥ ८ ॥

तृतीयः पथ्या भवति द्वितीयान्यंकुसारिणी ।
स्कन्धौ ग्रीवा क्रौष्टुके स्याद् यक्षे स्याद् यौ वृहत्यपि ॥ ९ ॥
उपरिष्टाद् वृहत्यन्ते पुरस्ताद् बृहती पुनः । क्वचिन्नवकाश्चत्वारो दिग्विदिक्ष्वष्टवर्णिकाः
महावृहती जागतैः स्यात् त्रिभिः सतो वृहत्यपि ।
भण्डिलः पङ्क्तिश्छन्दः स्यात् सूर्य्याकाष्टाष्टवर्णकैः ॥ ११ ॥
पूर्वौ वेदयुजौ सतः पङ्क्तिश्च विपरीतकी ।
प्रस्तारपङ्क्तिः पुरतः पवादास्तारपङ्क्तिका ॥ १२ ॥
अक्षरपङ्क्तिः पञ्चकाश्चत्वारश्चाल्पशो द्वयम् ।
पदपङ्क्तिः पञ्च भवेच्चतुष्कं षट्ककत्रयम् ॥ १३ ॥
षट्कपञ्चभिर्गायगैः पङ्क्तिश्च जगती भवेत् ।
एकेन त्रिष्टुबज्योतिष्मती तथैव जगतीरिता ॥ १४ ॥
पुरस्ताज्ज्योतिः प्रथमे मध्ये ज्योतिश्च मध्यतः ।
उपरिष्टाज्ज्योतिरन्त्यादेकस्मिन् पञ्चके तथा ॥ १५ ॥
भवेच्छन्दः शङ्कुमती षट्के छन्दः ककुद्मती ।
त्रिपादशिशुमध्या स्यात् सा पिपीलिकमध्यमा ॥ १६ ॥
विपरीता यवमध्या त्रिवृदेकेन वर्जिता । भूमिजैकेनाधिकेन द्विहीना च विराड् भवेत्
स्वराट् स्याद् द्वाभ्यामधिकं सन्दिग्धो दैवतादितः ।
आदिपादान्निश्चयः स्याच्छन्दसां देवता क्रमात् ॥ १८ ॥
अग्निः सूर्य्यः शशी जीवो वरुणश्चन्द्र एव च ।
विश्वेदेवाश्च षड्जाद्याः स्वरा षड्जो वृषः क्रमात् ॥ १९ ॥
गान्धारो मध्यमश्चैव पञ्चमो धैवतस्तथा । निषादवर्णाः श्वेतश्च सारङ्गश्च पिसङ्गकः
कृष्णो नीलो लोहितश्च गौरो गायत्रिमुख्यके ।
गोरोचनाभाः कृतयो ज्योतिश्छन्दो हि श्यामलम् ॥ २१ ॥
अग्निवैश्यः काश्यपश्चगौतमाङ्गिरसौ क्रमात् ।

भार्गवः कौशिकश्चैव वाशिष्ठो गोत्रमीरितम् ॥ २२ ॥

इत्यादिमहापुराणे आग्नेये छन्दःसारकथनं नाम त्रिंशदधिकत्रिशततमोऽध्यायः ।

---

## एकत्रिंशदधिकत्रिशततमोऽध्यायः

### छन्दोजातिनिरूपणम् ।

अग्निरुवाच ।

चतुःशतमुत्कृतिः स्यादुत्कृतेश्चतुरस्त्यजेत् ।
अभिसंख्या प्रत्यक्कृतिस्तानि छन्दांसि वै पृथक् ॥ १ ॥
कृतिश्चाति धृतिवृत्ती अत्यष्टिश्चाष्टिरित्यतः ।
अतिशर्करी शक्करीति अतिजगती जगत्यपि ॥ २ ॥
छन्दोऽत्र लौकिकं स्याच्च आर्षमात्रैष्टुभात् स्मृतम् ।
त्रिष्टुप्पङ्क्तिवृहती अनुष्टुबुष्णिगीरितम् ॥ ३ ॥
गायत्री स्यात् सुप्रतिष्ठा प्रतिष्ठा मध्यया सह ।
अत्युक्तात्युक्त आदिश्च एकैकाक्षरवर्जितम् ॥ ४ ॥

चतुर्भागो भवेत् पादो गणच्छन्दः प्रदर्श्यते । तावन्तःसमुद्रा गणाह्यादिमध्यान्त सर्वगा चतुर्णः पञ्च च गणा आर्य्यालक्षणमुच्यते । स्वरार्द्धश्चार्य्यार्द्धंस्यादार्य्यायांविषमेणजः

षष्ठो जो नल पूर्वा स्याद् द्वितीयादिपदं नले ।
सप्तमेऽन्ते प्रथमा च द्वितीये पञ्चमे नले ॥ ७ ॥

अर्द्ध पदं प्रथमादि षष्ठ एको लघुर्भवेत् । त्रिषु गणेषु पादः स्यादार्य्या पञ्चार्द्धके स्मृता विपुलान्यथ चपला गुरुमध्यगतौ च जौ । द्वितीयचतुर्थौ पूर्वे च चपला मुखपूर्विका द्वितीये जघनपूर्वा चपलार्य्या प्रकीर्तिता । उभयोर्महाचपला गौतवार्यार्द्धतुल्यका ॥

अन्त्येनार्द्धेनोपगीतिरुद्गीतिश्चोत्क्रमात् स्मृता ।

अर्द्धे रक्षगणा आर्य्या गीतच्छन्दोऽथ मात्रया ॥ ११ ॥
वैतालीयं द्विस्वरा स्यादयुष्पादे समे नलः । वसवोऽन्ते वनगाश्च गोपुच्छं दशकं भवेत्
भगणान्ता पाठलिका शेषे परे च पूर्ववत् ।
साकं षड् वा मिश्रायुक् प्राच्यवृत्तिः प्रदर्श्यते ॥ १३ ॥
पञ्चमेन पूर्वसाकं तृतीयेन सहस्रयुक् । उदीच्यवृत्तिर्वाच्यां स्याद्युगपच्च प्रवर्त्तकम् ॥
अयुक् चारुहासिनीस्याद् युगपच्चान्तिका भवेत् ॥ १५ ॥
सप्तार्चिर्वसवश्चैव मात्रासमकमीरितम् । भवेन्नलवमौ लश्च द्वादशो वा नवासिका ॥
विश्वोकः पञ्चमाष्टौ मो चित्रा लवमकश्चलः । परयुक्तेनोपचित्रा पादाकुलकमित्यतः
गीतार्य्या लोपश्चेत् सौम्यालः पूर्वः ज्योतिरीरिता ।
स्याच्छिखा विपर्य्यास्तार्द्धा तूलिका समुदाहृता ॥ १८ ॥
एकोनत्रिंशदन्ते गः स्याज्झेनसमावला । गु इत्येकगुरुं संख्यावर्णाद् दशविपर्य्ययात्
इत्यादिमहापुराणे आग्नेये छन्दोजातिनिरूपणकथनंनामैक-
त्रिंशदधिकत्रिशततमोऽध्यायः ।

---

## द्वात्रिंशदधिकत्रिशततमोऽध्यायः

### विषमकथनम् ।

अग्निरुवाच ।

वृत्तं समञ्चार्द्धसमं विषमञ्च त्रिधा वदे । समन्तावत् कृत्वकृतमर्द्धसमञ्च कारयेत् ॥१॥
विषमञ्चैव वास्न्यूनमतिवृत्तं समान्यपि । ग्लौचतुःप्रमाणी स्यादाभ्यामन्यद्वितानकम्
पादंस्यादन्तु वक्रं स्यात् शनौ न प्रथमास्मृतौ ।
वाल्यमुश्चतुर्थाद्द वर्णात् पथ्यावर्णं युजोयतः ॥ ३ ॥
विपरीतपथ्यान्यासाच्चपला वा युजस्वनः । । विपुलायुग्नसप्तमः सर्वं तस्यैव तस्य च

तौन्तौ वा विपुलानेका चक्रजातिः समीरिता ।
भवेत् पदचतुरूर्ध्वं चतुर्वृद्ध्या पदेषु च ॥ ५ ॥
गुरुद्वयान्तआपीड़ः प्रत्यापीडो गणादिकः । प्रथमस्य विपर्य्यासे मञ्जरी लवणीक्रमात्
भवेदमृतधाराख्या उद्धताद्युच्यतेऽधुना ।
एकतः ससजसानः स्युर्न सौ जो गोऽथ भौ नजौ ॥ ७ ॥
नोगोऽथ सजसा गोगस्तृतीयचरणस्य च । सौरभे केचन भगा ललितञ्च नमौ जसौ
उपस्थितं प्रचुपितं प्रथमाद्यं समौ जसौ । गोगथो मलजा रोगः समो नगरजयाः पदे
वर्धमानं मलौ स्त्रौ नसौअथोभोजोव ईरिता । शुद्ध विराड़ार्षभाख्यं वक्ष्ये चार्द्धं समन्ततः
इत्यादिमहापुराणे आग्नेये विषमकथनं नाम द्वात्रिंशदधिकत्रिशततमोऽध्यायः ।

---

# त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः

## अर्द्धसमनिरूपणम् ।

अग्निरुवाच ।

उपचित्रकं ससमनामथभोजभगामथ । द्रुतमध्या ततभगागथोननजयाःस्मृताः ॥ १ ॥
वेगवती सुसमगा भभभगोगथो स्मृता । रुद्रविस्तारस्तोसभगासमजागोगथा स्मृता
रजसागोगथोद्रौणौगोगौ वै केतुमत्यपि । आख्यानकी ततजगागथोततजगागथ ॥
विपरीताख्यानकी त्तौ जयागातौ जगोगथ । सौमलौ गथलभभावौभवेद्धरिणवल्लभा
लौवनौगाथनजजा यः स्यादपराक्रमम् । पुष्पिता ननवयानजजावोगथो रजौ ॥ ५ ॥
वोजथो जवजवागो मूले पनमती शिखा । अष्टाविंशतिनाभागा त्रिंशन्नागन्ततो युजि
खञ्जा तद्विपरीता स्यात् समवृत्तं प्रदर्श्यते ॥ ६ ॥
इत्यादिमहापुराणेआग्नेयेअर्द्धसम निरूपणकथनंनामत्रयस्त्रिशदधिकत्रिशततमोऽध्यायः

---

# चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः

## समवृत्तनिरूपणम् ।

अग्निरुवाच ।

यतिर्विच्छेद इत्युक्तस्तत् तन्मध्यान्तयौ गणौ ।
यौसः कुमारललिता तौ गौ चित्रपदा स्मृता ॥ १ ॥

विद्युन्माला मममागणैर्भूतगणैर्भवेत् । माणवका क्रीड़ितकं वनौ हलमुखी वसः ॥२॥
स्याद् भुजङ्गशिशुसूतानौ मेहनं मरुतं ननौ । भवेच्छुद्धविराड्वृत्तं प्रतिपादं समौद्जगौ
पणवोमलयोमः स्याज्जौ गौ मयूरसारिणी । सत्तामभसगा वृत्तं भजताद्युपरिस्थिता
रुक्मवती भससगाविन्द्रावज्रा तजौ जगौ । जतौ जगौ गूपपूर्वावाद्यन्ताद्युपजातयः ॥

दोधकं भगभागौ स्यात् शालिनी मभतागगौ ।
यतिः समुद्राः ऋषयः वातोर्मी मभतागगौ ॥ ६ ॥
चतुःस्वरा स्याद् भ्रमरी विलासिता मभौनलौ ।
समुद्रा अथ ऋषयो वनौ लौगौ रथोद्धता ॥ ७ ॥

सामताधनभागौगोवृत्तानतसमाश्च सः । श्येनी वजवनागः स्याद्रम्या नपरगागगः ॥
जगती वंशस्था वृत्तं जतौ जावथ तौ जवौ । इन्द्रवंशा तोटकं सैश्चतुर्भिः प्रतिपादतः
भवेद् द्रुतविलम्बिता नभौ भवावथौ नलौ । स्यौ श्रोपुटो वसुदेवा जलोगतिजलौजमौ

जसौ वसर्ववश्चाथ ततं ननमराः स्मृतम् ।
कुसुमविचित्रा न्यौ यौ नौ नौ रौ स्याच्चलाम्बिका ॥ ११ ॥
भुजङ्गप्रयातं यैः स्याच्चतुर्भिः स्रग्विनीभवैः ।
प्रमिताक्षरा गजौ सौ कान्तोत्पीड़ा मतौ समौ ॥ १२ ॥

वैश्वदेवी ममयायाः पञ्चाङ्गा नवमालिनी । नजौ भयौ प्रतिपादं गणा यदि जगत्यपि
प्रहर्षणी मवजवा गोपतिर्वह्निदिक्षु च । रुचिरा जभसजगा छिन्ना वेदैर्ग्रहैःस्मृता ॥१४

मत्तमयूरं म्तय्सा स्गौ वेदग्रहे यतिः । गौरीनलनसागः स्यादसम्बाधा नतौ नगौ ॥
गोग इन्द्रियनवकौ ननौ वसनागाः स्वराः ।
स्वराश्चापराजिता स्यान्ननभानंनगाः स्वराः ॥ १६ ॥
द्विःप्रहरणकलिता वसन्ततिलका नभौ ।
जौ गौ सिंहोन्नता सा स्यान्मुनेरुद्धर्षणी च सा ॥ १७ ॥
चन्द्रावर्त्ता ननौ सोमावर्त्ततुंनघकः स्मृतः । मणिगुणनिकरा सौ मालिनी नौ मयौयय:
यतिर्वसुस्वरा भौ वौ नतलमित्रसग्रहाः । ऋषभगजविलासितं ज्ञेया शिखरिणी जगौ
रसभालभृगुरुद्राः पृथ्वीजसजसा जनौ । गावसुग्रहविच्छिन्ना पिङ्गलेनेरिता पुरा ॥
वंशपत्रपतितं स्याद् भवनाभौ नगौ सदिक् । हरिणी नसमारः सो नगौ रसचतुःस्वराः
मन्दाक्रान्ता नभनतं तगौगच्छिरस्वराः । कुसुमितलता वेल्लिता मतना ययया: शराः
रथाः स्वराः प्रतिरथससजाः सतताश्च गः । शार्दूलविक्रीड़ितं स्यादादित्यमुनयोयतिः
कृतिः सुवदना मोरौ भनया भनगाः सुराः ।
यतिर्मुनिरसाश्चाथ इति वृत्तं क्रमात् स्मृतम् ॥ २४ ॥
स्रग्धरा मरतानोमोयपौ त्रिःसप्तका यतिः । समुद्रकं भरजानोवनगा दशभास्कराः ॥
अश्वललितं नजभा जभजा भनमीशतः । मत्ताक्रीड़ा ममनना नौनग्नौ गोष्टमातिथिः ॥
तन्वी भनतसाभोभो लयो वाणसुरार्कका: ।
क्रौञ्चपदा भमतता नौ नौ वाणशराष्टतः ॥ २७ ॥
भुजङ्गविजृम्भितं ममतना ननवासनौ । गष्टेशमुनिभिश्छेदो ह्युपहाराख्यमीदृशम् ॥२८॥
मनननानतानः सो गगौ ग्रहरसो रसात् । नौ सप्तरोदण्डदः स्याच्चण्डवृष्टिप्रघातकम् ॥
रैफवृद्ध्या ननवा स्युर्व्यालजीमूतमुख्यकाः । शेषे वै प्रचिता ज्ञेया गाथाप्रस्तारउच्यते
इत्यादिमहापुराणे आग्नेये समवृत्तनिरूपणकथनंनामचतुस्त्रिंशदधिकत्रिशततमोऽध्यायः

---

# पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः

## प्रस्तारनिरूपणम् ।

अग्निरुवाच ।

छन्दोऽत्र सिद्धं गाथा स्यात् पादे सर्वगुरौ तथा ।
प्रस्तार आत्यगाथोनः परतुल्योऽथ पूर्वगः ॥ १ ॥
नष्टमध्ये समेऽङ्के नः समेऽर्द्धे विषमे गुरुः । प्रतिलोमगुणं नाद्यं द्विरुद्दिष्टग एकनुत् ॥
सङ्ख्याद्विरर्धे रूपे तु शून्यं शून्ये द्विरीरितम् ।
तावदर्धे तद्गुणितं द्विद्व्यूनश्च तदन्ततः ॥ ३ ॥
परे पूर्णं परे पूर्णं मेरुप्रस्तारतो भवेत् । नगसंख्या वृत्तसंख्या चाध्वाङ्गुलमधोऽद्ध्र्वतः
संख्यैव द्विगुणैकोना छन्दःसारोऽयमीरितः ॥ ४ ॥
इत्यादिमहापुराणे आग्नेये प्रस्तारनिरूपणकथनंनामपञ्चत्रिंशदधिकत्रिशततमोऽध्यायः ।

---

# षट्त्रिंशदधिकत्रिशततमोऽध्यायः

## शिक्षानिरूपणम् ।

अग्निरुवाच ।

वक्ष्ये शिक्षान् त्रिषष्टिः स्युर्वर्णा वा चतुराधिका ।
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ॥ १ ॥
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ।
अनुस्वारो विसर्गश्च पौर्व्यौ चापि परान्वितौ ॥ २ ॥
दुस्पृष्टश्चेति विज्ञेया ऌकारः प्लुत एव च । रङ्गश्च खे अरं प्रोक्तं हकारः पञ्चमैर्युतः

अन्तस्थाभिः समायुक्त औरस्यः कण्ठ्य एव सः ।
आत्माबुद्ध्या समस्यार्थं मनो युङ्क्ते विवक्षया ॥ ४ ॥

मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् । मारुतस्तूरसि चरन् मन्त्रं जनयति स्वरम् प्रातःसवनयोगस्तु छन्दो गायत्रमाश्रितम् । कण्ठे माध्यन्दिनयुगं मध्यमन्त्रेषु भानुगम् तारं तार्त्तीयसवनं शीर्षण्यं जागतानुगम् । सोदीर्णो मूर्ध्न्यभिहतो वक्रमापद्य मारुतः

वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः ।
स्वरतः कालतः स्थानात् प्रयत्नार्थप्रदानतः ॥ ८ ॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलश्च दन्ताश्च नासिकौष्ठौ च तालु च ॥ ६ ॥

स्वभावश्च विवृत्तिश्च शषसा रेफ एव च । जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ पद्यो भावप्रसन्धानमुकारादि परम्पदम् । स्वरान्तं तादृशं विद्याद् यदन्यद् व्यक्तमूष्मणः (कु) ऊतीर्थादागतं दग्धमपवर्णञ्च भक्षितम् । एवमुच्चारणं पापमेवमुच्चारणं शुभम्॥ अतीर्थादागतं द्रव्यं साम्नायं सुव्यवस्थितम् । सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्मराजनि॥ न करालो न लम्बोष्ठो नाव्यक्तो नानुनासिकः । गद्गदो बद्धजिह्वश्च न वर्णान् वक्तुमर्हति एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीड़िताः । सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः । ह्रस्वो दीर्घः प्लुत इति कालतो नियमावधि

कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजा वुपु ।
स्युमूर्द्धन्या ऋटुरषाः दन्त्याः लृओलसाः स्मृताः॥ १७ ॥
जिह्वामूले तु ह्वः प्रोक्तो दन्त्योष्ठो वः स्मृतो बुधैः ।
एदैतौ कण्ठतालव्यौ ओ औ कण्ठ्यौष्ठजौ स्मृतौ ॥ १८ ॥

अर्द्धमात्रा तु कण्ठस्य एकारैकारयोर्भवेत् । अयोगवाहा विज्ञेया आश्रयस्थानभागिनः

अचोऽस्पृष्टा यणस्त्वीषन्नेमाः स्पृष्टा हलः स्मृताः ।
शेषाः स्पृष्टा हलः प्रोक्ता निबोधात्र प्रधानतः ॥ २० ॥
अमोऽनुनासिकानक्रौ (ह्नौ) नादिमौ हसषः स्मृताः ।

ईषन्नादोपणयशः श्वासिनश्च थकादयः । ईषच्छ्वासं स्वरं विद्याद् दीर्घमेतत् प्रचक्षते ॥

इत्यादिमहापुराणे आग्नेये शिक्षानिरूपणकथनं नाम षट्त्रिंशदधिकत्रिशततमोऽध्यायः ।

---

# सप्तत्रिंशदधिकत्रिशततमोऽध्यायः

## काव्यादिलक्षणम् ।

अग्निरुवाच ।

काव्यस्य नाटकादेश्च अलङ्कारान् वदाम्यथ ।
ध्वनिर्वर्णाः पदं वाक्यमित्येतद् वाङ्मयं मतम् ॥ १ ॥

शास्त्रेतिहासवाक्यानां त्रयं यत्र समाप्यते । शास्त्रे शब्दप्रधानत्वमितिहासेषु निष्ठता

अभिधायाः प्रधानत्वात् काव्यं ताभ्यां विभिद्यते ।
नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ॥ ३ ॥

कवित्वं दुर्लभं तत्र शक्तिस्तत्र च दुर्लभा । व्युत्पत्तिर्दुर्लभा तत्र विवेकस्तत्र दुर्लभः

सर्वं शास्त्रमविद्वद्भिर्मृग्यमाणं न सिध्यति ।
आदिवर्णा द्वितीयाश्च महाप्राणास्तुरीयकः ॥ ५ ॥

वर्गेषु वर्णवृन्दं स्यात् पदं सुप्तिङ्प्रभेदतः ।
सङ्क्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली ॥ ६ ॥

काव्यं स्फुटदलङ्कारं गुणवद् दोषवर्जितम् । योनिर्वेदश्च लोकश्च सिद्धमन्त्रादयोनिजम्

देवादीनां संस्कृतं स्यात् प्राकृतं त्रिविधं नृणाम् ।
गद्यं पद्यञ्च मिश्रञ्च काव्यादि त्रिविधं स्मृतम् ॥ ८ ॥

अपदः पदसन्तानो गद्यं तदपि गद्यते । चूर्णकोत्कलिकागन्धिवृत्तभेदात् त्रिरूपकम् ॥

अल्पाल्पविग्रहं नातिमृदुसन्दर्भनिर्भरम् । चूर्णकं नामतो दीर्घसमासात् कलिका भवेत्

भवेन्मध्यमसन्दर्भं नातिकुत्सितविग्रहम् । वृत्तच्छायाहरं वृत्तं गन्धिनैतत् किलोत्कटम्

आख्यायिका कथा खण्डकथा परिकथा तथा।
कथानिकेति मन्यन्ते गद्यकाव्यञ्च पञ्चधा ॥ १२ ॥
कर्तृवंशप्रशंसा स्याद् यत्र गद्येन विस्तरात्। कन्याहरणसंग्रामविप्रलम्भविपत्तयः ॥
भवन्ति यत्र दीप्ताश्च रीतिवृत्तिप्रवृत्तयः। उच्छ्वासैश्च परिच्छेदो यत्र या चूर्णकोत्तरा
वक्त्रं वाऽपरवक्त्रं वा यत्र साख्यायिका स्मृता।
श्लोकैः स्ववंशं संक्षेपात् कविर्यत्र प्रशंसति ॥ १५ ॥
मुख्यस्यार्थावताराय भवेद् यत्र कथान्तरम्।
परिच्छेदो न यत्र स्याद् भवेद् वालम्भकैः क्वचित् ॥ १६ ॥
सा कथा नाम तद्गर्भे निबध्नीयाच्चतुष्पदीम्।
भवेत् खण्डकथा यासौ यासौ परिकथा तयोः ॥ १७ ॥
अमात्यं सार्थकं वापि द्विजं वा नायकं विदुः।
स्यात् तयोः करुणं विद्धि विप्रलम्भश्चतुर्विधः ॥ १८ ॥
समाप्यते तयोर्नाद्या सा कथामनुधावति।
कथाख्यायिकयोर्मिश्रभावात् परिकथा स्मृता ॥ १९ ॥
भयानकं सुखपरं गर्भे च करुणो रसः। अद्भुतोऽन्ते सुक्लृप्तार्थो नोदात्ता सा कथानिका
पद्यं चतुष्पदी तच्च वृत्तं जातिरिति त्रिधा। वृत्तमक्षरसंख्येयमुक्थं तत् कृतिशेषजम्
मात्राभिर्गणना यत्र सा जातिरिति काश्यपः। सममर्द्धसमं वृत्तं विषमं पैङ्गलं त्रिधा ॥
सा विद्या नौस्तितीर्षूणां गभीरं काव्यसागरम्।
महाकाव्यं कलापश्च पर्य्याबन्धो विशेषकम् ॥ २३ ॥
कुलकं मुक्तकं कोष इति पद्यकुटुम्बकम्। सर्गबन्धो महाकाव्यमारब्धं संस्कृतेन यत् ॥
तादात्म्यमजतत् तत्र तत्समं नाति दुःष्यति। इतिहासकथोद्भूतमितरद् वा सदाश्रयम्
मन्त्रदूतप्रयाणाजिनियतं नातिविस्तरम्। शक्कर्य्यातिजगत्यातिशक्कर्य्या त्रिष्टुभा तथा
पुष्पिताग्रादिभिर्वक्राभिजनैश्चारुभिः समैः।
मुक्ता तु भिन्नवृत्तान्ता नातिसंक्षिप्तसर्गकम् ॥ २७ ॥

अतिशर्करिकाष्टिभ्यामेकसङ्कीर्णकैः परः । मात्रयाप्यपरः सर्गः प्राशस्त्येषु च पश्चिमः
कल्पोऽतिनिन्दितस्तस्मिन् विशेषानादरः सताम् । नगरार्णवशैलर्तुचन्द्रार्काश्रमपादपैः
उद्यानसलिलक्रीड़ामधुपानरतोत्सवैः । दूतीवचनविन्यासैरसतीचरिताद्भुतैः ॥ ३० ॥
तमसा मरुताप्यन्यैर्विभावैरतिनिर्भरैः । सर्ववृत्तिप्रवृत्तञ्च सर्वभावप्रभावितम् ॥ ३१ ॥
सर्वरीतिरसैः पुष्टं पुष्टं गुणविभूषणैः । अत एव महाकाव्यं तत् कर्त्ता च महाकविः ॥

वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ।
पृथक्प्रयत्ननिर्वर्त्यं वाग्वक्त्रिम्णि रसाद् वपुः ॥ ३३ ॥
चतुर्वर्गफलं विश्वग्व्याख्यातं नायकाख्यया ।
समानवृत्ति निर्व्यूढः कौशिकीवृत्तिकोमलः ॥ ३४ ॥

कलापोऽत्र प्रवासः प्रागनुरागाह्वयो रसः । सविशेषकञ्च प्राप्त्यादि संस्कृतेनेतरेण च

श्लोकैरनेकैः कुलकं स्यात् सन्दानितकानि तत् ।
मुक्तकं श्लोक एकैकश्चमत्कारक्षमः सताम् ॥ ३६ ॥
सूक्तिभिः कविसिंहानां सुन्दरीभिः समन्वितः ।
कोषो ब्रह्मापरिच्छिन्नः स विदग्धाय रोचते ॥ ३७ ॥

आभासोपमशक्तिश्च सर्गे यद्भिन्नवृत्तता । मिश्रं वपुरिति ख्यातं प्रकीर्णमिति च द्विधा

श्रव्यश्चैवाभिनेयश्च प्रकीर्णं सकलोक्तिभिः ॥ ३८ ॥

इत्यादिमहापुराणे आग्नेये काव्यादिलक्षणकथनंनामसप्तत्रिंशदधिकत्रिशततमोऽध्यायः।

---

# अष्टत्रिंशदधिकत्रिशततमोऽध्यायः

## नाटकनिरूपणम् ।

अग्निरुवाच ।

नाटकं सप्रकरणं डिम ईहामृगोऽपि वा । ज्ञेयः समवकारश्च भवेत् प्रहसनं तथा ॥१॥

व्यायोगभाणवीथ्यङ्कत्रोटकान्यथ नाटिका ।
सट्टकं शिल्पकः कर्णा एको दुर्मल्लिका तथा ॥ २ ॥
प्रस्थानं भाणिका भाणी गोष्ठी हल्लीशकानि च ।
काव्यं श्रीगदितं नाट्यरासकं रासकं तथा ॥ ३ ॥

उल्लाप्यकं प्रेङ्क्षणञ्च सप्तविंशतिरेव तत् । सामान्यञ्च विशेषञ्च लक्षणस्य द्वयी गतिः सामान्यं सर्वविषयं शेषः कापि प्रवर्त्तते । पूर्वरङ्गे निवृत्ते द्वौ देशकालावुभावपि ॥ रसभावविभावानुभावा अभिनयास्तथा । अङ्कः स्थितिश्च सामान्यं सर्वत्रैवोपसर्पणात्

विशेषोऽवसरे वाच्यः सामान्यं पूर्वमुच्यते ।
त्रिवर्गसाधनं नाट्यमित्याहुः करणञ्च यत् ॥ ७ ॥

इतिकर्त्तव्यता तस्य पूर्वरङ्गो यथाविधि । नान्दीमुखानि द्वात्रिंशदङ्गानि पूर्वरङ्गके ॥८॥ देवतानां नमस्कारो गुरूणामपि च स्तुतिः । गोब्राह्मणनृपादीनामाशीर्वादादि गीयते नान्द्यन्ते सूत्रधारोऽसौ रूपकेषु निबध्यते । गुरुपूर्वक्रमं वंशप्रशंसा पौरुषं कवेः॥१०॥

सम्बन्धार्थौ च काव्यस्य पञ्चैतानेष निर्दिशेत् ।
नटो विदूषको वापि पारिपार्श्विक एव वा ॥ ११ ॥
सहिताः सूत्रधारेण संलापं यत्र कुर्वते ।
चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ॥ १२ ॥
आमुखं तत् तु विज्ञेयं बुधैः प्रस्तावनापि सा ।
प्रवृत्तकं कथोद्घातः प्रयोगातिशयस्तथा ॥ १३ ॥

आमुखस्य त्रयो भेदा वीजांशेषूपजायते । कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत् तदाश्रयश्च पात्रस्य प्रवेशस्तत् प्रवृत्तकम् । सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा

गृहीत्वा प्रविशेत् पात्रं कथोद्घातः स उच्यते ।
प्रयोगेषु प्रयोगन्तु सूत्रधृग् यत्र वर्णयेत् ॥ १६ ॥

ततश्च प्रविशेत् पात्रं प्रयोगातिशयो हि सः । शरीरं नाटकादीनामितिवृत्तं प्रचक्षते ॥ सिद्धमुत्प्रेक्षितञ्चेति तस्य भेदावुभौ स्मृतौ । सिद्धमागमदृष्टञ्च सृष्टमुत्प्रेक्षितं कवेः ॥

वीजं विन्दुः पताका च प्रकरी कार्य्यमेव च
अर्थप्रकृतयः पञ्च पञ्च चेष्टा अपि क्रमात् ॥ १६ ॥

प्रारम्भश्च प्रयत्नश्च प्राप्तिः सद्भाव एव च। नियता च फलप्राप्तिः फलयोगश्च पञ्चमः
मुखं प्रतिमुखं गर्भो विमर्षश्च तथैव च। तथा निर्वहणश्चेति क्रमात् पञ्चैव सन्धयः॥
अल्पमात्रं समुद्दिष्टं वहुधा यत् प्रसर्पति। फलावसानं यच्चैव वीजं तदभिधीयते॥
यत्र वीजसमुत्पत्तिर्नानार्थरससम्भवा। काव्ये शरीरानुगतं तन्मुखं परिकीर्त्तितम्॥
इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः। रागप्राप्तिः प्रयोगस्य गुह्यानाञ्चैव गूहनम्
आश्चर्य्यवदभिख्यातं प्रकाशानां प्रकाशनम्। अङ्गहीनं नरो यद्वन्न श्रेष्ठं काव्यमेव च॥
देशकालौ विना किञ्चिन्नेतिवृत्त प्रवर्त्तते। अतस्तयोरुपादाननियमात् पदमुच्यते॥
देशेषु भारतं वर्षं काले कृतयुगत्रयम्। नर्त्ते ताभ्यां प्राणभृतां सुखदुःखोदयः क्वचित्।
सर्गे सर्गादिवार्त्ता च प्रसज्जन्ती न दुष्यति ॥ २७ ॥

इत्यादिमहापुराणे आग्नेये नाटकनिरूपणकथनं नामाष्टत्रिंशदधिकत्रिशततमोऽध्यायः।

---

# उनचत्वारिंशदधिकत्रिशततमोऽध्यायः

## शृङ्गारादिरसनिरूपणम्।

अग्निरुवाच।

अक्षरं परमं ब्रह्म सनातनमजं विभुम्। वेदान्तेषु वदन्त्येकं चैतन्यं ज्योतिरीश्वरम्॥
आनन्दः सहजस्तस्य व्यज्यते स कदाचन। व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया
आद्यस्तस्य विकारो यः सोऽहङ्कार इति स्मृतः।
ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयम् ॥ ३ ॥
अभिमानाद्रतिः सा च परिपोषमुपेयुषी।
व्यभिचार्य्यादिसामान्यात् शृङ्गार इति गीयते ॥ ४ ॥

तद्भेदाः काममितरे हास्याद्या अप्यनेकशः। स्वस्वस्थादिविशेषोत्थपरिघोषस्वलक्षणाः
सत्त्वादिगुणसन्तानाज्जायन्तेपरमात्मनः। रागाद्भवति श्रृङ्गारो रौद्रस्तैक्ष्ण्यात्प्रजायते

वीरोऽवष्टम्भजः सङ्कोचभूर्वीभत्स इष्यते।
श्रृङ्गाराज्जायते हासो रौद्रात् तु करुणो रसः ॥ ७ ॥
वीराच्चोद्भुतनिष्पत्तिः स्याद् वीभत्साद् भयानकः।
श्रृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ॥ ८ ॥
वीभत्साद्भुतशान्ताख्याः स्वभावाच्चतुरो रसाः।
लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा ॥ ६ ॥

अपारे काव्यसंसारे कविरेव प्रजापतिः। यथा वै रोचते विश्वं तथेदं परिवर्त्तते ॥१०॥

श्रृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत्।
स चेत् कविर्वीतरागो नीरसं व्यक्तमेव तत् ॥ ११ ॥
न भावहीनोऽस्ति रसो न भावो रसवर्जितः।
भावयन्ति रसानेभिर्भाव्यन्ते च रसा इति ॥ १२ ॥
स्थायिनोऽष्टौ रतिमुखाः स्तम्भाद्या व्यभिचारिणः।
मनोऽनुकूलेऽनुभवः सुखस्य रतिरिष्यते ॥ १३ ॥

हर्षादिभिश्च मनसो विकाशो हास उच्यते। चित्रादिदर्शनाच्चेतोवैक्लव्यं ब्रुवते भयम्

जुगुप्सा च पदार्थानां निन्दा दौर्भाग्यवाहिनाम्।
विस्मयोऽतिशयेनार्थदर्शनाच्चित्तविस्तृतिः ॥ १५ ॥

अष्टौ स्तम्भादयः सत्त्वाद्रजसस्तमसः परम्। स्तम्भश्चेष्टाप्रतीघातो भयरागाद्युपाहितः
श्रमरागाद्युपेतान्तःक्षोभजन्मवपुर्जलम्। स्वेदो हर्षादिभिर्देहोच्छ्वासोऽन्तःपुलकोद्गमः*
हर्षादिजन्मवाक्सङ्गःस्वरभेदोभयादिभिः। मनोवैक्लव्यमिच्छन्ति साकमिष्टक्षयादिभिः*
क्रोधस्तैक्ष्णप्रबोधश्चप्रतिकूलानुकारिणि। पुरुषार्थसमाप्त्यार्थो यः स उत्साहउच्यते*
चित्तक्षोभभवोत्तम्भो वेपथुः परिकीर्त्तितः। वैवर्ण्यञ्च विषादादिजन्माकान्तिविपर्य्ययः

* एतत्पाठः बङ्गाक्षरमुद्रितपुस्तके नैवोपलभ्यते

दुःखानन्दादिजं नेत्रजलमश्रु च विश्रुतम्। इन्द्रियाणामस्तमयः प्रलयो लङ्घनादिभिः॥

वैराग्यादिर्मनः खेदो निर्वेद इति कथ्यते।

मनः पीड़ादिजन्मा च सादो ग्लानिः शरीरगा॥ २२॥

शङ्कानिष्टागमोत्प्रेक्षा स्यादसूया च मत्सरः। मदिराद्युपयोगोत्थं मनःसंमोहनं मदः

क्रियातिशयजन्मान्तःशरीरोत्थक्लमः श्रमः। शृङ्गारादिक्रियाद्वेषश्चित्तस्यालस्यमुच्यते

दैन्यं सत्त्वादपभ्रंशश्चिन्तार्थपरिभावनम्। इतिकर्त्तव्यतोपायादर्शनं मोह उच्यते॥

स्मृतिः स्यादनुभूतस्य वस्तुनः प्रतिबिम्बनम्। मतिरर्थपरिच्छेदस्तत्त्वज्ञानोपनायितः

व्रीड़ानुरागादिभवः सङ्कोचः कोऽपि चेतसः। भवेच्चपलताऽस्थैर्य्यं हर्षश्चित्तप्रसन्नता

आवेशश्च प्रतीकारः शयो वैधुर्य्यमात्मनः।। कर्त्तव्ये प्रतिभाभ्रंशो जड़तेत्यभिधीयते

इष्टप्राप्तेरुपचितिः सम्पदाभ्युदयो धृतिः। गर्वः परेष्ववज्ञानमात्मन्युत्कर्षभावना॥

भवेद्विषादो दैवादेर्विघातोऽभीष्टवस्तुनि।

औत्सुक्यमीप्सिताप्राप्तेर्वाञ्छया तरला स्थितिः॥ ३०॥

चित्तेन्द्रियाणां स्तैमित्यमपस्मारोऽचला स्थितिः।

युद्धे बाधादिभीस्त्रासो वीप्सा चित्तचमत्कृतिः॥ ३१॥

क्रोधस्याप्रशमोऽमर्षः प्रबोधश्चेतनोदयः। अवहित्थं भवेद् गुप्तिरिङ्गिताकारगोचरा॥

रोषतो गुरुवाग्दण्डपारुष्यं विदुरुग्रताम्। ऊहो वितर्कः स्याद्व्याधिर्मनोवपुरवग्रहः॥

अनिबद्धप्रलापादिरुन्मादो मदनादिभिः। तत्त्वज्ञानादिना चेतः कषायो परमः शमः॥

कविभिर्योजनीया वै भावाः काव्यादिके रसाः।

विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते॥ ३५॥

विभावो नाम स द्वेधालम्बनोद्दीपनात्मकः। रत्यादिभाववर्गोऽयं यमाजीव्योपजायते

आलम्बनविभावोऽसौ नायकादिभवस्तथा।

धीरोदात्तो धीरोद्धतः स्याद्धीरललितस्तथा॥ ३७॥

धीरप्रशान्त इत्येवं चतुर्धा नायकः स्मृतः। अनुकूलो दक्षिणश्च शठो धृष्टः प्रवर्तितः

पीठमर्दो विटश्चैव विदूषक इति त्रयः। शृङ्गारे नर्मसचिवा नायकस्यानुनायकाः॥३९॥

पीठमर्दः सम्बलकः श्रीमांस्तद् वेशजो विटः। विदूषको वै हसिकस्त्वष्टनायकनामिकाः
स्वकीया परकीया च पुनर्भूरिति कौशिकः। सामान्या न पुनर्भूरिरित्याद्या बहुभेदतः
उद्दीपनविभावास्ते संस्कारैर्विविधैः स्थितैः। आलम्बनविभावेषु भावानुद्दीपयन्ति ये

चतुः षष्टिकला द्वेधा कर्माद्यैर्गीतकादिभिः।
कुहकं स्मृतिरप्येषां प्रायो हासोपहासकः॥ ४३॥

आलम्बनविभावस्य भावैरुद्बुद्धसंस्कृतैः। मनोवाग्बुद्धिवपुषां स्मृतीच्छाद्वेषयत्नतः॥
आरम्भ एव विदुषामनुभाव इति स्मृतः। स चानुभूतये चात्र भवत्युत निरुच्यते॥
मनोव्यापारभूयिष्ठो मन आरम्भ उच्यते। द्विविधः पौरुषस्त्रैण ईदृशोऽपि प्रसिध्यति

शोभा विलासो माधुर्य्यं स्थैर्य्यं गाम्भीर्य्यमेव च।
ललितश्च तथौदार्य्यं तेजोऽष्टाविति पौरुषाः॥ ४७॥
नीचनिन्दोत्तमस्पर्द्धा शौर्य्यं दाक्षादिकारणम्।
मनोधर्मे भवेच्छोभा शोभते भवनं यया॥ ४८॥
भावो हावश्च हेला च शोभा कान्तिस्तथैव च।
दीप्तिर्माधुर्य्यशौर्य्ये च प्रागल्भ्यं स्यादुदारता॥ ४६॥
स्थैर्य्यं गम्भीरता स्त्रीणां विभावा द्वादशेरिताः।
भावो विलासो हावः स्याद् भावः किञ्चिच्च हर्षजः॥ ५०॥

वाचोयुक्तिर्भवेद् वागारम्भो द्वादश एव सः। तत्राभाषणमालापः प्रलापो वचनं बहुः
विलापो दुःखवचनमनुलापोऽसकृद्वचः। संलाप उक्तप्रत्युक्तमपलापोऽन्यथा वचः॥
वार्त्ताप्रयाणं सन्देशो निर्देशः प्रतिपादनम्। तत्त्वदेशोऽतिदेशोऽयमपदेशोऽन्यवर्णनम्

उपदेशश्च शिक्षावाक् व्याजोक्तिर्व्यपदेशकः।

बोधाय एष व्यापारः सुबुध्यारम्भ इष्यते। तस्य भेदास्त्रयस्ते च रीतिवृत्तिप्रवृत्तयः॥

इत्यादिमहापुराणेआग्नेयेशृङ्गारादिरसनिरूपणकथनं नामोन-
चत्वारिंशदधिकत्रिशततमोऽध्यायः।

---

# चत्वारिंशदधिकत्रिशततमोऽध्यायः

## रीतिनिरूपणम् ।

अग्निरुवाच ।

वाग्विद्यासम्प्रतिज्ञाने रीतिः सापि चतुर्विधा ।
पाञ्चाली गौड़देशीया वैदर्भी लाटजा तथा ॥ १ ॥
उपचारयुता मृद्वी पाञ्चाली ह्रस्वविग्रहा । अनवस्थितसन्दर्भा गौड़ीया दीर्घविग्रहा ॥
उपचारैर्न बहुभिरुपचारैर्विवर्जिता । नातिकोमलसन्दर्भा वैदर्भी मुक्तविग्रहा ॥ ३ ॥
लाटीया स्फुटसन्दर्भा नातिविस्फुरविग्रहा । परित्यक्ताऽपि भूयोभिरुपचारैरुदाहृता ॥
क्रियास्वविषमा वृत्तिर्भारत्यारभटी तथा ।
कौशिकी सात्वती चेति सा चतुर्धा प्रतिष्ठिता ॥ ५ ॥
वाक्प्रधाना 'नरप्राया स्त्रीयुक्ता प्राकृतोक्तिता । भरतेन प्रणीतत्वाद् भारतीरीतिरुच्यते
चत्वार्य्यङ्गानि भारत्या वीथी प्रहसनं तथा । प्रस्तावना नाटकादेर्वीथ्यङ्गाश्च त्रयोदश
उद्घातकं तथैव स्याल्लपितं स्याद् द्वितीयकम् ।
असत्प्रलापो वाक्श्रेणी नालिका चिपणं तथा ॥ ८ ॥
व्याहारस्त्रिमतश्चैव छलावस्कन्दिते तथा । गण्डोऽथ मृदवश्चैव त्रयोदशमथाचितम् ॥
नापसादेः प्रहसनं परिहासपरं वचः । मायेन्द्रजालयुद्धादिबहुलारभटी स्मृता ॥
सङ्क्षिप्तकावपातौ च वस्तूत्थापनमेव च ॥ १० ॥

इत्यादिमहापुराणे आग्नेये रीतिनिरूपणं नाम
चत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---

* बङ्गाक्षर मुद्रिते प्रहसनामुखे

## एकचत्वारिंशदधिकत्रिशततमोऽध्यायः

### नृत्यादिरङ्गकर्मनिरूपणम् ।

अग्निरुवाच ।

चेष्टाविशेषमप्यङ्गप्रत्यङ्गे कर्म चानयोः । शरीरारम्भमिच्छन्ति प्रायः पूर्वोऽवलाश्रयः ॥

लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं विव्वोको ललितन्तथा ॥ २ ॥

विकृतं क्रीड़ितं केलिरिति द्वादशधैव सः । लीलेष्टजनचेष्टानुकरणं संवृतक्षये ॥ ३ ॥

विशेषान् दर्शयन् किञ्चिद् विलासः सद्भिरिष्यते ।
हसितक्रन्दितादीनां सङ्करः किलकिञ्चितम् ॥ ४ ॥
विकारः कोऽपि विव्वोको ललितं सौकुमार्य्यतः ।
शिरः पाणिरुरः पार्श्वं कटिरङ्घ्रिरिति क्रमात् ॥ ५ ॥

अङ्गानि भ्रूलतादीनि प्रत्यङ्गान्यभिजानते । अङ्गप्रत्यङ्गयोः कर्म प्रयत्नजनितं विना ॥
न प्रयोगः क्वचिन्मुख्यन्तिरश्चीनञ्च तत् क्वचित् । आकम्पितं कम्पितञ्च धूतं विधूतमेव च
परिवाहितमाधूतमवधूतमथाचितम् । निकुञ्चितं परावृत्तमुत्क्षिप्तञ्चाप्यधोगतम् ॥ ८ ॥
ललितञ्चेति विज्ञेयं त्रयोदशविधं शिरः । भ्रूकर्म सप्तधा ज्ञेयं पातनं भ्रूकुटीमुखम् ॥
दृष्टिस्त्रिधा रसस्थायिसंञ्चारिप्रतिवन्धना । षट्त्रिंशद्भेदविधुरा रसजा तत्र चाष्टधा

नवधा तारकाकर्म भ्रमणञ्चलनादिकम् ।
षोढ़ा च नासिका ज्ञेया निश्वासो नवधा मतः ॥ ११ ॥

षोढ़ौष्ठकर्मकं पापं सप्तधा चिवुकक्रिया । कलुषादिमुखं षोढ़ो ग्रीवा नवविधा स्मृता
असंयुतः संयुतश्च भूम्ना हस्तः प्रमुच्यते । पताकस्त्रिपताकश्च तथा वै कर्त्तरीमुखः ॥
अर्द्धचन्द्रोत्करालश्च शुकतुण्डस्तथैव च । मुष्टिश्च शिखरश्चैव कपित्थः खेटकामुखः ॥

सूच्यास्यः पद्मकोषो हि शिराः समृगशीर्षकाः ।

कं–मूलकालपद्मौ च चतुरस्रभ्रमरौ तथा ॥ १५ ॥
हंसास्यहंसपक्षौ च सन्दंशमुकुलौ तथा । ऊर्णनाभस्ताम्रचूडश्चतुर्विंशतिरित्यमी ॥
असंयुतकराः प्रोक्ताः संयुतास्तु त्रयोदश । अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा
कटको वर्धमानश्चाप्यसङ्गो निषधस्तथा । दोलः पुष्पपुटश्चैव तथा मकर एव च॥१८॥
गजदन्तो बहिस्तम्भो वर्धमानोऽपरे कराः ।
उरः पञ्चविधं स्यात् तु आभुग्ननर्त्तनादिकम् ॥ १९ ॥
उदरं दुरतिक्षामं खण्डं पूर्णमिति त्रिधा । पार्श्वयोः पञ्चकर्माणि जङ्घाकर्म च पञ्चधा
अनेकधा पादकर्म नृत्यादौ नाटके स्मृतम् ॥ २० ॥

इत्यादिमहापुराणेआग्नेयेनृत्यादिरङ्गकर्मनिरूपणंनाम
एकचत्वारिंशदधिकत्रिशततमोऽध्यायः

---

# द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः

## अभिनयादिनिरूपणम् ।

अग्निरुवाच ।

आभिमुख्यं नयन्नर्थान् विज्ञेयोऽभिनयो बुधैः । चतुर्धा सम्भवः सत्त्ववागङ्गाहरणाश्रयः
स्तम्भादिः सात्त्विको वागारम्भो वाचिक आङ्गिकः ।
शरीरारम्भ आहार्य्यो बुद्ध्यारम्भप्रवृत्तयः ॥ २ ॥
रसादिविनियोगोऽथ कथ्यते ह्यभिमानतः । तमन्तरेण सर्वेषामपार्थैव स्वतन्त्रता ॥
सम्भोगो विप्रलम्भश्च शृङ्गारो द्विविधः स्मृतः ।
प्रच्छन्नश्च प्रकाशश्च तावपि द्विविधौ पुनः ॥ ४ ॥
विप्रलम्भाभिधानो यः शृङ्गारः स चतुर्विधः । पूर्वानुरागमानाख्यः प्रवासकरुणात्मकः
एतेभ्योऽन्यतरं जायमानसम्भोगलक्षणम् । विवर्त्तते चतुर्धैव न च प्रागतिवर्त्तते ॥

स्त्रीपुंसयोस्तदुदयस्तस्य निर्वर्त्तिका रतिः ।
निखिलाः सात्त्विकास्तत्र वैवर्ण्यप्रलयौ विना ॥ ७ ॥
धर्मार्थकाममोक्षैश्च शृङ्गार उपचीयते । आलम्बनविशेषैश्च तद्विशेषैर्निरन्तरः ॥ ८ ॥
शृङ्गारं द्विविधं विद्याद् वाङ्नेपथ्यक्रियात्मकम् ।
हासश्चतुर्विधोऽलक्ष्यदन्तः स्मित इतीरितः ॥ ६ ॥
किञ्चिल्लक्षितदन्ताग्रं हसितं फुल्ललोचनम् । विहसितं सस्वनं स्याज्जिह्मोपहसितन्तुतत्
सशब्दं पापहसितमशब्दमतिहासितम् । यश्चासौ करुणो नाम स रसस्त्रिविधो भवेत्
धर्मोपघातजश्चित्तविलासजनितस्तथा ।
शोकः शोकाद् भवेत् स्थायी कः स्थायी पूर्वजो मतः ॥ १२ ॥
अङ्गनेपथ्यवाक्यैश्च रौद्रोऽपि त्रिविधो रसः ।
तस्य निर्वर्त्तकः क्रोधः स्वेदो रोमाञ्चवेपथू ॥ १३ ॥
दानवीरो धर्मवीरो युद्धवीर इति त्रयम् । वीरस्तस्य च निष्पत्तिहेतुरुत्साह इष्यते ॥
आरम्भेषु भवेद् यत्र वीरमेवानुवर्त्तते । भयानको नाम रसस्तस्य निर्वर्त्तकं भयम् ॥
उद्वेजनः क्षोभणश्च वीभत्सो द्विविधः स्मृतः ।
उद्वेजनः स्यात् प्लुत्याद्यैः क्षोभणो रुधिरादिभिः ॥ १६ ॥
जुगुप्सारम्भिका तस्य सात्त्विकांशो निवर्त्तते ।
काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ॥ १७ ॥
अलङ्करिष्णवस्ते च शब्दमर्थमुभौ त्रिधा । ये व्युत्पत्यादिना शब्दमलङ्कर्त्तुमिह क्षमाः
शब्दालङ्कारमाहुस्तान् काव्यमीमांसकाविदः ।
छाया मुद्रा तथोक्तिश्च युक्तिर्गुम्फनया सह ॥ १८ ॥
वाकोवाक्यमनुप्रासश्चित्तं दुष्करमेव च । ज्ञेया नवालङ्कृतयः शब्दानामित्यसङ्करात्
तत्रान्योक्तेरनुकृतिश्छाया सापि चतुर्विधा । लोकच्छेकार्भकोक्तीनामेकोक्तेरनुकारतः
आभाणकोक्तिर्लोकोक्तिः सर्वसामान्य एव ताः ।
यानुधावति लोकोक्तिश्छायामिच्छन्ति तां बुधाः ॥ २२ ॥

छेका विदग्धा वैदग्ध्यं कलासु कुशला मतिः।
तामुल्लिखन्तौ छेकोक्तिश्छाया कविभिरिष्यते ॥ २३ ॥
अव्युत्पन्नोक्तिरखिलैरर्भकोक्त्योपलक्ष्यते। तेनार्भकोक्तिश्छाया तन्मात्रोक्तिमनुकुर्वती
विप्लुताक्षरमश्लीषं वचो मत्तस्य तादृशी।
या सा भवति मत्तोक्तिश्छायोक्ताप्यतिशोभते ॥ २५ ॥
अभिप्रायविशेषेण कविशक्तिं विवृण्वती।
मुत्प्रदायिनीति सा मुद्रा सैव शय्यापि नो मते ॥ २६ ॥
उक्तिः सा कथ्यते यस्यामर्थकोऽप्युपपत्तिमान्।
लोकयात्रार्थविधिना धिनोति हृदयं सताम् ॥ २७ ॥
उभौ विधिनिषेधौ च नियमानियमावपि। विकल्पपरिसङ्ख्ये च तदीयाः षड्थोक्तयः
अयुक्तयोरिव मिथो वाच्यवाचकयोर्द्वयोः।
योजनायै कल्प्यमाना युक्तिरुक्ता मनीषिभिः ॥ २९ ॥
पदञ्चैव पदार्थश्च वाक्यं वाक्यार्थमेव च। विषयोऽस्याः प्रकरणं प्रपञ्चश्चेति षड्विधः
गुम्फना रचनाचर्य्या शब्दार्थक्रमगोचरा। शब्दानुकारादर्थानुपूर्वाश्चेयं क्रमात् त्रिधा॥
उक्तिप्रत्युक्तिमद् वाक्यं वाकोवाक्यं द्विधैव तत्। ऋजुवक्रोक्तिभेदेन तत्राद्यं सहजं वचः
सा पूर्वप्रश्निका प्रश्नपूर्विकेति द्विधा भवेत्।
वक्रोक्तिस्तु भवेद् भङ्ग्या काकुस्तेन कृता द्विधा ॥ ३३ ॥
इत्यादिमहापुराणेआग्नेयेऽलङ्कारेऽभिनयादिकथनंनाम
द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः।

———

# त्रिचत्वारिंशदधिकत्रिशततमोऽध्यायः

## शब्दालङ्काराः ।

अग्निरुवाच ।

स्यादावृत्तिरनुप्रासो वर्णानां पदवाक्ययोः । एकवर्णाऽनेकवर्णावृत्तेर्वर्णगुणो द्विधा
एकवर्णगतावृत्तेर्जायन्ते पञ्च वृत्तयः । मधुरा ललिता प्रौढ़ा भद्रा परुषया सह ॥ २ ॥
मधुरायाश्च वर्गान्तादधो वर्ग्या रणौ स्वनौ । ह्रस्वस्वरेणान्तरितौ संयुक्तत्वं नकारयोः
न कार्य्या वर्ग्यवर्णानामावृत्तिः पञ्चमाधिका । महाप्राणोष्मसंयोगप्रविमुक्तलघूत्तरौ ॥
ललिता वलभूयिष्ठा प्रौढ़ा या पणवर्गजा । ऊर्ध्वं रेफेण युज्यन्ते नटवर्गोनपञ्चमाः ॥

भद्रायां परिशिष्टाः स्युः परुषा साऽभिधीयते ।
भवन्ति यस्यामूष्माणः संयुक्तास्तत्तदक्षरैः ॥ ६ ॥

अकारवर्जमावृत्तिः स्वराणामतिभूयसी । अनुस्वारविसर्गौ च पारुष्याय निरन्तरौ ॥
शषसा रेफसंयुक्ताश्चाकारश्चापि भूयसा । अन्तस्थाभिन्नमाभ्याञ्च हः पारुष्याय संयुतः
अन्यथाऽपि गुरुर्वर्णः संयुक्ते परिपन्थिनि । पारुष्यायादिमांस्तत्र पूजिता न तु पञ्चमी

क्षेपे शब्दानुकारे च परुषापि प्रयुज्यते ।
कर्णाटी कौन्तली कौन्ती कोङ्कणी वामनासिका ॥ १० ॥
द्रावणी माधवी पञ्चवर्णान्तस्थोष्मभिः क्रमात् ।
अनेकवर्णावृत्तिर्या भिन्नार्थप्रतिपादिका ॥ ११ ॥

यमकं साव्यपेतञ्च व्यपेतञ्चेति तद् द्विधा । आनन्तर्य्यादव्यपेतं व्यपेतं तं व्यवधानतः
द्वैविध्ये नानयोःस्थानपादभेदाच्चतुर्विधम् । आदिपादादिमध्यान्तेष्वेकद्वित्रिनियोगतः
सप्तधा सप्तपूर्वेण चेत् पादेनोत्तरोत्तरः । एकद्वित्रिपदारम्भस्तुल्यः षोढा तदापरम् ॥
तृतीयं त्रिविधं पादस्यादिमध्यान्तगोचरम् । पादान्तयमकञ्चैव काञ्चीयमकमेव च ॥
संसर्गयमकञ्चैव विक्रान्तयमकं तथा । पादादियमकञ्चैव तथाम्रेडितमेव च ॥ १६ ॥

चतुर्व्यवसितश्चैव मालायमकमेव च । दशधा यमकं श्रेष्ठं तद्भेदा बहवोऽपरे ॥ १७ ॥
स्वतन्त्रस्यान्यतन्त्रस्य पदस्यावर्त्तना द्विधा । भिन्नप्रयोजनपदस्यावृत्तिं मनुजा विदुः

द्वयोरावृत्तपदयोः समस्ता स्यात् समासतः ।
असमासात् तयोर्व्यस्ता पादे त्वेकत्र विग्रहात् ॥ १६ ॥

वाक्यस्यावृत्तिरप्येव यथासम्भवमिष्यते । अलङ्काराद्यनुप्रासो लघुमध्ये वमर्हणात् ॥
यया कयाचिद् वृत्त्या यत् समानमनुभूयते । तद्रूपादिपदासत्तिः सानुप्रासा रसावहा

गोष्ठ्यां कुतूहलाध्यायी वाग्बन्धश्चित्रमुच्यते ।
प्रश्नः प्रहेलिका गुप्तं च्युतदत्ते तथोभयम् ॥ २२ ॥

समस्या सप्त तद्भेदा नानार्थस्यानुयोगतः । यत्र प्रदीयते तुल्यवर्णविन्यासमुत्तरम् ॥
स प्रश्नः स्यादेकपृष्ठद्विपृष्ठोत्तरभेदतः । द्विधैकपृष्टो द्विविधः समस्तो व्यस्त एव च ॥

द्वयोरप्यर्थयोर्गुह्यमानशब्दा प्रहेलिका ।
सा द्विधार्थी च शाब्दी च तत्रार्थी चार्थबोधतः ॥ २५ ॥
शब्दाववोधतः शाब्दी प्राहुः षोढा प्रहेलिकाम् ।
यस्मिन् गुप्तेऽपि वाक्याङ्गे भाव्यर्थोऽपारमार्थिकः ॥ २६ ॥

तदङ्गविहिताकाङ्क्षस्तद्गुप्तं गूढमप्यदः । यत्रार्थान्तरनिर्भासोवाक्याङ्गच्यवनादिभिः

तदङ्गविहिताकाङ्क्षस्तच्च्युतं स्याच्चतुर्विधम् ।
स्वरव्यञ्जनविन्दूनां विसर्गस्य च विच्युतेः ॥ २८ ॥
दत्तेऽपि यत्र वाक्याङ्गे द्वितीयोऽर्थः प्रतीयते ।
दत्तं तदाहुस्तद्भेदाः स्वराद्यैः पूर्ववन्मताः ॥ २६ ॥

अपनीताक्षरस्थाने न्यस्ते वर्णान्तरेऽपि च । भासतेऽर्थान्तरं यत्र च्युतदत्तं तदुच्यते
सुश्लिष्टपद्यमेकं यन्नानाश्लोकांशनिर्मितम् । सा समस्यापरस्यात्मपरयोःकृतिसङ्करात्
दुःखेन कृतमत्यर्थं कविसामर्थ्यसूचकम् । दुष्करं नीरसत्वेऽपि विदग्धानां महोत्सवः

नियमाच्च विदर्भाच्च बन्धाच्च भवति त्रिधा ।
कवेः प्रतिज्ञा निर्माणरम्यस्य नियमः स्मृतः ॥ ३३ ॥

स्थानेनापि स्वरेणापि व्यञ्जनेनापि स त्रिधा।
विकल्पः प्रातिलोम्यानुलोम्यादेवाभिधीयते ॥ ३४ ॥
प्रातिलोम्यानुलोम्यश्च शब्देनार्थेन जायते।
अनेकधावृत्तवर्णविन्यासैः शिल्पकल्पना ॥ ३५ ॥

तत्तत्प्रसिद्धवस्तूनां बन्ध इत्यभिधीयते। गोमूत्रिकार्द्धभ्रमणे सर्वतोभद्रमम्बुजम् ॥
चक्रञ्चकाब्जकं दण्डो मुरजश्चेति चाष्टधा। प्रत्यर्धं प्रतिपादं स्यादेकान्तरसमाक्षरा

द्विधा गोमूत्रिकां पूर्वामाहुरश्वपदां परे।
अन्त्याङ्गोमूत्रिकां धेनुं जालबन्धं वदन्ति हि ॥ ३८ ॥
अर्द्धाभ्यामर्द्धपादैश्च कुर्य्याद् विन्यासमेतयोः।
न्यस्तानामिह वर्णानामधोऽधः क्रमभागिनाम् ॥ ४६ ॥
अधोऽधः स्थितवर्णानां यावत् तुर्य्यपदं नयेत्।
तुर्य्यपादान्नयेदूर्द्ध्वं पादार्द्धं प्रतिलोमतः ॥ ४० ॥

तदेव सर्वतोभद्रं त्रिविधं सरसीरुहम्। चतुष्पत्रं ततो विघ्नं चतुष्पत्रे उभे अपि ॥
अथ प्रथमपादस्य मूर्द्धन्यस्तिपदाक्षरम्। सर्वेषामेव पादानामन्ते तदुपजायते ॥ ४२ ॥

प्राक्पदस्यान्तिमं प्रत्यक् पादादौ प्रातिलोम्यतः।
अन्त्यपादान्तिमञ्चाद्यपादादावक्षरद्वयम् ॥ ४३ ॥

चतुश्छदे भवेदष्टच्छदे वर्णत्रयं पुनः। स्यात् षोड़शच्छदे त्वेकान्तरञ्चेदेकमक्षरम्॥४४॥
कर्णिकां तोलयेदूर्ध्वं पत्राकाराक्षरावलिम्। प्रवेशयेत् कर्णिकायाञ्चतुष्पत्रसरोरुहे ॥

कर्णिकायां लिखेदेकं द्वे द्वे दिक्षु विदिक्षु च
प्रवेशनिर्गमौ दिक्ष कुर्य्यादष्टच्छदेऽम्बुजे ॥ ४६ ॥

विश्वग्विषमवर्णानां तावत् पत्रावलीजुषाम्। मध्ये समाक्षरन्यासः सरोजे षोड़शच्छदे
द्विधा चक्रं चतुररं षड़रं तत्र चादिमम्। पूर्वार्द्धे सदृशा वर्णाः पादप्रथमपञ्चमाः ॥
अयुजोऽश्वयुजश्चैव तुर्य्यावप्यष्टमावपि। तस्योपपादप्राक्प्रत्यगरेषु च यथाक्रमम् ॥

स्यात् पादार्द्धचतुष्कन्तु नाभौ तस्याद्यमक्षरम्।

पश्चिमारावधि नयेन्नेमौ शेषे पदद्वयी ॥ ५० ॥

तृतीयं तुर्य्यपादान्ते प्रथमौ सदृशावुभौ । वर्णौ पादत्रयस्यापि दशमः सदृशो यदि ॥
प्रथमे चरमे तस्य षड्वर्णाः पश्चिमे यदि । भवन्ति द्व्यन्तरं तर्हि बृहच्चक्रमुदाहृतम् ॥
सम्मुखारद्वये पादमेकैकं क्रमशो लिखेत् । नाभौ तु वर्णं दशमं नेमौ तुर्य्यपदं नयेत् ॥

श्लोकस्याद्यन्तदशमाः समा आद्यन्तिमौ युजो : ।
आदौ वर्णः समौ तुर्य्यपञ्चमावाद्यतुर्य्ययोः ॥ ५४ ॥

द्वितीयप्रातिलोम्येन तृतीयं जायते यदि । पदं विदध्यात् पत्रस्य दण्डश्चक्राब्जकं कृतः
द्वितीयौ प्राग्दले तुल्यौ सप्तमौ च तथापरौ । सदृशावुत्तरदलौ द्वितीयाभ्यामथार्द्धयोः
द्वितीयषष्ठाः सदृशाश्चतुर्थपञ्चमावपि । आद्यन्तपादयोस्तुल्यौ परार्द्धसप्तमावपि ॥५७॥

समौ तुर्य्यं पञ्चमन्तु क्रमेण विनियोजयेत् ।
तुर्य्यौ योज्यौ तु तद्वच्च दलान्ताः क्रमपादयोः ॥ ५८ ॥
अर्द्धयोरन्तिमाद्यौ तु मुरजे सदृशावुभौ ।
पादार्द्धपतितो वर्णः प्रातिलोम्यानुलोमतः ॥ ५९ ॥
अन्तिमं परिबध्नीयाद् यावत् तुर्य्यमिहादिमत् ।
पादात् तुर्य्याद्यदेवाद्यं नवमात् षोड़शादपि ॥ ६० ॥

अक्षरात् पुटके मध्ये मध्येऽक्षरचतुष्टयम् । कृत्वा कुर्य्याद् तथैतस्य मुरजाकारता भवेत्
द्वितीयं चक्रशार्दूलविक्रीड़ितकसम्पदम् । गोमूत्रिका सर्ववृत्तैरन्ये बन्धास्त्वनुष्टुभा ॥
नामधेयं यदि न चेदमीषु कविकाव्ययोः । मित्रधेयाभितुष्यन्ति नामित्रः खिद्यते तथा
वाणवाणासनव्योमखड्गमुद्गरशक्तयः । द्विचतुर्थत्रिश्रृङ्गाटा दम्भोलिमुषलाङ्कुशाः ॥६४॥

पदं रथस्य नागस्य पुष्करिण्यसिपुत्रिका ।
एते बन्धास्तथा चान्ये एवं ज्ञेयाः स्वयं बुधैः ॥ ६५ ॥

इत्यादिमहापुराणेआग्नेयेशब्दालङ्कारकथनंनामत्रिचत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---

# चतुश्चत्वारिंशदधिकत्रिशततमोऽध्यायः

## अर्थालङ्काराः ।

अग्निरुवाच ।

अलङ्करणमर्थानामर्थालङ्कार इष्यते । तं विना शब्दसौन्दर्य्यमपि नास्ति मनोहरम् ॥
अर्थालङ्काररहिता विधवेव सरस्वती । स्वरूपमथ सादृश्यमुत्प्रेक्षातिशयावपि ॥ २ ॥
विभावना विरोधश्च हेतुश्च सममष्टधा । स्वभाव एव भावानां स्वरूपमभिधीयते ॥
निजमागन्तुकश्चेति द्विविधं तदुदाहृतम् । सांसिद्धिकं निजं नैमित्तिकमागन्तुकं तथा

सादृश्यं धर्मसामान्यमुपमा रूपकं तथा ।
सहोक्त्यर्थान्तरन्यासाविति स्यात् तु चतुर्विधः ॥ ५ ॥
उपमा नाम सा यस्यामुपमानोपमेययोः ।
सत्ता चान्तरसामान्ययोगित्वेऽपि विवक्षितम् ॥ ६ ॥

किञ्चिदादाय सारूप्यं लोकयात्रा प्रवर्त्तते । समासेनासमासेन सा द्विधा प्रतियोगिनः
विग्रहादभिधानस्य ससमासाऽन्यथोत्तरा । उपमाद्योतकपदेनोपमेयपदेन च ॥ ८ ॥

ताभ्याञ्च विग्रहात् त्रधा ससमासान्तिमात् त्रिधा ।
विशिष्यमाणा उपमा भवन्त्यष्टादश स्फुटाः ॥ ९ ॥

यत्र साधारणो धर्मः कथ्यते गम्यतेऽपि वा । ते धर्मवस्तुप्राधान्याद् धर्मवस्तूपमे उभे
तुल्यमेवोपमीयेते यत्रान्योन्येन धर्मिणौ । परस्परोपमा सा स्यात् प्रसिद्धेरन्यथा तयोः
विपरीतोपमा सा स्याद् व्यावृत्तेर्नियमोपमा । अन्यत्राप्यनुवृत्तेस्तु भवेदनियमोपमा

समुच्चयोपमातोऽन्यधर्मबाहुल्यकीर्त्तनात् ।
बहोर्धर्मस्य साम्येऽपि वैलक्षण्यं विवक्षितम् ॥ १३ ॥
यदुच्यतेऽतिरिक्तत्वं व्यतिरेकोपमा तु सा ।
यत्रोपमा स्याद् बहुभिः सदृशैः सा बहूपमा ॥ १४ ॥

धर्माः प्रत्युपमानश्चेदन्ये मालोपमैव सा । उपमानविकारेण तुलना विक्रियोपमा ॥

त्रैलोक्यासम्भवि किमप्यारोप्य प्रतियोगिनि ।

कविनोपमीयते या प्रथते साद्भुतोपमा ॥ १६ ॥

प्रतियोगिनमारोप्य तदभेदेन कीर्त्तनम् । उपमेयस्य सा मोहोपमाऽसौ भ्रान्तिमद्वचः ॥

उभयोर्धर्मिणोस्तथ्यानिश्चयात् संशयोपमा । उपमेयस्य संशय्य निश्चयान्निश्चयोपमा

वाक्यार्थेनैव वाक्यार्थोपमा स्यादुपमानतः ।

आत्मानोपमानादुपमा साधारण्यतिशायिनी ॥ १९ ॥

उपमेयं यदन्यस्य तदन्यस्योपमा मता । यद्युत्तरोत्तरं याति तदाऽसौ गगनोपमा ॥

प्रशंसा चैव निन्दा च कल्पिता सदृशी तथा ।

किञ्चिच्च सदृशी ज्ञेया उपमा पञ्चधा पुनः ॥ २१ ॥

उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते । गुणानां समतां दृष्ट्वा रूपकं नाम तद् विदुः

उपमैव तिरोभूतभेदा रूपकमेव वा । सहोक्तिः सहभावेन कथनं तुल्यधर्मिणाम् ॥२३॥

भवेदर्थान्तरन्यासः सादृश्येनोत्तरेण सः । अन्यथोपस्थिता वृत्तिश्चेतनस्येतरस्य च ॥

अन्यथा मन्यते यत्र तामुत्प्रेक्षां प्रचक्षते । लोकसीमानिवृत्तस्य वस्तुधर्मस्य कीर्त्तनम्

भवेदतिशयो नाम सम्भवासम्भवाद् द्विधा । गुणजातिक्रियादीनां यत्र वैकल्यदर्शनम्

विशेषदर्शनायैव सा विशेषोक्तिरुच्यते ।

प्रसिद्धहेतुव्यावृत्त्या यत् किञ्चित् कारणान्तरम् ॥ २७ ॥

यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ।

सङ्गतीकरणं युक्त्या यदसंगच्छमानयोः ॥ २८ ॥

विरोधपूर्वकत्वेन तद्विरोध इति स्मृतम् । सिसाधयिषितार्थस्य हेतुर्भवति साधकः ॥

कारको ज्ञापक इति द्विधा सोऽप्युपजायते ।

प्रवर्त्तते कारकाख्यः प्राक् पश्चात् कार्य्यजन्मनः ॥ ३० ॥

पूर्वशेष इति ख्यातस्तयोरेव विशेषयोः ।

कार्य्यकारणभावाद् वा स्वभावाद् वा नियामकात् ॥ ३१ ॥

ज्ञापकाख्यस्य भेदोऽस्ति नदीपूरादिदर्शनात् । अविनाभावनियमो ह्यविनाभावदर्शनात्
इत्यादिमहापुराणेआग्नेयेअर्थालङ्कारकथनंनामचतुश्चत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---

# पञ्चचत्वारिंशदधिकत्रिशततमोऽध्यायः

## शब्दार्थालङ्काराः ।

अग्निरुवाच ।

शब्दार्थयोरलङ्कारो द्वावलङ्कुरुते समम् । एकत्र निहितो हारः स्तनं ग्रीवामिव स्त्रियाः॥

प्रशस्तिः कान्तिरौचित्यं संक्षेपो यावदर्थता ।
अभिव्यक्तिरिति व्यक्तं षड् भेदास्तस्य जाग्रति ॥ २ ॥

प्रशस्तिः परवन्मर्मद्रवीकरणकर्मणः । वाचो युक्तिर्द्विधा सा च प्रेमाक्तिस्तुतिभेदतः ॥
प्रेमोक्तिस्तुतिपर्य्यायौ प्रियोक्तिगुणकीर्त्तने। कान्तिः सर्वमनोरुच्यवाच्यवाचकसङ्गतिः
यथा वस्तु तथा रीतिर्यथा वृत्तिस्तथा रसः । ऊर्जस्विमृदुसन्दर्भादौचित्यमुपजायते
संक्षेपो वाचकैरल्पैर्बहोरर्थस्य संग्रहः । अन्यूनाधिकता शब्दवस्तुनोर्यावदर्थता ॥ ६ ॥
प्रकटत्वमभिव्यक्तिः श्रुतिराक्षेप इत्यपि । तस्या भेदौ श्रुतिस्तत्र शब्दं स्वार्थसमर्पणम्

भवेन्नैमित्तिकी पारिभाषिकी द्विविधैव सा ।
सङ्केतः परिभाषेति ततः स्यात् पारिभाषिकी ॥ ८ ॥
मुख्यौपचारिकी चेति सा च सा च द्विधा द्विधा ।
स्वाभिधेयस्खलद्वृत्तिरमुख्यार्थस्य वाचकः ॥ ९ ॥
यया शब्दो निमित्तेन केनचित् सौपचारिकी ।
सा च लाक्षणिकी गौणी लक्षणागुणयोगतः ॥ १० ॥
अभिधेयाविनाभूता प्रतीतिर्लक्षणोच्यते ।
अभिधेयेन सम्बन्धात् सामीप्यात् समवायतः ॥ ११ ॥

वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता ।
गौणीगुणानामानन्त्यादनन्ता तद्विवक्षया ॥ १२ ॥
अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना । सम्यगाधीयते यत्र स समाधिरिह स्मृतः
श्रुतेरलभ्यमानोऽर्थो यस्माद् भाति सचेतनः ।
स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः ॥ १४ ॥
शब्देनार्थेन यत्रार्थः कृत्वा स्वयमुपार्जनम् । प्रतिषेध इवेष्टस्य यो विशेषोऽभिधित्सया
तमाक्षेपं ब्रुवन्त्यत्र स्तुतं स्तोत्रमिदं पुनः ।
अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः ॥ १६ ॥
यत्रोक्तं गम्यते नार्थस्तत्समानविशेषणम् । सा समासोक्तिरुदिता सङ्क्षेपार्थतया बुधैः
अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम् । पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।
एषामेकं तमस्येव समाख्या ध्वनिरित्यतः ॥ १८ ॥
इत्यादिमहापुराणेआग्नेयेशब्दार्थलङ्कारकथनंनामपञ्चचत्वारिंशदधिकत्रिशततमोऽध्यायः

---

## षट्चत्वारिंशदधिकत्रिशततमोऽध्यायः

### काव्यगुणविवेकः ।

अग्निरुवाच ।

अलङ्कृतमपि प्रीत्यै न काव्यं निर्गुणं भवेत् । वपुष्यललिते स्त्रीणां हारो भारायते परम्
न च वाच्यं गुणो दोषो भाव एव भविष्यति ।
गुणाः श्लेषादयो दोषा गूढार्थाद्याःपृथक् कृताः ॥ २ ॥
यः काव्ये महतीं छायामनुगृह्णात्यसौ गुणः ।
सम्भवत्येष सामान्यो वैशेषिक इति द्विधा ॥ ३ ॥
सर्वसाधारणीभूतः सामान्य इतिमन्यते । शब्दमर्थमुभौ प्राप्तः सामान्यो भवति त्रिधा

शब्दमाश्रयते काव्यं शरीरं यः स तद्गुणः ।
श्लेषो लालित्यगाम्भीर्य्यसौकुमार्य्यमुदारता ॥ ५ ॥
सत्येव यौगिकी चेति गुणाः शब्दस्य सप्तधा ।
सुश्लिष्टसन्निवेशत्वं शब्दानां श्लेष उच्यते ॥ ६ ॥

गुणादेशादिना पूर्वं पदसम्बद्धमक्षरम् । यत्र सन्धीयते नैव तल्लालित्यमुदाहृतम् ॥

विशिष्टलक्षणोल्लेखलेख्यमुत्तानशब्दकम् ।
गाम्भीर्य्यं कथयन्त्यार्य्यास्तदेवान्येषु शब्दताम् ॥ ८ ॥

अनिष्ठुराक्षरप्राय शब्दता सुकुमारता । उत्तानपदतौदार्य्ययुतश्लाघ्यैर्विशेषणैः ॥ ९ ॥
ओजः समासभूयस्त्वमेतत् पद्यादिजीवितम् । आब्रह्मस्तम्भपर्य्यन्तमोजसैकेन पौरुषम्
उच्यमानस्य शब्देन येन केनापि वस्तुनः । उत्कर्षमावहन्नर्थो गुण इत्यभिधीयते ॥
माधुर्य्यं संविधानञ्च कोमलत्वमुदारता । प्रौढ़िः सामयिकत्वञ्च तद्भेदाः षट् चकाशति
क्रोधेर्ष्याकारगम्भीर्य्यान्माधुर्य्यं धैर्य्यगाहिता । संविधानं परिकरः स्यादपेक्षितसिद्धये
यत्काठिन्यादिनिर्मुक्तसन्निवेशविशिष्टता । तिरस्कृत्यैव मृदुता भाति कोमलतेति सा
लक्ष्यते स्थूललक्षत्वप्रवृत्तेर्यत्र लक्षणम् । गुणस्य तदुदारत्वमाशयस्यातिसौष्ठवम् ॥
अभिप्रेतं प्रति यतो निर्वाहस्योपपादिकाः । युक्तयो हेतुगर्भिण्यः प्रौढ़ाप्रौढ़िरुदाहृता
स्वतन्त्रस्यान्यतन्त्रस्यबाह्यान्तःसमयोगतः । तत्रव्युत्पत्तिरर्थस्य या सामयिकतेति सा

शब्दार्थावुपकुर्वाणो नाम्नोभयगुणः स्मृतः ।
तस्य प्रसादः सौभाग्यं यथासङ्ख्यं प्रशस्तता ॥ १८ ॥

पाको राग इति प्राज्ञैः षट् प्रपञ्चविपञ्चिताः । सुप्रसिद्धार्थपदता प्रसाद इति गीयते ॥

उत्कर्षवान् गुणः कश्चिद् यस्मिन्नुक्ते प्रतीयते ।
तत्सौभाग्यमुदारत्वं प्रवदन्ति मनीषिणः ॥ २० ॥

यथासङ्ख्यमनुद्देशः सामान्यमतिदिश्यते । समये वर्णनीयस्य दारुणस्यापि वस्तुनः
अदारुणेन शब्देन प्राशस्त्यमुपवर्णनम् । उच्चैः परिणतिः कापि पाक इत्यभिधीयते
मृद्वीकानारिकेलाम्बुपाकभेदाच्चतुर्विधः । आदावन्तेच सौरस्यं मृद्वीकापाक एव सः

काव्येच्छया विशेषो यः स राग इति गीयते ।
अभ्यासोपहितः कान्तिं सहजामपि वर्त्तते ॥ २४ ॥
हारिद्रश्चैव कौसुम्भो नीली रागश्च स त्रिधा ।
वैशेषिकः परिज्ञेयो यः स्वलक्षणगोचरः ॥ २५ ॥

इत्यादिमहापुराणे आग्नेयेकाव्यगुणविवेककथनं नाम
षट्चत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---

# सप्तचत्वारिंशदधिकत्रिशततमोऽध्यायः

## काव्यदोषविवेक ।

अग्निरुवाच ।

उद्वेगजनको दोषः सभ्यानां स च सप्तधा । वक्तृवाचकवाच्यानामेकद्वित्रिनियोगतः ॥
तत्रवक्ता कविर्नाम प्रथते स च भेदतः । सन्दिहानोऽविनीतः सन्नज्ञो ज्ञाता चतुर्विधः
निमित्तपरिभाषास्यामर्थसंस्पर्शिवाचकम् । तद्भेदो पदवाक्ये द्वे कथितं लक्षणं द्वयोः
असाधुत्वाप्रत्युक्त्वे द्वावेव पदनिग्रहौ । शब्दशास्त्रविरुद्धत्वमसाधुत्वं विदुर्बुधाः ॥
व्युत्पन्नैरनिबद्धत्वमप्रयुक्तत्वमुच्यते । छान्दसत्वमविस्पष्टत्वञ्च कष्टत्वमेव च ॥ ५ ॥
तदसामयिकत्वञ्च ग्राम्यत्वञ्चेति पञ्चधा । छान्दसत्वं न भाषायामविस्पष्टमबोधतः ॥
गूढार्थता विपर्य्यस्तार्थता संशयितार्थता । अविस्पष्टार्थता भेदास्तत्र गूढार्थतेति सा ॥
यत्रार्थो दुःखसम्वेद्यो विपर्य्यस्तार्थता पुनः । विवक्षितान्यशब्दार्थप्रतिपत्तिर्मलीमसा॥
अन्यार्थत्वासमर्थत्वे एतामेवोपसर्पतः । सन्दिह्यमानवाच्यत्वमाहुः संशयितार्थताम् ॥
दोषत्वमनुबध्नाति सज्जनोद्वेजनादृते । असुखोच्चार्य्यमाणत्वं कष्टत्वं समयाच्च्युतिः
असामयिकता नेयामेताञ्च मुनयो जगुः । ग्राम्यता तु जघन्यार्थप्रतिपत्तिः खलीकृता ॥
वक्तव्यग्राम्यवाच्यस्य वचनात् स्मरणादपि ।

तद्वाचकपदेनाभि साम्याद् भवति सा त्रिधा ॥ १२ ॥
दोषः साधारणः प्रातिस्विकोऽर्थस्य स तु द्विधा ।
अनेकभागुपालम्भः साधारण इति स्मृतः ॥ १३ ॥

क्रियाकारकयोर्भ्रंशो विसन्धिः पुनरुक्तता । व्यस्तसम्बन्धता चेति पञ्च साधारणामताः

अक्रियत्वं क्रियाभ्रंशो भ्रष्टकारकता पुनः ।
कर्त्र्यादिकारकाभावो विसन्धिः सन्धिदूषणम् ॥ १५ ॥
विगतो वा विरुद्धो वा सन्धिः सः भवति द्विधा ।
सन्धेर्विरुद्धता कष्टपादादर्थान्तरागमात् ॥ १६ ॥

पुनरुक्तत्वमाभीक्ष्ण्यादभिधानं द्विधैव तत् । अर्थावृत्तिः पदावृत्तिरर्थावृत्तिरपि द्विधा प्रयुक्तवरशब्देन तथा शब्दान्तरेण च । नावर्त्तते पदावृत्तौ वाच्यमावर्त्तते पदम् ॥१८॥

व्यस्तसम्बन्धता सुष्ठु सम्बन्धो व्यवधानतः ।
असम्बन्धान्तरनिर्भासात् सम्बन्धान्तरजन्मनः ॥ १९ ॥

स भावेऽपि तयोरन्तर्व्यवधानात् त्रिधैव सा । अन्तरा पदवाक्याभ्यां प्रतिभेदं पुनर्द्विधा

वाच्यमर्थाथ्र्यमानत्वात् तद्द्विधा पदवाक्ययोः ।
व्युत्पादितपूर्ववाच्यं व्युत्पाद्यञ्चेति भिद्यते ॥ २१ ॥

इष्टव्याघातकारित्वं हेतोः स्यादसमर्थता । असिद्धत्वं विरुद्धत्वमनैकान्तिकता तथा ॥ एवं सत्प्रतिपक्षत्वं कालातीतत्वसङ्करः । पक्षे सपक्षे नास्तित्वं विपक्षेऽस्तित्वमेव तत् काव्येषु परिषद्यानां न भवेदप्यरुन्तुदम् । एकादशनिरर्थत्वं दुष्करादौ न दुष्यति ॥

दुःखीकरोति दोषज्ञान् गूढार्थत्वं न दुष्करे ।
न ग्राम्यतोद्वेगकारी प्रसिद्धेर्लोकशास्त्रयोः ॥ २५ ॥

क्रियाभ्रंशेन लक्ष्मास्ति क्रियाध्याहारयोगतः । भ्रष्टकारकताक्षेपबलाध्याहृतकारके ॥ प्रगृह्ये गृह्यते नैव क्षतं विगतसन्धिना । कष्टपाठाद् विसन्धित्वं दुर्वचादौ न दुर्भगम् ॥ अनुप्रासे पदावृत्तिर्व्यस्तसम्बन्धता शुभा । नार्थसंग्रहणे दोषो व्युत्क्रमाद्यैर्न लिप्यते ॥

विभक्तिसंज्ञालिङ्गानां यत्रोद्वेगो न धीमताम् ।

संख्यायास्तत्र भिन्नत्वमुपमानोपमेययोः ॥ २९ ॥

अनेकस्य तथैकेन बहूनां बहुभिः शुभा । कवीनां समुदोचारः समयो नाम गीयते ॥

सामान्यश्च विशिष्टश्च धर्मवद् भवति द्विधा ।

सिद्धसैद्धान्तिकानाञ्च कवीनाञ्चाविवादतः ॥ ३१ ॥

यः प्रसिध्यति सामान्य इत्यसौ समयो मतः ।

सर्वे सिद्धान्तिका येन सञ्चरन्ति निरत्ययम् ॥ ३२ ॥

कियन्त एव वा येन सामान्यस्तेन स द्विधा ।

छेदसिद्धान्ततोऽन्यः स्यात् केषाञ्चिद् भ्रान्तितो यथा ॥ ३३ ॥

तर्कज्ञानं मुनेः कस्य कस्यचित् क्षणभङ्गिका । भूतचैतन्यता कस्य ज्ञानस्य सुप्रकाशता

प्रज्ञातस्थूलताशब्दानेकान्तत्वं तथार्हतः । शैववैष्णवशाक्तेयसौरसिद्धान्तिनां मतिः ॥

जगतः कारणं ब्रह्म साङ्ख्यानां सप्रधानकम् ।

अस्मिन् सरस्वतीलोके सञ्चरन्तः परस्परम् ॥ ३६ ॥

बध्नन्ति व्यतिपश्यन्तो यद्विशिष्टः स उच्यते । परिग्रहादप्यसतां सतामेवापरिग्रहात्

भिद्यमानस्य तस्यायं द्वैविध्यमुपगीयते । प्रत्यक्षादिप्रमाणैर्यद् बाधितं तदसद् विदुः

कविभिस्तत् प्रतिग्राह्यं ज्ञानस्य द्योतमानता । यदेवार्थक्रियाकारी तदेव परमार्थसत् ॥

अज्ञानाज्ज्ञानतस्त्वेकं ब्रह्मैव परमार्थसत् । विष्णुः स्वर्गादिहेतुः स शब्दालङ्काररूपवान्

अपरा च परा विद्या तां ज्ञात्वा मुच्यते भवात् ॥ ४० ॥

इत्यादिमहापुराणे आग्नेये काव्यदोषविवेककथनं नाम

सप्तचत्वारिंशदधिकत्रिशततमोऽध्यायः ।

———

# अष्टचत्वारिंशदधिकत्रिशततमोऽध्यायः

## एकाक्षराभिधानम् ।

अग्निरुवाच ।

एकाक्षराभिधानञ्च मातृकान्तं वदामि ते । अविष्णुः प्रतिषेधः स्यादा पितामहवाक्ययोः
सीमायामथाव्ययम् आ भवेत् संक्रोधपीड़योः ।
इः कामे रतिलक्ष्म्योरी उः शिवे रक्षकाद्य ऊः ॥ २ ॥
ऋ शब्दे चादितौ ॠ स्यात् ऌ ॡ ते वै दितौ गुहे ।
ए देवो ऐ योगिनी स्यादो ब्रह्मा औ महेश्वरः ॥ ३ ॥
अङ्कामः अः प्रशस्तः स्यात को ब्रह्मा दौ कु कुत्सिते ।
खं शून्येन्द्रियं खङ्गो गन्धर्वे च विनायके ॥ ४ ॥
गङ्गीते गो गायने स्याद् घो घण्टा किङ्किणीमुखे । ताड़ने ङश्च विषये स्पृहायाञ्चैव भैरवे
चो दुर्जने निर्मले छश्छेदे जिर्जयने तथा ।
जं गीते झः प्रशस्ते स्याद् वले ञो गायने च टः ॥ ६ ॥
ठश्चन्द्रमण्डले शून्ये शिवे चोद्वन्धने मतः । डश्च रुद्रे ध्वनौ त्रासे ढक्कायां ढोध्वनौ मतः
णो निष्कर्षे निश्चये च तश्चौरे क्रोडपुच्छके । भक्षणे थश्छेदने दो धारणे शोभने मतः
धो धातरि च धूस्तूरे नो घृन्द सुगते तथा ।
प उपवने विख्यातः फश्च झञ्झानिले मतः ॥ ९ ॥
फुः फुत्कारे निष्फले च विः पक्षी भश्च तारके ।
मा श्रीर्मानश्च माता स्याद् यागे यो यातृवीरणे ॥ १० ॥
रो वह्नौ च लः शक्रे च लो विधातरि ईरितः । विश्लेषणे वो वरुणे शयने शश्च शंसुखे
षः श्रेष्ठे सः परोक्षे च सा लक्ष्मीः सं कचे मतः ।
धारणे हस्तथा रुद्रे क्षः क्षत्रेऽथाक्षरे मतः ॥ १२ ॥

क्षा नृसिंहे हरौ तद्वत् क्षेत्रपालकयोरपि। मन्त्र एकाक्षरो देवो भुक्तिमुक्तिप्रदायकः॥
हैहयशिरसे नमः सर्वविद्याप्रदो मनुः। आकाराद्यास्तथा मन्त्रा मातृकामन्त्र उत्तमः॥
एकपद्मेऽर्चयेदेतान्नव दुर्गाश्च पूजयेत्। भगवती कात्यायनी कौशिकी चाथ चण्डिका

प्रचण्डा सुरनायिका उग्रा पार्वती दुर्गया।
ओं चण्डिकायै विद्महे भगवत्यै धीमहि तन्नो दुर्गा प्रचोदयात्।
क्रमादि तु षडङ्गं स्याद् गणो गुरुर्गुरुः क्रमात्॥ १६॥
अजितापराजिता चाऽथ जया च विजया ततः।
कात्यायनी भद्रकाली मङ्गला सिद्धिरेवती॥ १७॥
सिद्धादिवटुकाः पूज्या हेतुकश्च कपालिकः।
एकपादो भीमरूपो दिक्पालान्मध्यतोनव॥ १८॥
ह्रीं दुर्गे! दुर्गे! रक्षणि! स्वाहा मन्त्रार्थसिद्धये।
गौरी पूज्या च धर्माद्याः स्कन्दाद्याः शक्तयो यजेत्॥ १९॥
प्रज्ञा ज्ञाना क्रिया वाचा वागीशी ज्वालिनी तथा।
कामिनी काममाला च इन्द्राद्याः शक्तिपूजनम्॥ २०॥

ओं गं स्वाहा मूलमन्त्रोऽयं ग वा गणपतये नमः। षडङ्गो रक्तशुक्लश्च दन्ताक्षपरशूत्कटः

समोदकाऽथ गन्धादिगन्धोल्कायेति च क्रमात्।
गजो महागणपतिर्महोल्कः पूज्य एव च॥ २२॥
कुष्माण्डाय एकदन्तत्रिपुरान्तकाय श्यामदन्तविकटहरहासाय।
लम्बनाशाननाय पद्मदंष्ट्राय मेघोल्काय धूमोल्काय।
वक्रतुण्डाय विघ्नेश्वराय विकटोत्कटाय गजेन्द्रगमनाय।
भुजगेन्द्रहाराय शशाङ्कधराय गणाधिपतये स्वाहा।
एतैर्मनुभिः स्वाहान्तैः पूज्य तिलहोमादिनार्थभाक्।
काद्यैर्वा वीजसंयुक्तैस्तैराद्यैश्च नमोऽन्तकैः॥ २३॥
मन्त्राः पृथक् पृथग् वा स्युर्द्विरेफद्विर्मुखाक्षिणः।

कात्यायनं स्कन्द आह यत् तद् व्याकरणं वदे ॥ २४ ॥

इत्यादिमहापुराणे आग्नेये एकाक्षराभिधानकथनं नामा-
ष्टचत्वारिंशदधिकत्रिशततमोऽध्यायः ।

---

## ऊनपञ्चाशदधिकत्रिशततमोऽध्यायः

### व्याकरणम् ।

स्कन्द उवाच ।

वक्ष्ये व्याकरणं सारं सिद्धशब्दस्वरूपकम् । कात्यायनविबोधाय बालानां बोधनायच

प्रत्याहारादिकाः संज्ञाः शास्त्रसंव्यवहारगाः ।

अ ई उ ण ऋ ऌ क ए ङ ऐ औ च ह य व र ट ण न ञ म ङ ण न म झ भ ञ घ (ट) ध ष ज व ग ड द श ख फ छ ठ थ च ट त क प य श ष स र ह ल इति प्रत्याहारः ।

उपदेश इद्धलन्तं भवेदजनुनासिकः ॥ २ ॥

आदिवर्णो गृह्यमाणोऽप्यन्त्येनेता सहैव तु ।

तयोर्मध्यगतानां स्याद् ग्राहकः स्वस्य तद् यथा ॥ ३ ॥

अण् एङ् अट् यङ् छव् झम् भष् अक् इक् अण् इण् यण् परेण णकारेण । अम् यम् ङम् अच् इच् ऐच् अय ।

मय् झय् खय् जव् झव् खव् चव् शव् अस् हस् वस् भस् अल् हल् वल् रल् झल् सल् इति प्रत्याहारः ।

इत्यादिमहापुराणे आग्नेये व्याकरणकथनंनामोनपञ्चाशदधिकत्रिशततमोऽध्यायः ।

---

# पञ्चाशदधिकत्रिशततमोऽध्यायः

## सन्धिसिद्धरूपम् ।

स्कन्द उवाच ।

वक्ष्ये सन्धिसिद्धरूपं स्वरसन्धिमथादितः । दण्डाग्रं सागता दधीदं नदीहते मधूदकम्
पितृषभः लृकारश्च तवेदं सकलोदकम् । अर्धर्चोऽयं तवल्कारःसैषा सैन्द्री तवौदनम्
खट्वौघोऽभवदित्येवं व्यसुधीर्वस्वलङ्कृतम् । पित्रर्थोपवनं दात्री नायको लावको नयः
त इह तयिहेत्यादि तेऽत्र योऽत्र जलेऽकजम् ।
प्रकृतिर्नो अहो एहि अ अवेहि इ इन्द्रकम् ॥ ४ ॥
उ उत्तिष्ठ कवी एतौ वायु एतौ वने इमे । अमी एते यज्ञभूते एहि देव ! इमन्नय ॥
वक्ष्ये सन्धिं व्यञ्जनानां वाग्यतोऽजेकमातृकः ।
षड़ेते तदिमे वाद्विाङ्नीतिः षण्मुखादिकम् ॥ ६ ॥
वाङ् मनसं वग्भागादिर्वाक् श्लक्ष्णं तच्छरीरकम् ।
तल्लुनाति तच्चरैच्च गुडुङ्कास्ते च सुगण्णिह ॥ ७ ॥
भवांश्चरन् भवांश्छात्रो भवांष्टीका भवांष्ठकः ।
भवांस्तीर्थं भवांस्थेयान् भवांल्लेखा भवाञ्जयः ॥ ८ ॥
भवांश्छेते भवाञ्शेते भवञ्शेते भवाण्डीनः ।
त्वम्भर्त्ता त्वङ्करष्यादिः सन्धिर्ज्ञेयो विसर्गतः ॥ ९ ॥
कश्छिन्द्यात् कश्चरेत् कष्टः कष्ठः कस्थश्च कश्चलेत् ।
क × खनेत् क × करोति स्म क × पठेत् × फलेत वा ॥ १० ॥
कश्श्वशुरः कः श्वशुरः कस्सावरः कः सावरः ।
कः फलेति कः शयिता कोऽत्र योधः क उत्तमः ॥ ११ ॥
देवा एते भो इह सोदरा यान्ति भगो व्रज । सुपूः सुदूरात्रिरत्र वायुर्याति पुनर्नहि ॥

पुनरेति स यातीह एष याति क ईश्वरः । ज्योतीरूपंतवच्छत्रं म्लेच्छधीश्छिद्रमच्छिदत्
इत्यादिमहापुराणे आग्नेये सन्धिसिद्धरूपकथनं नामपञ्चाशदधिकत्रिशततमोऽध्यायः ।

---

# एकपञ्चाशदधिकत्रिशततमोऽध्यायः

## सुब्विभक्तिसिद्धरूपम् ।

स्कन्द उवाच ।

विभक्तिसिद्धरूपञ्च कात्यायन ! वदामि ते । द्वे विभक्ती सुपतिङ्श्चसुपःसप्तविभक्तयः

सुऔजसिति प्रथमा अमौट्शसो द्वितीया ।
टाभ्यां भिसिति तृतीया ङेभ्यांभ्यसश्चतुर्थ्यपि ॥ २ ॥
ङसिभ्यांभ्यसः पञ्चमी स्यात् ङसोसामिति षष्ठ्यपि ।
ङिओस्सुबिति सप्तमी स्यात् स्युः प्रातिपदिकात् पराः ॥ ३ ॥
द्विविधं प्रातिपदिकं ह्यजन्तश्च हलन्तकम् ।
प्रत्येकं त्रिविधं तत् स्यात् पुमांस्त्री च नपुंसकम् ॥ ४ ॥

दर्श्यन्ते नायकास्तेषामनुक्तानाञ्च वीर्य्यतः । वृक्षः सर्वोऽथ पूर्वश्च प्रथमश्च द्वितीयकः
तृतीयः खण्डपा वह्निः सखापतिरहर्पतिः । पटुर्नीर्ग्रामणीन्द्रश्च खलपूर्मित्रभूः स्वभूः ॥

सुश्रीः सुधीः पिता भ्राता ना कर्त्ता क्रोष्टुनप्तृकौ ।
सुरा रा गौस्तथा द्यौग्लौः स्वरान्ताः पुंसि नायकाः ॥ ७ ॥
सुवाक् त्वक् पृषत् सम्राट् जन्मभाक् च अवेडपि ।
आपो मरुद्भवन् दीव्यन् भवांश्च मघवान् पिवन् ॥ ८ ॥
भगवानघवानर्वान् वह्निमत् सर्ववित्सुपृत् ।
सुसीमा कुण्डी राजा च श्वा युवा मघवा तथा ॥ ६ ॥

पूषा सुकर्मायज्वा च सुवर्मा च सुधर्मणा । अर्य्यमा वृत्रंहा पन्थाः सुककुदादिपञ्च च

प्रशान् सुतांश्च पञ्चाद्याः सुगौः सुराः सुपूरपि ।
चन्द्रमाः सुवचाः श्रेयान् विद्वांश्चोशनसा सह ॥ ११ ॥
पेचिवान् गौरवानड्वान्-मोध्रूङ्मित्रद्रुहौ श्वलिट् ।
स्त्रियां जाया जरा बाला एड़का सह वृद्धया ॥ १२ ॥
क्षत्रिया वहुराजा च वहुदा माऽथ बालिका ।
माया कौमुदगन्धा च सर्वा पूर्वा सहान्यया ॥ १३ ॥
द्वितीया च तृतीया च वुद्धिः स्त्री श्रीर्नदी सुधीः ।
भवन्ती चैव दीव्यन्ती भाती भान्ती च यान्त्यपि ॥ १४ ॥
शृण्वती तुदती कर्त्री तुदन्ती कुर्वती मही ।
रुधन्ती क्रीड़ती दान्ती पालयन्ती सुराण्यपि ॥ १५ ॥
गौरी पुत्रवती नीश्च वधुर्देवतया भुवा । तिस्रो द्वे कति वर्षाभूः स्वसा माता वराच गौः
नौर्वाक्त्वक्प्राच्यवाचीति तिरश्ची समुदीच्यपि ।
शरद्विद्युत् सरिद्योषित् अग्निवित् सम्पदा दृशत् ॥ १७ ॥
यैषा सा वेदवित्संवित् बर्ह्निः राज्ञी त्वया मया ।
सीमा पञ्चादयो राजी धूः पूश्चैव दिशा गिरा ॥ १८ ॥
चतस्रो विदुषी चैव केयं दिक् दृक् च तादृशौ ।
असौ स्त्रियां नायिकाश्च नायकाश्च नपुंसके ॥ १९ ॥
कुण्डं सर्वं सोमपश्च दधिवारि खलप्वथ । मधु त्रपु कर्त्तृ भक्तृ अतिभक्तृ पयः पुः
प्राक् प्रत्यक् च तिर्य्यगुदक् जगद् जाग्रत् तथा सकृत् ।
सुसम्पच्च सुदण्डीह अहः किञ्चेदमित्यपि ॥ २१ ॥
षट् सर्पिः श्रेयश्चत्वारि अदोऽन्ये हीदृशाः परे ।
एतेभ्यः प्रथमादयश्च स्युः प्रातिपदिकात् पराः ॥ २२ ॥
धातुप्रत्ययहीनं यत् स्यात् प्रातिपदिकन्तु तत् ।
प्रातिपदिकात् स्वलिङ्गार्थवचने प्रथमा भवेत् ॥ २३ ॥

सम्बोधने च प्रथमा उक्ते कर्मणि कर्त्तरि।

कर्म यत् क्रियते तत् स्यात् द्वितीया कर्मणि स्मृता ॥ २४ ॥

क्रियते येन करणं कर्त्ता यश्च करोति सः। अनुक्ते तिङ्कृत्तद्धितैस्तृतीया करणे भवेत्

कारके कर्त्तरि च सा सम्प्रदाने चतुर्थ्यपि। यस्मै दित्सा धारयते सम्प्रदानं तदीरितम्

अपादानं यतोऽपैति आदत्ते च भयं यतः।

अपादाने पञ्चमी स्यात् स्वस्वाम्यादौ च षष्ठ्यपि ॥ २७ ॥

आधारो योऽधिकरणं विभक्तिस्तत्र सप्तमी। एकार्थे चैकवचनं द्व्यर्थे द्विवचनं भवेत्

बहुषु बहुवचनं सिद्धरूपाण्यथो वदे। वृक्षः सूर्य्योऽम्बु वाहोऽर्के हे रवे ! हे द्विजातयः

विप्रौ गजान् महेन्द्रेण ममाभ्यामनलैः कृतम्।

रामाय मुनिवर्य्याभ्यां केभ्यो धर्मात् हरौ रतिः ॥ ३० ॥

शराभ्यां पुस्तकेभ्यश्च अर्थस्येश्वरयोर्गतिः। बालानां सज्जने प्रीतिर्हंसयोः कमलेषु च

एवं काममहेशाद्याः शब्दा ज्ञेयाश्च वृक्षवत्।

सर्वे विश्वे च सर्वस्मै सर्वस्मात् कतरो मतः ॥ ३२ ॥

सर्वेषां स्वञ्च विश्वस्मिन् शेषरूपञ्च वृक्षवत्। एवञ्चोभयकतरकतमान्यतरादयः ॥३३॥

पूर्वे पूर्वाश्च पूर्वस्मै पूर्वस्मात् सुसमागतः। पूर्वे बुद्धिश्च पूर्वस्मिन् शेषरूपन्तु सर्ववत्

एवं परावराद्याश्च दक्षिणोत्तरकान्तराः। अपराश्चाधरोनेमाः प्रथमाः प्रथमेऽर्कवत् ॥

एवं चरमायतया अल्पार्द्धा नेमआदयः !।

द्वितीयस्मै द्वितीयाय द्वितीयस्मात् द्वितीयकात् ॥ ३६ ॥

द्वितीयस्मिन् द्वितीये च तृतीयश्च तथाऽर्कवत्।

सोमपाः सोमपौ ज्ञेयौ सोमपाः सोमपां व्रज ॥ ३७ ॥

कौलालपौ सोमपश्च सोमपा सोमपे दद।

सौमपाभ्यां सोमपाभ्यः सोमपः सोमपौ कुलम् ॥ ३८ ॥

एवं कीलालपाद्याः स्युः कविरग्निस्तथाऽरयः।

हे.कवे ! कविमग्नी तान् हरीन् सात्यकिना हृतम् ॥ ३९ ॥

रविभ्यां रविभिर्देहि वह्नये यः समागतः ।
अग्नेरग्न्योस्तथाग्नीनां कवौ कव्योः कविष्वऽथ ॥ ४० ॥
एवं सुस्मृतिरभ्रान्तिः सुकीर्त्तिः सुधृतिस्तथा ।
सखा सखायौ सखायः हे सखे ! व्रज सत्पतिम् ॥ ४१ ॥
सखायञ्च सखायौ च सखीन् सख्या गतो दद ।
सख्ये सख्युश्च सख्युश्च सख्योः शेषः कवेरिव ॥ ४२ ॥
पत्या पत्ये च पत्युश्च पत्युः पत्योस्तथाऽग्निवत् ।
द्वौ द्वौ द्वाभ्यां द्वाभ्यां द्वित्वाद्यर्थे द्वयोर्द्वयोः ॥ ४३ ॥
त्रयस्त्रींश्च त्रिभिस्त्रिभ्यस्त्रयाणाञ्च त्रिषु क्रमात् ।
कविवत् कतिकतीति शेषं बहुवचनं स्मृतम् ॥ ४४ ॥
नीर्नियौ च नियो हे नीः ! नियं नियौ नियो निया ।
नीभ्यां नीभिर्निये नीभ्यः नियां नियि नियोस्तथा ॥ ४५ ॥
सुश्रीः सुधीः प्रभृतयो ग्रामणीः पूजयेद्धरिम् ।
ग्रामण्यौ ग्रामण्यो ग्रामण्यं ग्रामण्या ग्रामणीभिः ॥ ४६ ॥
ग्रामण्यो ग्रामण्यामेवं सेनानीप्रमुखाः सुभूः ।
सुभुवौ च स्वयम्भुवः स्वयम्भुश्च स्वयम्भुवः ॥ ४७ ॥
स्वयम्भुवा स्वयम्भुवि एवं प्रतिभुवादयः । खलपूः खलप्वौ श्रेष्ठौ खलप्वश्च खलप्विव
एवं शरपूप्रमुखाः स्युः क्रोष्टा क्रोष्टार ईरिताः ।
क्रोष्टूंश्च क्रोष्टुना क्रोष्ट्रा क्रोष्टूनां क्रोष्टरीदृशम ॥ ४९ ॥
पिता पितरौ पितरः हे पितः ! पितरौ शुभौ ।
पितॄन् पितुः पितुः पित्रोः पितॄणां पितरीदृशम् ॥ ५० ॥
एवं भ्राता च जामातृमुखा नृणां नृणां तथा ।
कर्ता कर्त्तारौ कर्त्तॄंश्च कर्तॄणां कर्त्तरीदृशम् ॥ ५१ ॥
पितृवच्चैवमुद्गाता स्वसा नप्तादयः स्मृताः । सुराः सुरायौ सुरायः सुरायाश्च सुराय्यपि

गौः गावौ गां गा गवा च गोर्गवोश्च गवां गवि ।
एवं द्यौर्ग्लौश्चापि तथा स्वरान्ताः पुंसि नायकाः ॥ ५३ ॥
सुवाक् सुवाची सुवाचा सुवाग्भ्यांश्च सुवाक्ष्वपि ।
एवं दिक्प्रमुखाः प्राङ् च प्राञ्ची प्राञ्चश्च भो व्रज ॥ ५४ ॥
प्राग्भ्यां प्राग्भिः प्राचाश्च प्राचि च प्राङ्सु प्राङ्क्ष्वपि ।
एवं ह्युदङुदीची वा सम्यङ् प्रत्यक् समीच्यपि ॥ ५५ ॥
तिर्य्यङ् तिरश्च सध्र्यङ् च विश्वद्र्याङ् पूर्ववत् स्मृताः ।
अदद्र्याङदमुयङ् स्यात् तथामुमुयङीरितः ॥ ५६ ॥
अदद्र्यश्चो ह्यमुद्रीचः अदद्र्यग्भ्यांश्च पूर्ववत् ।
तत्त्वट् तत्त्वतृषौ च तत्त्वतृड्भ्यां समागतः ॥ ५७ ॥
तत्त्वतृषि तत्त्वतृट्सु एवं काष्ठतड़ादयः ।
भिषक् भिषग्भ्यां भिषजि जन्मभागादयस्तथा ॥ ५८ ॥

मरुत् मरुद्भ्यां मरुति एवं शत्रुजिदादयः । भवान् भवन्तौ भवतां भवंश्चैव भवत्यपि
महान् महान्तौ महतामेवं भगवदादयः । एवंमघवान्मघवन्तौ अग्निचिच्चाग्निचित्यपि

अग्निचित्स्वेवमेवान्यत् वेदवित् तत्त्ववित्त्वपि ।
वेदविदामेवमन्यत् यः समस्तेन सर्ववित् ॥ ६१ ॥
राजा राजानौ राज्ञः राज्ञि राजनि राजन् ! ।
यज्वा यज्वानस्तद्वत् करी दण्डी च दण्डिनौ ॥ ६२ ॥
पन्थाः पन्थानौ च पथः पथिभ्यां पथि चेदृशम् ।
मन्था ऋभुक्षाः पथ्याद्याः पञ्च पञ्च च पञ्चभिः ॥ ६३ ॥
प्रतान् प्रतानौ प्रतान्भ्यां हेप्रतांश्च सुशर्मणः ।
आपः अपः अद्भिरप्स्वेवं प्रशांश्चैव प्रशास्यपि ॥ ६४ ॥
कः केन सर्ववत् केषु अयं द्वेमे इमान्नयः ।
अनेन चाभ्यमेभिश्च अस्मै चेभ्यः स्वमस्य च ॥ ६५ ॥

अनयोरेषामेषु स्याच्चत्वारश्चतुरस्तथा ।
चतुर्णाञ्च चतुर्ष्वऽस्ति सुगीः श्रेष्ठः सुगिर्य्यपि ॥ ६६ ॥
सुद्यौः सुदिवौ सुद्युभ्यां विड्विषौ विट्सु यादृशः ।
यादृग्भ्याञ्चैव विड्भ्याञ्च षट् षट् षण्णाञ्च षट्स्वपि ॥ ६७ ॥
सुवचाः सुवचसा च सुवचोभ्यामथेदृशन् ।
हे सुवचो ! हे उषनन् ! उशना वोशनस्यपि ॥ ६८ ॥
पुरदंशा अनेहा हे विद्वन् ! विद्वांस उत्तमाः ।
विदुषे नमो विद्वद्भ्यां विद्वत्सु च वभूविवान् ॥ ६९ ॥
एवञ्च पेचिवान् श्रेयान् श्रेयांसौ श्रेयसस्तथा ।
असौ अमू अमी श्रेष्ठा अमुं अमूनिहामुना ॥ ७० ॥
अमीभिरमुस्मै वामुस्मादमुस्य वामुयोस्तथा । अमीषाममुस्मिन्नित्येवं गोधुग्भिरागतः
गोधुक्ष्वित्येवमन्येऽपि मित्रद्रुहो मित्रदुहा ।
मित्रध्रुग्भ्यां मित्रद्रुगभिरेवं चित्तद्रुहादयः ॥ ७२ ॥
स्वलिट् स्वलिड्भ्यां स्वलिलि अनड्वाननडुत्सु च ।
अजन्ताश्च हलन्ताश्च पुंस्यथोऽथ स्त्रियां वदे ॥ ७३ ॥

इत्यादिमहापुराणे आग्नेये सुब्विभक्तिसिद्धरूपकथनं नामै-
कपञ्चाशदधिकत्रिशततमोऽध्यायः ।

---

## द्विपञ्चाशदधिकत्रिशततमोऽध्यायः

### स्त्रीलिङ्गशब्दसिद्धरूपम् ।

स्कन्द उवाच ।

रमा रमे रमाः शुभा रमां रमे रमास्तथा । रमया च रमाभ्याञ्च रमाभिः कृतमव्ययम्

रमायै च रमास्याञ्च रमायां रमयोः शुभम्। रमाणाञ्च रमायाश्च रमास्वेवं, कलादयः जरा जरसौ जर इति जरसश्च जरा जराम्। जरसञ्च जरास्वेवं सर्वा सर्वे च सर्वया

सर्वस्यै देहि सर्वस्याः सर्वस्याः सर्वयोस्तथा।
शेषं रमावद्रूपं स्याद् द्वे द्वे तिस्रश्च तिसृणाम् ॥ ४ ॥
बुद्धिर्बुद्ध्या बुद्धये च बुद्ध्यै बुद्धेश्च हे मते!।
कविवत् स्यान् मुनीनाञ्च नदी नद्यौ नदीं नदीः ॥ ५ ॥
नद्या नदीभिर्नद्यै च नद्याश्चैव नदीषु च।
कुमारी जृम्भणीत्येवं श्रीः श्रियौ च श्रियः श्रिया ॥ ६ ॥
श्रियैश्रिये स्त्रीं स्त्रियश्च स्त्रीश्च स्त्रियः स्त्रिया स्त्रियै।
स्त्रियाः स्त्रीणां स्त्रियाश्च ग्रामण्यां धेन्वै च धेनवे ॥ ७ ॥
जम्बूर्जम्ब्वौ च जम्बूश्च जम्बूनाञ्च फलं पिव।
वर्षाभ्वौ च पुनर्भ्वौ च मातॄर्वापि च गौश्च नौः ॥ ८ ॥
वाग् वाचा वाग्भिश्च वाक्षु स्रग्भ्यां स्रजि स्रजोस्तथा।
विद्वद्भ्याञ्चैव विद्वत्सु भवती स्याद् भवन्त्यपि ॥ ९ ॥

दीव्यन्ती भाती भान्ती च तुदन्ती च तुदत्यपि। रुदती रुन्धती देवीं, गृह्णती चोरयन्त्यपि

दृषत् दृषद्भ्यां दृषदि विशेषविदुषी कृतिः।
समित् समिद्भ्यां समिधि सीमा सीम्नि च सीमनि ॥ ११ ॥
दामनीभ्यां ककुद्भ्याञ्च केयमाभ्यां तथासु च।
गीर्भ्याञ्चैव गिरा गीर्षु सुभूः सुपूः पुरा पुरि ॥ १२ ॥
द्यौर्द्युभ्यां दिवि द्युषु तादृश्या तादृशी दिशः।

यादृश्यांयादृशीतद्वत् सुवचोभ्यांसुवचःस्वपि। असौचामूममूचामूरमूभिरमुयाऽमुयो

इत्यादि महापुराणेआग्नेयेस्त्रीलिङ्गशब्दसिद्धरूपकथनं नाम
द्विपञ्चाशदधिकत्रिशततमोऽध्यायः।

———

# त्रिपञ्चाशदधिकत्रिशततमोऽध्यायः

## नपुंसकशब्दसिद्धरूपम् ।

स्कन्द उवाच ।

नपुंसके किं के कानि किं के कानि ततो जलम् ।
सर्वं सर्वे च पूर्वाद्याः सीमपं सीमपानि च ॥ १ ॥
ग्रामणि ग्रामणिनी च ग्रामणी ग्रामणीन्यपि ।
वारि वारिणी वारीणि वारिणां वारिणीदृशम् ॥ २ ॥
शुचये शुचिने देहि मृदुने मृदवे तथा । त्रपु त्रपुणि त्रपूणाञ्च खलपूनि खलप्वि च ॥
कर्त्रा च कर्तृणे कर्त्रे अतिर्य्यतिरिणां तथा । अभिन्यंभिनिनी चैव सुवचांसि सुवाक्षुच
यद् यत् त्विमे तत् कर्माणि इदञ्चेमे त्विमानि च ।
ईदृक् त्वदोऽमुनि अमूनि अमुना स्यादमीषु च ॥ ५ ॥
अहमावां वयं मां वै आवामस्मान् मया कृतम् ।
आवाभ्याञ्च तथास्माभिर्मह्यमस्मभ्यमेव च ॥ ६ ॥
मदावाभ्यां मदस्मच्च पुत्रोऽयं मम चावयोः । अस्माकमपि चास्मासु त्वं युवांयूयमीजिरे
त्वां युवाञ्च युष्मांश्च त्वया युष्माभिरीरितम् ।
तुभ्यं युवाभ्यां युष्मभ्यं त्वत् युवाभ्याञ्च युष्मत् च ॥ ८ ॥
तव युवयोर्युष्माकं त्वयि युष्मासु भारती । उपलक्षणमत्रैव अज्झलन्ताश्च ते स्मृताः

इत्यादिमहापुराणेआग्नेये नपुंसकशब्दसिद्धरूपकथनंनाम
त्रिपञ्चाशदधिकंत्रिशततमोऽध्यायः ।

———

